


# विद्या प्रसारक मंडळ, ठाणे

| | | |
|---|---|---|
| पुस्तकाचे नाव | : | ब्रह्मसूत्रभाष्यम् |
| संपादक | : | कृष्णमाचार्येण, ए. आर. |
| प्रकाशक | : | मद्रास : कृष्णमाचर्येण, ए. आर. |
| प्रकाशन वर्ष | : | १९४१ |
| पृष्ठे | : | ५०२ पृष्ठे |

**गणपुस्तक**

**विद्या प्रसारक मंडळाच्या**

**“ग्रंथालय” प्रकल्पांतर्गत निर्मिती**

गणपुस्तक निर्मिती वर्ष : २०१४

गणपुस्तक क्रमांक : ५५

# ŚRĪ-BHĀṢYA

OR

# BRAHMASŪTRABHĀṢYA

OF

## BHAGAVAD-RĀMĀNUJA

WITH

1. Śrutaprakâśikâ by Sudarśanabhaṭṭáraka
2. Bhávaprakâśikâ by Raṅgarâmânujamuni
3. Śrutapradípiká by Sudarśanabhaṭṭâraka
4. Nayaprakàśiká by Méghanàdárisûri
5. Tattvaṭiká by Védántadéśika
6. Mūlabhávaprakáśikà by Rangarāmānujamuni
7. Nyàyasudarśana by Varadanâráyaṇabhaṭṭáraka
8. Adhikaraṇasárávali by Vèdàntadèśika
9. Adhikaraṇachintàmaṇi by Varadanàthasùri
10. Viṣayavákyadìpiká by Raṅgaràmànujamuni

## Vol. 3.




EDITED BY

**Pandit V. ANANTHACHARYA**

Lecturer in Sanskrit, Pachaiappa's College, Madras. (Retd.)

AND

**Vyakaranasiromani V. KRISHNAMACHARYA**

Sanskrit Pandit, Presidency College, Madras.

PUBLISHED BY

**Pandit A. R. KRISHNAMACHARIAR**

*PROPRIETOR,*

**THE MADRAS SANSKRIT BOOK DEPOT**

**KRISHNAPURAM, KODAMBAKKAM, MADRAS.**

**1941** **[Price Rs. 8—8—0**

श्रीः

श्रीभगवद्रामानुजमुनिविरचितं

श्रीभाष्यापरनामधेयं

# ब्रह्मसूत्रभाष्यम्

श्रुतप्रकाशिका, तद्व्याख्या भावप्रकाशिका, श्रुतप्रदीपिका, नयप्रकाशिका,
तत्त्वटीका, मूलभावप्रकाशिका, न्यायसुदर्शनम्, अधिकरण-
सारावलिः, तद्व्याख्या अधिकरणचिन्तामणिः,
विषयवाक्यदीपिका,
इत्येतैः समलंकृतम्

## तृतीयं संपुटम्

ति. न. च. पण्डित वे. अनन्ताचार्येण

वे. कृष्णमाचार्येण च

परिशोध्य

कोडंबाक्कम्

कृष्णापुराग्रहारवास्तव्येन

ए. आर्. कृष्णमाचार्येण

प्रकाशितम्

१९४१ [मूल्यम् ८—८—०

## PATRON

SRI. N. T. SHAMANNA, B.A., B.L.

***SOLICITOR***

TRIPLICANE, MADRAS.

*Rs.* 400—0—0.

## FULLY PAID SUBSCRIBERS.

1. Sri. K. S. Krishnaswamy Ayyangar,
*High Court Judge,* **Madras.** Rs. 60 0 0

2. „ **E. R. Srinivasachariar,**
*Retd. Engineer, Mylapore,* **Madras.** „ 60 0 0

3. „ **N. Ramaswamy Ayyangar,**
*Stock Verifier, S.I.R.,* **Trichinopoly.** „ 60 0 0

4. „ **M. R. Rajagopala Ayyangar,**
*Retd. Deputy Collector, Mylapore,*
**Madras.** „ 60 0 0

5. „ **V. S. Sundaram,**
*Retd., Accountant General* **Madras.** „ 60 0 0

6. „ **Sadhu Haribala Dasji,**
*Dabanvala,*
*Sri Swamy Narayana Mandir,* **Vadtal.** „ 60 0 0

7. „ **Pandit Durganath Jha,**
*Pradhan Adhyapak,*
*Sri Swamy Narayana Sanskrit Maha-Vidyalaya,* **Ahamadabad.** „ 60 0 0

8. „ **T. M. Krishnamachariar,**
*Accountant, P. & T. S. C. S. Ltd.,*
**Madras.** „ 60 0 0

9. „ **V. S. V. Patrachariar,**
*Sanskrit Pandit, Sri R. K. Mission School,*
*T' Nagar,* **Madras.** „ 60 0 0

## श्रीभाष्यादिग्रन्था एतेषु पृष्ठेषु द्रष्टव्याः


श्रीभाष्यम्—९३७, ९५७, ९५८, ९६७, ९७१, ९८२, ९८६, ९८९, ९९३, ९९५, ९९७, १०१०, १०१६, १०२१, १०२४, १०३१, १०४०, १०५१, १०६०, १०६२, १०६७, १०८४, १०९०, १०९३; १०९७, ११०१; ११०५, ११०७, ११०९, १११४, १११९, ११२९, ११३३, ११४०, ११५५, ११६०, ११६४, ११६६, ११७१, ११७४, ११८०, ११८७, ११९५, ११९७, ११९९, १२०२, १२०५, १२११, १२१३, १२१६, १२१७, १२२१, १२२२, १२२४, १२२६, १२४०, १२४२, १२४४, १२४५, ११४९, १२५२, १२५४, १२५८, १२५९, १२६३, १२६७, १२७८, १२८४, १२८७, १२९०, १२९२, १२९७, १३०४, १३१०, १३१७, १३२३, १३२७, १३३०, १३८०, १३९५, १४००, १४०१, १४०२, १४०४, १४०६, १४०८, १४१५, १४१७, १४१९, १४२२,

श्रुतप्रकाशिका—९३७, ९५७, ९५८, ९६८, ९७२, ९८२, ९८६, ९९०, ९९३, ९९६, ९९७- १०११, १९१६, १०२१, १०२५, १०३२, १०४१, १०५२, १०६०, १०६३, १०६८, १०८४, १०९१, १०९४, १०९७, ११०१, ११०५, ११०७, १११०, १११५, ११२०, ११३०, ११३४, ११४०, ११५६, ११६१, ११६४, ११६७, ११७१, ११७५, ११८१, ११८८, ११९५, ११९७, १२००, १२०२, १२०५, १२११, १२१४, १२१६, १२१८, १२२१, १२२२, १२२५, १२२८, १२४१, १२४३, १२४४, १२४६, १२४९, १२५२, १२५५, १२५८, १२६०, १२६३, १२६८, १२७९, १२८५, १२८८, १२९१, १२९३, १२९८, १३०५, १३११, १३१८, १३२४, १३२७, १३३१, १३८१, १३९७, १४००! १४०१, १४०२, १४०४, १४०७, १४१०, १४१६, १४१८, १४१८, १४२०, १४२२,

भावप्रकाशिका—९४३, ९५७, ९६३, ९६९, ९७७, ९८५, ९८८; ९९१, ९९४, ९९६, १००५, १०१४, १०१९, १०२२, १०२८, १०३६,

१०४४, १०५६, १०६१, १०६५, १०७८, १०८८, १०९२, १०९५, १०९८, ११०३, ११०६, ११०८, ११११; १११७, ११२६, ११३१, ११३७, ११४१, ११५७, ११६२, ११६५६ ११६९, ११७३, ११७, ११८४, ११९२, ११९६, ११९८, १२०१, १२०४, १२०७, १२१२, १२१५, १२१७, १२२०, १२२२, १२२३, १२२५, १२३३, १२४२, १२४३, १२४५, १२४७, १२५३, १२५७, १२६१, १२६५, १२७१, १२८१, १२८६, १२८९, १२९२, १२९३, १३०१, १३०७, १३१३, १३२१, १३२५, १३२८, २३३३, १३८९, १३९८, १४०१, १४०३, १४०५, १४०८, १४११, १४१७, १४१९, १४२१, १४२३,

श्रुतप्रदीपिका—९४९, ७५१ ९५८, ९६६, ९७०, ९८०, ९८६, ९८९, ९९२, ९९५, ९९७, १००८, १०१४, १०२०, १०२३, १०३०, १०३९, १०४७, १०५७, १०६२, १०६६, १०८२, १०९०, १०९३, १०९५, १०९९, ११०४, ११०६, ११०९, १११३, १११८, ११२९, ११३२, ११३८, ११४१, ११६०, ११६३, ११६६, ११७०, ११७३, ११७९, ११८६, ११९४, ११९६, ११९९, १२१०, १२१३, १२१६, १२१७, १२२१, १२२२, १२२४, १२२६, १२३७, १२४२, १२४३, १२४५, १२४८, १२५०, १२५४, १२५८, १२५९, १२६२, १२६६, १२७४, १२८३, १२८७, १२९०, १२९२, १२९४, १३०२, १३०८, १३१४, १३२२, १३२६, १३२९, १३३५, १३९५, १३९९, १४०१, १४०२, १४०३, १४०६, १३०८, १४१२, १४१७, १४१९, १४२१, १४२३,

नयप्रकाशिका—९५१, ९८१, १०१५, १०२१, १०५८, १०६२, १०८३, १०९६, ११००, ११०४, ११०६, ११०९' १११३, १११९, ११२९, ११३९, ११४२, १२९४, १३०३, १३०९, १३१५, १३२३, १३२६, १३२९ १३३५,

तत्त्वटीका—९५१,

न्यायसुदर्शनम्—९७०, ९८१, ९९३, ९९५, १००९, १०४८, १०५८, १०९७, ११००, ११३२, ११७४, ११९५, १२३८, १२४८, १२५०, १२७४, १३०४, १३०९, १३१६, १४१३,

# श्रुतप्रकाशिकाविषयसूचिका


**श्रुतिघट्टः—**

सद्विद्यायाः सविशेषविषयत्वम् ९३७

परविद्यायाः सविशेषविषयत्वम् ९५७

अखण्डार्थसामानाधिकरण्यनिरासेन सत्यादिवाक्यस्य सविशेषविषयत्वम् ९५८

निर्गुणासगुणवाक्ययोः विषयविभागेनाविरोधः ९७२

आनन्दवल्ल्याः सगुणविषयत्वम् ९८२

ज्ञेयत्वज्ञातृत्वनिषेधनिरासः ९९०

आनन्दत्वानन्दित्वयोरविरोधः ९९६

भेदतन्निषेधश्रुतीनामविरोधः ९९७

**स्मृतिपुराणघट्टः—**

सविशेषपरस्मृतिपुराणवचनानि १०१६

परोक्तस्मृतिपुराणवचनानां समीचीनार्थकथनम् १०५२

उपबृंहणविधिनिरूपणम् १०६३

विष्णुपुराणप्राशस्त्यम् १०६८

प्रकार्यद्वैतप्रकाराद्वैतविवेकः ११०२

द्वा सुपर्णेति श्रुत्यर्थविचारः १११६

मुक्तौ जीवब्रह्मणोः स्वरूपैक्यनिरासः ११२०

**सप्तविधानुपपत्तयः—** ११५५

आश्रयानुपपत्तिः ११५६

तिरोधानानुपपत्तिः ११६४

स्वरूपानुपपत्तिः ११६७

अनिर्वचनीयत्वानुपपत्तिः ११७१

प्रमाणानुपपत्तिः ११७५

तमसो द्रव्यत्वसमर्थनम् ११८३

अविद्याप्रत्यक्षनिरासः ११८८

अविद्यानुमाननिरासः १२०५
सत्ख्यातिसमर्थनम् १२२८
अविद्यापरत्वेन परोक्तश्रुतीनां निर्वाहः १२५२
स्मृतिपुराणानामविद्यापरत्वस्य निरासः १२६०
निवर्तकानुपपत्तिः १२९३
तत्त्वमसीति वाक्यार्थविचारः १२९८
अपर्यवसानवृत्तिनिरूपणम् १३२७
मतान्तरेषु सामानाधिकरण्यानुपपत्तिः १३८४
संग्रहेण सिद्धान्तोपन्यासः १३९७
निवृत्त्यनुपपत्तिः १४१६


## भावप्रकाशिकाविषयसूचिका


मृत्तिकेत्येव सत्यम् इत्यत्र असत्कार्यवादनिरासे आक्षेपः समाधानं च ९४३
आदेशशब्दे प्रकृतिप्रत्ययार्थविचारः ९४६
सत्यादिशब्दानां परोक्तार्थे पर्यायत्वापत्तिः ९६४
छागपशुन्यायोत्सर्गापवादन्याययोः विचारः ९७८
उपक्रमाधिकरणन्यायनिरूपणम् ९७९
"ते ये शतम्" इति वाक्ये भगवदानन्दस्य परिच्छिन्नत्वं प्रतिपाद्यते इत्याक्षेपः समाधानं च ९८५
"कामान् सह" इति श्रुतिवाक्ये भोग्यसाहित्यस्थिरीकरणम् ९८८
"असन्नेव" इत्यस्य श्रीभाष्यानुगुण्येनार्थवर्णनम् ९९१
उपादेयोपादानस्वरूपनिष्कर्षः १००७
पुरुषोत्तमशब्दे समासविचारः १०२०
इच्छागृहीतपदस्यार्थान्तरवर्णनम् १०२३
भगवच्छब्दार्थविचारः १०२९
पुराणघट्टे उपक्रमोपसंहारन्यायविचारः १०३३
"परः पराणाम्" इत्यादिसंदर्भस्य सत्यज्ञानादिश्रुतिविवरणरूपत्वम् १०३४

पुराणश्लोकोपन्यासौचित्यविचारः १०३६
" आब्रह्मस्तम्ब " इत्यत्र आङर्थविचारः १०५७
वेदेषु अनित्यार्थसंयोगविरोधपरिहारः १०६६
" ज्ञानस्वरूपम् " इति श्लोकार्थवर्णनम् १०८९
" ब्रह्मणो भावशक्तयः " इति निर्देशेऽर्थस्वारस्यम् १०९३
एकशब्दार्थविचारः १०९५
" तस्यात्मपरदेहेषु " इति श्लोकस्यार्थवर्णनम् ११०३
" सोऽहं स च त्वम् "इत्यत्र अहंत्वमर्थविचारः १११२
" द्वा सुपर्णा " इति श्रुत्यर्थविचारः १११८
" तद्भावभावम् " इति श्लोकव्याख्याने विचारः ११३७
" न हि वयमभेदं ब्रूमः " इति भामतीवाक्यार्थविचारः ११५८
मुक्तावानन्दविचारः ११६६
भावरूपाज्ञानविषये पञ्चपादिकाविवरणादिग्रन्थविमर्शः ११८५
भावरूपाज्ञानसाधकानुमाननिरासः १२०७
" बहु स्याम् " इति श्रुतौ बहुभवनप्रजननयोः कार्यकारणभावविचारः १२३४
पूर्वमीमांसायां नियमविधिविचारः १२३५
शुक्तिरजतदृष्टान्ते औचित्यविचारः १२३६
प्रकृतिशब्दस्योपादानार्थत्वविचारः १२५७
दशश्लोक्यर्थविचारः १२७१
" बहुधा " इत्यत्र धाप्रत्ययार्थविचारः १२८२
" तत्त्वमसि " इत्यत्र मध्यमपुरुषविचारः १३१३
शरीरजीवपरमात्मनामेकत्वप्रतीतौ युक्तिविचारः १३२८
जातिव्यक्त्यादीनां सहोपलम्भविषयविचारः १३३४
जातिव्यक्त्योः शक्तिग्रहविचारः १३९०
ब्रह्मत्वसामानाधिकरण्यविचारः १३९४
पतिशब्दार्थविचारः १३९८

## नयप्रकाशिकाविषयसूचिका


| | |
|---|---|
| सदेवेत्यादिवाक्यानां निर्विशेषवस्तुपरत्वाभावप्रतिपादनम् | ९५१ |
| "प्रत्यस्तमितभेदम्" इत्यस्य सविशेषपरत्वस्थापनम् | १०५८ |
| "ज्ञानस्वरूपम्" इत्यस्य ज्ञानमात्रस्वरूपपरत्वव्युदासः | १०६२ |
| "जगच्च सः" इति सामानाधिकरण्यतात्पर्यवर्णनम् | १०८३ |
| "परमार्थस्त्वमेवैकः" इत्यादिश्लोकानां सविशेषपरत्वस्थापनम् | १०९६ |
| "वेणुरन्ध्रविभेदेन" इत्यस्य औपाधिकभेदपरत्वनिरासः | " |
| "सोऽहं स च त्वम्" इत्यस्य नाद्वैते तात्पर्यम् | ११११ |
| "तद्भावभावमापन्नः" इत्यस्य स्वरूपैक्यपक्षाननुगुणत्वम् | ११३९ |
| परमात्मनः तदितरस्य च शरीरशरीरिभावे प्रमाणप्रदर्शनम् | ११४२ |
| "ज्ञानस्वरूपम्" इत्यस्य तात्पर्यम् | ११४३ |
| "यदा तु शुद्धम्" इत्यस्य तात्पर्यम् | " |
| "वस्त्वस्ति किम्" इत्यस्य जगन्मिथ्यात्वपरत्वखण्डनम् | ११४४ |
| "मही घटत्वम्" इति श्लोकार्थः | ११४८ |
| शुक्तिरजतदृष्टान्तवैरूप्यम् | " |
| "यज्ञः पशुः" इति श्लोकार्थः | ११४६ |
| "यच्चैतद् भुवन" इति श्लोकस्य तात्पर्यार्थः | ११४७ |
| सर्वथा भगवतः पराशरस्य सविशेषब्रह्मपरत्व एव तात्पर्यम् | " |
| बन्धस्य परमार्थत्वसाधनम् | " |
| प्रत्यक्षस्य दोषमूलत्वखण्डनम् | ११४८ |
| स्वाप्नप्रतीतेः मिथ्यात्वाभावसमर्थनम् | ११४९ |
| स्फोटवादखण्डनम् | ११५० |
| शास्त्रस्य मिथ्यात्वे दोषनिरूपणम् | ११५२ |
| सगुणश्रुतिनिर्गुणश्रुत्योः अपच्छेदनयाविषयत्वम् | " |
| जगद्ब्रह्मणोः शरीरशरीरिभावाङ्गीकारे सर्वसामञ्जस्योपसंहारः | ११५३ |
| "सत्यं ज्ञानम्" इत्यादिवाक्यस्य सगुणपरत्वम् | १२९४ |

| | |
|---|---|
| प्रसङ्गात् अद्वितीयपदस्य निमित्तान्तरनिषेधपरत्वम् | १२९५ |
| सगुणत्वे दोषापादनं समाधानं च | ,, |
| वेदार्थवर्णनमपि लोकव्युत्पत्तिमनुसृत्यैव कार्यम् | १२९६ |
| स्वयंप्रकाशस्यान्यसंवेद्यत्वे विरोधाभावः | ,, |
| "सत्यं ज्ञानम्" इत्यादिपदेषु लक्षणाविचारः | १२९७ |
| सर्वपदलक्षणानिरासः | ,, |
| "तत्त्वमसि" इत्यस्य निर्विशेषपरत्वे दोषप्रतिपादनम् | १३०३ |
| सत्यादिपदानामखण्डैकार्थपर्यवसायित्वखण्डनम् | ,, |
| "तत्त्वमसि" इत्यस्य शुक्तिरजतप्रत्ययात् वैरूप्यप्रदर्शनम् | १३०९ |
| "तत्त्वमसि" इति प्रतीतेः निष्कृष्टार्थवर्णनम् | १३१५ |
| सर्वत्र तादात्म्यनिर्देशस्य शरीरशरीरिभावनिबन्धनत्वसमर्थनम् | ,, |
| अनेन जीवेनेति वाक्येऽपि स्वरूपैक्यवादनिरासः | १३२३ |
| तादात्म्योपदेशस्य मतान्तरेष्वननुगुणत्वम् | १३२६ |
| देहात्मनोरेकधीवेद्यताविचारः | १३३५ |
| प्राचीनाद्वैतसंप्रदायेऽपि शरीरशरीरिभावस्यैवाभ्युपगमः | १३३६ |
| "यतो वाचः" इत्यस्य शब्दवाच्यत्वनिषेधे न तात्पर्यम् | ,, |
| "सोऽयं देवदत्तः" इत्यादावखण्डार्थपरतानिरासः | १३३७ |
| विशेषणोपलक्षणविचारः | १३३८ |
| निर्विकल्पकस्यापि कतिपयविशेषयुक्तत्वसाधनम् | १३३९ |
| प्रत्यक्षेषु भेदाभेदवादिमतनिरासः | १३४० |
| सर्वप्रमाणानां सविशेषविषयत्वस्थापनम् | ,, |
| प्रसङ्गात् उपमानार्थापत्त्योः पृथक्प्रमाणत्वविचारः | १३४१ |
| मीमांसकरीत्या प्रमाणपञ्चकाङ्गीकारः | १३४२ |
| प्रत्यक्षभेदनिरूपणम् | ,, |
| प्रमेयनिरूपणम् | ,, |
| वेदान्तिमतरीत्या द्रव्यविभागः | १३४३ |

दिक्काल्योः पृथग्द्रव्यत्वविचारः १३४४
देशस्यैवोपाधितः कालत्वनिर्णयः १३४५
गुणानां त्रिविधत्वनिरूपणम् ,,
जातिगुणादेरेव भेदत्वसमर्थनम् १३४६
जातिसंस्थानविचारः १३४७
अनुभूतिविचारः ,,
स्वापकालानुभवविचारः १३५३
दीपप्रभाविचारः १३५६
आत्मनः ज्ञानाश्रयत्वसमर्थनम् १३५८
अहंकारस्वरूपविवरणम् १३५९
ब्रह्मणः सद्वितीयत्वज्ञानस्य सत्यत्वासत्यत्वविचारः १३६४
मिथ्यात्वस्वरूपविचारः ,,
प्रसङ्गात् तमसो द्रव्यान्तरत्वविचारः १३६८
भावरूपाज्ञानविचारः १३७०
अन्यथाख्यात्यसत्ख्यात्योः भेदविचारः १३७२
विज्ञानयाथार्थ्यनिरूपणम् १३७५
मिथ्यावादिपक्षस्य बौद्धमतानतिरिक्तत्वप्रदर्शनम् १३७९

## तत्त्वटीकाविषयसूचिका

आदेशशब्दार्थविचारः ९५२
मृत्पिण्डदृष्टान्तानुगुण्यविचारः ९५३
सदेवेत्यादिवाक्यार्थनिगमनम् ९५४

## न्यायसुदर्शनविषयसूचिका

अद्वितीयपदे नञर्थविचारः ९७०
निर्गुणसगुणवाक्यानां विषयव्यवस्थाप्रदर्शनम् ९८१
अपच्छेदन्यायस्य तत्र विषयाभावप्रदर्शनम् ९८२
"नेह नानास्ति" इत्यस्यपृथक्सिद्धभेदनिषेधे तात्पर्यम् १००९

| | |
|---|---|
| विकारलक्षणनानात्वनिषेध इति पक्षान्तरोपन्यासः | १०१० |
| "प्रकृतिर्या मयाख्याता" इत्यत्र निर्विशेषत्वप्रतीतिरित्याक्षेपः समाधानं च | १०४८ |
| "प्रत्यस्तमितभेदम्" इत्यस्यार्थवर्णनम् | १०५९ |
| ब्रह्मण एव परमार्थत्वसमर्थनम् | १०९७ |
| "ब्रह्मैव भवति" इत्यत्र एवकारस्य निर्वाहः | ११३२ |
| भावरूपाज्ञानविचारः | ११९५ |
| यथार्थख्यातिसमर्थनम् | १२३८ |
| दिग्व्यवहारस्यौपाधिकत्वविचारः | १२४९ |
| अनिर्वचनीयख्यातिपक्षे कारिकाः | १२५० |
| "ज्ञानस्वरूप" इति श्लोके उद्देश्यविधेयनिर्णयः | १२७४ |
| "ततो हि शैलाब्धि" इत्यादिश्लोकेषु आत्माभेदप्रतीतिनिषेधः | १२७६ |
| "तत्त्वमसि" इत्यस्य बहुभवनसंकल्पानुगुणं व्याख्यानम् | १३०४ |
| "तत्त्वमसि" इत्यत्र सामानाधिकरण्ये बाधाभावप्रदर्शनम् | १३१० |
| द्विचन्द्रज्ञानदृष्टान्तविमर्शः | " |
| "ऐतदात्म्यम्" इत्यत्र शरीरशरीरिभावप्रतीतिप्रकारः | १३१६ |

# श्रुतिघट्टः

---

श्रीभाष्यम्

यदुक्तम्—वेदान्तवाक्यानि निर्विशेषज्ञानैकरसवस्तुमात्रप्रति-पादनपराणि "सदेव सोम्येदमग्र आसीत्" इत्येवमादीनीति ; तद-युक्तम्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनमुखेन सच्छब्दवाच्यस्य परस्य ब्रह्मणो जगदुपादानत्वं जगन्निमित्तत्वं सर्वज्ञता सर्वशक्तियोगः सत्यसंकल्पत्वं सर्वान्तरत्वं सर्वाधारत्वं सर्वनियमनमित्याद्यनेककल्याण-गुणविशिष्टतां कृत्स्नस्य जगतस्तदात्मकतां च प्रतिपाद्य 'एवंभूत-ब्रह्मात्मकस्त्वमसि' इति श्वेतकेतुं प्रत्युपदेशाय प्रवृत्तत्वात् प्रकरणस्य। प्रपञ्चितश्चायमर्थो वेदार्थसंग्रहे। अत्राप्यारम्भणाधिकरणे निपुणतर-मुपपादयिष्यते।

श्रुतप्रकाशिका

शास्त्रस्य लौकिकप्रमाणविरुद्धार्थप्रतिपादनासामर्थ्योपपादनेन शास्त्रस्य सविशेषपरत्वं सामान्यतः सामर्थ्यात् सिद्धम्; विशेषेण शब्दस्य पदवाक्यरूपेण प्रवृत्त्या सवि-शेषपरत्वोपपादनाच्च शास्त्रस्य सविशेषपरत्वं सामान्येन सिद्धम्; अथापि ये वाक्यविशेषाः परेण निर्विशेषपरत्वेनोदाहृतास्तेषां सविशेषपरत्वं वाक्यतात्पर्यपर्यालोचनया प्रतिपादयितुमार-भते—**यदुक्तमित्यादिना**। तत्र निर्विशेषपरत्वं संग्रहेणानुवदति—**यदुक्तमिति**। ज्ञानैकरसत्वेन शोधकवाक्येषु प्रतिपन्नत्वान्निर्विशेषत्वम्। तच्च कारणवाक्येषु प्रतिपन्नम्। **वस्तुमात्र**शब्देनान्यत्र सगुणब्रह्मणि तात्पर्याभावः सूच्यते। इत्यादीनीत्युक्ते तस्यामेवोप-निषदि पर्यवस्यतीति तद्व्यावृत्त्यर्थम् **इत्येवमादीनी**त्युक्तम्। तत् दूषयति—**तदयुक्त-मिति**। कुत इत्यत्राह—**एकविज्ञानेनेति**। "येनाश्रुतम्" इत्यादिवाक्येनैकविज्ञानेन सर्वविज्ञानं प्रतिज्ञायते। अस्यायमर्थः—येन श्रुतेन मतेन विज्ञातेन अश्रुतममतम-विज्ञातं श्रुतं मतं विज्ञातं भवतीति; न तु ब्रह्मणः सत्तया सर्वं ज्ञातं भवतीति; दार्ष्टा-न्तिकसामर्थ्यात् मृद्घटादिदृष्टान्तसामर्थ्याच्च। न हि ब्रह्मसत्तया मृत्पिण्डसत्तया वा

तत्तत्कार्यं ज्ञायते। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति मुण्डकोपनिषदि "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति बृहदारण्यके च श्रवणाच्च। अतो यथोक्त एव प्रतिज्ञावाक्यार्थः। न हि घटज्ञानेन पटज्ञानसंभव इत्येकविज्ञानेन सर्वविज्ञानं न संभवतीति शङ्कायां कार्यकारणयोस्तद् दृष्टमित्याह—यथा सोम्येति। तत्राप्यसत्कार्यवादमुखेनैकविज्ञानेन सर्वविज्ञानानुपपत्तिशङ्कां परिहरति—वाचारम्भणमिति। वाचा; वाक्शब्दोऽजहल्लक्षणया वाक्पूर्वव्यवहारपरः। वाचेति तृतीयया प्रयोजनतया हेतुत्वं विवक्षितम्। आरम्भणमिति कर्मणि ल्युट्। आरभ्यते आलभ्यत इत्यारम्भणम्। "आलम्भः स्पर्शहिंसयोः"। मृत्पिण्डेनेत्यर्थसिद्धम्। विकारो घटत्वाद्यवस्था। वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते। मृत्पिण्डो नामरूपभाक् भवतीत्यर्थः। कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह—मृत्तिकेत्येव सत्यमिति 'मृदयं घटः' इति प्रत्यभिज्ञया मृन्मयं घटादिकमपि मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थः बुद्धिशब्दादिभेदाः घटपटादिषु द्रव्यभेदेऽपि दृष्टाः 'आस्ते, शेते, सुख्यहं, दुःख्यहम्' इत्यादिषु द्रव्यैक्येऽपि दृष्टाः। अतस्ते साधारणाः। तत्र 'आस्ते, शेते, सुख्यहं दुःख्यहम्' इत्यादिषु द्रव्यैक्यनियामिका या प्रत्यभिज्ञा सैवात्रापि द्रव्यैक्यनियामिकेति भावः। अत्र मृत्तिकामात्रस्य पारमार्थ्यं विकारासत्यत्वं च विवक्षितं चेत् इतिशब्दवैयर्थ्यं स्यात्; तदा 'मृत्तिकैव सत्या' इति हि वाच्यम्। विकारासत्यत्वे दृष्टान्तः साध्यविकलः, सत्यत्वप्रतिपत्तेः। घटादिसत्यत्वं व्यावहारिकमिति चेत्, मृत्पिण्डस्यापि सत्यत्वं व्यावहारिकमिति न कारणसत्यत्वसिद्धिः। कारणस्य व्यावहारिकमेव सत्यत्वमभिमतं चेत्, तत् घटादेरपि तुल्यं स्यात्। कार्यकारणद्रव्यैक्यात् कारणविज्ञानेन कार्यविज्ञानमुपपन्नमस्तु, तथापि लोके विविधकार्यवर्गस्य विविधोपादानकत्वदर्शनादेकविज्ञानेन सर्वविज्ञानमनुपपन्नमिति शङ्कायां जगतो ब्रह्मैककारणतामाह—सदेव सोम्येदमग्र आसीदिति। श्रुतिगतसच्छब्दार्थमभिप्रेत्यात्र सच्छब्दवाच्यस्येत्युक्तम्। सगुणब्रह्मपरमिदमित्यन्यथासिद्धिर्दुर्वचेत्यभिप्रायेण परस्य ब्रह्मण इत्युक्तम्। अग्रे; सृष्टेः पूर्वमित्यर्थः, अनन्तरं सृष्टेर्वक्ष्यमाणत्वात्। विजातीयसजातीयस्वगतनानात्वव्यावृत्तिरत्र विवक्षिता चेत् अग्र इति वक्तुमयुक्तम्; न हि ब्रह्मणः कालविशेषे निर्विशेषत्वम् वैषम्यनैर्घृण्यपरिहाराय जीवबहुत्वतत्कर्मप्रवाहतदनादित्वानामभ्युपगन्तव्यत्वाच्च। तद्बहुत्व-

मपारमार्थिकमिति चेत्—न; पारमार्थिकबहुत्वस्येदानीमप्यभावादग्रशब्दवैयर्थ्यात्। न चाग्रशब्दस्याविवक्षितार्थता, अनन्तरं सृष्ट्युक्तेः। अतः कालरूपविजातीयभेदः, चेतनरूपसजातीयभेदः सार्वज्ञ्यादिसृष्ट्यनुगुणगुणरूपस्वगतभेदश्च तदानीमस्तीति विजातीयादित्रिविधभेदनिरासपरत्वं विरुद्धम्, कारणवाक्यत्वात्। न चेदिदं कारणवाक्यम्, ईदृशानां वाक्यानां सर्वशाखाप्रत्ययनयाद्विजातीयादिभेदनिरासपरत्वेन कारणपरत्वाभावात् ब्रह्मकारणत्वमप्रमाणं स्यात्। अवधारणवाचिन एवकारस्य स्वयंव्यावर्त्यविशेषोपस्थापनासमर्थस्य समभिव्याहृतपदान्तरार्थविरोधिव्यावर्तकत्वनियमदर्शनात्। सदेवेत्यवधारणमसत्कार्यवादव्युदासपरम्। न हि 'अयं विद्वानेव' इत्यवधारणं ब्राह्मणत्वं व्यावर्तयति, अपि त्वविद्वत्त्वमेव। अतः शब्दस्वारस्यात् सदेवेति निरसनीयमसत्त्वमेव; न तु विजातीयभेदः। यद्यपि सद्विजातीयमसत्; तथापि तस्य व्यावर्त्यत्वं न विजातीयत्वाकारेण, अपितु सद्विरोधित्वाकारेण। सदेव; न तु कदाचिदसदित्यर्थः। सच्छब्दो हि मानसंबन्धयोग्यतालक्षणं सत्त्वं प्रवृत्तिनिमित्तीकृत्य परमात्मनि वर्तते। अयं च सच्छब्दो विशेष्यभूतपरमात्मवाचकोऽपि कारणविषयत्वसामर्थ्यात् कारणत्वौपयिकगुणविशिष्टं प्रकृतिपुरुषकालशरीरकं परमात्मानमुपस्थापयति। एकमेवेत्यविभक्तनामरूपं कारणावस्थं ब्रह्मोच्यते। कारणावस्थायामेकत्वावधारणस्य "बहु स्याम्" इति वक्ष्यमाणकार्यबहुत्वप्रतियोग्येकत्वपरत्वात्। "एकेन मृत्पिण्डेन सर्वं मृन्मयम्" इत्युक्तदृष्टान्तसामर्थ्यात्। "तद्धेदं तर्ह्यव्याकृतमासीत्, तन्नामरूपाभ्यां व्याक्रियत" इति श्रुत्यन्तरैकार्थ्याच्चायमेवार्थः। वैशेषिकादिभिर्नित्यतयोक्तानामाकाशादीनामपि संहाराभिप्राय एवकारः। एवमविभक्तनामरूपत्वात् ब्रह्मण उपादानत्वं सिद्धम्। भाव्यवस्थाविशेषवतः प्रागवस्थायोगो ह्युपादानत्वम्। अद्वितीयमिति निमित्तान्तरनिषेधः; उपादानस्य प्रस्तुतत्वेन निमित्तस्य बुद्धिस्थत्वात्, परतन्त्ररूपविशेषाणां विहितत्वात्, निषेधस्य च विहितव्यतिरिक्तविषयत्वात्, उपरितनवाक्यसंगतेरपेक्षितत्वाच्च। एकमेवेति शब्दस्याविभक्तनामरूपतापरत्वं "बहु स्याम्" इत्यनेनावगम्यते। "तदैक्षत, तत्तेजोऽसृजत" इत्यनेनाद्वितीयपदस्य निमित्तान्तराभावपरत्वमवगम्यते। परस्य ब्रह्मणः सर्वदा सत्त्वेन सदेवेत्यवधारणमसत्कार्यवादव्युदासपरमित्युपरितनेन "कथमसतः सज्जायेत" इत्यादिवाक्येनावगम्यते। "कथमसतः" इत्यादि वाक्यं वैशेषिकमतनिरासपरम्, न तु क्षणिकवादनिरासपरं, न शून्यवादनिरासपरं

च; क्षणिकशून्यवादनिरासे कृतेऽप्येकविज्ञानेन सर्वविज्ञानस्य वैशेषिकमतनिरासापेक्ष-त्वात्। "तद्धैक आहुरसदेवेदमग्र आसीत्" इत्यारब्धत्वात्। न हि क्षणिकत्वं शून्यत्वं च कालविशेषे भवति। अतोऽसत्कार्यवादनिरासपरं "तद्धैक आहुः" इत्यादि वाक्यम्। "कुतस्तु खलु सोम्यैवं स्यात्" इति सत उत्पन्नस्य सदात्मकत्ववदसत उत्पन्नस्यासदात्मकत्वप्रसङ्ग इति भावः। उत्पत्तिर्नाम द्रव्यस्यावस्थान्तरापत्तिरित्ययमर्थो वाचारम्भणमित्यनेन शिक्षितः। तदुपजीव्योच्यते "कथमसतः सज्जायेत" इति; कथं निराश्रयावस्थासंभव इत्यर्थः। "तदैक्षत" इति सर्वज्ञत्वम्; "असृजत" इति निमित्त-त्वम्; "बहु स्याम्" इत्युपादानत्वं तदुभयानुगुणं सर्वशक्तित्वं सत्यसंकल्पत्वं च; "अनेन जीवेनात्मनानुप्रविश्य" इति सर्वान्तरत्वं चोक्तं भवति। जीवेनात्मना: जीव-शरीरकेण मयेत्यर्थः, "सिंहेन भूत्वा बहवो मयाहताः, व्याघ्रेण भूत्वा बहवो मयाहताः" इति वत्। सर्वज्ञत्वादिगुणकस्य तद्विपरीताकारजीवैक्यासंभवात्। "यस्यात्मा शरीरम्" इत्यादिवचनात् "तदनुप्रविश्य" इत्यनेनेव जीवेऽप्यनुप्रवेशश्रवणाच्च। शरीरवाचि शब्दस्य शरीरिपर्यन्तत्वस्य मुख्यतयोपपन्नत्वाच्चायमेवार्थः। "सदायतनाः" इत्यनेन सर्वाधारता; तत एव सर्वनियमनं च सिद्धम्। "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इति प्रशासनेन धारकत्वश्रवणात्। एवं सर्वाधारत्वसर्व-नियमनसर्वान्तरत्वैः शरीरिलक्षणैर्जगच्छरीरकत्वं ब्रह्मण उक्तम्। आदिशब्देन मृद्युप-योगिनः श्रुत्यन्तरसिद्धा गुणा गृह्यन्ते। "ऐतदात्म्यम्" इत्यनेन कृत्स्नस्य जगत-स्तदात्मकता चावगम्यते। "तत्सत्यम्" इति तदात्मकत्वेनैव जगतः प्रामाणिकत्वम्। जगतः स्वनिष्ठत्वेन प्रतीतिर्भ्रान्तिरित्यर्थः। अतः कृत्स्नस्य जगतः स आत्मा। "ऐत-दात्म्यमिदं सर्वं स आत्मा" इति निर्देशः "रामानुजं लक्ष्मणपूर्वजं च" इतिवदन्योन्य-संबन्धित्वतात्पर्यातिशयकृतः। यद्वा "स त आत्मान्तर्याम्यमृतः" इतिवत् कृत्स्नजगदन्तर्यामि-त्वात् तवात्मा स इत्यर्थः। तस्मात् त्वंशब्दतदर्थतद्बुद्धयस्तत्पर्यन्ता इति "तत्त्व-मसि" इत्यस्यार्थ इत्याह—**एवंभूतेति**। एवंभूतशब्देन तत्पदस्य प्रकृतपरामर्शित्वं सूचितम्।

अस्याः सद्विद्यायाः सविशेषवस्तुन्येव षड्विधतात्पर्यलिङ्गं विद्यते। उपक्रमे तावत्

"उत तमादेशमप्राक्ष्य:" इत्यत्रादेशशब्देन प्रशासिताभिधीयते। अत्र श्लोकावाचार्यपादैरुक्तौ—

"छान्दोग्ये केचिदाहुर्दिशतिरुत तमादेशमप्राक्ष्य इत्य-
त्राङ्पूर्वस्तूपदेशं प्रकटयति सतो न प्रशास्तिं घञन्त:।
नो कर्तर्यस्ति कर्मण्यगणि घञिह सत् कर्तृ शास्तौ न कर्म
स्यात् स्यात्कर्मोपदेशे तदिदमुत तमादेशवाचोपदेश्यम्॥
अत्र ब्रूम: प्रशास्तिं वदति दिशिरसावाङ्मुखो नोपदेशं
शास्ता सोऽतिप्रसिद्धो न हि पर इह चापेक्षितार्थप्रसङ्ग:।
युक्तोऽसाधारणोक्त्या घञगणि करणेऽप्यत्र वैवक्षिकत्वं
शाब्दोक्तं कारकाणां ननु करणतया कर्तरि स्याद्विवक्षा॥"

इति। आदेशशब्देनोपदेश्यमुच्यते। प्रकृत्यर्थ उपदेश:। प्रत्ययार्थ: कर्मत्वम्, "अकर्तरि च कारके संज्ञायाम्" इति कर्तृव्यतिरिक्तकारके घञो विहितत्वात्, उपदेशे ब्रह्मण: कर्मत्वोपपत्तेश्च। प्रशासने तु ब्रह्म न कर्म; अपितु कर्तृ। कर्तृव्यतिरिक्तकारके हि घञ्प्रत्ययविधि:। नात्र कर्तरि कप्रत्यय उपपद्यते, "क्ङिति च" इति गुणप्रतिषेधादादेशशब्दरूपासिद्धे:। नापि पचाद्यच्प्रत्यय उपपद्यते, दिशिधातोरिगुपधत्वेन "इगुपधात्क:" इत्यपवादसूत्रेण कप्रत्ययप्राप्तेर्गुणाभावात्। अतो घञ्प्रत्ययान्त एवायमादेशशब्द:। स च प्रत्यय: कर्तर्यविहित इति कर्मार्थत्वस्यैव युक्तत्वादुपदेश्यमेवादेशशब्दवाच्यमिति। अत्रोच्यते—प्रकृत्यर्थ: शासनं, प्रसिद्धिप्राचुर्यात्; अन्यथा स्वारस्यभङ्गात्। "आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचन:, उपपूर्वस्तु नियोज्यप्रयोजनवचन:" इति हि न्यासकार:। नियोक्तरि प्रयोजनं यस्य तस्यार्थस्य वाचक इत्यर्थ:। एवमन्यत्रापि। किंच उपदेश्यत्वं लौकिकालौकिककर्मब्रह्मभागार्थसाधारणम्; शासितृत्वं तु ब्रह्मणोऽसाधारणम् "अन्त: प्रविष्ट: शास्ता जनानाम्," "एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतिभिर्निरुपाधिकप्रशासनस्य ब्रह्मासाधारणत्वश्रवणात्। निरुपाधिकोपदेश्यत्वं ब्रह्मण इत्यसाधारण्यमिति चेत्; न, इष्टप्राप्त्यनिष्टनिवृत्तितत्साधनेषु साधारण्यात्। यद्यप्यपरिमितसुखप्राप्तिदु:खनिवृत्त्यादि साक्षादुपदेश्यं स्यात्, तथापि संसारनिवृत्तिब्रह्मतदुपासनानामुपदेश्यत्वं साधारणम्। प्रष्टव्यस्योपदेश्यत्वमर्थसिद्धम्। अत उपदेश्यत्वकथन-

वैयर्थ्यं च। ननु "येनाश्रुतं श्रुतम्" इत्यनेनैकवाक्यत्वात् स्वज्ञानेनान्यज्ञानहेतुताविशेषितमुपदेश्यत्वमसाधारणमिति चेत्, तथापि तादृशमुपदेश्यत्वं प्रतिज्ञावाक्येन प्रष्टव्यत्वोक्त्या चार्थसिद्धमित्यनपेक्षितोपदेश्यत्वकथनादप्यपेक्षितं प्रशासितृत्वमेव वाच्यमिति युक्तम्। "येनाश्रुतम्" इत्युपादानत्वे सिद्धे प्रशासितृत्वेन हि निमित्तत्वं सिध्येत्। निमित्तान्तरे सत्येकविज्ञानात् सर्वविज्ञानं नोपपद्यते। अतः प्रतिपिपादयिषितवस्तुनोऽविवक्षितासाधारणाकारविशिष्टतयैव प्रतिपादनमुचितम्। घञ्प्रत्ययस्य तु करणेऽपि व्युत्पन्नत्वात् 'विवक्षातः कारकाणां प्रवृत्तिः' इति शाब्दोक्तन्यायेन कर्तर्येव करणान्तरनैरपेक्ष्येण साधकतमत्वविवक्षया तथा प्रयोग उपपद्यते। "अकर्तरि" इति सूत्रस्य प्रयोजनं करणत्वविवक्षया विना कर्तर्यसाधुत्वेन प्रयोगनिवृत्तिः। उपदेशपक्षे प्रकृत्यर्थास्वारस्यं प्रत्ययस्वारस्यं च। प्रशासनपक्षे तु प्रत्ययास्वारस्यं प्रधानभूतप्रकृत्यर्थस्वारस्यमर्थौचित्यं चेति वैषम्यम्। अतः प्रशासितैवादेशशब्दाभिधेय इति स्वीकर्तुं युक्तम्। एवमुपक्रमे निरुपाधिकप्रशासनगुणयोग उक्तः। तथा जगदुपादानत्वं निमित्तत्वं तदनुगुणसार्वज्ञ्यसर्वशक्तित्वादिकं चावगतम्। उपसंहारे च "तत्त्वमसि" इति सामानाधिकरण्येन जीवान्तर्यामित्वं नाम गुणविशेष उक्तः। अस्यैवार्थस्य बहुश आवर्तितत्वादभ्यासोऽप्यस्ति। एवं ब्रह्मणो जगत्कारणत्वजगदन्तरात्मत्वादिगुणानां प्रमाणान्तराप्रतिपन्नत्वादपूर्वता सिद्धा। एवमुपासकस्य "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति शरीरपातानन्तरं मोक्षश्रवणात् फलमपि विद्यते। पितुः पुत्रं प्रति प्रतिवचनरूपत्वादर्थवादश्च लब्धः। मृत्पिण्डादिदृष्टान्तोपपादनादुपपत्तिश्चेति। अस्मिन् दृष्टान्तत्रयेऽपि विवर्तपक्षानुगुणः कोऽपि दृष्टान्तो न दृश्यते। अपितु परिणामपक्षानुगुण एव दृश्यते। दार्ष्टान्तिकविषयवाक्येऽपि "तत्तेजोऽसृजत" इत्युक्तम्; न तु 'तदभ्रमत्' इति। अतोऽस्यां श्रुतौ विवर्तपक्षप्रसङ्गोऽपि नास्ति। श्रुत्यन्तरेषु च "तदात्मानं स्वयमकुरुत" इत्यादिकं श्रूयते; न तु 'व्यवर्तत' इति। सूत्रं च "परिणामात्" इति; न तु 'विवर्तात्' इति। स्मृतिषु च "कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्। क्षितितलपरमाणवोऽनिलास्ते" इत्यादिषु परिणामपक्षा एव दृश्यन्ते। अतः श्रुतिस्मृतिसूत्रस्वारस्यात् परिणाम एवाभ्युपगन्तव्यः। स च परिणामः सद्वारक एव भवितुमर्हति, निर्विकारत्वनिर्दोषत्वानुप्रवेशशरीरशरीरिभावादिविषयानेकश्रुतिस्वारस्यात्, अन्यथा तद्विरोधप्रसङ्गाच्चेति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं किम्?

कथं तदुपपादनम्? इत्याशङ्कायामेतद्विस्तरो वेदार्थसंग्रह इत्याह—**प्रपञ्चित इति ।** अत्रा-पेक्षितार्थः कथं ज्ञास्यत इत्यत्राह **अत्रापीति । निपुणतरम्;** तस्याधिकरणस्यै-तदर्थैकविषयत्वादिति भावः ।

भावप्रकाशिका

**विकारो घटत्वाद्यवस्थेति;** ननु पूर्वत्र मृन्मयशब्देन विकारार्थमयडन्तेन यस्य परामर्शः, तस्यैवेहापि विकारशब्देन परामर्शो युक्तः । ततश्च पूर्वत्र मृन्मयशब्देनावस्था-श्रयस्य परामृष्टतया विकारशब्देनापि धर्मिण एव परामर्शो युक्तः, न त्ववस्थाया इति चेत्—सत्यं पूर्वत्र मृन्मयशब्देनावस्थावतः परामर्शः; इह तु न तत्परामर्शो युज्यते; तथा हि सति कार्यकारणाभेदो नोपपादितः स्यात् । न हि मृत्पिण्डेन कार्यविशेषाय घटः स्पृश्यत इत्येतावता स्प्रष्टृस्पृष्टव्ययोरभेदः सिध्यति । अतो मृन्मयविकारशब्दयोर्भिन्नार्थ-त्वमेव वक्तव्यम् । अत एव "मृत्तिकेत्येव सत्यम्" इत्यत्राव्यवहितविकारशब्दनिर्दिष्टा-वस्थाया न परामर्श इति भावः । **मृदयं घट इति प्रत्यभिज्ञयेति;** अत्र केचित्—इतिशब्दबलात् प्रतीतेः शब्दस्य वा परामृष्टव्यत्वात् मृत्तिकेति ज्ञानमेव सत्यमिति श्रुत्यर्थः । तस्य ज्ञानस्य सत्यत्वे मृद्द्रव्यस्याबाधितत्वं सिद्धमित्युत्तरग्रन्थः फलितार्थकथनपरो द्रष्टव्यः । न च मृदयं मृत्तिकेत्येव सत्यं प्रामाणिकं प्रमाणतः प्रतीयत इत्यर्थाश्रयणे को दोष इति वाच्यम्, प्रमाणतो मृत्तिकेति प्रतीयत इति वा मृत्तिकेत्याकारकं यत् प्रमाणं तेन प्रतीयत इति वा इतिशब्दस्य प्रमाणप्रतीत्यन्यतरान्वयो वक्तव्यः । प्रमाणतः प्रतीयत इति हि निर्देशे कृते तथान्वयप्रतीतिरुपपद्यते । सत्यशब्दात् प्रतीतौ तथा गमकत्वादर्शनादिति वदन्ति । अन्ये तु मृत्तिकेत्येव प्रमाणतः प्रतीयत इत्यत्रेव सत्यपदेऽपि तथावगतेरनुभव-सिद्धतया प्रत्याख्यातुमशक्यत्वात् मृदयं मृत्तिकेत्येव सत्यं प्रमाणप्रतिपन्नमित्युक्तौ न दोषः; अत एव मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थ इति टीकावाक्येऽपि न चोद्यावकाशः; तस्यापि वाक्यस्य गमकत्वादिति वदन्ति । ननु उपादानोपादेयाभेदप्रतिपादनमुखेनासत्कार्यवादे निराकरणीये विकार आलभ्यत इति प्रतिपादनस्यैव सप्रयोजनतया नामधेयस्याप्यालभ्य-मानत्वप्रतिपादनं किमर्थमिति चेत्; सत्यम्; घटादीनामपि मृत्पिण्डतैवेत्युपपादनाभावे उपा-दानोपादेयाभेदो न प्रतितिष्ठतीति तदप्युपपादनीयमिति द्रष्टव्यम् । ननु नैयायिकादिभिरपि मृन्मये घटशरावादौ मृत्तिकात्वस्य सत्त्वाभ्युपगमात् अनेनासत्कार्यवादनिरासः कथं फलित

इति चेत्—न; "मृत्तिकेत्येव सत्यम्" इति श्रुतेर्न मृत्तिकात्वमात्रप्रतिपादने संरम्भः। किंतु 'तदेवेदं मृद्द्रव्यम्' इत्यभेदप्रत्यभिज्ञया उपादानभूतमृद्द्रव्याभेदप्रसाधनपरा सा। **सर्वविज्ञानमुपपन्नमिति शङ्कायामिति;** यद्विज्ञानेन सर्वं ज्ञातं भवति तादृशं वस्तु किमिति भगवांस्त्वेव मे तत् ब्रवीत्विति पृच्छायामित्यर्थः। भ्रान्तः शङ्कते—**यद्यपि सद्विजातीयमसदिति न विजातीयत्वाकारेणेति;** अयं भावः—"इदं सदेव" इत्येवकारेण इदंशब्दनिर्दिष्टे जगति सृष्टेः प्राक् सद्विजातीयत्वं तदन्यत्वं तद्विरोधित्वं वा व्युदसनीयम्; न तु सर्वस्मिन् लोके विजातीयभेदनिषेधः। यथा 'घटः पूर्वाह्णे सदेव' इत्युक्ते एवकारेण घटे सद्विजातीयत्वं वा सदन्यत्वं वा सद्विरोधित्वरूपं वा निषिध्यते, न तु सर्वस्मिन् लोके पटादिविजातीयभेद इति। ननु "सदेव" इत्यनेन सृष्टिप्राक्कालीनसत्ता प्रतीयते चेत्, ब्रह्मकारणत्वमनुपपादितं स्यात्; सच्छब्देन ब्रह्मप्रतिपादने वा मानसंबन्धयोग्यत्वलक्षणसत्तायाः सदित्यनेनाप्रतिपादितत्वादसत्कार्यवादो न निराकृतः स्यादित्याशङ्क्याह—**सच्छब्दो हि मानसंबन्धयोग्येति;** प्रवृत्तिनिमित्तयोगस्य ब्रह्मण्येव पुष्कलत्वादिति भावः। नन्विदानीमपि जगतः सदात्मत्वात् 'अग्रे' इति व्यर्थम्। किंच 'एकमेवासीत्' इत्यनेनैवासत्कार्यव्युदाससिद्धेः 'सदेवासीत्' इति व्यर्थम्। किंच इदंशब्देन जगतः परामर्शे तस्य ब्रह्मणैक्यासंभवात् सदासीदित्ययुक्तम्। तच्छरीरकब्रह्मपरत्वं चायुक्तम्, अश्रुतवेदान्तं श्वेतकेतुं प्रति इदंशब्दस्य ब्रह्मपर्यन्तबोधकत्वासंभवादिति चेत्—न; इदं जगत् सृष्टेः प्राक् सदेव सद् ब्रह्मैव सत् एकमविभक्तनामरूपमासीदित्यर्थः। अधुना जगतस्तादृशसद्रूपत्वाभावादग्र इति सार्थकमेव। 'एकमेवासीत्' इत्युक्ते अविभक्तनामरूपमासीदिति प्रतीतावपि तादृशब्रह्मात्मकत्वस्यापि प्रतिपिपादयिषिततया सच्छब्दसार्थक्यम्। ननु "सदेवेदं जगत् प्राक् सृष्टेरेकम्" इति वेदार्थसंग्रहश्रुतप्रकाशिकायां व्याख्यातत्वात् कथमेवमिति चेत्—न; सिद्धस्यैवोद्देश्यविशेषणतया सदित्यस्यासिद्धत्वेन विधेयकोटावेव निवेश्यतया तत्राप्यत्रैव तात्पर्यात्। यद्यप्यश्रुतवेदान्तेन श्वेतकेतुना न तद्वाक्योपक्रमदशायामेवं ज्ञायते, अथापि शरीरात्मभावप्रतिपादनानन्तरमिदंशब्देन जगच्छरीरकं ब्रह्म ज्ञास्यतीति बुद्ध्या 'सदेव सोम्येदमग्र आसीत्' इत्याचार्योपदिष्टमित्युक्तेर्विरोधाभावात्। ननु घटशरावादि पूर्वाह्णे मृदेवासीत्; पश्चात् घटादिरूपेणाभवत्; तस्मान्मृदात्मकमेव घटशरावादीति निर्देशवत् किं न

स्यादिति चेत्—न; "अनेन जीवेनात्मनानुप्रविश्य" इत्यादि वाक्यं श्रुतवतः स्वरूपेण ब्रह्मपरिणामत्वशङ्काया अभावेन शरीरात्मभावस्यैव प्रतीत्या इदंशब्देनापि जगच्छरीरक-ब्रह्मप्रतीतेरेव संभवात् । **परतन्त्ररूपविशेषाणामिति;** कालादृष्टादीनामित्यर्थः । उपरितनवाक्यसंगतिमेव दर्शयति—**एकमेवेत्यादिना । ब्रह्मणः सर्वदा सत्त्वेनेति;** सच्छब्दप्रवृत्तिनिमित्तपौष्कल्याधारभूतब्रह्माभेदस्य 'सदेवेदम्' इति बोधनात् कार्यस्य कदाप्यसत्त्वशङ्काव्यावृत्तिरित्यर्थः । **वैशेषिकमतनिरासपरमिति;** न च तथा सति "तद्धैक आहुरसदेवेदमग्र आसीत् एकमेवाद्वितीयम्" इत्यनुवादोऽनुपपन्नः, तैस्तथानभ्युपगमादिति वाच्यम्, शून्यवादनिराकरणेऽपि दोषसामान्यात् । न हि शून्यवादिनैकमद्वितीयं किंचिदभ्युपेतम्, सर्वदा सर्वशून्यत्वस्यैव तेनाभ्युपेतत्वात् । यदि च तद्वाक्यस्यैकत्वाद्वितीयत्वयोर्न तात्पर्यं, तर्हि वैशेषिकस्यापि तत्तुल्यमिति भावः । **वैशेषिकादिमतनिराससापेक्षत्वादिति;** ननु "मृत्तिकेत्येव सत्यम्" इत्यत्रैव तन्निराकृतम्; इतरथा एकविज्ञानेन सर्वविज्ञानसंभवमभ्युपगम्य "भगवांस्त्वेव मे तद्ब्रवीतु" इत्युपदेशप्रार्थनानुपपत्तेरिति चेत्—न; मतानुवादपूर्वकं सयुक्तिकं प्रत्याख्यातमित्यत्र तात्पर्यात् । **मृद उत्पन्नस्य मृदात्मकत्ववदिति;** न च सतः कार्यस्यासदुत्पन्नत्वस्यानभ्युपगतत्वात् कथमापादनमिति वाच्यम्, 'जगत्पूर्वमसदासीत्' इदानीं सदासीत्' इत्युक्ते सतोऽसदुपादानकत्वमुक्तं स्यात्, यथा 'घटशरावादिः पूर्वं मृदासीत्, पश्चात् घटादिरासीत्' इत्युक्ते तयोरुपादानोपादेयभाव उक्त एव स्यादिति निश्चित्यैतद् दूषणापादनमिति द्रष्टव्यम् । **कथं निराश्रयावस्थासंभव इत्यर्थ इति;** अयं भावः—यदि प्रकृत्युपादानकस्य महदादेः प्रकृतित्वाभाववत् असदुपादानकस्यापि सतो नासत्त्वप्राप्तिः, सत्त्वावस्थाप्राप्तेरेवासत्त्वावस्थाविरोधित्वादिति; तदा तदपि न संभवति, असतः सत्त्वावस्थाप्राप्तेरेवासंभवान्निराश्रयावस्था कथं लभ्येतेति । **तदात्मकत्वेनैवेति;** "ऐतदात्म्यमिदं सर्वम्" इति पूर्ववाक्ये ऐतदात्म्यम् एतदात्मकमित्यर्थः, स्वार्थे ष्यञ् । ततश्च, "तत्सत्यम्" इत्युत्तरत्रापि पूर्वनिर्दिष्टवेषविशिष्टस्य पराम्रष्टव्यतया तदात्मकस्यैव जगतः सत्यत्वसिद्धिरिति भावः । ननु "ऐतदात्म्यम्" इत्यनेनैव जगद्ब्रह्मणोः शरीरशरीरिभावे कथिते "स आत्मा" इति निर्देशवैयर्थ्यमिति शङ्कां परिहरति—**रामानुजं लक्ष्मणपूर्वजं चेतिवदिति ।** यद्वा "स त आत्मा" इत्यस्मिन् पक्षे 'य आत्मा, तत्त्वमसि' इत्यनयोः पौनरुक्त्यपरिहारः

कथंचिदनुसंधेयः । **तत्पर्यन्ता इति तत्त्वमसीत्यस्यार्थ इति ;** तत्त्वंशब्दादीनां तदर्थपर्यन्तत्वं "तत्त्वमसि" इत्यस्य प्रघट्टकस्य फलितार्थ इत्यर्थः, न तु "तत्त्वमसि" इत्यस्यैवार्थ इति मन्तव्यम्, "तत्त्वमसि"इत्यस्य तावदर्थकत्वाभावात् । **इगुपधात्क इत्यपवादसूत्रेणेति ;** "इगुपधज्ञाप्रीकिरः कः" इत्यपवादसूत्रेणेत्यर्थः । नन्विगुपधलक्षणकप्रत्ययस्य न पचाद्यज्बाधकत्वम्, तथा हि सति देवसेषादिरूपासिद्धिप्रसङ्गात् पचादित्वाश्रयणस्य कप्रत्ययबाधकत्वार्थकत्वादिति चेत्—न ; भावानवबोधात् । "नन्दिग्रहिपचादिभ्यः" इति सूत्रे "सर्वधातुभ्योऽज्वक्तव्यः" इत्यौपसंख्यानिकस्योत्सृष्टस्याच्प्रत्ययस्य शङ्किततया तस्येगुपधलक्षणकप्रत्ययबाध्यत्वाभिधानेऽदोषात् । औपसंख्यानिकेऽप्यचि 'पचाद्यच्' इति व्यवहारस्य ग्रन्थेषु दर्शनादिति द्रष्टव्यम् । **प्रकृत्यर्थः शासनमित्यत्र** केचिच्चोदयन्ति—यत्तावदुच्यते प्रसिद्धिप्राचुर्यात् प्रकृत्यर्थः शासनमिति ; सत्यमेव तत् ; "शासनं विविच्य ज्ञापनम्" इति धातुवृत्तिकृता व्याख्यातत्वादुपदेश एव पर्यवसानम् "उपदेशेऽजनुनासिक इत्," "स्थानिवदादेशोऽनल्विधौ" इत्यादिसूत्रेषु "दिशिरुच्चारणक्रियः" इति महाभाष्योक्तेः ।"अथातोऽहंकारादेशः" इत्यादावादेश उपदेश इत्यर्थः । "इदं शास्त्याचार्यः" इति भाष्यस्य 'इदमुपदिशति' इति ह्यर्थः । "तदशिष्यम्" इत्यादौ "अवक्तव्यम्" इति व्याख्यातम् । ततश्चादेशनं शासनमुपदेशनम् । तत्कर्मत्वं च "अनु म एतां भगवो देवतां शाधि" इति ब्रह्मणः सिद्धमिति प्रकृतिप्रत्यययोरविरोधसंभवात् प्रत्ययास्वारस्यानुसरणस्यायुक्तत्वात् । न चानुशासनकर्मत्वेऽपि न शासनकर्मत्वमिति वाच्यम्, "शासु अनुशिष्टौ" इति शासनस्यैवानुशासनरूपत्वात् । ततश्च करणत्वाध्यारोपेण घञ्समर्थनमप्यनुचितम्, आरोपस्यानुचितत्वात् । ननु करणत्वस्य नाध्यारोपः, तस्यापि सत्त्वादिति चेत्—न ; तथा सति सिद्धान्ते प्रत्ययास्वारस्याभ्युपगमस्यायुक्तत्वात् । अत एव 'असिश्छिनत्ति' इत्यादौ सौकर्यातिशयविवक्षया "ब्रह्मदृष्टिरुत्कर्षात्" इतिन्यायेन करणे कर्तृत्वारोपेऽपि न कर्तरि करणत्वारोपसंभवः, तथा सति राजनि भृत्यत्वारोपस्येवानर्थावहत्वात् । अत एव "साधकतमं करणम्" इति सूत्रे अधिकरणस्थाल्यास्तनुकपालतया साधकतमत्वविवक्षया 'स्थाल्या पचति' इति प्रयोग उपपद्यते । न चैवं कर्तुरपि करणत्वविवक्षाप्रसङ्गः, भिन्नजातीयत्वात् । सकलसाधनविनियोगकारी खल्वसौ । न हि शतधनो निष्कधनेन स्पर्धितुमर्हतीति कर्तुः करणत्वविवक्षाभाव उपपाद्यते । किं च

करणत्वे विवक्षिते "करणाधिकरणयोश्च" इति परेण ल्युटा बाधितत्वेन घञोऽप्रसङ्गः। न च "हलश्च" इत्यनेन घञः प्रसङ्गः। तत्रापि "संज्ञायाम्" इत्यनुवृत्तेः। न च त्वन्मतेऽपि कर्मणि घञ् न स्यात्, "अकर्तरि च कारके संज्ञायाम्" इति संज्ञायामेव घञो विधानादिति वाच्यम्, "अकर्तरि च" इत्यत्र चकारस्य भिन्नक्रमत्वमाश्रित्या-संज्ञायामप्यस्तीति पदमञ्जर्यादौ समर्थितत्वात्। "संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात्" इति वार्तिककृतोक्तत्वाच्च। किं च घञः करणार्थत्वे उपक्रम आदेशशब्देन प्रशासिताभिधीयत इति यदभिहितं तद्विरुध्येत, प्रशासनकरणत्वस्यैवाभिहितत्वेन प्रशासनकर्तुरनभिहितत्वात्। यच्चोक्तम्— प्रशासितृत्वमसाधारणमिति; तदपि न, आदेशशब्देन प्रशासनकरणत्वमात्राभिधानेऽपि प्रशासितृत्वानभिधानात्। तदभिधानेऽपि निरुपाधिकप्रशासितृत्वस्यैव ब्रह्मासाधारणत्वात्। अत एव "ब्रह्मजिज्ञासा" इति सूत्रे 'ब्रह्मणः' इति कर्मणि षष्ठीपरिग्रहात् ब्रह्मण एवाभिधानिकजिज्ञासाकर्मत्वं, तदुपासनादीनां त्वाक्षेप्यमित्युक्तम्। किञ्च आदेशशब्दमात्रस्य अतिप्रसङ्गमाशङ्क्य तमित्येवंविशेषणदानादवश्यं तमित्यस्यादेशविशेषकत्वमभ्युपेयम्। यदीहादेशशब्दस्यैव निरुपाधिकप्रशासितृत्वमर्थः, तदा तस्य परमात्मासाधारणत्वात् तच्छब्दो विशेषको न स्यात्। यदपि चोक्तं प्रष्टव्यत्वकथनेनोपदेश्यत्वं सिद्धमिति तत्कथनस्यानपेक्षितत्वात् प्रशासितृत्वमेवार्थ इति; तन्न, 'यद्यपि पूर्वं नाप्राक्षम्, अधुना स्वयमेव ज्ञास्यामि' इति बुद्धिं व्युदसितुमुपदेष्टव्यत्वकथनस्यैवापेक्षितत्वात्। अत एव "तं त्वौपनिषदं पृच्छामि" इत्यादौ प्रष्टव्यस्योपदेश्यत्वलक्षणौपनिषदत्वकथनम्। यच्चोक्तम् सर्वविज्ञानप्रतिज्ञासिद्ध्यर्थं निमित्तत्वमपेक्षितमिति; तन्न, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबलादुपादानत्वस्येव तदन्यथानुपपत्त्या निमित्तत्वस्यापि लाभसंभवेन तस्य पृथगवक्तव्यत्वात्, तदनुपपत्तेर्भवतैवोक्तत्वाच्च। वस्तुतस्तु निमित्तान्तरसद्भावे एकविज्ञानेन सर्वविज्ञानमनुपपन्नमित्युक्तिरप्यसंगता, नित्यविभूत्यज्ञानेऽप्येकविज्ञानेन सर्वविज्ञानं यथोपपद्यते, कार्यवर्गस्य ज्ञातत्वात् सर्वशब्दस्येदंकारगोचरबहुभवनसंकल्पपूर्वकसृष्टिमात्रविषयत्वात्, तथा तादृशनिमित्तान्तरसद्भावेऽप्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञा कुतो न संगच्छत इति। अत्रोच्यते— "एष आदेशः, एष उपदेशः" इत्येवं पृथगुपदिष्टयोः "न वायुक्रिये पृथगुपदेशात्" इति न्यायेनादेशोपदेशयोर्भेदावश्यंभावात् निमन्त्रणामन्त्रणयोरिव वृक्षवनस्पतिशब्दयोरिव च स्नेहभक्तिशब्दयोरिव

च क्वचिदेकविषये प्रयोगमात्रेणानुभवभेदस्य दुरपह्नवत्वात् । 'आदिशति' इत्युक्ते हि यद्वाक्योल्लङ्घने दण्डो भवति तादृशशब्दप्रयोक्तृत्वं नियमयितृत्वमाज्ञापयितृत्वं प्रतीयते । आदिशतीति व्यवहारः प्रभुविषय एव । अत एव न्यासकारेणादेशोपदेशयोर्भेदो वर्णितः—"आङ्पूर्वो दिशतिर्नियोक्तृप्रयोजनवचनः" इति ; "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादौ तथैव प्रतीतेः । ततश्च प्रकृतिस्वारस्येन नियमनापरपर्यायाज्ञापनरूपार्थे प्रतीते घञ्प्रत्ययस्य कर्तृव्यतिरिक्तकारकमात्रवाचिनो योग्यतावशात् त्वन्मते कर्मार्थकत्ववत् अस्मन्मतेऽपि कारकवाचिनो घञ्प्रत्ययस्य सकलकारकप्रयोक्तृकर्तृलक्षणा समाश्रीयते । प्रष्टव्यवस्तुनस्तादृग्रूपत्वात् असंजातविरोधिमुख्यप्रकृत्यर्थानुग्रहेण जघन्यलक्षणाया आश्रयणीयत्वात् "पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः" इत्यादावहःपरत्वस्वरसत्रिवृदादिपदमुख्यत्वानुसारेण जघन्यसंवत्सरपदस्यैव सौरचान्द्रमासाद्यनेकार्थसाधारण्येन निश्चयासमर्थस्याजहल्लक्षणाया अभ्युपेतत्वात् । तथा "प्रयाजशेषेण हवींष्यभिघारयति" इत्यादौ प्रयाजशेषप्रातिपदिकानुरोधेन तृतीयायां द्वितीयार्थलक्षणाया आश्रितत्वात् । तथा "प्राणा वा ऋषयः" इत्यादौ ऋषिशब्दानुसारेण बहुवचनश्रुतेः पाशन्यायेन गौणार्थकत्वस्य "गौण्यसंभवात् तत्प्राकृतेश्च" इत्यत्रोपादितत्वाच्च । नन्वादेशपदस्य प्रशासनापरपर्यायाज्ञापन इवोपदेशे प्रसिद्धिप्राचुर्याभावेऽप्युपदेशार्थकत्वे प्रकृते सर्वात्मना मुख्यार्थत्यागाभावात् प्रत्ययस्य त्वन्मते कर्तृलक्षणायां मुख्यार्थत्यागात् कांस्यभोजिन्यायेन जघन्यद्यावापृथिव्यैककपालानुरोधेन मुख्येन्द्राग्न्यादीनां प्रस्तरबर्हिर्नियमाश्रयणवत् "एकधा ब्रह्मण उपहरति" इत्यत्र सकृत्त्वसहत्वसाधारणस्यैकधाशब्दस्य भक्षान्तरप्रापकदुर्बलचोदकानुग्रहेण सहत्वार्थत्वस्वीकारवत् "सप्तदश प्राजापत्यान्" इत्यत्र प्रजापतिसंबन्धविशिष्टान्वययोग्यस्यापि बहुत्वस्यैकपशुनिष्पन्नैकदेशावदानप्रापकदुर्बलचोदकानुसारेण विशिष्टान्वयाभ्युपगमेन द्रव्यदेवतासंबन्धाक्षिप्तयागभेदाभ्युपगमवच्च जघन्यघञ्प्रत्ययानुसारेण मुख्यदिशेरुपदेशार्थकत्वमेव युक्तम् । प्रकृते मुख्यार्थत्यागाभावात् प्रचुरप्रसिद्धार्थत्यागमात्रं त्ववशिष्यते । तत्तु न दोषाय । अत एव "पत्नय उपगायन्ति" इत्यादौ गीतिशब्दस्य शारीरगाने प्रसिद्धिप्राचुर्ये सत्यपि वादित्रादिगानस्यापि गीतशब्दप्रयोगविषयत्वेन मुख्यार्थत्वात् संनिहितस्य दुन्दुभ्यादिगानस्यैव काण्डवीक्षणादिभिरुपचयं कुर्वत्यश्च पत्न्यो नर्त्विजां निवर्तिका इति दशमे सिद्धान्तितमिति

चेत्— मैवम्; गानशब्दस्य बर्हिराज्याधिकरणन्यायेन गीतमात्रवाचित्वात् युक्तं तत्र संनिहितदुन्दुभ्यादिगानवाचित्वम्; इह त्वादेशशब्दस्य क्वचिदपि 'शिष्यो गुरुमादिदेश' इत्यादिप्रयोगाभावेन साधारणोच्चारणाद्यर्थकत्वाभावात् उपदेशादेशशब्दयोरिवादेशोपदेश-शब्दयोरपि भिन्नार्थकत्वेनादेशशब्दस्योपदेशार्थकत्वे मुख्यार्थत्यागस्यावर्जनीयत्वेन जघन्य-प्रत्यय एव लक्षणाया उचितत्वात्। वस्तुतस्तु "उपदेशेऽजनुनासिक इत्" इति सूत्रे "करणाधिकरणयोश्च" इति ल्युटा बाधितस्य घञः "अकर्तरि च कारके" इत्यने-नाप्रसङ्गमाशङ्क्य "कृत्यल्युटो बहुलम्" इति घञो भाष्यकृता समर्थितत्वात् तन्न्यायेन कर्तर्यपि तेनैव सूत्रेण घञ्सिद्धौ लक्षणाया अप्रसङ्गात् प्रशासितृत्वार्थकत्वमेव युक्तमित्युत्प-श्यामः। **तस्य तावदेव चिरमिति; तस्य;** सद्विद्यानिष्ठस्य। **तावदेव चिरम्;** तावानेव विलम्बः, यावत्प्रारब्धकृतदेहान्न विमोक्ष्यते। अथ अनन्तरं ब्रह्म संपत्स्यत इति तदर्थः। **अर्थवादश्च लब्ध इति;** "पारिप्लवार्थाः" इत्यधिकरणे विद्यासंनिधिपठि-तानां "श्वेतकेतुर्हारुणेय आस" इत्याद्याख्यायिकानां तदर्थवादतया तच्छेषत्वस्य स्थापित-त्वादिति भावः। यद्यप्ययमर्थवादो न सविशेषत्वैकान्तः, तथापि लिङ्गान्तरेण सविशेष-त्वतात्पर्ये निश्चिते अर्थवादस्यापि तदेकान्तत्वं सिध्यतीति भावः। द्वितीयेंऽशे सप्तमे यमस्य स्वपुरुषं प्रति वचनम्—

> "कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्।
> सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः॥
> क्षितितलपरमाणवोऽनिलान्ते पुनरपि यान्ति तथैकतां धरित्र्याम्।
> सुरपशुमनुजादयस्तथान्ते गुणकलुषस्य सनातनेन तेन॥"

इति। **तदर्थैकविषयत्वादिति;** ऐदंपर्येण प्रवृत्तत्वादिति भावः।

### श्रुतप्रदीपिका

अप्रतिष्ठितं मानविरुद्धतर्कत्वात्प्रबलतयाभिमतमानान्तरनिरूपणं परिसमाप्य प्रत्यक्षादे-र्बलीयस्त्वात् शब्दस्यातीव सविशेषपरत्वाच्च सामान्यतः सविशेषपरत्वे स्थिते वाक्यविशे-षाणां वाक्यतर्कपर्यालोचनया सविशेषपरत्वं वक्तुं परोक्तार्थं संग्रहेणानुवदति— **यदुक्तमित्या-दिना।** निर्विशेषादिना शोधकाद्यर्थोक्तिः। मात्रशब्देन सगुणे तात्पर्याभावः। एवंशब्द एतत्प्रकरणमात्रपरत्वव्युदासार्थम्। परिहरति— **तदिति।** अर्वाचीनं सगुण-

मित्यन्यथासिद्धिव्युदासायाह—**सच्छब्देति** । "एकमेव," "बहु स्याम्" "ऐक्षत" "असृजत" "सदायतनाः सत्प्रतिष्ठाः" "ऐतदात्म्यमिदम्" "तत्त्वमसि" इत्यादीनामर्थ उक्तः । **जगदुपादानत्वे**त्यादिना सर्वान्तरत्वं सर्वनियमनं च धारणादर्थसिद्धेः । "अन्तः प्रविष्टः शास्ता" "प्रशासने गार्गि" इति श्रुतेः । प्रतिज्ञावाक्यं किम्? सा च कथं युज्यत इत्यपेक्षायामाह—**प्रपञ्चित इति** । कथमस्मिन् प्रबन्धे ज्ञेयमित्यत्राह—**अत्रापीति** । "येनाश्रुतम्" इत्यत्र येन श्रुतेन मतेनेत्येवमर्थः, दृष्टान्तदार्ष्टान्तिकसामर्थ्याभ्याम् "आत्मनि खल्वरे दृष्टे" इति वाक्याच्च । **कथं न्विति**, न हि घटधिया पटधीरिति भावः । आदेश इति घञोऽकर्त्रर्थकत्वादुपदेश्यपरत्वं न शक्यम्, प्रकृतिप्रत्यययोः प्रशासनकरणार्थत्वे स्वारस्यद्वयात् प्रकृतिः स्वरसा । करणत्वं वैवक्षिकम् । शब्दानुगतेरपेक्षितविशेषार्थौचित्यं त्वधिकमिति । कथमिति चोदिते कारणज्ञानेन कार्यज्ञानं लोकसिद्धं निदर्शयति— **यथेति** । तत्रापि वैशेषिकमतेनासिद्धिमाशङ्क्याह—**वाचेति** । 'घटेनोदकमाहर' इति वाक्पूर्वकोदकाहरणव्यवहारेण हेतुनेत्यर्थः । अत्र जहल्लक्षणा; प्रयोजनतया हेतुत्वम् । तद्धि धीस्थम् । उक्त्यादानाद्यर्थं नामरूपे मृत्पिण्डेन स्पृश्येते इत्यर्थः । अनेन शब्दादिभेदानामवस्थाभेदेऽपि 'आस्ते, शेते' इतिवदन्यथासिद्धिर्दर्शिता । किं नियामकमित्यत्राह—**मृत्तिकेति** । **सत्यम्**; ज्ञानसिद्धम् । प्रत्यभिज्ञानियामिकेत्यर्थः । अन्यथा साध्यवैकल्यम्, इतिशब्दवैयर्थ्यं च । अस्तु कार्यकारणयोस्तथात्वम्, तत्कथमादेशज्ञानाज्जगद्धीरित्यत्राह—**सदेवेति** । अस्या असत्कार्यव्युदासपरत्वं "कथमसतः" इत्युत्तरानुगुण्यात् । एकशब्दो नामरूपविभागानर्हपरः, "बहु स्याम्" इत्यनन्तरोक्तेः, "एकेन सर्वं मृन्मयम्" इति दृष्टान्तानुगुण्यात्, अव्याकृतत्वश्रुतेश्च । एवकारो वियदादिनित्यताव्युदासाय । एवमुपादानत्वे सति अद्वितीयपदं धीस्थनिमित्तान्तरनिषेधकम् । "ब्रह्माध्यतिष्ठत्" इति च श्रुत्यन्तरं न सजातीयादिनिषेधपरम्, अग्रशब्दवैयर्थ्यात् जीवसूक्ष्मभेदैर्वैषम्यादिपरिहाराच्च । "तद्धैके" इत्याद्यसत्कार्यनिरासपरम्; शून्यक्षणिकवादे निरस्तेऽपि प्रतिज्ञासिद्धेरेतन्निरासापेक्षणात्, अग्रशब्दवैयर्थ्याच्च । नामरूपभाक्त्वं सद्वारकम्, अनुप्रवेशोक्तेः । स च नाचिन्मात्रे, किंतु जीवेऽपि; "विज्ञानं च" इत्यादिश्रुतेः । "सिंहेन मया" इतिवत् "जीवेनात्मना" इत्युक्तिः । सर्वशब्दासंकोचात् "सर्वाः प्रजाः" इति पूर्ववाक्येन "इदं सर्वम्" इत्यारभ्य "विज्ञानं

चाविज्ञानं च" इति श्रुत्यन्तराच्च "ऐतदात्म्यम्" इति चिदचितोस्तदात्मकत्वसिद्धिः। सामानाधिकरण्येन विशेष उपसंहारः "तत्त्वमसि" इति।

**नयप्रकाशिका**

न च "सदेव सोम्य" इत्यादिवेदान्तवाक्यानां निर्विशेषवस्तुप्रतिपादनपरत्वा-न्यथानुपपत्त्या तदितरस्य मिथ्यात्वमिति वाच्यम्, "तदैक्षत" इत्यादिना ब्रह्मणः सर्वज्ञत्वाद्यनेकविशेषप्रतिपादनपरत्वेन निर्विशेषवस्तुपरत्वाभावात्। एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञोपक्रमत्वाच्च न निर्विशेषवस्तुपरता। ब्रह्मव्यतिरिक्तस्य मिथ्यात्वेन ज्ञातव्याभावादेक-ज्ञानेनान्यज्ञानस्यानभ्युपपत्तिः। अथ मिथ्याभूतस्यापि सत्यज्ञानात् ज्ञाततेति चेत्, सत्या-सत्ययोरैक्यापत्तेः। अथैतत्प्रतिज्ञाया ब्रह्मेतरस्य मिथ्यात्वमेवार्थ इति चेत्—न; "येनाश्रुतम्" इति शब्दास्वारस्यात्। तदितरस्य सत्यत्वे न तत्प्रतिज्ञोपपत्तिः, अन्य-ज्ञानादन्यज्ञाततानुपपत्तेरिति चेत्—न; सूक्ष्मचिदचिच्छरीरब्रह्मणः कारणत्वात् स्थूल-चिदचिच्छरीरब्रह्मण एव कार्यत्वाच्च कार्यस्यावस्थान्तरमात्रत्वात् कारणावस्थमृत्पिण्डज्ञानात् कार्यघटादिज्ञाततावत् ब्रह्मज्ञानात् अवस्थान्तरयोगित्वेन भिन्नत्वेऽपि तत्कार्यप्रपञ्चज्ञाततोप-पत्तेः। एवमादि सर्वमारम्भणाधिकरणे प्रपञ्चितम्।

**तत्त्वटीका**

विशिष्टविषयैरित्थं प्रत्यक्षाद्यैर्विरुद्धता।
तद्विरोधे च शास्त्रस्य दौर्बल्यमपि दर्शितम्॥ ५३१॥
अथागमानां प्रत्येकमैदंपर्यसमीक्षया।
प्रत्यक्षाद्यविरुद्धार्थे प्रामाण्यं प्रविवक्षति॥ ५३२॥
साधकं बाधकं वापि यत्र नास्ति प्रमान्तरम्।
तस्मिन्नेव हि तात्पर्यं शास्त्रस्येति प्रचक्षते॥ ५३३॥
अर्थवैशिष्ट्यमधिकं शब्दमात्रेऽपि दर्शितम्।
विशेषवच्चारम्भस्तु तद्व्यक्त्यै वाक्यतर्कतः॥ ५३४॥

यदिह दूष्यं कारणशोधकवाक्ययोः परोक्तं दूषणं निर्विशेषपरत्वं तदनुवक्ति—**यदुक्तमिति।** अत्र वस्तुमात्रशब्देन सगुणवाक्यानां दृष्टिविधिवदन्यपरत्वं व्यज्यते। उपात्तवाक्यस्य परेष्टविरुद्धत्वद्योतकः परशब्दः। एवंशब्द ईदृशसर्वप्रकरणसंग्रहार्थः।

अत्र प्रत्यक्षादेरुपक्रमादेः श्रुतिलिङ्गादेश्च विरोधमभिप्रेत्याह— **तदयुक्तमिति** । सद्विद्यायां परोक्तैस्तात्पर्यलिङ्गैरेव तदिष्टभङ्गं व्यनक्ति— **एकेति** । एकस्य कारणस्य विज्ञानेन तत्कार्यस्य सर्वस्य ज्ञानं सिध्यतीति प्रतिज्ञा । सा च "उत तमादेशमप्राक्ष्यः, येनाश्रुतम्" इत्यादिना बोध्यते । आदेशशब्दश्चात्र न क्रियावचनः, मृदादिदृष्टान्तैः "एवं सोम्य स आदेशः" इत्यादेशेन च करणपरत्वव्यक्तेः । नाप्युपदेश्यपरः ; तदनुक्तावपि तत्सिद्धेस्तदुक्तिनैष्फल्यात्, आङ्पूर्वस्य दिशेरुपदेशवाचित्वाभावाच्च, आदेशोपदेशयोः पृथगाम्नानात्, मुख्ये संभवत्युपचारायोगात् ।·········व्यः 'अप्राक्ष्यः' इत्यनेनार्थत उपादानस्यैव निमित्तत्वोपयुक्तप्रतिज्ञासिद्ध्यर्थतया प्रेरण·············उपदेश्यत्वं सर्वप्रष्टव्यसाधारणम् । अपवर्गार्थोपदेश्यत्वं चोपास्यादावप्यस्ति । न चात्र तमिति विशेषणादसाधारण्यमिति वाच्यम्, ··········गात्, अपेक्षितासाधारण्यविधेरनपेक्षितसाधारण्यविधिदौर्बल्याच्च । तस्मात् "एतस्य वाक्षरस्य प्रशासने गार्गि" इत्यादिप्रसिद्धविश्वप्रशासितृत्वविषयोऽत्रादेशशब्दः । नन्वादेशशब्दे तावन्न कर्तरि पचाद्यच्प्रत्ययः शङ्क्यः, "इगुपध" इति कस्यापवादत्वात् । न चात्र कप्रत्ययः, "क्ङिति च" इति गुणनिषेधात् । नापि घञ्, "अकर्तरि च कारके संज्ञायाम्" इति नियमात् । न च सर्वशासितुः शास्तिकर्मत्वम् । उपदेशकर्मत्वं तु युक्तमिति । मैवम् ; विवक्षातः कारकप्रवृत्त्या कर्तुरेव करणत्वविवक्षया घञो व्युत्पत्त्युपपत्तेः । "अकर्तरि" इति नियमस्तु करणत्वादिविवक्षाविरहे कर्तर्यसाधुत्वार्थः । अर्थतोऽपि हि प्रत्यय(मात्र) नियमनं वरम् । अतः "तमादेशम्" इत्यादौ सर्वतत्त्वाधिष्ठातृत्वगुणविशिष्टं किं श्रुतवानसीति प्रश्नार्थः । "येनाश्रुतम्" इत्यादौ "यथा सोम्यैकेन" इत्यादिदृष्टान्तवाक्येषु च ज्ञातेनेति विशेषणीयम्, तत्सत्तामात्रेण तत्कार्याणां ज्ञातत्वायोगात् । तो·············सर्वं विदितम् । अत एव "विज्ञातेन" इत्युक्तम् । तथा च मुण्डकोपनिषदि "कस्मिन्नु भगवो विज्ञाते इदं सर्वं विज्ञातं भवति" इति । बृहदारण्यके च "आत्मनि खल्वरे श्रुते मते विज्ञाते इदं सर्वं विदितं भवति" इति च । अत्र घटकुड्यादिना विज्ञातेन तदन्यस्य ज्ञातत्वमयुक्तमित्यभिप्रायेण "कथं नु भगवः स आदेशः" इति चोक्तम् । तत्रोत्तरम्—"यथा सोम्य" इत्यादि । बहुदृष्टान्तोक्तिः संभवद्रढिमार्था । मृदादिकारणात्मकं हि सर्वं मृन्मयम् । तत्तन्मृत्पिण्डदृष्टान्तेऽप्यसत्कार्यापादनचोद्यं निरस्यति—वाचेति । अत्र वाचालम्बनमिति व्याख्यायां श्रुत्यक्षरविप्लवः

स्यात् । कार्यमि…………त्यो…………क्तं चाप्रसिद्धं नोदाहर्तव्यम् । त्वदिष्टे हि रज्जुसर्पादि दृष्टान्तयितव्यम् । "विज्ञातं स्यात्" इत्यत्र च सत्यज्ञानेन मिथ्याभूतस्य ज्ञातत्वोक्तिर्विरुद्धा । (अ) ज्ञातं भवतीति हि तदा वाच्यम् । सति गत्यन्तरे मिथ्यात्वेन ज्ञातं भवतीत्यध्याहारश्च न युक्तः । "मृत्तिकेत्येव" इत्यादिष्वितिकरणं च निरर्थकम् । मृत्तिकेत्येव प्रमाणासिद्धमिति प्रतिज्ञा…………प्रति सात्वेति सार्थकं…… ……………………………तदिह 'घटेनोदकमाहर' इत्यादिवाक्पूर्वकप्रवृत्तिनिवृत्तिरूप-प्रयोजनाख्येन हेतुना आरम्भणं विकारो नामधेयमित्युभयं मृदादिद्रव्येण । आरम्भणं आलम्भनं स्पर्शः । "कृत्यल्युटो बहुलम्" इति कर्मणि ल्युट् । रलयोरभेदः पक्षद्वयेऽपि समानः । बकारस्थाने भकारस्तु न क्वाप्यस्ति । वर्णवैषम्यानादरेणारम्भणी-यत्वविवक्षायामप्यस्मत्पक्षे न दोषः ।

असत्यं तव सिद्धान्ते घटादि च मृदादि च ।
लोकदृष्ट्योभयं सत्यं विभज्योदाहृतिः कथम् ॥ ५३५ ॥
यदि वर्गद्वयस्यास्य मृषात्वं साधयिष्यते ।
यथेति सिद्धवत्कारः समतोक्तिश्च भज्यते ॥ ५३६ ॥
किंचात्र कार्यसत्यत्वं सजातीय………………………… ।

अपिचैवं

………………………………………………………………………………

"एवं सोम्य स आदेशः" इत्युपदेश्यत्वाभ्युपगमात्, "भगवांस्त्वेव मे तद्ब्रवीतु" इति पूर्वमविदितस्य शुश्रूषितत्वात् पश्चादुपदेशात्, "आचार्यवान् पुरुषो वेद" इति निग-मनाच्च शब्दगोचरत्वं ज्ञानगोचरत्वं च स्पष्टमुक्तम् । तदापि त्वदिष्टविरुद्धमुपलक्षितं…… ……………क्षन्यायेन बुद्धीनां शब्दानां च ब्रह्मणि कुण्ठीभाव इति तु डिम्भप्रलम्भनं प्रलपनं वा । सत्कार्यवादादिसंभवेऽपि विचित्रकार्याणां यथादृष्टि विचित्रकारणापेक्षणा-देकविज्ञानेन सर्वविज्ञानं कथमिति चात्र प्रश्नाभिप्रायः । तत्रोत्तरम्— "सदेव" इत्यादि । तत्रा "अग्र आसीत्" इति काल……………विशेषणद्वयश्च सिद्धम् । ………… विशिष्टं तद् दृश्यते, अग्रेशब्दस्य निरर्थकत्वं च । अवाच्यस्य कथमुपदेश्यत्वमित्यभिप्राये-णोक्तम्—**सच्छब्दवाच्यस्येति** । गुणविशिष्टोक्तिः कल्पिताकारविषयेति शङ्काव्युदस-

नायाह—**परस्य ब्रह्मण इति** । अनेन सच्छब्दस्य शाखान्तरोक्तशब्दैरैकार्थ्यं सूचयता सत्तामात्रपरत्वं च निरस्तम् । निरूप्यमाणदशापरत्वं चायुक्तं, वक्ष्यमाणापेक्षया कारणनिर्देशार्थत्वात् । न हि "तदानीम्" इत्यादिश्रुत्यन्तरनिर्देशसामरस्याच्च प्रलयकालपरत्वं युक्तम् । 'किं तदासीत्' इत्यत्र "ऋषयो वाव तेऽग्रे सदासीत्" इति·········अत्र निर्दिश्यते । अतस्तत्काले त्रिविधभेदनिषेधपरत्वमिह न वाच्यम्; सृष्टिकालेऽपि वस्तुतस्तच्छून्यत्वात् । प्रलयकालेऽपि वैषम्यनैर्घृण्याकृताभ्यागमकृतविप्रणाशपरिहाराय सूक्ष्माचिज्जीवादिभेदस्य त्वयापि स्वीकृतत्वाच्च । अतो नाग्रशब्दस्य वैयर्थ्यं विरोधो वा । दुस्त्यजस्वगतविशेषोऽपि तदानीं सत्वैकत्वाद्वितीयत्वैस्त्वयैवादृतः । तदिह प्रलयकालावच्छिन्नसत्ताविशिष्टं चिदचिच्छरीरकं ब्रह्म सदित्युक्तम् । सच्छब्दस्य ब्रह्मात्मादिशब्दवद्विशेष्यविषयत्वेऽपि स्वरूपविकारादिनिषेधाच्छ्रुत्यन्तरोपबृंहणप्रसिद्धिसामरस्याच्च प्रकृतिपुरुषकालाद्यपेक्षितविशेषणसिद्धिः । तदभावे निर्विकारस्य स्वतः कारणत्वमेव न सिद्ध्येत् । ततश्च शाखान्तरनयेन कारणवाक्यान्तराणामपि निर्विशेषपरतया ब्रह्मकारणवादस्त्यक्तः स्यात् । अध्यासोऽपि ह्यविद्यापेक्षस्त्वयैवोक्तः । "सदेव" इत्यस्यासत्त्वनिषेधपरत्वं च दृष्टान्तानुगुणम् । "तद्धैक आहुरसदेवेदम्" इत्यादिना मतान्तरोपन्यासनिरासाभ्यां च तद्व्यक्तम् । अत्र "एकमेवाद्वितीयम्" इति न त्वदुक्तयंशोक्तिः, सिद्धानुस्मरणमात्रार्थत्वात् । तच्छब्दोऽत्र पक्षान्तरोपक्रमार्थः । तदिदमिति वान्वयः । अत्र च कार्यं द्रव्यं प्रागसदिति वैशेषिकाद्युक्तिनिरासे प्रतिज्ञानुगुण्यं स्यात् । शून्यवादनिरासपरत्वे त्वग्रशब्दस्य वैयर्थ्यम् । क्षणभङ्गनिरासस्तु द्रव्यानुवृत्तिसाधनेनैव सेत्स्यति ।

अतुच्छत्वे स्थिरत्वे तु प्रतिज्ञा नैव सेत्स्यति ।
कार्यकारणयोर्यावदनन्यत्वं न साध्यते ॥ ५३७ ॥

"कुतस्तु" इत्यादि प्रमाणतर्काभावपरम् । "कथम्" इत्यादि तदुभयविरोधपरम् । विद्यमानस्य हि द्रव्यस्यावस्थान्तरापत्तिस्तत्तदवस्थावत उत्पत्तिरिति प्रमाणसिद्धम् । तथा च द्रव्यस्य पूर्वमसत्त्वे तस्य सत्तावाच्यघटत्वाद्यवस्था उत्पत्तिरिति स्यात् । तदेतत्प्रमाणैस्तदनुग्राहकैश्च निर्धूतमिति भावः । अथ यथोक्तं निगम्यते "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति । इदमग्रे एकमद्वितीयं सदेवासीदित्येकमेवेदं वाक्यम्, संभवत्यैक्ये तद्भेदायोगात् । यत्तु भिन्नवाक्यवत् क्वचित्क्वचिद्भाष्यते, तदपि तात्पर्यव्यक्त्यर्थम् ।

अन्यथा वाक्यत्रयवद्वाक्यद्वयवच्च व्यपदेशो व्याहन्येत । तदिह "सदासीत्" इत्यवस्था-द्वयसाधारणाकारोक्तिः । "एकम्" इति तु प्रतिज्ञाघटनार्थमविभक्तनामरूपावस्थोच्यते । अवधारणमिह जगदन्तर्भूतस्य वियदादेर्वैशेषिकाद्यभिमतनित्यत्वशङ्कानिरासार्थम् । अत्राभि-प्रेतमाह—**जगदुपादानत्वमिति** । "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिश्रुत्यन्त-रानुगुण्यात् "बहु स्याम्" इत्युत्तरवाक्यादिभिश्चायमेवार्थ इति भावः । उदाहृतानां मृदाद्युपादानानां कुलालादिप्रेर्यत्वदर्शनादिहापि तथान्यस्मिन्कर्तरि चादेशशब्दार्थत्वेन ज्ञानात् तत्कार्यविश्वविज्ञानं न स्यात् । तत्सिद्ध्यर्थमद्वितीयपदेनाधिष्ठात्रन्तरं निरस्यते। तदिदमाह—**जगन्निमित्तत्वमिति** । "तत्तेजोऽसृजत" "तदात्मानं स्वयमकुरुत" इत्यादिभिरेतद् दृष्टम् । "तदैक्षत" इत्यादिसिद्धमाह—**सर्वज्ञतेति** । "यः सर्वज्ञः" इति कारणवाक्यान्तरे चैतत्कण्ठोक्तम् । "स्याम्" इति संकल्पयतो निमित्तत्वानुगुणम् । एतदुभयानुगुणमाह—**सर्वशक्तियोग इति** । सर्वोपादानत्वसर्वनिमित्तत्वशक्त्येकाश्रय-मित्यर्थः । अत्र "असृजत" इत्यादि फलितम् अन्यत्र, "ब्रह्माध्यतिष्ठत्" "कर्तारमीशम्" इत्यादिभिः कण्ठोक्तमाह—**सत्यसंकल्पत्वमिति** । "हन्ताहमिमाः" इत्यादौ चिदचिदन्तरात्मत्वं व्यक्तम् । विशेषतोऽप्यनुप्रवेशनिबन्धनं सामानाधिकरण्यमिति "तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादिभिः सिद्धम् । अत्र "सिंहेन भूत्वा बहवो मयात्ताः" इतिवत् "अनेन जीवेन" इति विवक्षितं व्यनक्ति—**सर्वान्तरात्मत्वमिति** । सर्वाधारता सदायतनत्वोक्तिसिद्धा । सर्वनियमनं तु आत्मत्वोक्तिलब्धम् । अत्राधेयत्व-विधेयत्वादिनियमैर्जगतः शरीरत्वं सिद्धं शरीरवाचिनां शरीरिपर्यन्तत्वप्रतिज्ञाघटनाय प्रकाशितम् । आदिशब्दश्च खण्डान्तरोक्तांश्च कारणत्वाद्युपयुक्तान्विशेषान् संगृह्णाति । ऐतदात्म्यमित्यादेरर्थमाह— **कृत्स्नस्येति** । "तत्सत्यम्" इत्यत्र सर्वकारणस्य सतो ब्रह्मणः "इदं सर्वम्" इत्युक्तस्य जगतो वा सत्यत्वमिह न विधेयम्, कृतकरत्वात् । अतो "मृत्तिकेत्येव सत्यम्" इतिवत्कार्यस्य जगतः स्वनिष्ठत्वादिभ्रमनिवारणाय तदात्मकत्वं प्रामाणिकमित्युच्यते । "स आत्मा" इत्येतदप्यस्यैवार्थस्य तात्पर्यभूम्ना निर्देशवैषम्येण दृढीकरणं "स त आत्मा अन्तर्याम्यमृतः" इतिवत् । अत्रापि सर्वान्तरात्मत्वेन प्रस्तुतश्रोतर्यपि विशेषत उक्तिरियमिति केचित् । अत एव "तत्त्वमसि" इत्यप्यनु-सन्धातर्युपसंहारमात्रम् । जीवस्य परेण स्वरूपैक्यपक्षे पूर्वोक्तसर्वाकारविशिष्टपरामर्शी

तच्छब्दो विरोधी स्यादित्यभिप्रायेणाह— **एवंभूतब्रह्मात्मकेति** । अत्रोद्देश्योपादेयचिन्ता पश्चाद्भविष्यति । **श्वेतकेतुं प्रतीत्यनेन** स्वेष्टसाधकार्थवादलिङ्गसूचनम् । आत्माद्वैतपक्षे प्रबुद्धस्य गुरोर्भ्रान्तिसिद्धं शिष्यं प्रत्युपदेशानुपपत्तिं सूचयति— **उपदेशाय प्रवृत्तत्वादिति** ।

यत्त्वष्टविधतात्पर्यलिङ्गवत्त्वमिहोदितम् ।
तत्त्वस्मिन् पक्ष एवेति प्राह प्रकरणोक्तितः ॥ ५३८ ॥

अत्र ह्युपक्रमप्रभृति "तत्त्वमसि" इत्युपसंहारपर्यन्तं निरुपाधिकं प्रशासनादिकं दर्शितम् । तच्च मानान्तरागोचरत्वादपूर्वम् । अभ्यस्तं च बहुशः । फलं च "तस्य तावत्" इत्यादिना जीवस्य परप्राप्त्यनुरूपम् । आख्या.........................तं "तन्निष्ठस्य मोक्षोपदेशात्" इति । क्र....चार्थवादसिद्धः । असत्कार्यवादनिरासेन विवर्तवाद-विरुद्धैर्दृष्टान्तैस्त्रिवृत्करणप्रदर्शनादिभिश्चोपपत्तिः स्थापिता । "तत्तेजोऽसृजत"......... सोपबृंहणैः श्रुत्यन्तरसंगतैरध्यासशङ्काप्यत्र प्रशमिता ।

तथा च त्वत्पक्षं क्षिपति परिणामादिति वदन्
विवर्तादध्यासादिति च न वदन् सूत्रकृदिह ।
तदन्याभावं न स्पृशति तदनन्यत्वभणिति-
र्न मायामात्रोक्त्याप्यनृतगतिराश्चर्यपरया ॥ ५३९ ॥

अत्र किं प्रतिज्ञावाक्यम्? कानि च तदुपपादकानि? कथं च तेषामेव तात्पर्य-मित्यत्राह— **प्रपञ्चित इति** । ननु बुद्धिशब्दान्तरादिकं रज्जुसर्पादिष्वध्यासात् दध्यादिषु द्रव्यान्तरसंयोगाच्च दृष्टम्; मृत्पिण्डघटादिष्वपि तथाभावाभावे कथं द्रव्यैक्योपपादन-मित्यत्राह— **अत्रापीति** । **निपुणतरम्**; परोक्तप्रतीतिबलानुसारेण । अहिकुण्डल-वदास्ते....त....धित इत्यादिवच्च कार्यस्य सत्यत्वे........ ॥*

---

**इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य**
**वेदान्ताचार्यस्य कृतिषु श्रीभाष्यव्याख्या तत्त्वटीका ।**
**॥ श्रीमते निगमान्तमहादेशिकाय नमः ॥**

---

* ॥ एतावत्पर्यन्तमेवायं ग्रन्थ उपलभ्यते ॥

श्रीभाष्यम्

**"अथ परा यया तदक्षरमधिगम्यते" इत्यत्रापि प्राकृतान् हेयगुणान् प्रतिषिध्य नित्यत्वविभुत्वसूक्ष्मत्वसर्वगतत्वाव्ययत्वभूतयोनित्व-सर्वज्ञत्वादिकल्याणगुणगणयोगः परस्य ब्रह्मणः प्रतिपादितः ।**

श्रुतप्रकाशिका

अनन्तरोदाहृतायाः परविद्यायाः सविशेषपरत्वमाह—**अथ परेत्यादिना ।** "अपाणिपादम्" इत्यन्तानां पदानां विषयमाह—**प्राकृतानिति । प्राकृताः**; प्रकृति-संबन्धिनः । अनेन पदेन क्वचित् सिद्धस्य हि क्वचिन्निषेध इति निषेध्यानां क्वापि सिद्धिर्दर्शिता भवति । प्रकृतिगताः प्रकृतिसंसर्गप्रयुक्ता जीवगता दोषाश्च प्राकृताः । अद्रेश्यमग्राह्यम्; प्रत्यक्षागोचरमनुमानाद्यगोचरम् । यद्वा चक्षुरगोचरमिन्द्रियान्तरागोचरम् । अगोत्रमवर्णम्; प्राकृतनामरूपरहितम् । अचक्षुः श्रोत्रम्; इन्द्रियाधीनज्ञानं न भवति । अपाणिपादम्; इन्द्रियाधीनचेष्टं न भवति; "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति श्रुतेः । अनेन पदद्वयेन जीवगतहेयनिषेधः । इन्द्रियाधीन-ज्ञानत्वं तदधीनप्रवृत्तित्वमपि जीवगतधर्मः । "सर्वगतं सुसूक्ष्मम्" इति पाठक्रमः; तथाप्यर्थक्रमेण व्याख्यातम्—**सूक्ष्मत्वसर्वगतत्वेति ।** सूक्ष्मतया हि व्याप्तिः । नित्यत्वेन कालापरिच्छेदः । विभुम्; प्रभुम् । प्रभुत्वं नियन्तृत्वम् । जगच्छरीरकत्वं फलितम् । अनेन वस्त्वपरिच्छेदसिद्धिः । सर्वगतत्वेन देशापरिच्छेदः । अव्ययत्वं; व्ययशब्दोपलक्षितदोषविरोधित्वं नाम गुण इत्यभिप्रायेण कल्याणगुणैः सह तन्निर्देशः । यद्वा अव्ययत्वम्; एकरूपत्वं पूर्णत्वं वा । **भूतयोनित्वम्**; जगत्कारणत्वम् । एतत्प्रकरणस्थेन "यः सर्वज्ञः सर्ववित्" इत्यनेन वाक्येन सार्वज्ञ्यमुक्तम् । सर्वज्ञः सर्ववित्; सर्वं स्वरूपतो वेत्ति सर्वं प्रकारतश्च वेत्तीत्यर्थः । **परस्य ब्रह्मण** इत्यस्य पूर्ववदर्थः ।

भावप्रकाशिका

अव्ययत्वस्य दोषाभावरूपस्य कथं भाष्ये कल्याणगुणत्वेन निर्देश इत्याशङ्क्याह—**दोषविरोधित्वं नाम गुण इति । पूर्ववदर्थ इति**; सगुणब्रह्मव्यावृत्तिरित्यर्थः ।

श्रुतप्रदीपिका

एवं सति विशिष्टाद्वैतपरत्वे स्पष्टमुपक्रमोपसंहारादिलिङ्गषट्कम् । परविद्यार्थ-माह—अथेति । "अचक्षुः" इत्यादिना इन्द्रियाधीनज्ञानक्रियत्वव्युदासः, "जवनो ग्रहीता" इति श्रुतेः । विभुः प्रभुः नियन्ता जगच्छरीरीति फलितम् । कारणत्वाक्षिप्तं सार्वज्ञ्यादिप्रकरणे "यः सर्वज्ञः" इत्यादि कण्ठोक्तं च । **प्राकृताः**; प्रकृतिसंबन्धिनः, प्रकृतिसंसर्गप्रयुक्ताश्च ।

श्रीभाष्यम्

"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रापि सामानाधिकरण्यस्यानेक-विशेषणविशिष्टैकार्थाभिधानव्युत्पत्त्या न निर्विशेषवस्तुसिद्धिः । प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यम् । तत्र सत्य-ज्ञानादिपदमुख्यार्थैर्गुणैस्तत्तद्गुणविरोध्याकारप्रत्यनीकाकारैर्वा एकस्मि-न्नेवार्थे पदानां प्रवृत्तौ निमित्तभेदोऽवश्याश्रयणीयः । इयांस्तु विशेषः—एकस्मिन् पक्षे पदानां मुख्यार्थता । अपरस्मिंश्च तेषां लक्षणा । न चाज्ञानादीनां प्रत्यनीकता वस्तुस्वरूपमेव, एकेनैव पदेन स्वरूपं प्रतिपन्नमिति पदान्तरप्रयोगवैयर्थ्यात्; तथा सति सामानाधिक-रण्यस्यासिद्धिश्च, एकस्मिन् वस्तुनि वर्तमानानां पदानां निमित्त-भेदानाश्रयणात् । न चैकस्यैवार्थस्य विशेषणभेदेन विशिष्टताभेदा-दनेकार्थत्वं पदानां सामानाधिकरण्यविरोधि, एकस्यैव वस्तुनोऽनेक-विशेषणविशिष्टताप्रतिपादनपरत्वात् सामानाधिकरण्यस्य । "भिन्न-प्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति हि शाब्दिकाः ।

श्रुतप्रकाशिका

अथ शोधकवाक्येषु सत्यज्ञानादिवाक्यस्याखण्डार्थत्वं निरस्यति—**सत्यं ज्ञान-मित्यादिना** । स खल्वेवमुपन्यस्तः प्रतिपत्तिसौकर्यायाचार्यपादैः; तथा हि— सत्यादि-

वाक्यं सत्यत्वादिगुणविशिष्टमेव ब्रह्म प्रतिपादयति, 'नीलमुत्पलम्' इत्यादिषु समानाधिकरणवाक्येषु विशिष्टैकार्थपरत्वव्युत्पत्तेः; सत्यादिवाक्यस्य च समानाधिकरणत्वाच्च । तथा च सामानाधिकरण्यलक्षणम् "भिन्नप्रवृत्तिनिमित्तानाम्" इत्यादिनोक्तं शाब्दैः । तत्र यदुक्तं सामानाधिकरण्यस्यैकार्थ्यपरत्वव्युत्पत्तेरैकार्थ्यस्य च पदानां विशेषणमात्रपरत्वे विशिष्टपरत्वे चासिद्धेः स्वरूपमात्रैक्यपरत्वं सत्यादिसमानाधिकरणपदानामास्थेयमिति; तदयुक्तम्, विकल्पासहत्वात् । किं सत्यादिपदानि तत्तत्पदार्थविरोधिव्यावृत्तिमात्रपराणि? उत स्वरूपमात्रपराणि? उत विरोधिव्यावृत्त्यवच्छिन्नस्वरूपपराणीति विवेचनीयम् । न तावद्विरोधिव्यावृत्तिमात्रपराणि, व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः । व्यावर्त्यानेकत्वात् व्यावृत्तयो ह्यनेकाः स्युः । नापि स्वरूपपराणि, तथा सति पदानां पर्यायत्वप्रसङ्गात्; प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिप्रसङ्गात्, एकतरपदवैयर्थ्यप्रसङ्गाच्च । नापि तदवच्छिन्नस्वरूपपराणि, विकल्पासहत्वात् । किं विरोधिव्यावृत्तीनां स्वरूपावच्छेदकत्वमुपलक्षणतया विशेषणतया वा? न तावदाद्यः कल्पः । एकेनोपलक्षणेन स्वरूपं प्रतिपन्नमित्युपलक्षणान्तरवैयर्थ्यात् । उपलक्ष्यात् बहिर्भूत उपलक्ष्यप्रतीत्युपायो धर्म उपलक्षणमिति ह्युपलक्षणविदः । तथा च शाखादिषु दृश्यते । तथा च सत्येकतरवैयर्थ्यम्; प्रवृत्तिनिमित्तभेदाभावेन सामानाधिकरण्यलक्षणहानिश्च । कथं तर्हि भवत्पक्षे जन्मादिबहूपलक्षणत्वमेकस्यैव ब्रह्मणोऽभ्युपगम्यत इति चेत्, उच्यते—तत्र ह्युपलक्ष्यस्य धर्मिणो ब्रह्मण एकत्वेऽपि प्रत्युपलक्षणमुपलक्ष्यधर्मभेदो जन्मस्थित्याद्यनुगुणज्ञानशक्त्यादिरूपोऽस्माभिरभ्युपगम्यते । अन्यथा तत्राप्यनेकोपलक्षणवैयर्थ्यं प्रसज्यत एव । त्वत्पक्षे त्वनेकोपलक्षणोपलक्ष्यधर्मभेदानभ्युपगमादुक्तदोषो दुर्वारः । तदभ्युपगमे हि ब्रह्मणः सविशेषत्वप्रसङ्गः । नापि द्वितीयः, विशेषणभूतानां व्यावृत्तीनामनेकत्वेनैकार्थत्वासिद्धेः । विशेष्यान्तर्भूतो विशेष्यप्रतीत्युपायो धर्मो हि विशेषणम् । विशेष्यान्तर्भावो नाम ज्ञाप्यान्तर्भावः । विशेषणभूतार्थभेदेऽपि विशेष्यभूतप्रधानार्थैक्यादेकार्थसिद्धिरिति चेत्, तत् सखण्डवाक्यार्थवादिनोऽपि समानम् । कस्तर्हि विशेष आवयोरिति चेत्, अयमेव विशेषः—यदेकस्य मते पदानां लाक्षणिकत्वम्, इतरस्य पक्षे तेषां मुख्यत्वमिति । यच्चोक्तम्—विशेषणान्तरविशिष्टे वस्तुनि विशेषणान्तरान्वयाद्विशेषणानामन्योन्यसमवायप्रसङ्ग इति; तदसत्, विकल्पासहत्वात् ।

"पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् ।
न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥"

इत्युक्तप्रक्रियया हि वाक्यमर्थमवबोधयति । तत्र किं पदानां पदार्थस्मरणदशायामन्योन्यसमवायप्रसङ्गः ? उत परामर्शदशायाम् ? आहोस्वित् वाक्यार्थाभिधानदशायाम् ? न तावत् प्रथमः कल्पः, स्मरणदशायां पृथक् पृथक् पदार्थस्मरणेन मिथोऽन्वयप्रसङ्गाभावात् । नापि द्वितीयः, एकस्मिन् वस्तुन्यविरुद्धानेकविशेषणसमवायस्य प्रत्यक्षाद्यवगतस्य यथावस्थितवस्तुपरामर्शदशायां परामृश्यमानत्वात् । नापि तृतीयः, वाक्यार्थाभिधानदशायां सर्वैः पदैर्युगपदनेकविशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकत्वेन क्रमाभिधानप्रयुक्तान्योन्यसमवायप्रसङ्गाभावात् । यथैव हि द्वे चक्षुषी जातिगुणाद्यनेकविशेषणविशिष्टैकवस्तुविषयामेकां धियं युगपज्जनयतः, तथैवानेकपदानि युगपदेव तत्तद्विशेषणविशिष्टैकवस्तुविषयैकज्ञानजनकानि भवन्ति । क्रमेणाभिधानेऽपि नान्योन्यसमवायप्रसङ्गः, पदान्तरोपात्ते विशिष्टे विशेष्यांशस्यैव पदान्तरोपात्तविशेषणेन विशिष्यमाणत्वात् । तच्च यथादृष्टविषयत्वात् पदानां व्युत्पत्तेः । अन्यथा भवत्पक्षे व्यावृत्तिरूपविशेषणानामन्योन्यविशेषणविशेष्यभावः क्रमाभिधानप्रयुक्तो दुर्वारः । अतो यथोक्त एव परिहारस्तवापि शरणम् । क्रमेणाभिधानानभ्युपगमे कथमुद्देश्योपादेयविभागसिद्धिरिति चेत्; उच्यते—ज्ञाताज्ञातविभागो ह्युद्देश्योपादेयविभागः । स च युगपत्प्रतिपादनेऽपि नापैति । एकेन वाक्येनैकवस्तुनोऽनेकविशेषणान्वये युगपत्प्रतिपाद्ये तत्रैकविशेषणान्वयः प्रागेव ज्ञातः, विशेषणान्तरान्वयस्त्वज्ञात इति ज्ञाताज्ञातविभागपरामर्शः परामर्शदशायां हि संभवत्येव । यदप्युक्तम्—विशिष्टैक्यप्रतिपादने विशेष्यैक्यवद्विशेषणैक्यं प्रसज्यत इति; तदपि न साधीयः, विशेष्यमात्रैक्यपरत्वात् समानविभक्तेः । तच्च व्युत्पत्तिसिद्धम् । व्युत्पत्तिश्च प्रत्यक्षमूला । प्रत्यक्षं च विशेष्यैक्यमेवावगमयति, न तु विशेषणानामैक्यम् । यथा 'गौः' इत्याद्येकपदप्रयोगेऽपि प्रातिपदिकावगतविशेषणविशेष्यैक्यं तद्गतमेकवचनं नावगमयति, किंतु विशेष्यैक्यमेवावगमयति। प्रत्यक्षमूला व्युत्पत्तिरेव हि तत्र कारणम् । तथा समानाधिकरणपदसंघातस्थसमानविभक्तेरपि विशेष्यैक्यमात्रपरत्वे सैव नियामिका, अन्यथा भवत्पक्षेऽप्यसत्यादिप्रतियोगिव्यावृत्तिरूपविशेषणैक्यप्रसङ्गात् । प्रातिपदिकानां तत्तत्प्रतियोगिव्यावृत्तिविशिष्टस्वरूपपरत्वेऽपि समानविभक्तेः प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रैक्यपरत्वव्युत्पत्त्या न विशेषणैक्यं प्रसज्यत

इति चेत्, तदस्मत्पक्षेऽपि समानम्। आवयोर्विशेषस्तु प्रागेवोक्तः। यच्चोक्तम्— विशेषणभेदे विशेष्यभेदप्रसङ्ग इति; तदयुक्तम्, विशेषणभेदमात्रस्य विशेष्यभेदकत्वाभावात्; तच्च 'देवदत्तः श्यामो युवा' इत्यादिषु विशेषणभेदेऽपि विशेष्यैक्यदर्शनात्। विशेषणभेदस्य स्वतः प्राप्तं विशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेत्, तन्न, धर्मिवाचकपदैक्यात् समानविभक्तिनिर्देशाच्चैक्यप्रतीतेः। 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यत्र धर्मिवाचकपदैक्ये समानविभक्तिनिर्देशे सत्यपि विशेषणभेदाद्विशेष्यभेदः प्रतीयत इति चेत्; मैवम्; यतः स्वतः प्राप्तं तयोर्विशेष्यैक्यप्रत्यायकत्वं प्रत्यक्षेण तत्रापोदितम्। परोक्षविषयेऽपि 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्यादिवाक्ये प्रयुक्ते खण्डत्वादिविशेषणभेदे विशेष्यभेदप्रतीतिर्दृश्यत इति चेत्, परोक्षविषयेऽपि 'देवदत्तः श्यामो युवा' इत्यादिवाक्ये प्रयुक्ते विशेषणभेदेऽपि विशेष्यैक्यप्रतीतिर्दृश्यत इति समानश्चर्चः। को निर्णायक इति चेत्, यज्जातीयविशेषणानां नियमेन भिन्नाश्रयत्वं दृष्टं प्रत्यक्षेण तज्जातीयविशेषणानां परोक्षत्वेऽपि विशेष्यभेदापादकत्वम्; यथा खण्डत्वादीनाम्। यज्जातीयविशेषणानां भिन्नाश्रयत्वनियमो न दृष्टः, तज्जातीयविशेषणानां धर्मिवाचिपदैक्ये समानविभक्तिनिर्देशे चैकविशेष्यनिष्कर्षकत्वं युक्तम्; यथा नीलत्वादीनामिति। यच्चोक्तम्—समानविभक्त्यवगतैक्यविरोधाद्विशेषणपरित्याग इति; तदप्ययुक्तम्, प्रातिपदिकाभिहितविशेषणान्वयविरोधादैक्यपरित्यागापत्तेः। तथा हि—यदि समानविभक्त्यन्वयावगतत्वादैक्यं न हातुं शक्यते तर्हि प्रातिपदिकावसितविशेषणान्वयः कथमिव हातुं शक्यते? यथा 'नीलमुत्पलम्' इत्यादौ। तत्र प्रत्यक्षसिद्धत्वादङ्गीक्रियत इति चेत्, तत्रैक्यप्रतीतिरपि तथैवेति किं न स्यात्? समानविभक्तिनिर्देशे परोक्षेऽप्यैक्यप्रतीतिर्दृश्यत इति चेत्, तथैव प्रयोगे परोक्षेऽपि प्रातिपदिकावगतविशेषणान्वयप्रतीतिर्दृश्यत एव। तस्मादैक्यप्रतीतिः शाब्दीति चेत्, विशिष्टप्रतीतिरपि शाब्दीति न कश्चिद्विशेषोऽन्यत्राभिनिवेशात्। किंच प्रातिपदिकावगतविशेषणान्वयपरित्यागहेतुभूतसमानविभक्त्यवगतमैक्यं किं स्वरूपम्? उत तदतिरिक्तम्? अतिरिक्तपक्षे सविशेषत्वप्रसङ्गः। अनतिरिक्तपक्षे हेत्वसिद्धिः, प्रातिपदिकावगतस्वरूपातिरेकेण विभक्त्या कस्यचिदैक्यस्याप्रतिपादनात्। न हि स्वरूपमात्रविरोधाद्विशेषणपरित्यागः, व्यधिकरणवाक्येष्वपि तत्त्यागप्रसङ्गात्। प्रातिपदिकावगतं स्वरूपं निर्विशेषमिति प्रतिज्ञाय समानविभक्तेरैक्यावगमादित्युक्ते स्वरूपावगमादित्युक्तं स्यात्। ततश्चैक्यावगमविरोधरूपहेत्वसिद्धिः। स्वरूपं तु

विशेषणान्वयाविरुद्धं, व्यधिकरणवाक्येषु विशेषणान्वयावगमादित्युक्तम्। किंच समान-विभक्त्यवगतमैक्यं च प्रातिपदिकार्थैकदेशभूतविशेष्यमात्रस्येत्युक्तत्वात् तस्य च विशेषण-भेदाविरोधित्वाच्च तद्विरोधनिबन्धनविशेषणत्यागो युक्तः। अतो न निर्विशेषत्वं वस्तुनः। 'कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तं शौक्ल्यम्' इत्यादिषु प्रतियोगिभेदस्य तत्तद्व्यावृत्तस्वरूपस्य च शब्दोपात्तत्वाच्च लक्षणाप्रसङ्गः। सत्यादिवाक्येषु न तथेति विशेषः। एवं शौक्ल्यादिदृष्टान्तवाक्यात् सत्यादिदार्ष्टान्तिकवाक्यस्य शब्दद्वारकं वैषम्यमुक्तम्। अर्थद्वारकं च वैषम्यं पूर्वोक्तं द्रष्टव्यम्। कथमिति चेत्, इत्थम्— शौक्ल्यादेः कस्यचित् द्रव्यस्य द्रव्यान्तराद्व्यावर्तकधर्मतया धर्मान्तरानपेक्षत्वं युक्तम्। ब्रह्मणस्तु न तथात्वमिति स्वरूपातिरिक्तव्यावर्तकधर्मान्तरापेक्षास्त्येव। न हि परनिर्वाहक-त्वानभ्युपगमे स्वनिर्वाहकत्वसंभवः। किंच शौक्ल्यादिस्वरूपस्फुरणे सति न कार्ष्ण्याद्य-ध्यासप्रसङ्गः। अतस्तत्र स्वरूपमेव व्यावृत्तिरिति युक्तमभ्युपगन्तुम्। ब्रह्मस्व-रूपस्फुरणेऽपि तदितराध्यासाभ्युपगमाद्रजतादिव्यावर्तकाधिष्ठानस्वरूपातिरिक्तशुक्तित्वादिवत् सर्वाध्यासाधिष्ठानब्रह्मस्वरूपातिरिक्तसकलेतरव्यावृत्तिरूपधर्मोऽवश्याभ्युपगमनीयः। यच्चो-क्तम्—वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति; तदप्यसत्, विशेषणद्वारेण विशेष्यपर्यवसायिनः शब्दस्य द्वारानभिधाने द्वार्यभिधानासिद्धेः। अलाक्षणिकत्वेऽपि विशिष्टाभिधानस्वरसस्य शब्दस्य विशेष्यमात्रपरत्वे स्वारस्यहानिरवर्जनीया। सा च न विरोधाभावे युक्ता। यच्च 'विषं भुङ्क्ष्व' इत्यादिषु सर्वपदलक्षणा दृष्टेति, तच्च विधि-प्रत्ययांशस्य मुख्यार्थत्वादयुक्तम्। तत्र विधिप्रत्ययव्यतिरिक्तशब्दलक्षणा च मुख्यार्थत्वे प्रमाणान्तरविरोधात् स्वीक्रियते। प्रस्तुते तु विरोधाभावान्न सा युक्ता। 'विमतं वाक्यमखण्डार्थपरं, समानाधिकरणवाक्यत्वात् संप्रतिपन्नवत्' इतीदृश्यनुमानोक्तिरनुपपन्ना। वाक्यमखण्डार्थमिति पदयोरर्थभेदोऽस्ति वा, न वा? अस्ति चेत् प्रतिज्ञावाक्य एव हेतोरनैकान्त्यम्। न चेत्, अखण्डार्थत्वं प्रतिज्ञातमेव न स्यात्। दृष्टान्तस्य च साध्यवैकल्यमवर्जनीयम्, प्रकृतिप्रत्ययात्मकपदपुञ्जरूपत्वात् सर्ववाक्यानाम्। यदि भाव-रूपाखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञा, तर्हि साध्यधर्मवचनान्तर्गतयोः समानाधिकरणयो-र्भावरूपाखण्डशब्दयोरनैकान्त्यम्। तस्मात् सत्यादिवाक्यं सत्यत्वादिविशिष्टमेव ब्रह्म प्रतिपादयतीति सिद्धम्। तदिदमुच्यते—**सत्यं ज्ञानमनन्तमित्यादिना।** तत्र

निर्विशेषपरत्वाभावं सोपपत्तिकं प्रतिजानीते—**सत्यं ज्ञानमिति**। सामानाधिकरण्यलक्षणप्रत्यभिज्ञापकैः शब्दैर्हेत्वंशं विवृणोति—**प्रवृत्तीति**। ततः किमित्यपेक्षायामन्वयमुखेन व्यावृत्तिमुखेन वा प्रवृत्तिनिमित्तभेदस्याश्रयणीयत्वमाह—**तत्रेति**। तर्हि को विशेष इत्यत्राह—**इयानिति**। अवश्याश्रयणीय इत्यत्राभिप्रेतं व्यावृत्तीनां स्वरूपमात्रत्वे दूषणमाह—**न चेति**। सामानाधिकरण्यासिद्धिमुपपादयति—**एकस्मिन्निति**। पर्यायत्वं दूषणं स्पष्टमिति तन्न कण्ठोक्तम्। विशेषणभेदेनानेकार्थत्वात् सामानाधिकरण्यलक्षणहानिं निरस्यति—**न चैकस्येति**। **विशिष्टताभेदात्**; तत्तद्विशेषणान्वयभेदात्। तथाविधमनेकार्थत्वं न विरोधि; प्रत्युतानुकूलमेवेत्यर्थः। कुत इत्यत्राह—**भिन्नप्रवृत्तीति**। विशेषणतो भिन्नार्थत्वे विशेष्यतश्चैकार्थत्वे सति हि सामानाधिकरण्यलक्षणसाद्गुण्यमित्यर्थः। समानाधिकरणं वाक्यं किं विशेषणविशेष्यसंबन्धपरम्? उत विशेष्यैक्यपरम्? उतोभयपरम्? प्रथमे विशेष्यैक्ये प्रमाणं न स्यात्। द्वितीये विशेषणान्वयो निष्प्रमाणकः स्यात्। तृतीये संबन्धद्वयस्यैकवाक्येन बोधयितुमशक्यत्वात् वाक्यभेदप्रसङ्ग इति केचिच्चोदयन्ति; तन्न, प्रातिपदिकेनैव विशेषणान्वयस्य बोध्यतया समानविभक्तिनिर्देशेन विशेष्यैक्यप्रतिपादने वाक्यभेदप्रसङ्गाभावात्।

**भावप्रकाशिका**

**व्यावर्त्यानेकत्वादिति**; व्यावृत्तिप्रतियोगिनामनृतजडपरिच्छिन्नानामनेकत्वेनेत्यर्थः। **पदानां पर्यायत्वप्रसङ्गादिति**; 'प्रवृत्तिनिमित्तभेदाभावेन' इत्युत्तरवाक्यस्थमिहापि काकाक्षिन्यायेन संबध्यते। ननु "कुम्भाद्यनुगतं सत्ता परजातिः सत्यपदप्रवृत्तिनिमित्तम्; अन्तःकरणवृत्त्युपधानलब्धभेदचिदानन्दानुगते ज्ञानानन्दत्वे अपरजाती; एवं च सत्यज्ञानानन्दादिशब्दानां लक्ष्यार्थाभेदेऽप्युक्तजातिवाचित्वान्न पर्यायता" इति कल्पतरूक्तेर्न पर्यायत्वमिति चेत्—न; कुम्भाद्यनुगतसत्तायाः सत्यशब्दवाच्यत्वे सत्यत्वस्यातिप्रसक्तस्य ब्रह्मलक्षणत्वाभावप्रसङ्गात्। अभ्युपगम्यते च त्वया सत्यत्वस्य ब्रह्मलक्षणत्वम्; सत्यमिथ्यार्थानुगतसत्तासामान्यसंभवाच्च तस्यानृतसाधारणतयानृतव्यावृत्त्यसिद्धेश्च; कालत्रयाबाध्यत्वरूपं पारमार्थिकसत्त्वं ब्रह्मणि श्रौतमिति त्वत्सिद्धान्तव्याकोपप्रसङ्गाच्च। धर्मिसमसत्ताकभेदं विना औपाधिकभेदमात्रेणाकाशत्वादेरिव ज्ञानत्वानन्दत्वयोरपि जातित्वायोगाच्च ज्ञानत्वादेः धर्मिसमसत्ताकभेदवदुपहितचैतन्यवृत्तित्वे शुद्धलक्षणत्वायोगाच्च। एतेन सत्यादिविशिष्ट-

शबलब्रह्मवादिनां सत्यादिशब्दानां शुद्धब्रह्मणि लक्षणेति न पर्यायत्वमिति निरस्तम्। अनृतास्वप्रकाशे परिच्छिन्नरूपे शबले, सत्यत्वादेरयोगात्। योगे वा तस्यैवानृतास्वप्रकाशपरिच्छिन्नव्यावृत्तिः स्यात्। न तु सत्यत्वाद्यनाश्रयस्य शुद्धस्य। तस्मात् सत्यत्वादीनां शुद्धादन्यत्रासंभवात् सत्यादिवाक्यस्य च लक्षणया अखण्डार्थत्वे शुद्धेऽपि तदसिद्धेः सत्यत्वादीनामत्यन्तासत्त्वेन तद्भेदमादायापर्यायत्वस्य दुःसमाधानत्वात् पर्यायत्वं सिद्धमित्यर्थः। **उपलक्षणतया विशेषणतया वेति;** किं व्यावृत्तीनां वाक्यार्थीभूतब्रह्मप्रतीत्युपयुक्तपदार्थप्रतीतिविषयत्वमात्रमेव, उत वाक्यार्थप्रतीतिविषयत्वमप्यस्तीति विकल्पार्थः। उपलक्ष्यात् बहिर्भूतमित्यस्याप्ययमेवार्थः। न च – अवच्छेदकत्वं विशेषणत्वोपलक्षणत्वातिरिक्तमेव; 'कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्' इत्यत्र कर्णशष्कुल्या विशेषणत्वे तस्या अपि श्रोत्रत्वप्रसङ्गात्, विशेष्यान्वयिनो विशेषणान्वयित्वनियमात्, नाप्युपलक्षणत्वम्, कदाचित् कर्णशष्कुल्युपलक्षितस्यापि नभसः श्रोत्रत्वेऽतिप्रसङ्गादिति वाच्यम्, तत्राप्युपलक्षणकोटावेव निवेशसंभवात्; विद्यमानकर्णसंयोगस्योपलक्षणत्वेन दोषाभावात्। **उपलक्ष्यात् बहिर्भूतमिति;** अयं भावः—किं स्वरूपप्रतिपत्त्यर्थं ज्ञानादिपदम्? उत ज्ञानत्वादिप्रतीत्यर्थम्? नाद्यः, पूर्वप्रतीतत्वात्। न द्वितीयः, उपलक्षणत्वव्याघातादिति। **वाक्यार्थाभिधानदशायां सर्वैः पदैरिति;** सर्वैः पदैः वाक्यार्थाभिधानदशायामित्यन्वयः। यद्वा **सर्वैः पदैरेकज्ञानजनकत्वेन;** एकज्ञानजननेनेत्यर्थः; अतो नान्वयानुपपत्तिरिति द्रष्टव्यम्। ननु युगपदभिधाने श्रुतिवाक्यादिषु बलाबलविभागनिर्णयोऽसंगत एव स्यात्; वाक्यापेक्षया पदश्रुतेः प्राबल्यं; पदश्रुत्यपेक्षया प्रत्ययश्रुतेरिति व्यवस्था दत्तजलाञ्जलिः स्यादित्यस्वरसादाह—**क्रमेणाभिधानेऽपीति। क्रमेणाभिधानानभ्युपगम इति;** क्रमेणाभिधानानभ्युपगमवादिपक्ष इत्यर्थः। **युगपत्प्रतिपादनेऽपि नापैतीति;** उद्देश्योपादेयभावे हि तद्वाक्यज्ञानत्वाज्ञानत्वे अप्रयोजके; अपितु तद्वाक्यप्रवृत्तेः प्राक् मानान्तरावगतमनूद्यते; अप्राप्तं हि विधीयत इत्येव हि विवेक इति भावः। पौर्वापर्यस्योद्देश्योपादेयलक्षणत्वाभावे कथमुद्देश्योपादेयविभागज्ञानमित्याशङ्क्याह—**एकेन वाक्येनेति। परामर्शदशायां हि संभवत्येवेति;** ननु ज्ञातत्वाज्ञातत्वलक्षणोद्देश्योपादेयविभागज्ञानं न वाक्यार्थप्रतीतावुपयुक्तम्, येन वाक्यार्थप्रतीतेः प्राक् परामर्शदशायां तदवगतिः समर्थनीया स्यादिति चेत्—न; "गृहं संमार्ष्टि" इत्यादौ गृहं संमृज्यात्, एकं संमृज्यात्, यत् संमृज्यात् तदेकमि-

त्यादिवचनव्यक्तिनिरूपणाभावे निर्विचिकित्सवाक्यार्थप्रतीतेरनुदयेन न्यायसंपादितवचनव्यक्ति-परामर्शानन्तरभावित्वाद्वाक्यार्थप्रतीतेः । अत एवोक्तम् "न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थ-बोधकम्" इति भावः । **विशेष्यमात्रैक्यपरत्वात् समानविभक्तेरिति ;** अयं भावः— यदुक्तं विशिष्टैक्यप्रतिपादनमिति, तदिष्टमेव; विशिष्टैक्यप्रतिपादनस्याभ्युपगमात् । न च विशेष्यैक्यमात्रप्रतिपादनं परस्यापीष्टमिति वाच्यम्, विशेषणान्वयस्यापि प्रातिपदिकावगतस्या-त्यागात् । एकस्मिन् विशेष्ये "एकस्य द्वयम्" इति न्यायेन प्राप्तयोर्विशेषणैकत्वयोरपरि-त्यागादिति । **व्युत्पत्तिश्च प्रत्यक्षमूलेति ;** न तु स्वर्गादिशब्दव्युत्पत्तिवत् श्रुतिमूलेत्यर्थः । **प्रत्यक्षं च विशेष्यैक्यमेवावगमयतीति ;** 'दण्डी, कुण्डली' इत्यादौ विशेषणविभक्तेर्भिन्न-विशेषणाश्रय एकस्मिन्नेव विशेष्ये पूर्वपूर्ववृद्धव्यवहारं प्रत्यक्षीकृत्य तथैव व्युत्पत्तेर्ग्रहात्; इतरथा विशेषणविभक्तेरभेदार्थकत्वमपि त्याज्यं स्यात् । न हि विशेषणविभक्तिरैक्यपरेत्यत्र पूर्वपूर्ववृद्धव्यवहाराधीनव्युत्पत्तिमन्तरेणान्यन्निमित्तमस्तीति भावः । **विशेष्यभेदकत्वं प्रत्यक्षेण तत्रापोद्यत इति चेदिति ;** प्रत्यक्षागोचरे ब्रह्मणि विशेषणभेदप्रयुक्तो विशेष्य-भेदो दुर्वार इत्यभिप्रायः । **धर्मिवाचकपदैक्यात् समानविभक्तिनिर्देशाच्चैक्य-प्रतीतेरिति ;** इदमुपलक्षणम्—विशेषणभेदे विशेष्यभेद इत्युत्सर्गः, 'देवदत्तः श्यामो युवा' इत्यादावदर्शनात् । 'खण्डो मुण्डः' इत्यादौ विरुद्धत्वात् भेदकत्वम् । अविरुद्धं त्वभेदकमेव । विशेषणानां भेदकत्ववादस्तु विशेषणानाश्रयापेक्षया, न तु विशेषणान्तरा-पेक्षयापि; न हि 'नीलमुत्पलम्' इत्यादौ नैल्यं दीर्घादपि व्यावर्तयतीत्यपि दृष्टम् । **यच्चोक्तं समानविभक्तीति ;** न च समानविभक्त्यैक्यावगमे परस्याखण्डार्थत्वभङ्गप्रसङ्गात् परस्य कथमियमाशङ्का घटतामिति वाच्यम्, 'एकप्रातिपदिकार्थमात्रनिष्ठत्वमखण्डार्थत्वम्' इत्यनेन प्रातिपदिकार्थान्तरसंबन्ध एव व्यावर्त्यते; न तु विभक्तिसंबन्धोऽपीति मन्यमानस्य शङ्कासंभवादिति ध्येयम् । **अनतिरिक्तपक्षे हेत्वसिद्धिरिति ;** समानविभक्त्यवगतैक्या-वगमविरोधरूपहेत्वसिद्धिरित्यर्थः, ऐक्यावगमविरोधरूपहेत्वसिद्धिरित्युत्तरत्रोपसंहारादिति द्रष्ट-व्यम् । अशक्यासदृशान्वयप्रतियोग्युपस्थितिर्वा शक्यसंबन्धो वा लक्षणा शक्ये न संभवती-त्यभिप्रेत्याह—**अलाक्षणिकत्वेऽपीति । विमतं वाक्यमखण्डार्थपरमित्यादि ;** एतेन—'सत्यादिवाक्यमखण्डार्थनिष्ठं, लक्षणवाक्यत्वात् तन्मात्रप्रश्नोत्तरत्वाद्वा, प्रकृष्टप्रकाश-श्चन्द्र इति वाक्यवत्' इत्यनुमानं प्रमाणम् । 'नीलमुत्पलम्' इत्यादिसमानाधिकरणवाक्यानां

लक्षणवाक्यत्वाभावान्नातिप्रसङ्ग इति निरस्तम्; असाधारणरूपलक्षणवाक्यत्वस्य सखण्डार्थत्वेनैव व्याप्तेः कर्मकाण्डस्यापि तन्मात्रप्रश्नोत्तरत्वेनाखण्डार्थत्वप्रसङ्गात्; 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यत्र व्यावर्तकासाधारणप्रश्नोत्तरत्वेन दृष्टान्तासिद्धेश्चेत्यपि द्रष्टव्यम्। **यदि भावरूपखण्डार्थप्रतिपादनासमर्थमिति प्रतिज्ञेति;** ततश्च प्रतिज्ञावाक्यस्य खण्डार्थत्वाभावरूपाखण्डार्थवैशिष्ट्यप्रतिपादनसामर्थ्येऽपि भावरूपखण्डार्थप्रतिपादनासामर्थ्यान्न व्यभिचार इति भावः। **प्रातिपदिकेनैव विशेषणान्वयस्येति;** प्रातिपदिकस्मारितयोर्विशिष्टयोर्विभक्त्यैक्यमात्रप्रतिपादनादित्यर्थः; न तु नीलप्रातिपदिकेनोत्पले नीलत्वान्वय इति मन्तव्यम्; तथा हि सत्युत्पले नीलत्वान्वयस्य नीलप्रातिपदिकेनैव सिद्धेर्विभक्त्यैक्यबोधनस्य वैयर्थ्यापातादिति द्रष्टव्यम्।

### श्रुतप्रदीपिका

अथ सत्यादिवाक्यस्य सविशेषपरत्वमाह— **सत्यमिति**। कुत इत्यत्राह— **प्रवृत्तीति**। ततः किमित्यत्राह— **तत्रेति**। को भेद इत्यत्राह— **इयानिति**। व्यावृत्त्योः स्वरूपमात्रत्वमित्यत्राह— **न चेति**। पर्यायत्वं स्पष्टमिति दूषणान्तरद्वयमाह— **एकेनेति**। द्वितीयमुपपादयति— **एकस्मिन्निति**। विशेषणानैकान्त्यान्नैकार्थ्यमित्यत्राह— **न चेति**। **विशिष्टता;** विशेषणान्वयः। नाविरोधमात्रम्; अनुकूलमेवेत्यर्थः। उक्तं लक्षणग्रन्थेनोपपादयति — **भिन्नेति**। **प्रवृत्तिः,** विशेष्यबोधनम्। **निमित्तम्;** विशेषणम्। **अर्थे;** विशेष्ये। भिन्नेत्यादिना घटकुम्भशब्दव्युदासः। एकस्मिन्निति घटपटोक्तिव्युदासः। विशेषणमात्रपरत्वे दूषणं **तदनुपगमात्** इत्युक्तम्। विशेष्यमात्रपरत्वे पर्यायत्वादित्रयं लक्षणा च। असत्यादिप्रतियोगिनां तद्व्यावृत्तीनां चोपलक्षणत्वपक्षे विशेषणत्वपक्षे चैकतरवैयर्थ्यं लक्षणा च। विशिष्टपक्षे न मिथः समन्वयः, पदार्थानां पृथक् स्मरणात्, परामर्शस्ययोग्यतानुरोधित्वात्, अभिधानस्य यौगपद्याच्च। ज्ञाताज्ञातविभागः परामर्शदशायां प्रतीयते। यौगपद्येऽपि न विशेषणैक्यम्, विशिष्टैक्यपरत्वात् समानविभक्तेः। तच्च व्युत्पत्त्यनुरोधात्। यथैकपदेऽखण्डार्थवादी प्रष्टव्यः—सत्यादिपदानि प्रतियोगिव्यावृत्तिमात्रपराणि, उत तदवच्छिन्नस्वरूपपराणि, उत स्वरूपमात्रपराणि; अवच्छिन्नपरत्वे च विशेषणतयोपलक्षणतया वावच्छेदकत्वम्। एषु शिरःसु दूषणपरिहारास्तुल्याः। शौक्ल्यादिवैषम्यं शाब्दं स्फुटम्। तत्र कार्ष्ण्यव्यावृत्तं पीतिमव्यावृत्तमिति व्यावृत्त्यभिधायिपदसमभिव्याहारात्, अत्र तदभावाच्च। आर्थं तु द्विधा प्रागुक्तम् 'श्यामो

युवा' इत्यादौ विशेष्यैक्यस्य न देवदत्तप्रत्यक्षबलाधीनत्वं, धर्मिपदैकवचनात्। प्रत्यक्षे परोक्षे च खण्डादौ भेद इव, तादृशे देवदत्तेऽप्यैक्यमपि दृष्टम्। विरोधाविरोधौ तु नियामकौ, न तु विशेषणत्वम्। अतो नैक्यप्रतीतिविरोधाद्विशेषणत्यागः। प्रत्यक्षपरोक्षविभागविरहेणोभयमपि हि प्रतिपन्नम्। वाच्ये प्रधानांशेऽपि न मुख्यत्वम्, द्वाराभावे द्वार्थभावात्। 'विषं भुङ्क्ष्व' इत्यादौ विरोधात् सर्वलक्षणा। अत्र तदभावादयुक्तत्वम्। अतः सविशेषपरत्वमिति।

श्रीभाष्यम्

यदुक्तम्—"एकमेवाद्वितीयम्" इत्यत्राद्वितीयपदं गुणतोऽपि सद्वितीयतां न सहते; अतः सर्वशाखाप्रत्ययन्यायेन कारणवाक्यानामद्वितीयवस्तुप्रतिपादनपरत्वमभ्युपगमनीयम्। कारणतयोपलक्षितस्याद्वितीयस्य ब्रह्मणो लक्षणमिदमुच्यते—"सत्यं ज्ञानमनन्तं ब्रह्म" इति। अतो लिलक्षयिषितं ब्रह्म निर्गुणमेव। अन्यथा "निर्गुणम्" "निरञ्जनम्" इत्यादिभिर्विरोधश्चेति। तदनुपपन्नम्; जगदुपादानस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन विचित्रशक्तियोगप्रतिपादनपरत्वादद्वितीयपदस्य। तथैव विचित्रशक्तियोगमेवावगमयति—"तदैक्षत बहु स्यां प्रजायेयेति; तत्तेजोऽसृजत" इत्यादि। अविशेषेण 'अद्वितीयम्' इत्युक्ते निमित्तान्तरमात्रनिषेधः कथं ज्ञायत इति चेत्, सिसृक्षोर्ब्रह्मण उपादानकारणत्वं "सदेव सोम्येदमग्र आसीदेकमेव" इति प्रतिपादितम्। कार्योत्पत्तिस्वाभाव्येन बुद्धिस्थं निमित्तान्तरमिति तदेवाद्वितीयपदेन निषिध्यत इत्यवगम्यते। सर्वनिषेधे हि स्वाभ्युपगताः सिषाधयिषिता नित्यत्वादयश्च निषिद्धाः स्युः। सर्वशाखाप्रत्ययन्यायश्चात्र भवतो विपरीतफलः, सर्वशाखासु कारणान्वयिनां सर्वज्ञत्वादीनां गुणानामत्रोपसंहारहेतुत्वात्। अतः कारण-

**वाक्यस्वभावादपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन सविशेषमेव प्रतिपाद्यत इति विज्ञायते ।**

### श्रुतप्रकाशिका

एवं सामानाधिकरण्यस्यान्यथैवोपपत्त्या सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वं निरस्तम् । अथ कारणवाक्यैकार्थ्यान्निर्विशेषपरत्वं निराकर्तुं तदनुवदति—**यदुक्तमित्यादिना ।** 'सदेव, एकमेव' इति विजातीयसजातीयभेदव्यावर्तकावधारणद्वयसमभिव्याहृतमद्वितीयपदं पारिशेष्यात् स्वगतभेदाभावपरमिति गुणतोऽपि सद्वितीयतां न सहत इत्यर्थः ।

"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥"

इत्यादिसगुणविषयकारणवाक्यैकार्थ्यमस्तीत्यत्राह—**अत इति ।** सर्वशाखाप्रत्ययन्यायान्निर्गुण-कारणवाक्येषु सगुणत्वं सगुणकारणवाक्येषु निर्गुणत्वं चोक्तं स्यात्, तत्रापच्छेद-न्यायेन निर्गुणवाक्यप्राबल्यात् सर्वकारणवाक्यानि निर्गुणपराणीत्यर्थः । कारणवाक्यैकार्थ्यं कुतोऽपेक्षितमित्यत्राह—**कारणतयोपलक्षितस्येति ।** जगत्कारणत्वं तटस्थलक्षणम्; न तु स्वरूपलक्षणमित्यभिप्रायेणोपलक्षितस्येत्युक्तम् । कारणत्वशङ्कि[illegible]षव्यावर्तकत्वादैक्यमवर्जनीय-मित्यर्थः । अथ शोधकवाक्यान्तरैकार्थ्यान्निर्विशेषपरत्वोपपादनं निराचिकीर्षुरनुवदति—**अन्यथेति ।** अनूदितमर्थं दूषयति—**तदनुपपन्नमित्यादिना ।** तत्र प्रथमं कारण-वाक्यैकार्थ्यं सविशेषविषयत्वे सतीत्याह—**जगदिति । तथैवेति;** अद्वितीयपदं यथा-धिष्ठात्रन्तरनिवारणपरमेव भवति, तथैवेत्यर्थः । **विचित्रशक्तियोगमेवेति;** उत्तर-वाक्यमुपादानभूतस्यैव ब्रह्मणोऽधिष्ठातृत्वशक्तियोगमेवावगमयति, न तु निर्गुणत्वमित्यर्थः । शङ्कते—**अविशेषेणेति ।** सर्वनिषेधस्य निमित्तान्तरनिषेधस्य च साधारणमद्वितीयपदम्, निरुपपदत्वात् । किंच उपक्रमे 'सदेव, एकमेव' इति सजातीयविजातीयभेदयोर्निषिद्ध-त्वादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सजातीयविजातीयभेदमात्रमिथ्यात्वेऽनुपपन्नत्वाच्चाद्वि-तीयपदमुपक्रमानुगुण्येन स्वगतभेदनिषेधपरं स्यात्, न तूत्तरवाक्यानुगुणं स्यात्, उपक्रम-प्राबल्यादिति साक्षात्पूर्वपक्षिचोद्यम् । निमित्तत्वोपादानत्वे उभे अप्युत्तरत्र श्रूयेते; तत्रोपादानान्तरमद्वितीयपदेन निषिध्येत, न तु निमित्तान्तरमिति पार्श्वस्थचोद्यम् । तत्राह—**सिसृक्षोरिति ।** अनेन शङ्काद्वयं परिहृतं भवति; "तदैक्षत" इत्यनन्तरोक्तत्वादस्य

वाक्यस्य कारणपरत्वं नापलपनीयमित्यभिप्रायेण **सिसृक्षोरि**त्युक्तम् । कारणपरत्वे च सति अग्रशब्देन विजातीयकालसद्भावसिद्धेः, जीवानादित्वश्रुतेः, अकृताभ्यागमकृतविप्रणाशादि-श्रुत्यर्थापत्त्या वैषम्यनैर्घृण्यपरिहाराय जीवानां कर्मसूक्ष्मभेदस्य प्रलयदशायामभ्युपगमात्, एकत्वावधारणस्य जीवसूक्ष्मभेदसहत्वस्य परैरभ्युपगन्तव्यत्वात्, सार्वज्ञ्यसर्वशक्तित्वादीनां सर्गौपयिकत्वाच्च विजातीयसजातीयस्वगतभेदाभावस्य दुर्वचत्वात्, एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञायाश्चोक्तार्थाविरोधेन निर्वाह्यत्वात्, परतन्त्रभेदस्य विहितत्वात्, निषेधस्य च विहित-व्यतिरिक्तविषयत्वात्, स्वतन्त्ररूपभेदविशेषस्य "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादिभिर्निषिद्धत्वात्, सामान्यनिषेधस्य च तत्पर्यवसानस्य न्याय्यत्वाच्च, अद्वितीयपदस्य स्वतन्त्रभेदनिषेधपरत्वे प्राप्ते सति अविभक्तनामरूपताप्रतिपादकेनैकमिति पदेनोपादानत्वस्य सिद्धत्वात् निमित्तान्तरस्य बुद्धिस्थत्वाच्च, निमित्तान्तररूपस्वतन्त्रवस्तुनिषेधपरमद्वितीयपद-मित्यर्थः । सर्वनिषेधेऽनिष्टमाह—**सर्वेति** । सर्वशाखाप्रत्ययन्यायस्य निर्विशेषत्ववाद-विपरीतत्वमाह—**सर्वशाखेति । अत्र**; निर्गुणवादे । **अत्रभवत** इत्युपालम्भो वा । सर्व-शाखाप्रत्ययन्यायोऽनुक्तगुणस्वीकारफलः, न तूक्तगुणत्यागफल इति त्वत्पक्षविपरीत इत्यर्थः । सविशेषपरत्वे कारणवाक्यैकार्थ्यं निगमयति—**अत इति** । न केवलं सामानाधिकरण्या-न्यथानुपपत्त्या; कारणवाक्यैकार्थ्याच्च सविशेषपरमित्यपिशब्दस्य भावः ।

### भावप्रकाशिका

**अनेन शङ्काद्वयं परिहृतं भवतीति**; कारणपरत्वप्रतिपादकेन **सिसृक्षोरिति** पदेन साक्षात्पूर्वपक्षिचोद्यनिरासः । उपादानकारणत्वं "सदेव सोम्येदमग्र आसीदेकमेव" इति प्रतिपादितमिति भाष्यखण्डेन पार्श्वस्थचोद्यनिरास इति भावः । **स्वतन्त्रवस्तु-निषेधपरमद्वितीयपदमित्यर्थ इति**; अत एव शाङ्करोपनिषद्भाष्येऽपि "अद्वितीयमिति; मृद्व्यतिरेकेण मृदो यथान्यत् घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं, तथा सद्व्यतिरेकेण सतः सहकारि कारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यते—अद्वितीयमिति । नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वितीयम्" इति निमित्तान्तरनिषेधपरतयैव व्याख्यातम् । किंच "प्राक् सृष्टेरेकमद्वितीयं सदेवासीत्" इति सृष्टिप्राक्कालपरतया परैरेव व्याख्यातत्वेन सृष्टिप्राक्कालेऽद्वितीयत्वमात्रेण कथं मिथ्यात्वप्रसक्तिरिति द्रष्टव्यम् ।

## श्रुतप्रदीपिका

इत्थं सामानाधिकरण्यान्वयानुपपत्तिं निरस्य कारणवाक्यैकार्थ्यं शोधकान्तरैकार्थ्यं च निरसितुमनुवदति—**यदुक्तमिति । गुणतोऽपि सद्वितीयताम्**; 'सदेव, एकमेव' इति सजातीयविजातीयभेदव्यावृत्त्या परिशेषादित्यर्थः । सगुणपरकारणवाक्यैकार्थ्यं स्यादित्यत्राह—**अत इति** । कुतस्तदैकार्थ्यापेक्षेत्यत्राह—**कारणतयेति** । ज्ञाप्यबहिर्भूतं व्यवच्छेदकमुपलक्षणम् । निगमयति—**अत इति** । शोधकान्तरैकार्थ्यं चाह—**अन्यथेति** । दूषयति—**तदिति** । कथमित्यत्राह—**जगदिति** । एकमेवेत्युपादानतोक्तिः । यथा विचित्रशक्तियोगं बोधयत्यद्वितीयपदं, तथैवोत्तरवाक्यमपि तमेवावगमयति, न निर्विशेषत्वमित्यर्थः । शङ्कते—**अविशेषेणेति** । उपादानान्तरनिषेधः किं न स्यात्? प्रतिज्ञाविरोधश्चेति भावः । परिहरति—**सिसृक्षोरिति** । नामरूपभेदभाक्त्वं भाव्यवस्थाविशेषस्य प्रागवस्थायोग उपादानता । अन्यथानिष्टमाह—**सर्वेति** । सर्वशाखानयस्य परमतवैपरीत्यमाह—**सर्वशाखेति** । **अत्रभवतः**; पूज्यस्येत्युपालम्भः । **अत्र**; निर्गुणवादे इति वा । निगमयति—**अत इति** ।

## न्यायसुदर्शनम्

**सर्वनिषेधे हीति**; अद्वितीयपदे नञः कोऽर्थ इति विवेचनीयम् । न तावत् द्वितीयस्यासत्त्वम्, तथा सति प्रपञ्चस्य तुच्छत्वप्रसङ्गात् सर्वव्यवहारलोपः, सर्वप्रमाणविरोधः, अपसिद्धान्तश्च । त्रिधास्य सद्विलक्षणता तर्ह्यग्र इति कालविशेषोपादानवैयर्थ्यम्, ब्रह्मव्यतिरिक्तानां सद्विलक्षणत्वस्याकालोपाधिकत्वाङ्गीकारात् । न हि निरुपाधिकविधेयस्योपाध्युपादानं युक्तम् । अग्र इति कालविशेषस्यानिषेधादखण्डाद्वैतस्यासिद्धिः । अधिष्ठानलक्षणार्थोऽग्रशब्द इति चेत्, तथापि सच्छब्देनैवाधिष्ठानस्वरूपोपस्थितेरग्रशब्दवैयर्थ्यम् । "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" "एकः पुरस्ताच इदं बभूव" इत्यादिसमानप्रकरणेषु कालविशेषवाचाः कशब्दाश्च बाध्येरन्, इत्येवं दूषणसमुच्चयो वक्तव्यः । तत्र च "एकमेवाद्वितीयम्" इति पदद्वयं रूपभेदं नामभेदं निमित्तान्तरलक्षणभेदं च प्राक्सृष्टेः प्रतिषेधति । वाचारम्भणश्रुत्या विकारनामधेययोरेव कार्यदशायां विशेषत्वेनोक्तत्वात्तयोरेव कारणदशायां निषेध्यत्वात् अद्वितीयपदेन लोकदृष्ट्या बुद्धिस्थाधिष्ठात्रन्तरस्यैव निषेध्यत्वयोगाच्चेति ।

श्रीभाष्यम्

न च निर्गुणवाक्यविरोधः, प्राकृतहेयगुणविषयत्वात्तेषां "निर्गुणम्," "निरञ्जनम्," "निष्कलं निष्क्रियं शान्तम्" इत्यादीनाम्। ज्ञानमात्रस्वरूपवादिन्योऽपि श्रुतयो ब्रह्मणो ज्ञानस्वरूपतामभिदधति। न तावता निर्विशेषज्ञानमात्रमेव तत्त्वम्, ज्ञातुरेव ज्ञानस्वरूपत्वात्। ज्ञानस्वरूपस्यैव तस्य ज्ञानाश्रयत्वं मणिद्युमणिदीपादिवद्युक्तमेवेत्युक्तम्। ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्ति। "यः सर्वज्ञः सर्ववित्" "तदैक्षत," "सेयं देवतैक्षत" "स ईक्षत लोकान्नु सृजा इति" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "ज्ञाज्ञौ द्वावजावीशनीशौ"

"तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्॥
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥"

"एष आत्मापहतपाप्मा विरजो विमृत्युर्विशोको विजिघित्सोऽपिपासः सत्यकामः सत्यसंकल्पः" इत्याद्याः श्रुतयो ज्ञातृत्वप्रमुखान् कल्याणगुणान् ज्ञानस्वरूपस्यैव ब्रह्मणः स्वाभाविकान् वदन्ति, समस्तहेयरहिततां च। निर्गुणवाक्यानां सगुणवाक्यानां च विषयम् "अपहतपाप्मा" इत्यादि "अपिपासः" इत्यन्तेन हेयगुणान् प्रतिषिध्य "सत्यकामः सत्यसंकल्पः" इति ब्रह्मणः कल्याणगुणान् विदधतीयं श्रुतिरेव विविनक्तीति सगुणनिर्गुणवाक्ययोर्विरोधाभावादन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयम्*।

* 'न युक्तम्' इति भावप्रकाशिकासंमतः पाठः।

### श्रुतप्रकाशिका

अथ शोधकवाक्यान्तरैकार्थ्यं निर्विशेषपरत्वहेतुं निरस्यति—**न चेति।** परेणापच्छेदन्यायेन हि निर्गुणसगुणवाक्यविरोधः परिहृतः। अत्र भिन्नविषयत्वाद्विरोध एव नास्तीत्याह—**प्राकृतेति। निर्गुणमिति** गुणसामान्यनिषेधः। **निष्कलमिति** शरीरसामान्यनिषेधः। **निष्क्रियमिति** क्रियासामान्यनिषेधः। न गुणनिषेधः संकोचयितव्यः, आर्थगुणनिषेधबलेन सर्वगुणविरहावगमात्; ज्ञानस्य ज्ञानादिगुणाश्रयत्वादर्शनात्; ब्रह्मणो ज्ञानमात्रत्वप्रतिपादनेन निर्गुणत्वं हि फलितमिति शङ्कायामार्थगुणनिषेधं परिहर्तुं श्रुतिप्रतिपन्नमर्थमनुभाषते—**ज्ञानमात्रेति।** ततः किमित्यत्राह—**न तावतेति।** कुत इत्यपेक्षायां किं ज्ञानत्वात् ज्ञानानाश्रयत्वमुच्यते, किमेकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्तेरिति विकल्पे प्रथमं प्रतिवक्ति—**ज्ञातुरेव ज्ञानस्वरूपत्वादिति।** अयमर्थः—ज्ञानस्य ज्ञानादिगुणाश्रयत्वाभावः किं व्याप्त्या कथ्यते? उत श्रुतिबलात्? व्याप्त्या चेत् ज्ञानानाश्रयभूतं विषयप्रकाशकं ज्ञानं कस्यचिद्धर्मभूतमेव दृष्टमिति धर्मत्वेनाङ्गीक्रियताम्। यदि श्रुतिबलात् स्वतन्त्रत्वेनाङ्गीक्रियते, तर्हि श्रुतिबलादेव ज्ञानाश्रयत्वमप्यङ्गीक्रियतामिति। ज्ञानानाश्रयत्वं धर्मभूतज्ञानत्वप्रयुक्तम्, न तु ज्ञानत्वमात्रप्रयुक्तमिति सोपाधिकत्वम्। अतो व्याप्तिविरोधश्च नास्ति। यद्वा जडस्य घटादेरिव ज्ञातृत्वायोगात् ज्ञातृत्वेनैव ज्ञानस्वरूपत्वमर्थसिद्धम्। द्वितीयं प्रतिवक्ति—**ज्ञानस्वरूपस्येति।** एकजातीयद्रव्ययोर्नियतधर्मधर्मिभाव उपपद्यत इत्यर्थः। श्रुत्या ज्ञानाश्रयत्वे सिद्धे हि तथाभ्युपगम इत्यत्राह—**ज्ञातृत्वमेव हीति। यद्वा ज्ञातुरेव ज्ञानस्वरूपत्वादिति;** ज्ञातुर्ज्ञानस्वरूपत्वाविरोधादित्यर्थः। एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्त्या विरोधं परिहरति—**ज्ञानस्वरूपस्यैवेति।** ज्ञानत्वाज्ज्ञानानाश्रयत्वं परिहरति—**ज्ञातृत्वमेव हीति।** पूर्ववदभिप्रायः। ज्ञातृत्वं यथा फलितं भवति तादृशगुणपराश्च ज्ञातृत्वकण्ठोक्तिमत्यश्च श्रुतयः सर्वशब्दविवक्षिताः। बह्वुपनिषद्वाक्यानि वा विवक्षितानि। एवकारेण ज्ञातृत्वस्यानन्यथासिद्धिरभिप्रेता। हिशब्दो हेतौ। ज्ञातृत्वस्य श्रुतिसिद्धत्वान्न काचिदप्यनुपपत्तिरित्यर्थः। काः पुनः श्रुतय इत्यपेक्षायामार्थगुणनिषेधपरिहारार्थं निर्गुणश्रुतिसंकोचसिद्ध्यर्थं सगुणश्रुतीनामाविद्यकगुणविषयत्वशङ्कापनोदनार्थं च श्रुतीर्दर्शयंस्ताभिरेतत्प्रयोजनत्रयसिद्धिं च दर्शयति—**यः सर्वज्ञ इत्यादिना। यः सर्वज्ञः सर्ववित्;** सर्वं स्वरूपतः प्रकारतश्च

जानातीत्यर्थः। ज्ञानस्य सर्वविषयत्वं तस्य समष्टिव्यष्टिसृष्ट्युपयोगित्वमात्मसंबन्धित्वं च दर्शयति—**तदैक्षतेत्यादित्रयेण**। **नित्यो नित्यानामि**त्यत्र चेतनबहुत्वमुक्तं, कामप्रदत्वं च। **ज्ञाज्ञौ द्वावि**त्यत्र ज्ञातृत्वमीश्वरत्वं च। **तमीश्वराणामि**त्यत्रेश्वरत्वदेवतात्वपतित्वानि। **ईश्वरत्वं** नियन्तृत्वम्, नियाम्यविषयज्ञानवत एव नियन्तृत्वात्; नियमनस्य ज्ञानविशेषरूपत्वाच्च। नियन्तृत्वेन ज्ञातृत्वसिद्धिः। **देवतात्वम्**; कर्माराध्यत्वम्; **पतित्वम्**; शेषित्वम्। **न तस्येति; कार्यम्**; शरीरम्। **करणम्**; इन्द्रियादि। "कार्यकारणकर्तृत्वे" इति प्रयोगात्। समाभ्यधिकनिषेधश्चात्र श्रूयते। तेन "अद्वितीयम्" इति सामान्यनिषेधस्य "छागो वा मन्त्रवर्णात्" इति न्यायादीश्वररूपद्वितीयविशेषपर्यवसायित्वं सूचितम्। **परास्येति** ज्ञानशक्त्यादीनां स्वाभाविकत्वमुक्तम्। **क्रिया**; नियमनम्। "एष आत्मा" इति विशेषविधानं विशेषनिषेधश्च। आर्थगुणनिषेधस्य परिहर्तव्यतामभिप्रेत्य **ज्ञानस्वरूपस्यैवे**त्युक्तम्। आविद्यकत्वनिराकरणाय **स्वाभाविकानि**त्युक्तम्। **समस्तहेयरहिततां चे**त्यनेनाप्याविद्यकत्वशङ्का अर्थात्परिहृता। किंच **ज्ञातृत्वप्रमुखान् कल्याणगुणान् समस्तहेयरहिततां चे**त्यनेन निर्गुणवाक्यस्य संकुचितवृत्तित्वं चोपपादितं भवति। तथाहि—**कल्याणगुणानि**त्यस्यायमभिप्रायः—गुणविशेषविधानं गुणसामान्यनिषेधो न बाधितुं प्रभवति; अपितु तद्व्यतिरिक्तविषय एव भवति। अन्यथा "न हिंस्यात्सर्वा भूतानि" इति सामान्यनिषेधेन "अग्नीषोमीयं पशुमालभेत" इति हिंसाविशेषविधानबाधप्रसङ्गादिति। **समस्तहेयरहिततां चे**त्यस्यायमर्थः; यथा—"पशुना यजेत," "छागस्य वपायाः" इत्यादिषु "छागो वा मन्त्रवर्णात्" इति सूत्रोक्तन्यायात् सामान्यशब्दो विशेषदर्शने सति तत्र पर्यवस्यति, तथा गुणसामान्यनिषेधो विशेषगुणनिषेधे पर्यवस्यतीति। किंच सामान्यशब्दानां विशेषपर्यवसायित्वं व्युत्पत्तिसिद्धम्; यथा—'गामानय' 'गां बधान' इत्यादिषु सामान्यशब्दो विशेषकटाक्षेण प्रयोजकवृद्धेन प्रयुज्यते। तत एव हि तत्र प्रयोज्यवृद्धश्च न सर्वा गोव्यक्तीरानयति, किंतु विवक्षितव्यक्तिविशेषमेवानयति। तथैव हि तत्र व्युत्पत्तिः। एवं **ज्ञातृत्वप्रमुखान् कल्याणगुणा**नित्यनेन **समस्तहेयरहिततां चे**त्यनेन चोत्सर्गापवादन्यायः सामान्यविशेषन्यायश्चाभिप्रेतः। उपात्तविशेषव्यतिरिक्तविषये सामान्यशब्दस्य विरोधपरिहाराय संकोच उत्सर्गापवादन्यायः। अविरोधेऽपि वैयर्थ्यपरिहाराय संकोचश्चेत्

गोबलीवर्दन्याय:। उपात्तविशेषविषये तस्य संकोच: सामान्यविशेषन्याय इति भिदा। किंच अध्यात्मशास्त्रेषु गुणशब्द: सत्त्वरजस्तम:सु प्रसिद्ध:।

"न हि तस्य गुणा: सर्वे सर्वैर्मुनिगणैरपि।
वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणै:॥"
"सत्त्वं रजस्तम इति गुणा: प्रकृतिसंभवा:।"

"निर्गुणस्याप्रमेयस्य" "गुणा गुणेषु वर्तन्ते" "कारणं गुणसङ्गोऽस्य" "निर्गुणं गुणभोक्तृ च" "नान्यं गुणेभ्य: कर्तारम्" "दैवी ह्येषा गुणमयी मम माया दुरत्यया" "विना हेयैर्गुणादिभि:" गुणादिदोषांश्च मुने व्यतीत:" "गुणकलुषस्य सनातनेन तेन" इत्यादिषु। एवं केवलगुणशब्दस्य सत्त्वादिपरत्वेन प्रसिद्धिप्राचुर्यान्निर्गुणशब्दा: सत्त्वादिनिषेधपरा:। अयं विषयविभागो न केवलमस्माभि:, भिन्नोपनिषद्वाक्येषु गुणविशेषविधानगुणविशेषनिषेधदर्शनान्निश्चीयते। एकस्मिन्नेव वाक्ये विषयविभागो दृष्ट इत्याह—**निर्गुणेति**। गुणसामान्यनिषेधवत् गुणसामान्यविधानमात्राभ्युपगमेन निर्गुणवाक्यानां सगुणवाक्यानां चेत्युक्तम्। न हि श्रुतिषु गुणसामान्यविधानं क्वचिद् दृश्यते। गुणविशेषा एव हि श्रूयन्ते। दोषसमभिव्याहृतगुणशब्दस्तूपादेयतमगुणपर:। "वर्षायुतैर्यस्य गुणा न शक्या:" "स ते गुणानामयुतैकदेशम्" "नान्तं गुणानां गच्छन्ति" इत्यादिस्मृतिवचनाभिप्रायेण वा सगुणवाक्यानामित्युक्तम्। तत्र गुणशब्दो दोषप्रतिपक्षवचन:, लोके तथा प्रसिद्धे:। प्रकरणवशाच्छागपशुन्यायेन कल्याणगुणरूपविशेषपर्यवसानस्य न्याय्यत्वाच्चोक्तन्यायद्वयेन विरोधाभावादपच्छेदन्यायस्याविषयत्वमाह—**इति सगुणनिर्गुणवाक्ययोरिति**। इतिशब्देन पूर्वोक्तसर्वहेतवो विवक्षिता:—उत्सर्गापवादन्यायात्, सामान्यविशेषन्यायात्, अध्यात्मशास्त्रेषु गुणशब्दस्य सत्त्वादिषु प्रसिद्धिप्राचुर्याच्चेत्यर्थ:। **सगुणनिर्गुणवाक्ययोरिति**; अत्र तु विषयविभागान्न विरोध इति नापच्छेदनय: प्रवर्तत इति भाव:। **अन्यतरस्य मिथ्याविषयताश्रयणमपि नाशङ्कनीयमिति**; सगुणवाक्यस्येति न ह्युक्तम्, किं त्वन्यतरस्येत्युक्तम्। सगुणेन निर्गुणवाक्यस्य वा निर्गुणेन सगुणवाक्यस्य वा बाधाश्रयणमनुपपन्नमित्यर्थ:। अत्रायमभिप्राय:—पूर्वं विरोधो नास्तीति परिहृतम्। इदानीं विरोधाभ्युपगमेऽपि नायमपच्छेदन्यायविषय:, अपि तु विरोधाधिकरणन्यायविषय एवेति। तथाहि—

अपच्छेदन्यायो ह्यनियतविरोधपौर्वापर्यविषयः । उद्गातृप्रतिहर्त्रोरुभयोरपच्छेदनियमो नास्ति । तत्रापि क्रमेणापच्छेदोऽप्यनियतः । तन्नियमे सति सर्वस्वदक्षिणाकत्वादक्षिणाकत्वविरोध-नियमः । उभयोरप्यपच्छेदे तस्य क्रमभावित्वे उद्गात्रपच्छेदः पूर्वभावी, इतरस्तु चरम-भावीति वा विपर्ययेणेति वा नियमोऽपि नास्ति । अतोऽपच्छेदन्यायविषयः प्रयोगावधिक-विरोधः । सगुणनिर्गुणवाक्यविरोधस्तु स्वरूपप्रयुक्तः, विधिनिषेधरूपतया नियतपौर्वा-पर्यश्च । अतो विरोधाभ्युपगमेऽप्यनियतविरोधपौर्वापर्यविषयोऽपच्छेदनयो नात्र प्रवर्तते ; अपि तु विरोधाधिकरणन्याय एव प्रवर्तते । तद्विषये हि पौर्वापर्यनियमो विरोधनियमश्च विद्यते । तथाहि—"औदुम्बरीं स्पृष्ट्वोद्गायेत" इति प्रत्यक्षश्रुतिः । "औदुम्बरी सर्वा वेष्टयितव्या" इति स्मृतिः । तत्र श्रुतिः प्रथमत एव प्रमितिं जनयति, निरपेक्षप्रमाणत्वात् । स्मृतिस्तु स्वमूलभूतश्रुत्यनुमानसापेक्षतया विलम्बितप्रवृत्तिः । अतस्तत्र पौर्वापर्यं नियतम् । औदुम्बरीस्पर्शतद्वेष्टनयोर्विरोधश्च नियतः । तत्र पूर्वमेव प्रमित्यां जातायां तद्विरुद्धार्थः कालात्ययापदिष्टः स्यात् । अतो विलम्बितधीहेतोः शीघ्रधीहेतुर्बलीयानिति न्यायात् पूर्वस्याः श्रुतेर्बलीयस्त्वमित्युत्तरशास्त्रानुदय एव । नन्वत्रार्थात्तमेव ह्युत्तरशास्त्रमिति चेत्, ततः किम्? प्रमित्यनुदयो ह्यनुदयः, न तु शब्दानुदयः, "आदित्यो यूपः" इतिवत् । ननु तत्र श्रुतित्वस्मृतित्वे बाध्यबाधकभावप्रयोजके ; नैवम्, श्रुतित्वस्मृतित्वयोः पौर्वापर्य-हेतुत्वात् ; तेन सिद्धं पौर्वापर्यमेव बाध्यबाधकभावहेतुरिति न्यायसाम्यात्सगुणवाक्यबली-यस्त्वमिति । यद्वा मा भूद्विरोधाधिकरणनयः ; अत्रोपक्रमाधिकरणन्याय एव प्रवर्तते, विरोधपौर्वापर्यनियमात् । अतः सगुणवाक्यप्रतिबद्धत्वान्निर्गुणशास्त्रानुदय एवेति । ननु प्रथमप्रवृत्तं विलम्बितस्योत्पत्तिप्रतिबन्धकं चेत 'नेदम् रजतम्' इति ज्ञानोदयम् 'इदं रजतम्' इति धीः प्रतिबध्नात्विति चेत्, न ; सत्तया ज्ञायमानतया च ज्ञापकयो-रत्यन्तवैषम्यात् । सत्तया ज्ञापकं हि प्रमाणं पूर्वापरपरामर्शनिरपेक्षं ज्ञानं जनयति । अत्रोत्तरं ज्ञानं "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति न्यायात्पूर्वं बाधित्वै-वोदेति । ज्ञायमानतया ज्ञापकं तु योग्यतापरामर्शादिसापेक्षं प्रमितिं जनयति । तत्र परामर्शदशायां पूर्वप्रमाणेन विरुद्धार्थप्रमितिश्चेत्, सा प्रमितिरुत्तरोत्पत्तिं प्रतिबध्नातीति वैषम्यमिति । एवं तर्हि 'नेदं रजतम्' इति ज्ञानस्य 'इदं रजतम्' इति परामर्शसापेक्षत्वात् पूर्वज्ञानेन प्रतिबद्धस्य 'नेदं रजतम्' इति ज्ञानस्यानुदयप्रसङ्ग इति चेत्—न ; इन्द्रियस्य

प्रत्यभिज्ञेतरज्ञानजनने पूर्वपरामर्शनिरपेक्षत्वात् । इहापि 'शुक्तिरियम्' इति शुक्तित्वविषया ह्युत्तरप्रमितिः । शुक्तित्वप्रतीतेश्च न रजतप्रतिपत्तिसापेक्षत्वम् । शुक्तित्वे गृहीते सति तद्ग्रहण-फलभूतो 'नेदं रजतम्' इति व्यवहारो नञुल्लिखितत्वात्प्रतियोगिसापेक्षः प्रवर्तते । तत्सापेक्षत्वं च शब्दस्वभावाधीनम् । अतः शुक्तिज्ञानं रजतज्ञाननिरपेक्षमुदयमानं पूर्वं बाधित्वैवोदेति । अतो नियतविरोधपौर्वापर्यविषयविरोधाधिकरणन्याय एवात्र प्रवर्तते, न त्वपच्छेदनयः । स चेदृशस्थले यदि प्रवर्तते, पश्चालम्भनमकर्तव्यं स्यात्; चरमभाविनो "न हिंस्यात्" इति निषेधस्य प्रबलत्वात् । ततश्चानुष्ठानविरोधः । सगुणनिर्गुणवाक्ययोर्विरोधपौर्वापर्यनियमः परेणैवोक्तः । अतोऽपि विरोधाधिकरणन्यायविषयत्वेनात्रापच्छेदन्यायानवकाशात् सगुण-वाक्यानां बलीयस्त्वं सिद्धमिति । एतदभिप्रायेणान्यतरस्येत्युक्तम् । उपाध्यनुक्ति-पूर्वकश्रुत्युक्तानां गुणानां निरुपाधिकत्वस्य स्वतः प्राप्तत्वात्, स्वाभाविकत्वश्रुतेः "नान्यो हेतुर्विद्यते ईशनाय" इति ईशनस्य हेत्वश्रवणेन तदौपयिकगुणानामपि निरुपाधिकत्वसिद्धेः, ज्ञानशक्त्यादितारतम्योपाधिभूतकर्मसंबन्धनिषेधपूर्वकसत्यकामत्वाद्युक्तेः, "त इमे सत्याः कामाः" इति स्वरूपवत्सत्यत्वश्रुतेः, "परास्य शक्तिः," "ते ये शतम्" इत्यादिभिर्गुणानामपरिच्छिन्नत्वप्रतिपादनेन कर्मसंबन्धव्यापकपरिच्छेदनिवृत्त्या व्याप्य-कर्मसंबन्धनिवृत्तेरर्थसिद्धत्वात्, स्वाभाविकत्वकण्ठोक्तिरहितगुणपरवाक्येष्वपि सर्वशाखाप्रत्यय-न्यायेन गुणानां स्वाभाविकत्वसिद्धेः, "आनन्दं ब्रह्मणः" इत्यादितात्पर्यलिङ्गप्राचुर्यात्, उत्सर्गापवादन्यायसामान्यविशेषन्यायाभ्यां विषयविभागादेकस्यां श्रुतावेव विषयविभागस्य दृष्टतया च विरोधाभावादपच्छेदन्यायाविषयत्वात्, विरोधे सत्यपि विरोधाधिकरणन्यायेन सगुणवाक्यप्राबल्यात्, "यः सर्वज्ञः" इत्यादिषूपासनविधिरहितेषु वाक्येषु स्वरूपवत् प्रतिपन्नत्वात्, मानान्तरागोचरतयानुवादविषयत्वासंभवेन निषेद्धुमशक्यत्वात्, "आत्मा वा अरे द्रष्टव्यः," "सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद" "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति क्वचिदुपास्यत्वश्रवणस्य स्वरूपेऽपि तुल्यत्वात्, अध्यात्मशास्त्रेषु सत्त्वादिषु गुणशब्दस्य प्रसिद्धिप्राचुर्याच्च निर्गुणवाक्यविषयत्वाभावात्, बाह्यतर्काणां कालात्य-यापदिष्टत्वात्, अवधारणद्वयसहिताद्वितीयत्वश्रुतिज्ञानानन्दस्वरूपत्ववाङ्मनसनिवृत्तिज्ञेयत्व-निषेधरूपार्थगुणनिषेधानां परिहृतत्वाच्च 'निरुपाधिका ब्रह्मगुणाः' इत्युक्तवक्ष्यमाणार्थसंग्रहः प्रवृत्तिसौकर्याय दर्शितः ।

## भावप्रकाशिका

किं ज्ञानत्वात् ज्ञानानाश्रयत्वमुच्यते? उत एकजातीयद्रव्ययोर्नियतधर्मधर्मिभावानुपपत्तेरिति विकल्पे, प्रथमस्य दूषणं **ज्ञातुरेव ज्ञानस्वरूपत्वसंभवादिति** भाष्यम्। ज्ञातुरपि ज्ञानस्वरूपत्वसंभवादिति तस्यार्थः। द्वितीयस्य तु दूषणं **ज्ञानस्वरूपस्यैवेत्यादि** भाष्यम्। **ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्तीति** भाष्यं तु प्रथमविकल्पदूषणस्योपपादकं तच्छेषभूतमिति प्रथमव्याख्या। अस्यां च व्याख्यायां **ज्ञातृत्वमेव हीति** भाष्यस्य **ज्ञातुरेव ज्ञानस्वरूपत्वादिति** व्यवहितभाष्योपपादकत्वमाश्रयणीयम्। एवकारस्य अप्यर्थत्वं च क्लिष्टमित्यस्वरसो द्रष्टव्यः। द्वितीयव्याख्यायां तु पूर्ववदेव विकल्पमुखेन प्रवृत्तत्वं समानम्। तत्र **ज्ञातुरेवे**त्यादिभाष्यस्यायमर्थः—ज्ञातृशब्दो भावप्रधानः पञ्चम्यन्तः। एवकारश्च यत् ज्ञातृत्वं त्वया ज्ञानत्वविरुद्धतयोपन्यस्तं तदेव ज्ञानत्वसाधकमिति स्फोरणार्थः। ज्ञानत्वाभावव्यापकाभावप्रतियोगितया ज्ञातृत्वस्य न तद्विरुद्धत्वमिति। अस्मिन् पक्षे **ज्ञातृत्वमेव हि सर्वाः श्रुतयो वदन्तीति** भाष्यं ज्ञातृत्वस्य श्रौतत्वप्रतिपादनद्वारा तद्दृढीकरणार्थम्। अस्यां च व्याख्यायां भावप्रधानतया निर्देशाद्याश्रयणं क्लिष्टमित्यस्वरसो द्रष्टव्यः। तृतीयव्याख्यायां तु **ज्ञातुरेवे**त्यादिभाष्यस्य ज्ञातुरेव सतो ज्ञानस्वरूपत्वाविरोधादित्यर्थः। इदं च भाष्यं न विकल्पकोट्योरन्यतरनिरासकम्; अपि त्वविरोधप्रतिज्ञामात्रपरम्। किं ज्ञातुर्ज्ञानानाश्रयत्वं सजातीययोर्धर्मधर्मिभावाभावादुच्यते, उत ज्ञानत्वात् ज्ञानानाश्रयत्वमिति विकल्प्य प्रथमं प्रतिवक्ति—**ज्ञानस्वरूपस्यैवेति।** द्वितीयं प्रतिवक्ति—**ज्ञातृत्वमेव हीति;** इति विवेको द्रष्टव्यः। **पूर्ववदभिप्राय इति;** किं व्याप्त्या उच्यते? उत श्रुत्या? इत्यादीत्यर्थः। **ज्ञातृत्वं यथा फलितं भवतीति;** "तमीश्वराणाम्" इत्यादिश्रुतावित्यर्थः। फलितत्वप्रकारश्चोत्तरत्र स्पष्टयिष्यते। **ज्ञानस्य सर्वविषयकत्वमिति;** "यः सर्वज्ञः सर्ववित्" इत्यत्र ज्ञानस्य सर्वविषयत्वं "तदैक्षत" इति समष्ट्युपयोगित्वम् "सेयं देवतैक्षत" इति व्यष्ट्युपयोगित्वं 'सृजै' इत्युत्तमपुरुषेणात्मसंबन्धित्वं च दर्शितमित्यर्थः। **कामप्रदत्वं चेति;** कामितार्थज्ञानाभावे तत्प्रदत्वासंभवादिति भावः। देवतात्वं कर्माराध्यत्वम्। आराधना महनीयप्रीतिहेतुभूता क्रिया। ततश्च प्रीतिरूपज्ञानवत्त्वं सिध्यति। **पतित्वं शेषित्वमिति;** शेषित्वेतनत्वमित्यर्थः, प्रयाजादिशेषिदर्शपूर्णमासादौ पतित्वव्यवहाराभावात्। अतो ज्ञातृत्वसिद्धिरिति भावः।

**द्वितीयविशेषपर्यवसायित्वं सूचितमिति ;** ततश्च "न तस्य कार्यं करणं च" इत्याद्यंशस्यापि प्रकृतोपयोगित्वमस्तीति भावः । **विशेषविधानं विशेषनिषेधश्चेति ;** "अपहतपाप्मा" इत्यादिना विशेषनिषेधः । "सत्यकामः" इत्यादिना विशेषविधानमित्यर्थः । **वैयर्थ्यपरिहाराय संकोचश्चेत् गोबलीवर्दन्याय इति ;** अत्रोपात्तविशेषव्यतिरिक्तविषय इत्यनुषज्यते । **उपात्तविशेषविषये तस्य संकोच इति ;** न च— अयं छागपशुन्याय एव ; उत्सर्गापवादन्याय एव हि सामान्यविशेषन्यायः ; एवमेव हि व्यवहारदर्शनादिति वाच्यम्, सामान्यशब्दस्य विशेषातिरिक्तविषयत्वमादायोत्सर्गापवादन्याये सामान्यविशेषन्यायशब्दप्रवृत्तिवत् सामान्यवाचिशब्दस्य विशेषपर्यवसानमादाय छागपशुन्यायेऽपि सामान्यविशेषन्यायशब्दव्यवहारे दोषाभावात् । अत्र गोबलीवर्दन्यायकथनं शिष्यानुग्रहार्थं प्रसङ्गात् कृतमिति द्रष्टव्यम् । ननु गुणसामान्यविधानं श्रुतिषु न दृश्यत इति कथमुच्यते, "यः कालकालो गुणी सर्वविद्यः" इत्यादौ तथा दर्शनादित्याशङ्क्याह— **दोषसमभिव्याहृतेति ;** दोषाभावसमभिव्याहृतेत्यर्थः । अत्र हि कालकाल्यत्वलक्षणदोषाभावरूपाकालकाल्यत्वसमभिव्याहृतस्य गुणशब्दस्य गुणविशेषपरत्वेन गुणसामान्यविधानासिद्धेरभ्युपगमवाद एव शरणमिति भावः । **स्मृतिवचनाभिप्रायेण सगुणवाक्यानामित्युक्तमिति ;** अत्र च वाशब्दोऽध्याहर्तव्यः, वचनाभिप्रायेण वा सगुणवाक्यानामित्युक्तमित्यर्थः । कथमत्यन्तानुपलभ्यमानस्य गुणसामान्यविधानस्याभ्युपगम इत्याशङ्क्याह— **वर्षायुतैरित्यादि । स्मृतिवचनाभिप्रायेणेति ;** एताभिः स्मृतिभिरेतत्तुल्यगुणसामान्यविधायकश्रुत्यनुमानेन **सगुणवाक्याना**मित्युक्तमित्यर्थः । **दोषप्रतिपक्षवचन इति ;** "गुणदोषौ" इत्यत्रेव दोषप्रतिद्वन्द्विगुणसामान्यपर उपादेयसामान्यपर इत्यर्थः । **प्रकरणवशाच्छागपशुन्यायेनेति ;** ततश्च स्मृतिगतानामपि सामान्यवचनानां विशेषपर्यवसानस्यापेक्षितत्वादेतत्संग्रहार्थं भाष्ये **सगुणवाक्याना**मित्युक्तिरुपपद्यत इति भावः । **अत्रायमभिप्राय इति ;** भाष्ये **सगुणनिर्गुणवाक्ययोर्विरोधाभावादिति** वाक्यं समाप्तम् ; **अन्यतरस्य मिथ्याविषयताश्रयणमपि न युक्तमिति** वाक्ये 'विरोधाभ्युपगमे' इति शेषः पूरणीयः । अपिशब्दश्च भिन्नक्रमः । अतो विरोधाभ्युपगमेऽप्यन्यतरस्य मिथ्याविषयताश्रयणं न युक्तमित्यर्थः सिध्यतीति भावः । अतश्च **पूर्वं विरोधो नास्तीति परिहृत**मित्याद्युत्तरग्रन्थोऽपि संगतः । इतरथा एकवाक्यत्वे **पूर्वमित्युक्ते**र-

संभवात् । यद्वा **अत्रायमभिप्राय** इत्यपिशब्दोऽध्याहर्तव्यः; 'पूर्वम्, इदानीम्' इति पदद्वयमप्यविवक्षितम् । वस्तुस्थितिमनुरुध्य विरोधो नास्तीत्युक्तम्; विरोधसत्त्वेऽपि नास्माकं क्षतिरित्यर्थः । **उभयोरप्यपच्छेदनियमो नास्तीति**; अन्यतरमात्रापच्छेदस्यापि संभवादिति भावः । **प्रयोगावधिकविरोध इति**; अपच्छेदद्वयनिमित्तकनैमित्तिकप्रयोगद्वयस्य युगपदनुपसंहरणीयतया शास्त्रयोर्विरोधः, अतश्च स कादाचित्क इति भावः । **अनियतविरोधपौर्वापर्यविषय इति**; उक्तं हि—

"पौर्वापर्यं विरोधश्च पूर्वाप्रामाण्यमेव च ।
नियमान्नास्ति तत्रासावपच्छेदनयो भवेत् ॥"

इति । ननु प्रत्यक्षविरुद्धश्रुत्यनुमानं न प्रवर्तत इति विरोधाधिकरणन्यायः । स नात्र प्रवर्तते । यदि प्रत्यक्षानुमानवत् शीघ्रमन्थरगामित्वसामान्यात् सगुणनिर्गुणवाक्ययोस्तद्विषयत्वं, तर्हि निर्गुणवाक्यस्य स्मृतिवदप्रामाण्यमेव स्यात्; यदि चाप्रामाण्यमिष्टं तर्हि अपच्छेदन्यायो वा किमिति न प्रवर्तते? अपच्छेदन्यायस्य नियतपौर्वापर्यविषयप्रवृत्तौ सर्वात्मनाऽप्रामाण्यप्रसङ्गभयाद्धि अपच्छेदन्यायस्याप्रवृत्तिरुच्यते; अतः श्रुतिविषये न विरोधाधिकरणन्याय इत्यस्वरसादाह—**यद्वा मा भूदिति । उपक्रमाधिकरणन्याय एवेति**; "प्रजापतिर्वरुणायाश्वमनयत् । स स्वां देवतामार्च्छत् । स पर्यदीर्यत । स एतं वारुणं चतुष्कपालमपश्यत् । तन्निरवपत्" इत्युपक्रम्य, उपसंहारे श्रूयते—"यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति । तत्र उपक्रमेऽर्थवादेऽश्वदातुः प्रजापतेर्वारुणेष्टिः प्रतीयते; उपसंहारे च प्रतिग्रहीतुः । द्वयोर्विरोधे सति

"गुणत्वादनुवादत्वादर्थवादस्य लक्षणा ।
विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति ॥"

इति पूर्वपक्षे प्राप्ते, गुणभूतस्याप्यर्थवादस्यासंजातविरोधित्वेन प्रबलत्वाद्विध्युद्देशस्य प्रधानत्वेऽप्यलब्धात्मकत्वात् प्रधानभूतो विध्युद्देशः स्वयमलब्धात्मानमर्थवादं प्रक्रमस्थं बाधितुमसमर्थः स्वयमेव तदानुगुण्यं भजत इति प्रतिगृह्णीयादित्यस्य णिजर्थमन्तर्भाव्य प्रतिग्राहयेदित्येवं दातुरेवेष्टिरिति सिद्धान्तितम् । ततश्च सगुणवाक्यस्य भेदग्राहिप्रत्यक्षस्य वा प्राक् प्रवृत्तत्वेनोपक्रमाधिकरणन्याय एव प्रवर्तत इत्युपक्रमनयः । **सत्तया ज्ञायमानतया वेति**; ननु—'रजतम्' इति ज्ञानस्याप्रामाण्यशङ्कास्कन्दितत्वात्तदनास्कन्दितज्ञानस्यैव विपरीतज्ञान-

प्रतिबन्धकत्वात् 'नेदं रजतम्' इति ज्ञानोत्पत्तौ न विरोधः। न चाप्रामाण्यशङ्काया अपि विषयसंशयपर्यवसन्नतया तस्याप्यनुत्पत्तिः शङ्कनीया, अप्रामाण्यशङ्कासामग्र्याः फलबलादुत्तेजकत्वकल्पनादित्येतावतैव परिहारसंभवात् व्यर्थोऽयं प्रपञ्च इति चेत्, शिष्यशिक्षार्थतया प्रपञ्चनोपपत्तेः। न च सगुणत्वज्ञाने तद्विरुद्धनिर्गुणत्वज्ञानस्योपक्रमाधिकरणन्यायेनानुत्पादे षोडशिग्रहणप्रतीतौ तद्विरुद्धाग्रहणप्रतीतेरनुदयप्रसङ्गः; तथा अपच्छेदस्थलेऽपि पूर्वविरुद्धप्रतीत्यनुत्पादप्रसङ्ग इति वाच्यम्, उपक्रमाधिकरणन्यायस्यैकवाक्यतास्थल एव प्रवृत्तेः; ग्रहणाग्रहणादिस्थले तु तदभावात्। न च सगुणनिर्गुणवाक्ययोरप्येकवाक्यता नास्तीति वाच्यम्,

> "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
> कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥"

इत्यादावेकवाक्यत्वप्रतीतेः तत्तुल्यत्वाच्च निर्गुणवाक्यान्तरस्यापि न तद्विरुद्धार्थप्रतीतिजनकत्वमिति भावः। **इदं रजतमिति परामर्शसापेक्षत्वादिति;** 'इदं रजतम्' इति ज्ञानस्य 'नेदं रजतम्' इति ज्ञानोपजीव्यत्वादुपजीव्यविरोधेन कथं तद्विरुद्धोत्पत्तिरिति शङ्कार्थः। **शुक्तित्वविषया ह्युत्तरप्रमितिरिति;** इदमुपलक्षणम्—रजतत्वाभावविषयत्वेऽपि 'इदं रजतम्' इति ज्ञानस्य प्रतियोगिज्ञानत्वेन प्रतियोगिविषयत्वमात्रांश उपजीव्यत्वेऽपि पुरोवर्तिनि रजतविषयत्वांशेऽनुपजीव्यत्वेन तदभावावगाहने दोषाभावात्। उदीयमानमिति पाठे "इण् गतौ" इति धातो रूपमिति द्रष्टव्यम्। **आनन्दं ब्रह्मण इत्यादितात्पर्यलिङ्गप्राचुर्यादिति;** ब्रह्मापेक्षयापि तद्गुणभूतानन्दवेदनस्यैव फलवत्त्वावेदनेन श्रुतेर्ब्रह्मानन्दे तात्पर्यावगतेरिति भावः।

### श्रुतप्रदीपिका

शोधकान्तरैकार्थ्यं व्युदस्यति—**न चेति**। विषयविभागादविरोधमाह—**प्राकृतेति**। ज्ञानस्वरूपतोक्तिरूपमार्थं गुणनिषेधं परिहर्तुमाह—**ज्ञानेति**। ततः किमित्यत्राह—**न तावतेति**। किं ज्ञानत्वान्नियतधर्मधर्मिभावायोगः, उतैकजातिवस्तुत्वादिति विकल्पे प्रथमं व्युदस्यति—**ज्ञातुरिति**। नियतधर्मधर्मिभावायोगो व्याप्त्या चेत् धर्मता स्यात्। श्रुतिबलात् स्वातन्त्र्यं चेत्, तत एव धर्मधर्मिता च स्वीकार्या। ज्ञानानाश्रयत्वव्याप्तिश्च धर्मधिय इति न विरोध इति भावः। द्वितीयं व्युदस्यति—**ज्ञानस्वरूपस्येति**। उक्तार्थस्थेम्ने ज्ञातृत्वे

मानमाह—**ज्ञातृत्वमिति** । येन ज्ञातृत्वं फलितं तादृगर्थपराः कण्ठोक्तिपराश्च सर्वशब्दोक्ताः । ईश्वरत्वपरत्वाभ्यां फलितं तत् । स्वाभाविकत्वहेयाभावाभ्यामाविद्यकत्वव्युदासः । **कल्याणगुणानिति** उत्सर्गापवादनयोऽभिप्रेतः । स उपात्तविशेषादन्यत्र विरोधपरिहाराय सामान्यशब्दसंकोचः । **समस्तहेयरहिततां चेति** सामान्यविशेषनयोऽभिप्रेतः । स उपात्तविशेषे सामान्यशब्दसंकोचः । न्यायद्वयफलमेकस्मिन् वाक्ये सार्थोपन्यासं दर्शयति—**निर्गुणेति** । एवमविरोधादपच्छेदनयाविषयत्वमाह—**इतीति** । **अन्यतरस्येति** ; अनियतविरोधपौर्वापर्य एव स्थलेऽपच्छेदनयः, अन्यथा वैधहिंसानिवृत्तिप्रसङ्गात् । तयोर्नियमे तु विरोधनयात् परानुत्पत्तिरिति भावः ।

### नयप्रकाशिका

न च "निर्गुणम्" "निरञ्जनम्" "यत्तदद्रेश्यम्" इत्यादिविशेषनिषेधकवाक्यैर्निर्विशेषवस्तुसिद्धिरिति वाच्यम्, तन्निषेधानां हेयगुणविषयत्वात् । तद्वाक्य एवानन्तरं "नित्यं विभुं सर्वगतम्" इत्यादिनानेकगुणविधानात् । "नेह नानास्ति" इत्यादिरप्यब्रह्मात्मकनानावस्तुनिषेधपरः, अन्यथा प्रत्यक्षाद्यनवसेयब्रह्मणः सर्वज्ञत्वादिगुणं विधाय निषेधानुपपत्तेः ।

### न्यायसुदर्शनम्

**निर्गुणवाक्यानामिति** ; कल्याणगुणविधौ गुणमात्रनिषेधे च सति सामान्यविशेषन्यायेन विहितविशेषगुणव्यतिरिक्तविषयो गुणनिषेधो व्यवस्थाप्यः । यथा यदाहवनीयादिषु "यज्जुहोति तदाहवनीये" इत्यादिभिः सामान्यविहिताहवनीयादिः "पदे जुहोति हिरण्यैर्जुहोति" इत्यादिभिर्विशेषविहितपदादिव्यतिरिक्तविषयोऽवतिष्ठते । यथा वा हिंसादिषु "न हिंस्यात्सर्वा भूतानि" इति विहितसामान्यहिंसानिषेधो विहितक्रत्वर्थहिंसाव्यतिरिक्तविषयः । अथवा सामान्यगुणनिषेधे च विशेषनिषेधः सामान्यनिषेधस्योपसंहारको भवेत् । यथा अनारभ्याधीतसामिधेनीसाप्तदश्यविधिः "अन्वारभ्याधीतानां प्रकृतिगामित्वम्" इति न्यायेन दर्शपूर्णमासौ प्रविविक्षुस्तयोश्च प्रकरणाधीतपाञ्चदश्यावरुद्धत्वेन तत्र निवेशमलभमानः पुनः सर्वा विकृतीर्विशेषेण प्राप्नोति । तत्रापि वैमृधमित्यत्र विन्दादिषु कासुचित् विकृतिषु प्रकरणाधीतमेव साप्तदश्यमस्ति । तत्र अनारभ्याधीतवाक्यैरेव सर्वत्र विधौ प्रकरणाधीतवाक्यानामानर्थक्यप्रसङ्गात् तैरेव तत्र विधौ तत्रानर्थक्यप्रसङ्गात्

अन्यत्र विकृतावप्यविकृतिष्विव तास्वपि तेनैव वाक्येन विधिसम्भवात्तेषामेवानर्थक्यप्रसङ्गात् उभयानर्थपरिजिहीर्षया प्रकरणेषु विधयः सामान्यविधेस्तासु विकृतिषूपसंहारार्था इत्युक्तम् "वाक्यशेषो वा" इति। एवमत्राप्यविशेषेण सर्वान् गुणान् निषेद्धुमुपक्रान्तं "निर्गुणं निरञ्जनम्" इत्यादिनिषेधविधिम् "अपहतपाप्मा" इत्यादिविशेषनिषेधस्तेषु तेषु विशेषेषूपसंहारयेत्, अन्यथा विशेषश्रवणस्य प्रयोजनाभावात्। एवं विषयव्यवस्थाम् "अपहतपाप्मा" इत्यादिश्रुतिरेव व्यनक्ति। एवं चापच्छेदन्यायस्याप्यनवकाशः, विशेषविधीनामेवोत्तरत्वात्; निषेधानामव्यवस्थितविषयत्वाच्च। तत्र च "गुणाः सत्त्वं रजस्तमः" इति नैघण्टुकपौराणिकप्रसिद्ध्या गुणनिषेधस्त्रैगुण्यविषयः। निर्विशेषमित्यत्र विशेषा इत्येव केचन प्रसिद्धाः "महदाद्या विशेषान्ताः" इत्यादिषु। ते च सर्गादयः। तद्विषयो निषेधः। तस्मात् सर्वथा विहितकल्याणगुणानां निषेधासम्भव इत्यभिप्रायः।

### श्रीभाष्यम्

**"भीषास्माद्वातः पवते" इत्यादिना ब्रह्मगुणानारभ्य "ते ये शतम्" इत्यनुक्रमेण क्षेत्रज्ञानन्दातिशयमुक्त्वा "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान्" इति ब्रह्मणः कल्याणगुणानत्यादरेण वदतीयं श्रुतिः।**

### श्रुतप्रकाशिका

"सत्यं ज्ञानम्" इति ज्ञानपदेन सिध्यन्नार्थगुणनिषेधः पूर्वं परिहृतः। अथैतदनुवाकोपक्रमे उपसंहारे च "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति वाङ्मनसनिवृत्त्यभिधानान्निर्गुणत्वं फलितम्; अतस्तदैकार्थ्याच्च सत्यज्ञानादिवाक्यस्य निर्विशेषपरत्वमिति शङ्कायामार्थगुणनिषेधपरतया परोक्तस्यास्य वाक्यस्योक्तार्थानुगुण्यमुपपादयति— **भीषास्मादित्यादिना**। भीषास्मादित्यनेनाज्ञापयितृत्वमुच्यते। **क्षेत्रज्ञानन्दातिशयमुक्त्वेति**; अत्र निर्विशेषत्वं प्रतिपिपादयिषितं चेत्, गुणानां क्रमेण न्यूनतां प्रतिपाद्य सर्वाभावे पर्यवसितं* युक्तम्। अत्र तु क्रमेण गुणानामाधिक्यमुक्त्वा वाङ्मनसनिवृत्त्यभिधानमानन्त्यादेवेत्यभिप्रायः। यथा—

* पर्यवसितुम् इति पाठान्तरम्।

"संख्यातुं नैव शक्यन्ते गुणा दोषाश्च शार्ङ्गिणः ।
आनन्त्यात्प्रथमो राशिरभावादेव पश्चिमः ॥"

इति । प्रथमं मनुष्यानन्दमारभ्य क्रमेणातिशयो दर्शितः । साधु युवाध्यायकः; साधु; यथाविधि, सम्यक्संप्रदायसिद्धतया स्वरवर्णादिभ्रंशरहितं वा । युवशब्देन प्रत्यग्रत्वं विवक्षितम् । अविस्मरणान्नित्यनवं यथा भवति तथाध्ययनवानित्यर्थः । यद्वा स्वसमवयस्कानां सर्वेषामध्यापकः; तदधिकज्ञान इत्यर्थः । आशिष्ठः; आशुतरक्रियः । यद्वा अशनक्षमः, अरोग इत्यर्थः । यद्वा आशीर्वादविषयभूतः, सर्वानुरञ्जक इत्यर्थः । "सर्वान् देवान्नमस्यन्ति" इतिवत् । बलिष्ठः मनोबलवान् । द्रढिष्ठ इति शरीरबलस्योक्तत्वात्, यद्वा द्रढिष्ठः; दृढतरः । न त्वव्यवस्थितस्वभाव इत्यर्थः । बलिष्ठः; शारीरमानससर्वविधबलवान् । वित्तस्य पूर्णा; वित्तेन पूर्णा, "पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन" इति षष्ठ्यनुज्ञानात् । स एको मानुष आनन्दः; एवं गुणसमुदायं विभूतिपौष्कल्यं चोक्त्वा, "स एको मानुष आनन्दः" इति श्रुत्या स्वरसतस्तस्यैवानन्दद्वयमुक्तम् । अनुकूलत्वं ह्यानन्दत्वमुक्तम् । निवर्त्यानिष्टत्वेष्टसाधनत्वानपेक्षमिष्टत्वमनुकूलत्वम् । उक्तलक्षणयोगात् गुणविभूत्योरानन्दत्वमुपपद्यते । तद्विषयज्ञानस्याप्यनुकूलत्वं विषयानुकूलत्वकृतमित्यन्वयव्यतिरेकसिद्धम् । एवं च सति श्रुतिस्वारस्यं च सिध्यति । गुणविभूतिप्रकर्षमुक्त्वा स आनन्द इति ह्युक्तम् । न तु तद्विषयज्ञानमिति । युवत्वाद्यनेकगुणान् विभूतिमप्युक्त्वा तत्समुदायमानन्दशब्देन निर्दिश्य तस्यानन्दस्य निरतिशयत्वप्रतिपादनात् सर्वगुणानां विभूतेश्चानवधिकातिशयत्वं प्रतिपादितं भवति । अनुकूलज्ञानत्वमेवानन्दत्वमिति गुणविभूतिविषयज्ञानस्यानन्दत्वेऽपि तस्यानन्दस्य निरवधिकातिशयत्वोक्त्या गुणविभूत्योरप्यनवधिकातिशयत्वमर्थादुक्तं भवति । तदानन्त्यस्य गुणविभूत्यानन्त्यनिबन्धनत्वादिति । **आरभ्येति;** उपक्रमानुगुणमुपसंहारवाक्यं नेयमिति भावः । "श्रोत्रियस्य चाकामहतस्य" इति वाक्यैर्मुक्तानन्दस्य भगवदानन्दसाम्यमुक्तं भवति, बद्धदशायां निरवधिकातिशयानन्दासंभवात् । श्रोत्रियः ब्रह्मनिष्ठः, अकामहतः निवृत्ताविद्यत्वात् समस्तसांसारिकभोगानुपहतः । "स एकः प्रजापतेरानन्दः" इत्यनेन क्षेत्रज्ञानन्दातिशय उक्तः । "स एको ब्रह्मण आनन्दः" इति भगवदानन्द उच्यते । चतुर्मुखानन्दपरत्वे ब्रह्मशब्दस्वारस्यहानिः "परं जैमिनिर्मुख्यत्वात्, स्याच्चैकस्य ब्रह्मशब्दवत्" इति ब्रह्मशब्दस्य तत्रैव

मुख्यवृत्तत्वस्य सूत्रितत्वात्; भाष्ये प्रथमसूत्रस्थब्रह्मशब्दव्याख्यानावसरे प्रपञ्चितत्वाच्च । "ब्रह्मविदाप्नोति" "ब्रह्मणा विपश्चिता" "आनन्दंब्रह्मणः" "असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद" इतिप्रकरणस्थब्रह्मशब्दानां परब्रह्मपरत्वात् प्रकरणविरोधश्च । "आनन्दं ब्रह्मणो विद्वान्" इति पूर्वत्रोत्तरत्र चानन्दप्रतियोगिषष्ठ्यन्तब्रह्मशब्दस्वारस्य-विरोधश्च । "सैषानन्दस्य" इति प्रक्रान्तब्रह्मानन्दस्य चतुर्मुखानन्देनोपसंहारानुपपत्तिश्च । "तदप्येष श्लोको भवति" इति ब्रह्मानन्दं प्रकृत्य वक्ष्यमाणस्य श्लोकस्योक्तविषयत्व-विरोधश्च । "स एकः प्रजापतेः" इति निरुपपदैकवचनान्तप्रजापतिशब्दस्वारस्यभङ्गश्च । न च तज्जात्येकवचनम्, बहुत्वैकत्वविवक्षायां बहुवचनैकवचननिर्देशप्रकरणत्वात् । "देवानां, देवगन्धर्वाणां, मनुष्यगन्धर्वाणाम्, इन्द्रस्य, बृहस्पतेः, प्रजापतेः" इति हि निर्दिश्यते । अतः प्रजापतिशब्दश्चतुर्मुखपरः । "स एको ब्रह्मणः" इत्यत्र ब्रह्मशब्दो भगवत्परः । "ते ये शतम्" "स एकः" इति भगवदानन्दस्य कथं परिच्छिन्नत्वमिति चेत्—न; परिच्छिन्नत्वमेकक्षणार्धे बहूनि योजनानि गच्छतो रवेः "क्षिप्तेषुरिव सर्पति" इतीषुसाम्य-कथनं यथा गतिमान्द्यनिवृत्तिपरं, न तु परिच्छिन्नत्वपरं, तद्वत् "ते ये शतम्" "स एकः" इति निर्देशोऽपि चतुर्मुखानन्दाधिक्याभिप्रायः, न तु परिच्छेदपर इति । यद्वा "ते ये शतम्" "स एकः" इत्यस्य निर्देशस्य संख्याविशेषपरत्वेऽप्यानन्दस्यापरिच्छिन्नत्वं फलितम् ।

"अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशानां यथा तत्र कोटिकोटिशतानि च ॥
रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते ।"

इत्यादिवचनैरण्डानामनन्तत्वेन तत्र तत्र चतुर्मुखानामप्यानन्त्यात् कालत्रयवर्तिसमस्तब्रह्माण्डगत-चतुर्मुखानन्दापेक्षया शतगुणत्वात् "मेरोरिवाणुर्यस्यैतद् ब्रह्माण्डमखिलं मुने" इत्युक्त-त्रिपाद्विभूतिमत्तया च भगवदानन्दस्यात्यन्तमानन्त्यसिद्धिरिति । **कल्याणगुणानन्त्यमिति;** न हि क्रमेण गुणापकर्ष उक्तः; किं तु गुणानां प्रकर्ष एवोक्तः । अतो गुणप्रकर्षस्य निरतिशयत्वाद्वाङ्मनसनिवृत्तिरिति भावः । **अत्यादरेणेति;** ब्रह्मस्वरूपादपि तद्गुणेष्वा-दरातिशय उक्तः । "आनन्दं ब्रह्मणो विद्वान्" इति हि श्रुतिः, न त्वानन्दान्वितं ब्रह्म विद्वानितीति भावः । **इयं श्रुतिरिति;** निर्गुणपरत्वेन त्वयोक्तैतत्प्रकरणस्था श्रुतिरप्यस्म-दुक्तार्थानुगुणैवेति भावः ।

भावप्रकाशिका

**पर्यवसितं युक्तमिति पाठः;** पर्यवसानं युक्तमित्यर्थः। पर्यवसितुं युक्तमिति क्वचित्पाठो दृश्यते। तत्र "असु क्षेपणे" इत्यस्मात् अवपूर्वात् "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" इति अवशब्दान्तलोपे तुमुन्प्रत्यये सति कथंचित् निर्वाहो द्रष्टव्यः; "षो अन्तकर्मणि" इत्यस्मात् तुमुन्प्रत्यये तस्य कित्वाभावात् "द्यतिस्यतिमास्थाम्" इतीत्वप्राप्तेरभावात्। अत एवानन्दमयाधिकरणे वक्ष्यत्याचार्यः "पर्यवस्यन्तः पर्यवसातुं प्रवृत्ताः" इति। **नित्यनवं यथा भवति तथेति;** युवा चासावध्यायकश्चेति समासः, अध्यायकस्य च युवत्वमध्ययनद्वारा पर्यवस्यतीति भावः। **आशुतरक्रिय इति;** आशुतरक्रियावति वर्तमानात् आशुशब्दादिष्ठन्प्रत्यये टिलोपे रूपम्। आशुमच्छब्दात् "विन्मतोर्लुक्" इति लुकि वा रूपं द्रष्टव्यम्। **अशनक्षम इति;** अशनम् आशः, ततो मत्वन्तादिष्ठन् प्रत्ययः। आशीर्वादविषये वर्तमानादाशीःशब्दान्मत्वन्ताद्वा इष्ठनि आशिष्ठ इति रूपम्। सर्वत्र "विन्मतोर्लुक्" इति इष्ठन्प्रत्यये मतोर्लुक्। **पूरणगुणसुहितार्थेति;** सुहितशब्दस्य तृप्त्यर्थत्वात् पूरणस्यापि तृप्तिरूपत्वादिति भावः। न तु पूरणगुणेत्यत्र पूरणशब्द इति मन्तव्यः, तस्य पूरणप्रत्ययपरत्वात्। **षष्ठ्यनुज्ञानादिति;** षष्ठीसमासनिषेधपरेणानेन सूत्रेण षष्ठ्यनुज्ञानादित्यर्थः। **निवर्त्यानिष्टत्वेति;** अनिष्टनिवर्तकत्वेत्यर्थः। **चतुर्मुखानन्दाधिक्याभिप्राय इति;** "ते ये शतम्" इत्यत्र शतशब्दोऽधिकसंख्यापरः। अतो न परिच्छिन्नत्वमिति भावः। प्राकरणिकवाक्यानां संख्याविशेषपरत्वात् "ते ये शतं प्रजापतेः" इत्यत्रापि संख्याविशेषपरत्वमेवोचितमित्यन्यथा निर्वाहमाह—**यद्वा ते ये शतं स एक इत्यस्येति;** कालत्रयवर्तिप्रजापत्यानन्दत्वे कथिते अपरिच्छिन्नत्वं सिध्यतीति भावः। **त्रिपाद्विभूतिमत्तया चेति;** ननु भगवदानन्दस्यापरिच्छिन्नत्वं निश्चित्य "ते ये शतम्" इति वाक्येन प्रतिपाद्यमानं परिच्छिन्नत्वं कथं संगतमिति वदन्तं प्रति त्रिपाद्विभूतिमत्तयानन्दानन्त्यकथनं कथमुपपद्यतामिति चेत्, अत्र केचित्—कथमपरिच्छिन्नत्वमिति चेदित्येव पाठः; तस्य चायमर्थः—"ते ये शतम्" इति वाक्येन कथमपरिच्छिन्नत्वं प्रतीयताम्? प्रत्युत परिच्छन्नत्वमेव प्रतीयते। अतोऽपरिच्छिन्नत्वं न सिध्येदित्येतावत्पर्यन्तमाक्षेपं वर्णयन्ति। अतस्तत्परिहर्ता चानेन श्रुतिवाक्येन परिच्छिन्नत्वासिद्धिरप्युपपादनीया। आनन्दस्यापरिच्छिन्नत्वक्रमोऽपि प्रदर्शनीय

इत्यभिप्रेत्यानेन वाक्येन परिच्छिन्नत्वासिद्धिमुपपाद्य प्रमाणान्तरेणापरिच्छिन्नत्वमप्युपपाद्यत इति वदन्ति । अपरे तु—'शतं प्रजापतेरानन्दाः' इति श्रुतिस्वारस्यविरोधेन कालत्रयवर्ति-प्राजापत्यानन्दमात्रपरतया वा शतशब्दस्याधिकसंख्यामात्रपरतया वा किमिति व्याख्यायते? यथाश्रुतार्थ एव ग्राह्य इति तटस्थशङ्कामपाकरोति—मेरोरिवाणुरितीति वदन्ति ।

**श्रुतप्रदीपिका**

अध्यात्मप्रकरणेषु गुणशब्दप्रसिद्धिश्च सत्त्वादिगुणत्रये "गुणा गुणेषु वर्तन्ते" इत्यादिषु । अथ सत्यादिवाक्यवत् प्रकरणोपसंहारगतवाङ्मनसनिवृत्त्युक्तिरूपमार्थगुणनिषेधं परिहरति—**भीषास्मादित्यादिना** । अत्रानन्दाधिक्यात् गुणविभूत्यतिशयसिद्धिः । 'युवा स्यात्, तस्येयं पृथिवी' इत्यादिश्रवणात्; क्रमात् गुणप्रकर्षत्वावच्छिन्ना वाङ्मनस-निवृत्त्युक्तिर्गुणानन्त्यात् । अन्यथा अपकर्षो हि वक्तव्य इति भावः । **अत्यादरेण**; "आनन्दं ब्रह्मणो विद्वान्" इतिह्युक्तिरिति भावः । **इयम्**; एतत्प्रकरणस्था निर्गुणार्थत्वेन परोक्तेति भावः ।

**श्रीभाष्यम्**

"सोऽश्नुते सर्वान् कामान् सह; ब्रह्मणा विपश्चितेति" इति ब्रह्मवेदनफलमवगमयद्वाक्यं परस्य विपश्चितो ब्रह्मणो गुणानन्त्यं ब्रवीति । विपश्चिता ब्रह्मणा सह सर्वान् कामान् समश्नुते । काम्यन्त इति कामाः कल्याणगुणाः । ब्रह्मणा सह तद्गुणान् सर्वानश्नुत इत्यर्थः । दहरविद्यायाम्—"तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इतिवत् गुणप्राधान्यं वक्तुं सहशब्दः । फलोपासनयोः प्रकारैक्यं "यथा-क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति श्रुत्यैव सिद्धम् ।

**श्रुतप्रकाशिका**

एवमार्थगुणनिषेधनिरासद्वारा प्रकरणगतवाक्यान्तरेण गुणानन्त्यपरेणैकार्थ्यात् तस्य ज्ञानादिवाक्यस्य सविशेषविषयत्वमुक्तम् । अथ स्ववाक्यैकदेशेनापि सविशेषपरत्वमुपपादयति—**सोऽश्नुत इत्यादिना** । **फलमवगमयद्वाक्यमिति**; "ब्रह्मविदाप्नोति परम्" इति

ब्राह्मणे ब्रह्म, तद्वेदनं, प्राप्तिः, प्राप्यं, चेति चतुष्टयमुक्तम्। एतद्विवरणं "सत्यं ज्ञानम्" इत्यादिमन्त्रेण क्रियत इति श्रुतिरेवाह— **तदेषाभ्युक्तेति।** तदेव ब्रह्माभिमुखीकृत्य ऋगेषाध्येतृभिरुक्तेत्यर्थः, मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनात्। उपक्रमाधिकरणविषय-वाक्ययोरिवापातविरोधप्रतीत्यभावान्मन्त्रब्राह्मणयोर्नित्यनिर्दोषत्वाविशेषाच्च मन्त्रापेक्षया ब्राह्मण-प्राबल्यवादोऽनुपपन्नः। स्फुटप्रतिपत्तिहेतुत्वतदभावावेव प्राबल्यदौर्बल्यशब्दविवक्षितौ चेत्, न विरोधः। "सत्यं ज्ञानमनन्तं ब्रह्म" इति ब्रह्मशब्दो विवृतः। "यो वेद निहितं गुहायाम्" इति विच्छब्दः। "परमे व्योमन्, सोऽश्नुते" इति प्राप्तिः। "सर्वान् कामान्" इत्यादिना प्राप्यम्। तत्र परशब्दार्थविवरणमेतदिति दर्शयितुं **परस्य विपश्चितो ब्रह्मण** इत्युक्तम्। विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तम्। वाक्यस्यार्थं वक्तुं पदानामन्वयं दर्शयति—**विपश्चितेति।** किमत्र गुणवाचि पदमिति शङ्कायां "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः" इति त्याज्यतयोक्तकामव्यावृत्त्यर्थमवयवशक्त्या व्याचष्टे— **काम्यन्त इति।** ब्रह्मवेदनफलतया मुक्तानुभाव्यत्वादिह त्याज्यकामपरत्वानुपपत्तेः, काम्यत्वस्य ब्रह्मस्वरूपेऽपि संभवे सत्यपि व्यतिरेकनिर्देशात् बहुवचनान्तत्वात् अवयवशक्तेः तदुक्तभोग्यत्वस्य च गुणेषु संभवात्, "स वा एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" "य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" "त इमे सत्याः कामाः" इति श्रुत्यन्तरैकार्थ्याच्च कामशब्दवाच्याः कल्याणगुणा इत्यर्थः। कस्येमे गुणाः? सहभावश्च ब्रह्मणः 'पुत्रेण सहौदनं भुङ्क्ते' इत्यत्र पुत्रस्येव किं भोक्तृतया? उत 'क्षीरेण सहौदनं भुङ्क्ते' इत्यत्र क्षीरस्येव भोग्यतयेति शङ्कां च परिहरन् वाक्यार्थमाह—**ब्रह्मणेति।** अस्य वाक्यस्य प्राप्यवाचिपरशब्दविवरणरूपत्वात् "सर्वान् कामान् सह, ब्रह्मणा" इति भोग्यवाचिपदेनाव्यवहितप्रयोगस्वारस्याच्च सहशब्दो भोग्यसाहित्यपरः। संनिहितं ब्रह्मैव च गुणानामाश्रयः। अतोऽनन्तगुणविशिष्टं ब्रह्मानुभवतीत्यर्थः। "सहयुक्तेऽप्रधाने" इति शब्दानुशासनवशात् सहशब्देनाप्राधान्यं ब्रह्मण आशङ्क्य तत्परिहाराय सहशब्दप्रयोजनमाह—**दहरेति।** "यो वेद" इति विहिते वेदने गुणानां प्राधान्यसूचकः सहशब्दः। दहरविद्यायामुपासने हि गुणप्राधान्यमुक्तम्। तथात्राप्युपासने गुणप्राधान्यं वक्तुं सहशब्द इत्यर्थः। फलदशायां गुणप्राधान्यश्रवणादुपासने गुणप्राधान्यं कथं सिध्यतीत्यत्राह—**फलोपासनयोरिति;** फलोपासनयोरुभयोरपि गुणत्वं

गुणप्राधान्यं च तुल्यप्रकारमित्यर्थः। गुणप्राधान्यं वक्तुमित्यनेनापि सहशब्दस्य भोग्यसाहित्यपरत्वं सिद्धम्। अन्यथा भोक्तृप्राधान्यं हि सिध्येत्, न तु भोग्यगुणप्राधान्यमिति। श्रुत्यैवेत्येवकारेणोक्तन्यायस्य पुरुषबुद्ध्युत्प्रेक्षानिरपेक्षं श्रुत्या कण्ठोक्तत्वमभिप्रेतम्।

**भावप्रकाशिका**

ननु "ब्रह्मविदाप्नोति परम्" इति ब्राह्मणे ब्रह्मण एव प्राप्यत्वप्रतिपादनात् "एषोऽस्य परमानन्दः" इति ब्रह्मण एव विदुषामानन्दत्वश्रवणेन कामानां च तदभेदप्रतीतेः ब्राह्मणस्य मन्त्रविवरणरूपत्वेन प्रबलत्वात् ब्राह्मणानुसारेणैव "सह ब्रह्मणा" इति मन्त्रार्थो वर्णनीयः। यथा पैङ्गीरहस्ये ब्राह्मणानुसारेण "द्वा सुपर्णा" इति मन्त्रार्थवर्णनमित्याशङ्क्याह—**मन्त्राणां ब्राह्मणविवरणरूपत्वदर्शनादिति ;** मन्त्राणामपि ब्राह्मणविवरणरूपत्वदर्शनाद्विवरणरूपत्वरूपः प्राबल्यहेतुर्द्वयोरप्यविशिष्ट इति भावः। **स्फुटप्रतिपत्तिहेतुत्वेति ;** प्रायेण ब्राह्मणानां स्फुटप्रतिपत्तिहेतुत्वमस्ति ; मन्त्रास्तु गहना भवन्तीत्येतावता ब्राह्मणप्राबल्योक्तिश्चेदिष्टमेवेत्यर्थः। नन्वानन्दमयाधिकरणे मन्त्राणां प्राबल्यं केचिद्वदन्तीति मन्त्रप्राबल्यस्यैव परोक्तत्वोपन्यासात्तद्विरोध इति चेत्—न ; तस्यापि मतान्तरत्वेनाविरोधादिति द्रष्टव्यम्। विपश्चित्त्वश्रवणात् तस्य च भोक्तृत्वानुगुणत्वात् ब्रह्मणो भोक्तृसाहित्यशङ्कां व्युदस्यति—**विपश्चित्त्वमपि भोग्यगुणत्वेनोक्तमिति।** न च तस्यापि कामशब्दनिर्दिष्टत्वात् पृथङ् निर्देशवैयर्थ्यमिति शङ्कनीयम् ; गोबलीवर्दन्यायेन प्राधान्यविवक्षया पृथङ् निर्देशोपपत्तेरिति भावः। **व्यतिरेकनिर्देशादिति ;** "कामान् सह ब्रह्मणा" इति भिन्नतया निर्देशादित्यर्थः। **अव्यवहितप्रयोगस्वारस्याच्चेति ;** 'ब्रह्मणा सह सोऽश्नुते सर्वान् कामान्' इति यदि स्यात् तदा स्यादपि भोक्तुस्तच्छब्दनिर्दिष्टस्य साहित्याश्रयत्वशङ्केति भावः। **तत्परिहारायेति ;** इष्टापत्त्या तत्परिहारायेत्यर्थः। **भाष्ये-तस्मिन् यदन्तस्तदन्वेष्टव्यमितिवदिति ;** इदं च "तस्मिन्" इत्यस्य दहराकाशपरत्वमित्यभ्युपेत्य गुणस्यैवान्वेष्टव्यत्वमुच्यत इत्यभिप्रेत्योक्तम्। वस्तुतस्तु "तस्मिन् यदन्तः" इत्यत्र तच्छब्दस्य पुण्डरीकाकाररूपवस्तुद्वयपरामर्शित्वस्य वक्ष्यमाणत्वात् तेन ब्रह्मतद्गुणयोर्द्वयोरुपास्यत्वमिति समप्राधान्यमेव सिध्येत्, न गुणानां प्राधान्यमिति द्रष्टव्यम्। यद्वा सहशब्दस्याप्राधान्यद्योतकत्वे ब्रह्मणोऽप्राधान्यस्य वक्तुमयोग्यत्वात् दहरविद्यावाक्यानुरोधाच्च समत्व एव तात्पर्यमिति भावः। गुणप्राधान्यं वक्तुमित्यनयोक्त्या श्रुतिगतसहशब्दस्य

भोग्यसाहित्यमेव भाष्यकाराभिप्रेतमिति सिध्यतीत्यर्थः । **अन्यथा भोक्तृप्राधान्यं हीति ;** भोक्तृसाहित्यपरत्वे भोक्तृब्रह्मापेक्षया भोक्तुर्जीवस्यैव प्राधान्यं सिध्येदिति भावः ।

**श्रुतप्रदीपिका**

अथ स्ववाक्यैकदेशानुगुण्यमाह—**सोऽश्नुत इति** । ब्राह्मणवाक्ये परशब्द-विवरणरूपत्वमभिप्रेत्य **परस्य विपश्चित** इत्युक्तम् । अर्थं वक्तुमन्वयमाह—**विपश्चितेति** । किमत्र गुणवाचि पदमित्यत्राह—**काम्यन्त इति** । अनेन "यदा सर्वे प्रमुच्यन्ते कामाः" इत्युक्तकामपरत्वव्युदासः । ब्रह्मवेदनफलत्वात् परशब्दविवरणत्वादवयवशक्त्यानु-गुण्याच्च "मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इतिवदस्यार्थः । वाक्यार्थमाह—**ब्रह्मणेति** । कस्य गुणा इत्यत्राह—**तद्गुणानिति** । तद्धि संनिहितमिति भावः । सहशब्दः 'क्षीरेण सह ओदनं भुङ्क्ष्व' इतिवत् भोग्यसाहित्ये, न तु भोक्तृ साहित्ये । सहशब्देनाप्राधान्यमाशङ्क्याह—**दहरेति** । "यो वेद" इति विहित उपासने गुणप्राधान्यं वक्तुमित्यर्थः । फलदशायां गुणप्राधान्योक्त्या कथमुपास्तौ तत्प्राधान्यमित्यत्राह— **फलेति** । एवकारो न्यायानपेक्षत्वद्योतकः ।

**श्रीभाष्यम्**

"यस्यामतं तस्य मतम्" "अविज्ञातं विजानताम्" इति ब्रह्मणो ज्ञानाविषयत्वमुक्तं चेत्, "ब्रह्मविदाप्नोति परम्" "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानान्मोक्षोपदेशो न स्यात् । "असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्; अस्ति ब्रह्मेति चेद्वेद, सन्तमेनं ततो विदुरिति" इति ब्रह्मविषयज्ञानासद्भावसद्भावाभ्यामात्मनाशमात्म-सत्तां च वदति । अतो ब्रह्मविषयवेदनमेवापवर्गोपायं सर्वाः श्रुतयो विदधति । ज्ञानं चोपासनात्मकम्; उपास्यं च ब्रह्म सगुणमित्युक्तम् । "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इति ब्रह्मणोऽनन्तस्या-परिच्छिन्नगुणस्य वाङ्मनसयोरेतावदिति परिच्छेदायोग्यत्वश्रवणेन 'ब्रह्मै-तावत्' इति ब्रह्मपरिच्छेदज्ञानवतां ब्रह्माविज्ञातममतमित्युक्तम्, अप-

**रिच्छिन्नत्वाद्ब्रह्मणः। अन्यथा "यस्यामतं तस्य मतम्" "विज्ञातमविजानताम्" इति ब्रह्मणो मतत्वविज्ञातत्ववचनं तत्रैव विरुध्येत।**

**श्रुतप्रकाशिका**

अथ सगुणानामेव ज्ञेयत्वं दृष्टमिति ज्ञेयत्वनिषेधेन निर्गुणत्वं फलितमिति ज्ञेयत्वनिषेधपरत्वेन परोक्तं वाक्यमुपादत्ते—**यस्येति**। किं ज्ञानमात्राविषयत्वम्, उतोपासनात्मकज्ञानाविषयत्वम्, उत सगुणोपासनात्मकज्ञानाविषयत्वं विवक्षितमिति विकल्पत्रयमभिप्रेत्य प्रथमं ज्ञानमात्राविषयत्वं दूषयति—**ब्रह्मविदिति**। ब्रह्मणो वेद्यत्वे श्रुतेरादरातिशयं दर्शयति—**असन्नेवेति**। न ब्रह्मवेदनमपवर्गोपायः, अपितु प्रपञ्चमिथ्यात्वज्ञानमेव तदुपाय इति परैरुच्यते; "विद्ययामृतमश्नुते" "तदा विद्वान्नामरूपाद्विमुक्तः" "ततो ज्ञानं प्रवर्तते" "ज्ञानाग्निः सर्वकर्माणि" इत्यादिष्वनिर्दिष्टविषयविशेषेषु वाक्येष्वपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वप्रपञ्चमिथ्यात्वविषयतासाधारण्यात्। तदाशङ्क्याह—**अत इति**। **अतः**; केषुचिद्वाक्येष्वपवर्गोपायतया श्रूयमाणस्य ज्ञानस्य ब्रह्मविषयत्वदर्शनात्। **सर्वाः श्रुतयः**; अनिर्दिष्टविषयविशेषाः "विद्ययामृतमश्नुते" इत्यादिकाः श्रुतयोऽपि सर्वशाखाप्रत्ययन्यायेन ब्रह्मविषयमेव वेदनमपवर्गोपायतया विदधतीत्यर्थः। यद्वा, केषुचित् ब्रह्मविषयत्वे श्रुते ज्ञानमात्रोपायपराः श्रुतयश्च सामान्यविशेषन्यायात्तत्रैव पर्यवस्यन्तीत्यभिप्रायः। अथोपासनात्मकज्ञानाविषयत्वपक्षं दूषयति—**ज्ञानं चेति**। "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति श्रुतिरुपासनात्मकज्ञानाविषयत्वशङ्काबीजं वाक्यार्थज्ञानस्योपायत्वानुपपत्त्युपपादनात् परिहृतमित्यर्थः। "नेदं यदिदमुपासते" इत्यस्यायमर्थः—यदिदं प्रतीकमुपासते तन्न, तदेव परं ब्रह्म त्वमुपास्स्वेति। अथ सगुणोपासनाविषयत्वपक्षं प्रतिक्षिपति—**उपास्यं चेति**। निर्गुणपरत्वेन परोक्तायाः सद्विद्याया एव सगुणविषयत्वोपपादनादिति भावः। यद्वा **ज्ञानं चोपासनात्मकमिति** ज्ञानविशेषविषयत्वकण्ठोक्त्या ज्ञेयत्वमात्रनिषेधो दूरनिरस्त इति भावः। **उपास्यं चेति**; ज्ञेयत्वनिवृत्त्या सिषाधयिषिता गुणनिवृत्तिर्गुणविधानबाधिता। ततश्चाज्ञेयत्वं बाधित्वा ज्ञेयत्वमाक्षिपतीति भावः। तर्ह्यविज्ञातत्वामतत्वश्रुत्योः कोऽर्थ इत्यत्राह—**यतो वाच इति**। अनन्तशब्देन "सत्यं ज्ञानम्" इत्यादि वाक्यं स्मारितम्। **अनन्तस्येति** स्वरूपानन्त्यमुक्तम्। **अपरिच्छिन्नगुणस्येति** गुणानन्त्यम्। अस्मिन्नर्थे—

"न हि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि ।
वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः ॥"
"नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमुच्यते ।
तवानन्तगुणस्यापि षडेव प्रथमे गुणाः ।"
"वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वलोकैः ॥
महात्मनः शङ्खचक्रासिपाणेर्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ।"
"चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः ।
स ते गुणानामयुतैकदेशं वदेन्न वा देववर प्रसीद ॥"
"यथा रत्नानि जलधेरसंख्येयानि पुत्रक ।
तथा गुणा ह्यनन्तस्य असंख्येया महात्मनः ॥"
"इषुक्षयान्निवर्तन्ते नान्तरिक्षक्षितिक्षयात् ।
मतिक्षयान्निवर्तन्ते न गोविन्दगुणक्षयात् ॥"

इत्यादि द्रष्टव्यम् । परिच्छिन्नत्वज्ञाने कथं धर्मिणो ब्रह्मणोऽज्ञातत्वमित्यत्राह— **अपरिच्छिन्नत्वाद्ब्रह्मण इति ;** ब्रह्मशब्दवाच्यस्य स्वरूपतो गुणतश्चापरिच्छिन्नत्वादित्यर्थः । न केवलं श्रुत्यन्तराविरोधार्थमेवमर्थ उक्तः; इतरथा स्ववाक्यव्याहतिप्रसङ्गाच्चेत्याह— **अन्यथेति ; तत्रैव ;** स्ववाक्य एव ।

## भावप्रकाशिका

**सगुणानामेव ज्ञेयत्वं दृष्टमितीति ;** अत्रैवकारो भिन्नक्रमः । सगुणानां ज्ञेयत्वमेव दृष्टम्, अज्ञेयत्वं न दृष्टमित्यर्थः पर्यवस्यति । ततश्च ज्ञेयत्वस्य व्यापकत्वं सिध्यति । ततश्च तद्व्यतिरेकात् सगुणत्वव्यतिरेकापादनं संभवतीति द्रष्टव्यम् । भाष्ये—**ज्ञानासद्भाव-सद्भावाभ्यामिति ;** ननु "असन्नेव स भवति" इत्यसत्त्वप्रकारकज्ञानस्यैवात्मनाशहेतुत्व-मुच्यते, न तु तदज्ञानस्येति चेत् "असद्ब्रह्मेति वेद चेत्" इत्यस्य 'ब्रह्म वेद' इत्येतत् असच्चेदित्यन्वयः । ब्रह्म न जानाति चेदित्यर्थः । "अस्ति ब्रह्मेति चेत्" इत्यत्रापि 'ब्रह्म वेद' इत्येतदस्ति चेत् ब्रह्म जानाति चेदित्यर्थ इति भगवद्भाष्य-काराभिप्रायात् । यद्वा श्रुत्यनुसारेण भाष्यार्थो वर्णनीयः । **अतः केषुचिद्वाक्येषु** इत्यत्र 'अतः' इति व्याख्येयं पदम् ; **सर्वा श्रुतय इति च ।** ननु सर्वशाखा-

प्रत्ययन्याय: प्रधानस्वरूपानन्तर्गतानुक्तांशस्वीकारफल:; अत्र च न वाक्यान्तरविहितं मोक्षसाधनं ज्ञानमनूद्य ब्रह्मविषयत्वं क्वचिद्गुणतया विहितम् ; अपि तु ब्रह्मज्ञानमेव विहितम् ; अतो न तन्न्यायप्रवृत्तिरित्यस्वरसादाह—**यद्वा केषुचित् ब्रह्मविषयत्व इति**। ज्ञानमात्राविषयत्वस्यैव निर्गुणत्वाक्षेपकतया परैरुक्तत्वादुपासनाविषयत्वादिविकल्पनिरासपरत्वमस्य ग्रन्थस्यानुचितमित्यपरितोषादाह—**यद्वा ज्ञानं चोपासनात्मकमिति। गुणविधानबाधितेति ;** बाधितापीत्यर्थ:। ततश्च ज्ञेयत्वाभावरूपहेत्वसिद्धिमात्रं नेत्यर्थ:। **अज्ञेयत्वं बाधित्वा ज्ञेयत्वमाक्षिपतीति ;** मा भूत् ज्ञेयत्वे प्रमाणान्तरगवेषणा ; इदमेव सगुणत्वं ज्ञेयत्वसाधने पर्याप्तमित्यर्थ:। ननु सगुणत्वस्य सर्वप्रकारेण समर्थनीयस्य सिद्धौ सगुणत्वेन ज्ञेयत्वसाधनं मुधा, उत्तरसिद्धौ किं पूर्वेणेति न्यायादिति चेत्; अत्र केचित्—यद्यपि सगुणत्वमेव परमसाध्यं, तत्रैव भाष्यतात्पर्यं च ; तथापि तत्रैवं शङ्का समुन्मिषति—कथं सगुणत्वं श्रुतिसहस्रमपि प्रतिपादयेत्? तद्व्यापकज्ञेयत्वाभावादिति। तस्या: परिहारोऽभिधीयते—**अज्ञेयत्वं बाधित्वेत्यादिना**। यथा यागस्य क्षणभङ्गुरस्य फलपर्यन्तं व्यापारशून्यस्य कथं स्वर्गसाधनत्वमित्याक्षेपे यथा स्वर्गसाधनत्वप्रतिपादनबलादेव तत्पर्यन्तस्थायिव्यापारवत्त्वमपि कल्प्यत इत्युच्यते, एवमिति वदन्ति। **तत्रैवेति** व्याख्येयं पदम्।

## श्रुतप्रदीपिका

ज्ञेयत्वं सगुणस्येति ज्ञेयत्वव्युदासो निर्गुणत्वपर इति परोक्तं निरसितुमाह—**यस्येति**। ज्ञानमात्रविषयत्वे दूषणमाह—**ब्रह्मेति**। तात्पर्यद्योतनायाह—**असन्निति**। "विद्यया अमृतम्" "ततो ज्ञानं प्रवर्तते" "ज्ञानाग्नि:" इत्याश्रितविषयज्ञानपरवाक्यसमुत्थबन्धमिथ्यात्वधिया मोक्ष इति पक्षमाशङ्क्याह—**अत इति ;** बहुवाक्येषु धियो ब्रह्मविषयत्वश्रवणादित्यर्थ:। उपासनात्मकज्ञानाविषयत्वं व्युदस्यति—**ज्ञानं चेति**। सगुणोपास्त्यविषयत्वं व्युदस्यति—**उपास्यं चेति**। निर्गुणपरतया पराभिमतसद्विद्यादेरपि सगुणपरत्वोपपादनादिति भाव:। तर्हि "यस्यामतम्" इत्यस्य कोऽर्थ इत्यत्राह—**यत इति। अनन्तस्येति ;** स्वरूपत:। अपरिच्छिन्नगुणस्येत्यत्र "वर्षायुतै:" "नान्तं गुणानाम्" मतिक्षयात्" इत्याद्यनुसंधेयम्। कथं परिच्छेदधीमताममतत्वमित्यत्राह—**अपरीति**। विपक्षेऽनिष्टमाह—**अन्यथेति ;** न परं श्रुत्यन्तरविरोध इत्यर्थ:।

न्यायसुदर्शनम्

**ब्रह्मैतावदिति परिच्छेदज्ञानवतां ब्रह्माविज्ञातमित्यत्र** ब्रह्मणो वाङ्मनसागोचरत्वस्येयत्ताराहित्यहेतुत्वप्रतिपादनेऽपि तल्लिङ्गदर्शनमुपस्थाप्य क्वचित् श्रूयते—"ताभिर्मनसा स्तुवते। न वा इमामश्वरथो नाश्वतरीरथः सद्यः पर्याप्तुमर्हति। मनः परिभवितुमथ ब्रह्म वदन्ति परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूंषि। अथैतस्यैवान्तो नास्ति यद् ब्रह्म" इति। "मनसा स्तुवते" इति विहितमनःस्तुत्यर्थमिदं "न वा" इत्यादि। "मनः परिभवितुम्" इत्याद्यपि मनःस्तुत्यर्थमेव। यत्साक्षात्परं ब्रह्म तदेकमेव मनः परिभवितुं समर्थम्। अन्यत्सर्वं तावत् परिच्छिन्नमेवेति। ब्रह्मणश्च मनःपरिभवहेतुत्वे हेतुरपरिमितत्वमेवेति वदति—"परिमिता वा ऋचः" इत्यादिना। अपरिमितत्वं चेयत्ताराहित्यमेवेत्यविवादम्। तस्मात् ब्रह्मणो वाङ्मनसागोचरत्वे न निर्विशेषत्वं हेतुरित्यर्थः। श्लोकश्चात्र भवति—

> "त्वामाचक्षत एव वाङ्मनसयोस्त्वय्यन्तवाचाखिलं
> केचित्तद्विदुषो....रघुवरोदारैर्गुणैरूर्जितः।
> प्राहुः शब्दनिमित्त मसशत विद्यो निमित्तावधे-
> र्हानेरेवमिति स्वयं श्रुतिरपि ब्रूते मनःस्ताविका॥" इति। (?)

श्रीभाष्यम्

**यत्तु "न दृष्टेर्द्रष्टारं न मतेर्मन्तारम्" इति श्रुतिर्दृष्टेर्मतेर्व्यतिरिक्तं द्रष्टारं मन्तारं च प्रतिषेधतीति, तदागन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञानस्वरूपतां कुतर्कसिद्धां मत्वा न तथात्मानं पश्येः न मन्वीथाः, अपितु द्रष्टारं मन्तारमप्यात्मानं दृष्टिमतिरूपमेव पश्येरित्यभिदधातीति परिहृतम्। अथवा दृष्टेर्द्रष्टारं मतेर्मन्तारं जीवात्मानं प्रतिषिध्य सर्वभूतान्तरात्मानं परमात्मानमेवोपास्स्वेति वाक्यार्थः। अन्यथा "विज्ञातारमरे केन विजानीयात्" इत्यादिज्ञातृत्वश्रुतिविरोधश्च।**

श्रुतप्रकाशिका

ज्ञेयत्वनिषेधे परिहृते ज्ञातृत्वनिषेधं परिहरति—**यत्त्वित्यादिना**। दृष्टेर्मतेरिति पञ्चम्यन्तत्वाभिप्रायेण व्यतिरिक्तमिति पदाध्याहारेण किं योजना? उत षष्ठ्यन्ततया व्यति-

रिक्तपदानध्याहारेण योजना त्वया क्रियत इति विकल्पमभिप्रेत्य प्रथममध्याहारपक्षमनु-वदति—**न दृष्टेरिति** । परिहरति—**तदिति** । प्रसक्तस्य हि प्रतिषेध इति शङ्कायां प्रसङ्गं दर्शयति—**कुतर्कसिद्धामिति** । कुतर्कः कथमुपन्यस्त इत्यपेक्षायां स्वरूपजडत्वे परोक्तं हेतुद्वयं संग्रहेणोपपादयति—**आगन्तुकचैतन्यगुणयोगितयेति** । आगन्तु-कत्वात् गुणत्वाच्चेति हेतुद्वयम् । आगन्तुकत्वात् अनित्यत्वात् । ज्ञानं नित्यस्यात्मनो न स्वरूपं भवितुमर्हति, गुणत्वाच्च न स्वरूपमिति । यद्वा चैतन्यं नाम विषयप्रकाशः; तन्नित्यं स्वरूपं चेत्, सर्वदा विषयप्रकाशप्रसङ्ग इति भावः । दृष्टिश्रुतिमतिनिदिध्यासनानां ज्ञान-विशेषाणां कर्तुरात्मनः स्वरूपस्य दृष्ट्यादिरूपत्वे विधीयमाने आत्मस्वरूपस्य न ज्ञानावान्तर-भेदः शङ्कनीयः । तेषां ज्ञानविशेषरूपाणां स्वयंप्रकाशत्वलक्षणं ज्ञानत्वमविशिष्टमिति तावन्मात्रमेव स्वरूपस्य विवक्षितं भवति । अयं परिहारः परपक्षेऽपि समानः । साक्षाद्योज-नामाह—**अथवेति** । दृष्टिश्रुतिमतिनिदिध्यासनानां कर्तारं जीवात्मानं प्रतिषिध्य परमात्मा-नमेवोपास्स्वेत्ययमर्थ उक्त इत्यर्थः । यद्वा अभिदधातीत्यनुषङ्गः । जीवात्मानं प्रतिषिध्य परमात्मानमुपास्स्वेत्यभिदधाति श्रुतिरिति वाक्यार्थ इति वाक्यान्तरम् । यद्वा, **प्रतिषिध्य;** परित्यज्येत्यर्थः । अतः समानकर्तृकत्वोपपत्तिः । "यः प्राणेन प्राणिति योऽपानेनापानिति एष त आत्मा सर्वान्तरः" इति प्रस्तुतत्वात् प्राणेन प्राणितृत्वादि जीवात्मनः संभवतीति तदुपास्यत्वशङ्काव्यावृत्त्यर्थं "न दृष्टेर्द्रष्टारं पश्येः" इत्याद्युच्यत इत्ययमेवार्थः । अन्यथा श्रुत्यन्तरविरोधमाह—**अन्यथेति** । गुणत्वमसिद्धम्, ज्ञानस्य स्वरूपत्वेन श्रुतिप्रतिपन्नत्वात् । ज्ञानं चेदागन्तुकमिति न वाच्यम्, ईश्वरज्ञाने व्यभिचारात्, अस्मदादिज्ञानस्याप्यागन्तुकत्वं कालात्ययापदिष्टम्, "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति श्रुतेः । इति हेतुद्वय-परिहारः । विषयप्रवणत्वं धर्मभूतज्ञानस्यैव । सर्वसाधारणं ज्ञानत्वं स्वप्रकाशत्वम् । अतो न सर्वदा विषयप्रकाशप्रसङ्गश्च ।

### भावप्रकाशिका

**आगन्तुकत्वाद् गुणत्वाच्चेति; आगन्तुकचैतन्यगुणयोगितया चेति** भाष्ये आगन्तुकगुणशब्दौ भावप्रधानौ; चैतन्यपदं धर्म्युपस्थापकम्; ततश्च चैतन्यस्यागन्तुकत्व-गुणत्वयोगितयेत्यर्थः पर्यवस्यतीति भावः । **आगन्तुकचैतन्यगुणयोगितया ज्ञातुरज्ञान-स्वरूपतामिति** भाष्ये ज्ञातुरात्मनः पक्षत्वम्, अज्ञानस्वरूपत्वलक्षणजडत्वस्य साध्यत्वं,

" ज्ञोऽत एव " इति सूत्रे काणादाभिमतजडत्वसाधकत्वेनोपन्यसिष्यमाणस्यागन्तुकचैतन्यस्य साधनत्वं च स्वरसतः प्रतीयते; तद्विहाय ज्ञानपक्षकानात्मत्वसाधकागन्तुकगुणत्वरूपहेतुद्वय-परत्वं वाक्यशैलीविरुद्धमित्यपरितोषादाह—**यद्वा चैतन्यं नाम विषयप्रकाश इति ;** स्वतश्चैतन्यस्वभावस्यागन्तुकचैतन्यत्वं न संभवतीति भावः । **जीवात्मानं प्रतिषिध्य सर्व-भूतान्तरात्मानं परमात्मानमेवोपास्स्वेति** भाष्ये जीवात्मानं प्रतिषिध्येति प्रतिषेधक्रियायाः श्रुतिकर्तृकत्वादुपासनस्य च जीवकर्तृकत्वात् समानकर्तृकत्वाभावात् क्त्वाप्रत्ययानुपपत्तिमा-शङ्क्य श्रुतिकर्तृकोक्तिक्रियावाचिपदाध्याहारेण व्याचष्टे—**दृष्टिश्रुतिमतिनिदिध्यास-नानामिति ।** अस्मिन् पक्षे उपास्स्वेत्यर्थ उक्तो भवतीत्येव युक्तम्; वाक्यपदमयुक्तमित्य-स्वरसादाह—**यद्वा अभिदधातीत्यनुषङ्ग इति । इति वाक्यार्थ इति वाक्यान्त-रमिति ;** उपास्स्वेत्यभिदधातीति वाक्यार्थ इत्यत्र इतिशब्दः संनिहितं नाभिदधातीत्यर्थं परामृशति, अपि तूपास्स्वेत्येतदंशमिति भावः । इतिशब्दस्य विप्रकृष्टपरत्वमदृष्टमित्यपरि-तोषादाह—**यद्वा प्रतिषिध्य परित्यज्येति ।**

### श्रुतप्रदीपिका

ज्ञातृत्वनिषेधपरतया परोदाहृतश्रुतेरर्थान्तरपरत्वं विवक्षन् दृष्टेरिति पञ्चमीपक्षेऽर्थ-माह—**यत्त्विति ।** निषेध्यप्रसञ्जकमाह—**कुतर्केति ।** तमाह—**आगन्तुकेति ।** नित्यत्वात् द्रव्यत्वाच्चात्मनः तादृक् धीर्न स्वरूपमिति भावः । षष्ठ्यन्तपक्षेऽर्थमाह—**अथवेति ।** " यः प्राणेन " इत्याद्युक्तप्राणितृत्वादिभिः कृता जीवस्योपास्यत्वशङ्का ह्यत्र व्युदस्यते । विपक्षे बाधकमाह—**अन्यथेति ।**

### न्यायसुदर्शनम्

" न दृष्टेर्द्रष्टारम् " इत्यत्र लोकदृष्टचक्षुरादिकरणजन्यज्ञानवन्तमेवात्मानं न पश्येरित्यर्थः । दृष्ट्यादिकरणायत्तद्रष्टृत्वादिनिषेधो वा । द्रष्टेरिति हेतौ पञ्चमी । करणार्थे षष्ठी वा " दर्भाणां वेदं करोति " इत्यादिवत्; " पश्यत्यचक्षुः स शृणोत्यकर्णः " इत्यादिश्रुत्यन्तरदर्शनात् ।

### श्रीभाष्यम्

" आनन्दो ब्रह्म " इत्यानन्दमात्रमेव ब्रह्मस्वरूपं प्रतीयत इति यदुक्तं, तत् ज्ञानाश्रयस्य ब्रह्मणो ज्ञानं स्वरूपमिति वदतीति

**परिहृतम् । ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यते । "विज्ञानमानन्दं ब्रह्म" इत्यानन्दरूपमेव ज्ञानं ब्रह्मेत्यर्थः । अत एव भवतामेकरसता । अस्य ज्ञानस्वरूपस्यैव ज्ञातृत्वमपि श्रुतिशतसमधिगतमित्युक्तम् । तद्वदेव "स एको ब्रह्मण आनन्दः" "आनन्दं ब्रह्मणो विद्वान्" इत्यादिव्यतिरेकनिर्देशाच्च नानन्दमात्रं ब्रह्म, अपि त्वानन्दि । ज्ञातृत्वमेव ह्यानन्दित्वम् ।**

### श्रुतप्रकाशिका

ज्ञेयत्वनिषेधपरिहारानन्तरं बुद्धिस्थत्वात् ज्ञातृत्वनिषेधः परिहृतः । अथार्थगुणनिषेधान्तरं परिह्रियते—**आनन्द इत्यादिना** । पूर्वोक्तं परिहारमत्रातिदिशति—**तत् ज्ञानाश्रयस्येति** । कथं तेनेदं परिहृतमित्यत्राह—**ज्ञानमेव हीति** । तर्हि श्रुतिषु विज्ञानानन्दशब्दयोः समभिव्याहारो नोपपद्यत इत्यत्राह—**विज्ञानमिति** । स्वयंप्रकाशत्वानुकूलत्वरूपप्रवृत्तिनिमित्तभेदादुपपद्यत इति भावः । तथैव भवद्भिरभ्युपगतमित्याह—**अत एवेति । अत एव** ; ज्ञानानन्दशब्दयोरेकविषयत्वादेवेत्यर्थः । आनन्दस्यानन्दाश्रयत्वाभावः किं श्रुत्या? उत व्याप्त्या? व्याप्त्या चेत् कस्यचिद्धर्मः स्यात् । श्रुतिबलात् स्वतन्त्र इति चेत्, तत एवानन्दाश्रयत्वमप्यभ्युपगम्यताम् । धर्मभूतानन्दस्य हि आनन्दाश्रयत्वाभावो दृष्टः । अतो व्याप्तिविरोधश्च नास्ति । अतः स्वतन्त्रत्ववत् गुणाश्रयत्वमपि श्रुतिसिद्धत्वात् स्वीकार्यमिति भावः । उभयत्र प्रमाणे सति हि न्यायसंचार इत्याशङ्कायां दृष्टान्तभूमौ प्रमाणस्य दर्शितत्वमाह—**अस्येति** । दार्ष्टान्तिकेऽपि कण्ठोक्तं दर्शयति—**तद्वदिति** । ज्ञातृत्ववदानन्दित्वमपि कण्ठोक्तमित्यर्थः । ज्ञातृत्वश्रुतिरप्यानन्दित्वे प्रमाणमित्यभिप्रेत्याह—**ज्ञातृत्वमेव ह्यानन्दित्वमिति** । ज्ञातृत्वातिरिक्तानन्दित्वव्युदसनपर एवकारः । हिशब्दस्तदुपपत्तिसूचकः । अनुकूलज्ञानाश्रयत्वमेव हि आनन्दित्वमित्यर्थः । ज्ञातृत्वश्रुतिर्ज्ञानाश्रयत्वनिषेधस्यानन्दाश्रयत्वनिषेधस्य च विरोधिनीति भावः ।

### भावप्रकाशिका

भाष्ये—**ज्ञानमेव ह्यनुकूलमानन्द इत्युच्यत इति** ; अत्रैवकारेण प्रतिकूलज्ञानस्यानन्दत्वं व्यवच्छिद्यते, न तु विषयस्यापि; अतो विभूत्यानन्दत्ववादस्य न विरोध इति द्रष्टव्यम् । **धर्मभूतानन्दस्य हीति** ; न त्वानन्दमात्रस्येत्यर्थः ।

श्रुतप्रदीपिका

आर्थगुणनिषेधविशेषं व्युदस्यति—**आनन्द इति** । प्रागुक्तमतिदिशति—**तदिति** । कथमित्यत्राह—**ज्ञानमिति** । विज्ञानानन्दशब्दयोरैकार्थ्ये सहप्रयोगः कथमित्यत्राह—**विज्ञानमिति** ; प्रवृत्तिनिमित्तभेदादित्यर्थः । आनन्दमनुकूलम् । विज्ञानं स्वयंप्रकाशम् । परोपगममाह—**अत एवेति** । व्याप्तिविरोधपरिहारः पूर्ववत् । माने सति हि न्यायसंचार इत्यत्राह—**अस्येति** । आनन्दित्वे मानमाह—**स एक इति** । ज्ञातृत्वश्रुतिरप्यानन्दित्वे मानमित्याह—**ज्ञातृत्वमिति** ; ज्ञात्रतिरिक्तानन्दित्वव्युदासः । हिरुपपादनसूचकः ।

श्रीभाष्यम्

**यदिदमुक्तम्—" यत्र हि द्वैतमिव भवति " " नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति " " यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् " इति भेदनिषेधो बहुधा दृश्यत इति, तत् कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते, न पुनः " बहु स्यां प्रजायेय "इति बहुभवनसंकल्पपूर्वकं ब्रह्मणो नानात्वं श्रुतिसिद्धं प्रतिषिध्यत इति परिहृतम् । नानात्वनिषेधादियमपरमार्थविषयेति चेत्—न ; प्रत्यक्षादिसकलप्रमाणानवगतं नानात्वं दुरारोहं ब्रह्मणः प्रतिपाद्य तदेव बाध्यत इत्युपहास्यमिदम् ।**

श्रुतप्रकाशिका

अथ भेदनिषेधपरत्वेन परोक्ताः श्रुतीर्योजयितुमनुवदति—**यदिदमिति** । यत्र हीत्यादिवाक्याभ्यां भेदनिषेधः कृतः । भेदप्रतिपत्तावनर्थं दर्शयति—**मृत्योरिति** ; " तमसो वा एष तमः प्रविशति "इतिवत् । नित्यानुवृत्तस्य भेदस्य कथं भ्रान्तिसिद्धत्वमित्यत्राह—**यत्र त्विति** । उक्तवाक्येषु वचनभङ्गीवैविध्याभिप्रायेण बहुधेत्युक्तम् । बहुश इति पाठे निषेधक्रियाऽऽवृत्तिरर्थः । परिहरति—**तदिति** । तच्छब्दस्य परिहृतमित्यत्रान्वयः । समस्तहेयप्रत्यनीकत्वेन समस्तकल्याणगुणात्मकत्वेन च श्रुत्यन्तरप्रसिद्धस्य ब्रह्मणो विका-

रास्पदक्लेशकर्मादिहेयपरवशजगदैक्यं व्याहतत्वात् श्रुतिर्न प्रतिपादयति । न व्याहतिः, हेयानामपारमार्थिकत्वादिति चेत्, अपारमार्थिकत्वे तन्निरसनीयं न वा? न चेत्, तन्निवृत्त्यर्थं शास्त्रमनर्थकं स्यात्। निरसनीयं चेत्, निरसनीयसंबन्ध एव हेयसंबन्ध इति तत्प्रत्यनीकस्य तत्संबन्धित्वं व्याहतम् । किंच "बहु स्याम्" इति संकल्पपूर्वकं बहुभवनं श्रूयते । सर्वज्ञस्य स्वेच्छया स्वस्मिन् हेयोपादानमनन्वितमिति तत्प्रतिपादनमशक्यम् । असर्वज्ञत्वे "पश्यत्यचक्षुः स श्रृणोत्यकर्णः" "स्वाभाविकी ज्ञानबलक्रिया च" यः सर्वज्ञः सर्ववित्" इत्यादिश्रुतिविरोधः । हेयस्यापारमार्थ्येऽपि स्वसंकल्पेन स्वस्यानन्तापुरुषार्थभ्रमापादनं सर्वज्ञस्य नोपपद्यते । सार्वज्ञ्यस्याविद्यापरिकल्पितत्वाभ्युपगमादविद्यापूर्वकमेव बहुभवनभ्रमरूपं सार्वज्ञ्यमिति न वाच्यम्, "स्वाभाविकी" इति श्रुतेः, "त इमे सत्याः कामाः" इति सत्यत्वश्रुतेश्च । स्वसार्वज्ञ्यमाविद्यकत्वेन मिथ्येति न जानातीति चेत्, सार्वज्ञ्यं न स्यात् । जानातीति चेत्, तेनैव ज्ञानेन बाधितत्वात् सार्वज्ञ्यं न स्यात् । ततश्च पूर्वजगदाकारपर्यालोचनेन स्वसंकल्पपूर्वकं जीवकर्मानुगुणसृष्टिर्नोपपद्यते । अतः सार्वज्ञ्यस्याविद्यकत्वमनुपपन्नमिति सर्वज्ञस्य स्वगतहेयोपादानं न घटते । किंच हेयं स्वगतत्वेन जानतः सर्वशक्तेस्तस्य सत्यसंकल्पस्य सहसैव स्वगतहेयानिरासकत्वमपि नोपपद्यते । अशक्तत्वे "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी" इत्यादिश्रुतिविरोधः । ईदृशविरोधो नास्ति, श्रुतिबलादविरुद्धत्वस्याभ्युपगन्तव्यत्वादिति चेत्, तर्हि "विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति" "न जायते म्रियते वा विपश्चित्" "वायुश्चान्तरिक्षं चैतदमृतमभयम्" "आत्मन आकाशः संभूतः" "न नभो न भूमिर्नेमे द्यावापृथिवी" "अन्तवदेवास्य तद्भवति" "नास्येष्टापूर्ते क्षीयेते" इत्यादिश्रुत्युक्तस्यात्मादीनां नित्यत्वानित्यत्वादेरपि श्रुतिप्रतिपन्नतया विरोधाभावादुभयमभ्युपगन्तव्यम् । ततश्च सर्वत्र यथाप्रतिपन्नस्वीकारे हि मीमांसारम्भवैयर्थ्यं स्यात् । प्रस्तुतभेदाभेदश्रुत्योरपि पारमार्थिकापारमार्थिकविषयत्वेन सोपाधिकनिरुपाधिकविषयत्वेन वा विभागकल्पनमनुपपन्नम्, तस्य विरोधपरिहारार्थत्वात्, विरोधस्य चाभावात् । ततश्च भेदपारमार्थ्यसिद्धिः । अतो विरोधोऽभ्युपगन्तव्यः । इह च विरोधोऽवगम्यते—"मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति भेदप्रतिपत्तेः संसारहेतुत्वं श्रूयते । "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति भेदज्ञानस्य मोक्षोपायत्वं श्रूयते ।

" द्वैतिनोऽतथ्यदर्शिनः " इत्यादिस्मृतिविरुद्धं " द्वाविमौ पुरुषौ " " आविश्य बिभर्त्यव्यय ईश्वरः " " यस्मात्क्षरमतीतोऽहम् " इत्यारभ्य " यो मामेवमसंमूढो जानाति पुरुषोत्तमम् " इति भेदज्ञानवतोऽसंमूढत्वं स्मर्यते । एवमादिवचनप्रतिपन्नस्य भेदस्य लोकसिद्धत्वाभावान्निषेधार्थं भेदोऽनूद्यत इति वादोऽनुपपन्नः । किंच यदि भेदमात्रस्य लोकसिद्धत्वात् " अप्राप्ते हि शास्त्रमर्थवत् "इति न्यायादभेद एव शास्त्रवेद्य इत्युच्यते, तर्हि "सोऽयं देवदत्तः " इत्यादावभेदमात्रस्य च लोकसिद्धत्वादप्राप्ते शास्त्रस्यार्थवत्वाच्च शास्त्रेणाभेदप्रतिपादनमयुक्तम् । देवदत्ताद्यैक्यं हि लोकसिद्धम् , न जीवपरयोः; अतस्तयोरभेदः शास्त्रवेद्य इति चेत् , तर्हि घटपटादिभेद एव लोकसिद्धः, न तु जीवपरयोः । नियाम्यत्वनियन्तृत्वधार्यत्वधारकत्वशेषत्वशेषित्वव्याप्यत्वव्यापकत्वादिलक्षणभेदो न लोकसिद्ध इति स भेदः शास्त्रप्रतिपाद्य एव । यथोक्तमाचार्यपादैः—

" न द्वैतं प्रतिपादयन्त्युपनिषद्वाचः प्रसिद्धं हि तत्
किंत्वद्वैतमनन्यगोचरतया तद्वेद्यमास्थीयताम् ।
अप्राप्ते खलु शास्त्रमर्थवदिति व्यर्थः प्रयासो यतः
प्रख्यातादपरस्तु शास्त्रविषयो भेदस्त्वदद्वैतवत् ॥ "

इति । अयं चार्थोऽनन्तरमेव भाष्ये वक्ष्यते । अतोऽनुवाद इति निर्वाहो नोपपद्यते । भेदश्रुतिरुपासनार्था, न तु तत्त्वपरा ; " पृथगात्मानं प्रेरितारं च मत्वा " " जुष्टं यदा पश्यत्यन्यमीशम् " इत्युपासनवाचिपदश्रवणादिति चेत् ; तथापि तात्त्विक एव भेदः, तज्ज्ञानस्य मोक्षोपायत्वोक्तेः । तत्त्वज्ञानेन हि मोक्षः । न च फलविशेषायोपासनार्थत्वाद्भेदश्रुतीनां भेदस्यातात्त्विकत्वं वाच्यम् , ऐक्यस्य चोपासनार्थत्वादसत्यत्वप्रसङ्गात् । श्रूयते ह्यभेदस्योपासनार्थत्वम्—" अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद " " आत्मेत्येवोपासीत "इति । ऐक्यस्योपासनार्थत्वं भेदस्य च तात्त्विकत्वं युक्तम् ; वैनतेयध्याने हि ऐक्यमारोपितं दृष्टम् । भेद एव हि नरेन्द्रवैनतेययोस्तात्त्विकः । विधिशेषभूतव्यतिरिक्तेष्वपि वाक्येष्वभेदः प्रतीयत इति तस्य तात्त्विकत्वमिति चेत्; तर्हि " क्षरं प्रधानममृताक्षरं हरः " " प्रधानक्षेत्रज्ञपतिर्गुणेशः " " ज्ञाज्ञौ द्वौ " " ऋतं पिबन्तौ " " द्वा सुपर्णा " " नित्यो नित्यानाम् " इत्याद्यविधिशेषभूतवाक्यावगतत्वाद्भेदस्यापि तात्त्विकत्वमवर्जनीयम् । उपास्तिफलभूतमुक्तिदशायामभेदाद्भेदपारमार्थ्यं चेत् ; मुक्तिदशायां

भेदश्रवणात् भेदतात्त्विकत्वसिद्धिः। अत उपासनार्थत्वादपरमार्थविषयत्वेन भेदश्रुतिनिर्वाहो नोपपद्यते। भेदाभेदयोर्नियतपौर्वापर्यविरोधवत्त्वादपच्छेदन्यायविषयत्वं सगुणत्वनिर्गुणत्वयोरिव न संभवतीति विरोधनयादुपक्रमनयाद्वा परभूतभेदनिषेधोत्पत्तिप्रतिबन्ध एव स्यात्। इदं च पूर्वमेव प्रपञ्चितम्।

एवं न्यायानुगृहीतश्रुत्यन्तरविरोधस्यावर्जनीयत्वमेषां निर्वाहाणामनुपपन्नत्वं च प्रदेशान्तरोक्तमिहाभिप्रेत्य समीचीननिर्वाहं दर्शयति—**तदिति**। **जगत** इति पदं ब्रह्मपर्यन्तम्। तस्य **ब्रह्मकार्यतयेति** पदेन **ऐक्यादिति** पदेन चान्वयः। **तदन्तर्यामिकतयेत्यत्र** सामर्थ्याज्जगत इत्यध्याहारः। तेन सकृत्प्रयुक्तजगच्छब्दस्य निष्कर्षकत्वानिष्कर्षकत्वविरोधपरिहारः। "सर्वं खल्विदं ब्रह्म तज्जलान्" इत्युक्तं जगतस्तज्जत्वं तल्लत्वं चोपजीव्याह—**ब्रह्मकार्यतयेति**। ब्रह्मशब्दः कारणावस्थचिदचिद्विशिष्टपरः। तदनत्वमुपजीव्याह—**तदन्तर्यामिकतयेति**। तच्छब्दो विशेष्यपरामर्शी, विशिष्टे प्रकृते विशेष्यांशस्यापि प्रकृतत्वात्। यथा "सन्मूलाः सदायतनाः" इत्यत्र सच्छब्दस्य विशिष्टपरत्वं विशेष्यपरत्वं च तद्वत्। तत् ब्रह्म अन्तर्यामि यस्य तत् तदन्तर्यामिकं, तद्भावेनेत्यर्थः। कथं तदनत्वेन तदन्तर्यामिकत्वसिद्धिः? उच्यते—अननं स्थितिः। ब्रह्मणो जगत्स्थितिहेतुत्वं चान्तः प्रविश्य प्रशासनेन धारकत्वम्। "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यत्र 'सन्मूलाः सत्प्रतिष्ठाः' इति पदद्वयं सच्छब्दवाच्यब्रह्माधीनोत्पत्तिलयपरम्। प्रतिष्ठा निष्ठा पर्यवसानं लयः। न तु सदाधारत्वम्, सदायतना इति पुनरुक्तिप्रसङ्गात्। एवं ब्रह्मण उत्पत्तिलयहेतुत्ववाचिपदद्वयमध्यगतेन स्थितिहेतुत्ववाचिना सदायतना इति पदेन धारकत्वसिद्धेः "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः" इत्यत्र तिष्ठतिधातूक्तस्थितेः प्रशासनेन धारणाधीनत्वावगमात् "अन्तः प्रविष्टः शास्ता जनानाम्" इति धारणहेतुभूतप्रशासनस्यान्तः प्रविश्य क्रियमाणत्वश्रवणात् "तद्यथा अरेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणे अर्पिताः" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति श्रुतिस्मृतिभ्यामरनाभिमणिगणसूत्रदृष्टान्ताभ्यामन्तःस्थितस्य धारकत्वावगमात् "तत्सृष्ट्वा, तदेवानुप्राविशत्" इत्युक्तानुप्रवेशस्य सृष्ट्यनन्तरभावित्वादुदाहृतश्रुत्यैकार्थ्याच्च स्थित्यर्थत्वात् "सप्त प्राणाः प्रभवन्ति" इत्यादिवाक्योक्तप्रक्रियया सृष्टस्य च जगतः "तेनेदं

पूर्णं पुरुषेण सर्वम्'' इति वाक्येन स्थितिवेलायां व्यापकेन परमपुरुषेण पूर्णत्वावगमात् सर्वशाखाप्रत्ययन्यायेन व्यापननियमनधारणेष्वन्यतमोक्तावन्यतमयोः सिद्धत्वाच्चानुप्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति ह्यवगम्यते । एवं तज्जलानिति वाक्यमुपजीव्योक्तं जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया चेति तदन्तर्यामिकत्वमुभयलिङ्गकस्य ब्रह्मणः परमार्थजगदुपादानत्वान्यथानुपपत्तिसिद्धं घटकश्रुतिसिद्धं च । चशब्दस्योत्तरत्रान्वयः—तदन्तर्यामिकतया तदात्मकत्वेन चेति । स आत्मा यस्य तत्तदात्मकम् ; तदन्तर्यामिकत्वरूपेण तदात्मकत्वेनेत्यर्थः । अन्तः प्रविश्य नियन्ता ह्यात्मा । ब्रह्मकार्यतया तदन्तर्यामिकतया तदात्मकत्वेन चेत्युक्ते हेतुत्रयशङ्का स्यादिति तद्व्युदासार्थं चशब्दस्य प्राक्प्रयोगः । एवमुभयविधैक्यस्य विहितत्वादित्यर्थः । नन्वैक्यस्य कार्यकारणनिबन्धनत्वे कार्यावस्थजगद्विशिष्टस्य कारणावस्थचिदचिद्विशिष्टब्रह्मणा स्वरूपैक्यं युक्तम् ; तदन्तर्यामिकत्वनिबन्धनत्वे तु न ब्रह्मणा जगत ऐक्यम् , किंतु प्रकारिणो ब्रह्मण एकत्वसंख्यान्वय एवेत्यैक्यशब्दस्यार्थभेदः स्यात् ; ततश्च जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तम् , प्रकारप्रकारिणोर्जगद्ब्रह्मणोर्भिन्नत्वात् । नैवम् , जगद्ब्रह्मणोर्भिन्नत्वेऽप्यत्र जगच्छब्दो जगद्विशिष्टब्रह्मपर इत्युक्तत्वादैक्यशब्दस्य च नार्थभेदः, उभयथापि विशिष्टैक्यपरत्वात् ; तथा हि—कार्यकारणभावनिबन्धनमैक्यं नामावस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वेकत्वम् । यथा रूपस्पर्शादिविशिष्टघटस्य तादृशमृद्द्रव्येणैक्यं तथा चिदचिदात्मकजगद्विशिष्टस्य स्वरूपेण गुणैश्च निरतिशयबृहत्त्वविशिष्टस्य चैक्यं प्रकार्यैक्यम् ; यथा नैल्यविशिष्टस्योत्पलत्वविशिष्टस्य चैक्यम् । न च विशेषणांशैक्याभावाद्वस्त्वैक्यहानिः, मृद्घटादावपि स्वरूपस्य रूपस्पर्शादीनां कार्यत्वकारणत्वावस्थयोश्चैकत्वाभावात् । इयान् विशेषः—कार्यकारणभावे भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यम् ; यथा—'स एवायं तरुणोऽभूत्' इति । अन्यत्र समकालसंबन्ध्यद्वारकानेकविशेषणाश्रयधर्म्यैक्यम् ; यथा—'अयं वेदविद् ब्राह्मणः' इति । बाल्ययौवने भिन्नकालीनसद्वारकावस्थे । वेदनं ब्राह्मणशरीरं च समकालवर्त्यद्वारकविशेषणम् । एवमुभयविधविशेषणविशिष्टधर्म्येकत्वमैक्यशब्दार्थः । अतो जगच्छब्दवाच्यधर्म्यैक्यात् 'जगत ऐक्यात्' इति निर्देश उपपन्नः । यद्वा 'कृत्स्नस्य जगतः' इति निष्कर्षकशब्दः । ब्रह्मशब्दोऽपि विशेष्यमात्रपरः । कार्यावस्थां प्रत्याधारत्वात् । आधारत्वं च साक्षाद्वा परंपरया वा मुख्यमेव । अतो ब्रह्मकार्यं जगत् । तदन्तर्यामिकशब्दो व्याख्यातः । एवं ब्रह्मकार्यतया तदन्तर्यामिकतया

च जगत्तदात्मकम् । तदात्मकत्वं नाम जगतस्तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात्तदन्तर्गतत्वम् । तेन प्रकारेणैक्यम् । न तु स्वरूपैक्यम् । विशिष्टान्तर्भाव एव ऐक्यमित्यर्थः । **तत्प्रत्यनीकनानात्वमिति ;** विहितोभयविधैक्यप्रत्यनीकनानात्वं निषिध्यत इत्यर्थः । कार्यकारणभेदः कुतर्कमूलभ्रान्तिविषयः । स्वनिष्ठभेदो लौकिकप्रतीतिमूलभ्रान्तिविषयः । अतो भ्रान्तिमूलत्वाविशेषाद्विहितैक्यप्रत्यनीकत्वाविशेषाच्च तेनाकारेणोभयविधं भेदं नानाशब्देन परामृश्य निषिध्यत इति न वाक्यभेदः । **तत्प्रत्यनीकेति** ऐक्यविधिशेषभूतो भेदनिषेधः, अन्वयमुखेनोक्तार्थस्थिरीकरणार्थत्वात् व्यतिरेकोक्तेः । ऐक्यविधिश्च "नेह नानास्ति" इति प्रकरणे श्रूयते—"एकधैवानुद्रष्टव्यम्" इति । **एकधा ;** एकतया परमात्मशरीरतयैकप्रकारेणेत्यर्थः । तथा "अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" "आत्मा वा इदमेक एवाग्र आसीत्, नान्यत्किंचन मिषत्" । तथा "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते" "अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् । तदच्युतो नास्ति परं ततोऽन्यत्" इत्यादिषु चैक्यविधिशेषतया भेदनिषेधो दृश्यते । शेषत्वं च विहितैकत्वस्थिरीकरणलक्षणकिंचित्कारेण भवति । यादृशमैक्यं विहितं निषेधस्य तादृशैक्यविरोधिभेदविषयत्वे सति तत्स्थिरीकरणार्थत्वं सिध्येत् । न त्वविरोध्यर्थान्तरनिषेधस्तदुपयुक्तः । न हि 'मृदेव घटः' इत्युक्ते घटद्वित्वनिषेधो मृद्घटैकत्वोपकारकः, घटद्वित्वस्य मृद्घटैकत्वाविरोधित्वात् । नापि 'एको घटः' इत्युक्ते घटगतरूपपरिमाणादिभेदनिषेधो घटाख्यधर्म्यैक्यविधेरुपकारकः, रूपपरिमाणादिभेदस्य घटव्यक्त्यैक्याविरोधित्वात् । विधेयविरोध्यर्थनिषेध एव हि विध्युपकारकः । किंच न केवलमुपकाराभावः, ऐक्यविधिविरुद्धं च कृत्स्नभेदनिषेधपरत्वम्, समानाधिकरणवाक्येनैक्यविधानात् । भिन्नविशेषणाभिधायिशब्दानामेकविशेष्यवृत्तित्वं हि सामानाधिकरण्यम् । न च प्रकारभेदे तिष्ठति कृत्स्नभेदनिषेध उपपद्यते । अतो भेदनिषेधस्यैक्यविधिशेषत्वात्कार्यकारणभेदः स्वनिष्ठभेदश्च निषिध्यत इत्यभिप्रायः । किंच "न चास्य कश्चिज्जनिता न चाधिपः" "न तत्समश्चाभ्यधिकश्च दृश्यते" "तेनार्हति ब्रह्मणा स्पर्धितुं कः" "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव" इत्यादिभिः स्वतन्त्ररूपवस्तुविशेषविषयनिषेधदर्शनात् सामान्येनावगतो भेदनिषेधस्तत्र छागपशुन्यायेन पर्यवस्यतीत्यर्थसिद्धम्, तत्प्रत्यनीकनानात्वमित्युक्तत्वात्केषुचिद्वाक्येषु तस्य कण्ठोक्तत्वाच्च । अथोत्सर्गापवादन्यायमभिप्रयन्नाह—

**न पुनरिति** । ब्रह्मणः कार्यरूपेण नानात्वविषयश्रुतिवाक्योदाहरणं प्रकारनानात्वविषय-वाक्यानामपि प्रदर्शनार्थम् "एकः सन् बहुधा विचारः" "एको देवो बहुधा निविष्टः" "त्वमेकोऽसि बहूननुप्रविष्टः" "योऽव्यक्तमन्तरे संचरन् यस्याव्यक्तं शरीरं, योऽक्षरमन्तरे संचरन् यस्याक्षरं शरीरं, यो मृत्युमन्तरे संचरन् यस्य मृत्युः शरीरम्, एष सर्वभूतान्तरात्मा-ऽपहतपाप्मा दिव्यो देव एको नारायणः" इति प्रकारनानात्वं प्रकार्यैकत्वं च हि स्पष्टं श्रूयते। यद्वा छान्दोग्ये तैत्तिरीये च "बहु स्याम्" इति प्रकरणे "अनेन जीवेनात्मनानुप्रविश्य" "तदनुप्रविश्य, सच्च त्यच्चाभवत्, निरुक्तं चानिरुक्तं च, निलयनं चानिलयनं च, विज्ञानं चावि-ज्ञानं च" इति चिदचिदनुप्रवेशपूर्वकनामरूपभाक्त्वश्रवणात्, उभयलिङ्गस्याप्यव्यवधानेन जगदु-पादानत्वानुपपत्तेश्च "बहु स्याम्" इत्यत्रापि ब्रह्मणो बहुनामरूपभाक्त्वस्य सद्वारकत्व-सिद्धेः शरीरतया प्रकारभूतचिदचिन्नानात्वमर्थसिद्धमित्यभिप्रायेण "बहु स्याम्" इति वाक्य-मुदाहृतम् । एवं कार्यनानात्वस्य प्रकारनानात्वस्य च विहितत्वात् सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वाच्च कुतर्कसिद्धकार्यकारणभेदविषया लौकिकप्रतीतिसिद्धस्वनिष्ठ-भेदविषयाश्च भेदनिषेधश्रुतय इत्यर्थः । नानात्वनिषेधादपरमार्थविषयत्वं शङ्कते—**नाना-त्वेति** । **इयं** श्रुतिः । भेदस्तु निषेधार्थमनूद्यत इति भावः । परिहरति—**नेति** । अप्राप्त-स्यानुवादायोगात् । अतो विषयविभागादविरोध एव न्याय्यः । एतदुक्तमाचार्यपादैः—

"यद् ब्रह्मणो गुणशरीरविकारभेदकर्मादिगोचरविधिप्रतिषेधवाचः ।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः ॥"

इति । समस्तहेयरहितस्य हेयाकारवस्त्वैक्यासंभवात् हेयस्यापारमार्थ्येऽपि तस्य निरसनीय-तया हेयत्वस्यावर्जनीयत्वात् तत्प्रतिभटतयोक्तस्य तत्संबन्धार्हवस्त्वैक्यव्याघातात् सर्वज्ञस्य ब्रह्मणः स्वसंकल्पेन स्वगतहेयतद्विषयभ्रमापादनायोगात् असर्वज्ञत्वे सार्वज्ञ्यश्रुतिविरोधात् सर्वशक्तेः स्वगतहेयानिवारकत्वायोगादशक्तत्वे सर्वशक्तिश्रुतिविरोधात् श्रुतिबलादीदृश-विरोधाभावे "तान्येवानुविनश्यति" "न जायते म्रियते" इत्यादिवाक्यप्रतिपन्ननित्य-त्वानित्यत्वनिर्गुणत्वसगुणत्वादेः श्रुतिबलाद्विरोधाभावेन क्वचिदपि न्यायसंचारानपेक्षतया मीमां-सानैरर्थक्यात् भिन्नत्वाभिन्नत्वयोश्च विरोधाभावेन पारमार्थिकापारमार्थिकत्वेन विभागस्यान-भ्युपगन्तव्यत्वात् "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "जुष्टं यदा पश्यत्यन्यमीशम्" इति पृथक्त्वज्ञानस्य मोक्षोपायत्वश्रवणात् "यस्मात् क्षरमतीतो-

ऽहम्'' इत्यादिना भेदज्ञानवतोऽसंमूढत्वस्मरणात् जीवपरयोर्नियन्तृत्वनियाम्यत्वादिलक्षण-भेदस्य घटपटभेदवत्प्रमाणान्तरागोचरत्वेनानुवादासंभवात् विहितस्य निषेधायोगात् उपास-नार्थत्वाश्रयणस्य ''अथ योऽन्यां देवताम्'' इत्यादिवाक्यप्रतिपन्नैक्येऽपि प्रसङ्गात् ऐक्यस्याविधिशेषवाक्यप्रतिपन्नत्वे भेदस्य च तुल्यत्वात् नियतपौर्वापर्यविरोधतयापच्छेदन्याया-विषयत्वात् विरोधाधिकरणन्यायेन भेदश्रुतेः परभूतनिषेधोत्पत्तिप्रतिबन्धकत्वात् ऐक्यविधि-शेषस्य भेदनिषेधस्य विहितैक्यविरोधिभेदनिषेधकत्वोपपत्तेः अन्यथा समानाधिकरणवाक्य-प्रतिपन्नस्वशेषिभूतैक्यविरोधित्वप्रसङ्गात् उत्सर्गापवादन्यायेन निषेधस्य विहितभेदव्यति-रिक्तविषयत्वात् छागपशुन्यायेन सामान्येन भेदनिषेधस्य स्वतन्त्रभेदविशेषनिषेधपर्यवसायि-त्वाच्च भेदनिषेधश्रुतयोऽब्रह्मात्मकनानात्वनिषेधपराः, न तु भेदमात्रनिषेधपरा इति संग्रहः। यत्र हीत्यादिवाक्यानामयमर्थः—यत्र यदा, द्वैतमिव भवति स्वनिष्ठभेद इव भवति, इव-शब्दः स्वनिष्ठभेदस्यातात्त्विकत्वद्योतकः, 'कथमिव' इतिवद्वाक्यभङ्गीरीत्याऽविवक्षितार्थो वा; तत् तदा, इतर इतरमितरेण पश्यति केनेति वक्ष्यमाणत्वादितरेणेत्यध्याहारः। इतरः स्वनिष्ठो द्रष्टा, इतरं स्वनिष्ठं द्रष्टव्यं स्वनिष्ठदर्शनसाधनेन पश्यति। यत्र तु यदा, अस्य उपासकस्य, सर्वमात्मैवाभूत् परमात्मसामानाधिकरण्येन सर्वं साक्षात्कृतम्; न हि पूर्व-मनात्मभूतमिदानीं सर्वमात्मा भवति। अतः साक्षात्काराभिप्रायोऽभूदिति निर्देशः। अस्येत्युक्तेः क इत्यध्याहारः, इतर इत्युक्तत्वात्। तत् तदा, स्वनिष्ठः को द्रष्टा स्वनिष्ठेन केन दर्शनसाधनेन स्वनिष्ठं कं द्रष्टव्यमर्थं पश्येत्। ज्ञातृज्ञेयज्ञानसाधनेषु स्वनिष्ठं किंचिदपि नास्तीत्यर्थः। प्रमितनिषेधायोगादापातप्रतीतिसिद्धस्यैव निषेध्यत्वाल्लौकिकप्रतीतेश्च स्वनिष्ठता-विषयत्वात्तेन रूपेणैव निषेधविषयत्वोपपत्तेः। यदि द्रष्टृदृश्यादिमात्रं निषिध्येत, तदानीं ''तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च'' इति परमात्मसाक्षात्कार-दशायाम् 'अहम्' इति द्रष्टुरात्मनो मनुसूर्यादिदृश्यपदार्थानां च साक्षात्कारश्रवणं विरुध्येत। तस्माल्लौकिकप्रतीतौ द्रष्टृदृश्यादिकं प्रकारीभूतपरमात्माप्रतिपत्तेस्तत्सामानाधिकरण्यमन्तरेण स्वनिष्ठतया भाति। योगदशायां तु प्रकारिणः परमात्मनः प्रतीयमानत्वादहंशब्दवाच्य-परमात्मसामानाधिकरण्येन प्रकाशत इति वैषम्यम्। न तु द्रष्टृदृश्यादीनि प्रतिषिध्यन्त इत्यभ्युपगन्तव्यम्, अन्यथा वामदेवादिदर्शनस्य भ्रान्तित्वप्रसङ्गात्। **नेह नानेति**। इह प्रपञ्चे लोकदृष्टप्रकारेण नानाभूतं स्वनिष्ठतया भिन्नं किंचिदपि नास्तीत्यर्थः। स्वनिष्ठदर्शनेन

प्रत्यवायमाह—**मृत्योरिति** । “ तमसो वा एष तमः प्रविशति ” इतिवन्निर्देशः । **नानेव** स्वनिष्ठमिव । अज्ञानादज्ञानमाप्नोतीत्यर्थः । देहातिरिक्तविषयाज्ञानं प्रागेव सिद्धम् । ततोऽप्यतिशयितमज्ञानं स्वनिष्ठतया तद्वस्तुदर्शनमित्यभिप्रायः ।

### भावप्रकाशिका

नन्‌ **यदिदमुक्तमिति** भाष्ये 'यत्र हि' इत्यादिवाक्यखण्डः प्रथममुदाहृतः । पूर्वपक्षोपन्यासवेलायां तु कृत्स्नं वाक्यं “ मृत्योः समृत्युमाप्नोति ” इति वाक्यस्य पश्चादुदाहृतम्; पूर्वपक्षोदाहृतप्रकारं विहाय प्रकारान्तरेणोपादाने को हेतुरित्याशङ्क्य परिहरति—**यत्र हीत्यादिवाक्याभ्यामिति** । पूर्वं भेदनिवृत्तिप्रतिपादनपरतया पश्चादुदाहृतम् ; इदानीं तु इवशब्दयुक्ततया भेदनिषेधप्रदर्शनपरतया “ नेह नानास्ति ” इति भेदनिषेधकवाक्यखण्डेन सहोपादानमिति द्रष्टव्यम् । **निषेधक्रियाऽऽवृत्तिरर्थ इति; बहुशः;** बहुषु स्थलेष्वित्यर्थः । “ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ” इति कारके शसो विधानादधिकरणस्यापि कारकत्वात् । ततश्चावृत्तिः फलितेति फलितार्थकथनं, न प्रत्ययार्थतयेति द्रष्टव्यम् । **बहुभवनभ्रमरूपमिति ;** सार्वज्ञ्यस्य पूर्वसिद्धत्वे हि पाश्चात्त्या भ्रान्तिर्नोपपद्यते; न हि ब्रह्मणि बहुभवनभ्रमात् प्राक् सार्वज्ञ्यमस्ति, बहुभवनभ्रमस्यैव सार्वज्ञ्यरूपत्वात् तस्य चाविद्याधीनत्वात् नाविद्याविरोधित्वमिति भावः । **अतो विरोधोऽभ्युपगन्तव्य इति ;** ततश्च न्यायानुगृहीतश्रुत्यन्तरसिद्धार्थविरुद्धं भेदनिषेधं “ नेह नानास्ति ” इत्यादिकं कथं प्रतिपादयेदित्यर्थः । ननु भेदनिषेधश्रुतीनां न्यायानुगृहीतविरुद्धश्रुत्यन्तरसद्भावेऽपि “ मृत्योः स मृत्युमाप्नोति ” इति भेदज्ञानानर्थत्वप्रतिपादकोदाहृतश्रुतौ “ द्वैतिनोऽतथ्यदर्शिनः ” इति स्मृत्युपबृंहितायां तादृशविरोधाभावान्न दोष इत्याशङ्क्याह—**इह च विरोधोऽवगम्यत इति** । संसारहेतुत्वं श्रूयते; तत्रापि विरोधोऽवगम्यत इति योजना । ततश्च परस्परविरुद्धार्थप्रतिपादनस्य सर्वत्र साम्यात् न्यायानुगृहीत एवार्थः स्वीकर्तव्यः । भेदश्रुतिश्च न्यायानुगृहीता, अभेदश्रुतिस्तद्विरुद्धेति न्यायानुगृहीतभेदश्रुतिविरुद्धार्थकथनमभेदश्रुतेर्न संभवतीति भावः । एतेन केवलं वाक्ययोः परस्परविरोधमात्रप्रतिपादनं प्रकृतासंगतमिति शङ्का पराकृता, उक्तरीत्या प्रकृतसंगतत्वात् । **उपास्तिफलभूतमुक्तिदशायामिति ;** अत्रोपास्तिफलभूतत्वं परंपरया द्रष्टव्यम् । **अत्र सामर्थ्याज्जगत इत्यध्याहार इति ;** ततश्चाध्याहृतजगच्छब्दस्य न विशेष्यपर्यन्तत्वमिति भावः । **कथं तदनत्वेन तदन्तर्यामित्व-**

**सिद्धिरिति ;** ननु तदनमित्यनेनासिद्धावपि "अन्तः प्रविष्टः शास्ता जनानाम्" इत्यादि-वाक्यान्तरेण तत्सिध्यतीति चेत्—न; अस्यैव वाक्यस्य तदर्थप्रतिपादनसामर्थ्यमस्तीति शिष्यशिक्षार्थतया तद्वाक्यार्थविचारोपपत्तेः। **हेतुत्रयशङ्का स्यादिति ;** तत्कार्यत्वं च तदन्तर्यामिकत्वोपपाद्यम्, तदात्मकत्वं चैक्योपपादकम्; न तु तदन्तर्यामिकत्वमपि साक्षादैक्योपपादकमिति भावः। यद्यपि 'जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्' इत्युक्ते ब्रह्मकार्यत्वतदन्तर्यामिकत्वयोस्तदात्मकत्वोपपादकत्वशङ्काप्रसङ्गेन विरुद्धमिति कार्यत्वं पक्षद्वयसाधारणं, तथापि विद्यमानस्य निर्वाहमात्रप्रदर्शनपरत्वात् तद्योजनाया अपि वक्ष्यमाणत्वेनेष्टत्वाच्च न दोष इति द्रष्टव्यम्। **ऐक्यशब्दस्यार्थभेदः स्यादिति ;** सकृत्प्रयुक्तपदस्यार्थद्वयपरत्वं विना वृत्त्या न लभ्यत इति भावः। **ततश्च जगतस्तदात्मकत्वेनेति ;** सकृत्प्रयुक्तस्यैकस्मिन्नेवार्थे समाश्रयणीये, अमुख्यस्य प्रकार्यैक्यस्य स्वीकर्तुमयुक्ततया अभेदरूपस्य समाश्रयणीयत्वे सति जगतस्तदात्मकत्वेनैक्यादिति वक्तुमयुक्तमेव, जगद्ब्रह्मणोरभेदस्य बाधितत्वादिति भावः। ततश्च जगतस्तात्मकत्वेनैक्यादिति वक्तुमयुक्तमिति कथमुच्यते? तत्कार्यत्वेनैक्यादिति वक्तुमयुक्तमिति कुतो नोच्यते? विनिगमकाभावादिति शङ्का पराकृता। **जगद्विशिष्टब्रह्मपर इत्युक्तत्वादिति ;** अध्याहृतनिष्कर्षकजगच्छब्दार्थैनैक्यस्यान्वयानभ्युपगमादिति भावः। **ऐक्यशब्दस्य च नार्थभेद इति ;** यद्यपि जगद्विशिष्टब्रह्मपर इत्यनेनैवेयमपि शङ्का पराकृतेत्यैक्यप्रपञ्चनं वृथा, तथापि शिष्यशिक्षार्थमैक्यस्वरूपं विविच्य दर्शयतीति द्रष्टव्यम्। **अवस्थाद्वयापन्नचिदचिद्विशिष्टवस्त्वेकत्वमिति ;** स्थूलत्वसूक्ष्मत्वरूपावस्थाद्वयापन्नयोश्चिदचिद्विशिष्टवस्तुनोरैक्यमित्यर्थः। **यथा रूपस्पर्शादीति ;** यथा रूपस्पर्शविशिष्टस्य पिण्डत्वावस्थापन्नस्य रूपस्पर्शविशिष्टेन घटत्वावस्थापन्नेनैक्यम्—अत्र घटगतरूपस्पर्शादिस्थाने चिदचितौ, पिण्डत्वघटत्वादिस्थाने अवस्थाद्वयापन्नेत्युक्तम्। इयांस्तु विशेषः—ब्रह्मणि चिदचिद्द्वारा अवस्थायोगित्वम्; घटादिस्थले तु रूपस्पर्शादिद्वारिकावस्थेति द्रष्टव्यम्। अत्र च बालत्वयुवत्वावस्थाद्वयापन्नशरीरविशिष्टवस्त्वैक्यमनुरूपो दृष्टान्तः। अत एव वक्ष्यति "स एवायं तरुणोऽभूत्" इति। यद्वा अवस्थाद्वयापन्नत्वं चिदचितोर्विशेषणम्। भिन्नकालीनावस्थारूपसद्वारकविशेषणाश्रयधर्म्यैक्यमिति वक्ष्यमाणग्रन्थस्वारस्यादिति द्रष्टव्यम्। **वस्त्वैक्यहानिरिति;** विशिष्टवस्त्वैक्यहानिरित्यर्थः। नन्वस्यां योजनायां निष्कृष्टजगद्वाचिजगच्छब्दोऽध्याहर्तव्यः; **ब्रह्मशब्दस्य**

च तज्जत्वतल्लत्वहेतुके तदभेदे साध्ये सूक्ष्मचिदचिद्विशिष्टपरामर्शित्वं वक्तव्यम्; सर्वमिदं स्थूलशरीरकं तज्जत्वतल्लत्वाभ्यां सूक्ष्मशरीरकं ब्रह्मेत्यर्थस्याश्रयणीयत्वात्। तदनत्वे हेतौ ब्रह्मशब्दो ब्रह्मविशिष्टपरः; न तु सूक्ष्मचिदचिद्विशिष्टपरः, विशिष्टस्यान्तर्यामित्वात्। अतो ब्रह्म-शब्दवैरूप्यम्। तज्जलानित्यत्रैकस्यैव तच्छब्दस्य जन्मलययोः सूक्ष्मचिदचिद्विशिष्टपरामर्शित्वम्; अनेन तु ब्रह्मत्वविशिष्टविशेष्यमात्रपरामर्शित्वम्। "सर्वं खल्विदं ब्रह्म" इति जगद्विशिष्ट-ब्रह्माभेदं प्रतिज्ञाय विशेषणभूते जगति तदनत्वलक्षणतदन्तर्यामित्वरूपहेतूपन्यासे हेतोर्वैय-धिकरण्यं, ब्रह्मकार्यतया तदन्तर्यामिकतया चेति चशब्देन ब्रह्मकार्यत्वतदन्तर्यामिकत्वयोस्त-दात्मकत्वोपपादनत्वं च स्वरसतः प्रतीयते; इत्येतत्सर्वं हृदि निधायाह—**यद्वा कृत्स्नस्य जगत इति निष्कर्षकः शब्द इति**। नन्वस्मिन् पक्षे भाष्ये तत्कार्यतयेत्यत्र तत्कार्यत्वमात्रं विवक्षितम्? उत तदुपादेयत्वम्? नाद्यः, कार्यत्वमात्रस्यापृथक्सिद्धत्वरूपतदात्मकत्वाप्रयोजक-त्वात्। इतरथा घटस्य दण्डापृथक्सिद्धत्वरूपतदात्मकत्वप्रसङ्गात्। ब्रह्मोपादेयत्वं तु जगतो नास्त्येव, तद्भिन्नत्वात्; उपादानोपादेययोरभेदावश्यंभावात्। किंच तदुपादेयत्वं मुख्यैक्य-साधकं लोके दृष्टम्। तदन्तर्यामिकत्वममुख्यैक्यसाधकम् अतः कथं द्वयोरेकस्मिन्नैक्ये समुच्चयेन साधकत्वमिति चेत्, उच्यते—उपादेयत्वमेवापृथक्सिद्धत्वरूपतदात्मकत्वसाधकम्। न चोपादानोपादेययोरभेदात् उपादेयत्वं कथमपृथक्सिद्धत्वसाधकं स्यादिति वाच्यम्, मृद्घटयोरभेदेऽप्यपृथक्सिद्धिसंभवात् पृथक्सिद्ध्यभावमात्रस्य भेदेऽप्यविरुद्धत्वात्। न च जगतो ब्रह्मभिन्नस्य कथमुपादेयत्वमिति वाच्यम्, भाव्यवस्थायोगि ह्युपादेयं, पूर्वावस्थायोगि ह्युपादानमित्यभ्युपगम्यते, भाव्यवस्थावत्त्वं च जगतोऽप्यस्ति; तद्द्वारा ब्रह्मणोऽपि। अतो द्वयोरपि पूर्वावस्थावत्सूक्ष्मजगद्विशिष्ट ब्रह्मा पेक्षयोपादेयत्वम्। ननु जगतोऽप्युक्तरीत्या पूर्वावस्थावत्त्वात् उत्तरावस्थायोगि ब्रह्म प्रत्यप्युपादानत्वप्रसङ्ग इति चेत्, तस्योपादानत्वे प्रमाणाभावात्। न च पूर्वावस्थायोगित्वादन्यस्योपादानत्वस्याभावात् कथं नातिप्रसङ्ग इति वाच्यम्, तदतिरिक्तधर्मविशेषस्य तल्लक्षणत्वात्। उपादानमित्यभियुक्तव्यवहार-विषयत्वमेवोपादानत्वमित्येवंरूपस्य लक्षणस्य संभवात्। नन्वस्मिन्पक्षे "सर्वं खल्विदं ब्रह्म" इति वाक्ये ब्रह्मशब्दस्य ब्रह्मापृथक्सिद्धे लक्षणाप्रसङ्गः। सर्वस्यापि जगतो ब्रह्मोपादेयत्वात् ब्रह्मान्तर्यामिकत्वाच्च ब्रह्मापृथक्सिद्धमित्यर्थस्याश्रयणीयत्वादिति चेत्, इष्टापत्तिरिति भावः। **विशिष्टान्तर्भाव एवैक्यमित्यर्थ इति**; ततश्च तदात्मक-

त्वेनैक्यादिति भाष्ये तृतीयार्थो न विवक्षितः। तदात्मकत्वप्रयोज्यस्यैक्यान्तरस्याभावात्, तदात्मकत्वमेवैक्यमित्यर्थ इति भाष्याभिप्राय इति भावः। अत्र केचित्— यथा ज्ञानाकारस्वरूपतया सर्वजीवानामैक्यम्, एवं चिदचिद्वस्तूनां ब्रह्मप्रकारत्ववेषेणैवैक्यमित्यर्थः। न तु चिदचिद्वस्तूनां ब्रह्मणश्चैक्यमेकविशिष्टान्तर्गतत्वमित्यर्थः, "एकधैवानुद्रष्टव्यम्" इत्युत्तरत्र तथार्थविवरणादित्येव भाष्यार्थं वर्णयन्ति। **नेह नानास्तीति प्रकरणे श्रूयत इति ;** कठवल्ल्यामपि "यदेवेह तदमुत्र यदमुत्र तदन्विह" इत्यैक्यविधिशेषत्वमेव "नेह नानास्ति" इति वाक्यस्येति द्रष्टव्यम्। **केषुचिद्वाक्येषु तस्य कण्ठोक्तत्वादिति** भाष्ये केषुचिद्वाक्येषु छागपशुन्यायस्य कण्ठोक्तत्वादित्यर्थः। अत्र भेदनिषेधकतयोदाहृतवाक्यानां प्रकारिभेदनिषेधकत्वस्यैव प्रतिपिपादयिषितत्वात् तदुपपादकतया प्रकारभेदविधायकवाक्यमुदाहृत्य तेन कार्यभेदप्रतिपादकवाक्यस्य प्रदर्शनं कर्तुमुचितम्। न तु कार्यभेदविधायकवाक्यमुदाहृत्य तेन प्रकारभेदविधायकवाक्यप्रदर्शनमुचितमित्यपरितोषादुदाहृतवाक्यस्यैवोभयविधभेदविधिपरत्वं दर्शयति—**यद्वा छान्दोग्य इत्यादिना। इयं श्रुतिरि**त्यत्र 'इयम्' इति व्याख्येयं पदम्। **स्वनिष्ठो द्रष्टेति ;** स्वनिष्ठत्वेन मन्यमानो द्रष्टा स्वनिष्ठत्वेन मन्यमानेन करणेन स्वनिष्ठत्वेन मन्यमानं कर्म पश्यतीत्यर्थः। कर्तृकरणकर्मसु स्वनिष्ठत्वभ्रमो भवतीति पर्यवसितोऽर्थः। हेत्वन्तरमाह—**अस्येत्युक्तेरिति।** पुरुषविशेषं प्रत्यात्मत्वमिति वक्तुमशक्यत्वात् साक्षात्काराभिप्राय एव 'अभूत्' इति शब्द इति भावः। **स्वनिष्ठं किंचिदपि नास्तीत्यर्थ इति ;** कुत्रापि स्वनिष्ठत्वभ्रमो नास्तीत्यर्थः।

### श्रुतप्रदीपिका

अथ भेदनिषेधमाह—**यदिति।** परिहरति—**तदिति।** तज्जत्वतल्लत्वाभिप्रायेणाह—**ब्रह्मकार्यतयेति।** तदनत्वाभिप्रायेणाह— **तदन्तरिति।** तदन्तर्यामित्वशब्देन तदात्मकत्वविवरणम्। तदात्मकत्वाच्चेति तदन्वयः। हेतुत्रयशङ्काव्युदासाय प्राक् निर्देशः। व्यतिरेकस्यान्वयशेषत्वादैक्यविधिशेषो भेदनिषेधो मृद्घटैक्यवत् नीलोत्पलैक्यवच्च कार्यकारणैक्यं प्रकार्यैक्यं च विहितमिति तद्विरोधिभेदविषय इत्यर्थः। गोबलीवर्दनयमभिप्रयन्नाह—**न पुनरिति ;** सामान्यनिषेधस्य विहितविशेषातिरिक्तविषयत्वादित्यर्थः। सामान्यविशेषनिश्चयश्च "न तत्समश्च" इत्यादिना स्वतन्त्ररूपभेदविशेषनिषेधादिति भावः। "एकः सन् बहुधा"

" बहु स्यां प्रजायेय " इत्यादिषु लोकसिद्धो भेदोऽनूद्यत इति शङ्कते—**नानात्वेति ।** परिहरति—**नेति ;** अप्राप्तत्वादित्यर्थः । घटादौ स दृष्टश्चेद्भेदोऽपि दृष्टः । जीवपरैक्यं चेत् धार्यत्वधारकत्वादिरपि तथेति भावः ।

**न्यायसुदर्शनम्**

" नेह नानास्ति किंचन " इत्यादिभिर्नानात्वनिषेधे भेदश्रुतीनां विषयानपहार-सिद्ध्यर्थं नानादिशब्दार्थपर्यालोचनया च स्तम्भदण्डकुण्डलादिवत् पृथक्सिद्धिलक्षणो भेद एव निषेध्यः, न जातिगुणशरीरशक्त्यादिवदपृथक्सिद्धभेद इत्यर्थः । तदेतद्भास्करा-चार्यैरप्युक्तम्—" गुणकृतं कार्यकृतं वा नानात्वं न दोषायास्माकम् ; प्रत्युतालंकाराय " इति । अस्माकं त्वेवं व्यवहारः—गुणकृतं शरीरकृतं च ब्रह्मणो नानात्वं न दोषाय, प्रत्युता-लङ्कारायैवेति । कार्यकृतं तु नानात्वं ब्रह्मणः शरीरस्यैव संभवेत् ; न केवलब्रह्मस्वरूपस्य, तस्याविकारित्वादिति वक्ष्यामः ।

अयं चात्र विवेकः—" सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद " इत्याद्याः साक्षादेव पृथक्सिद्धिलक्षणभेदनिषेधपराः । " नेह नानास्ति किंचन " " एकधैवानुद्रष्टव्यम् " इतीदं वाक्यं सर्वपदार्थानां ब्रह्मात्मकत्वैकाकारताविधिमुखेन विरूपनिषेधपरम् । विरू-पार्थवाची हि नानाशब्दो न भेदमात्रवाची । " नानाबीजेष्वेकमुलूखलं विभवात् " इत्यत्र तथा दर्शनात् । " अग्नये ग्रहपतये पुरोडाशमष्टाकपालं निर्वपति " " कृष्णानां व्रीहीणाम् " " सोमाय वनस्पतये श्यामाकं चरुम् " इत्यादिषु " नानामनसः खलु वै पशवो नानाव्रताः " इत्यस्य प्रतियोगित्वेन नानाशब्दस्य प्रयोगाद्विचित्रार्थवाची नानाशब्द इति गम्यते । न च प्राक्सिद्धवैरूप्यमपि बाध्यते, तथा सति " एकधैवानुद्रष्टव्यम् " इत्यनुशब्दार्थवीप्सानुपपत्तेः । भेदसद्भावे हि वीप्सोपपत्तिः । कृत्स्नभेदनिषेधे एकमेवेति श्रवणं स्यात्, नैकधेति पूर्वोत्तरवाक्ये असङ्गतार्थे स्यातामित्यर्थः । तस्मात्प्राक्सिद्धभेदा-जहत्सर्वपदार्थानां ब्रह्मात्मकत्वलक्षणापूर्वैकाकारत्वमत्र विधीयते—" नेह नानास्ति किंचन " " एकधैवानुद्रष्टव्यम् " इति । इह ब्रह्मणि दृश्यमाने न किंचिदपि नानाभूतं भवति ; सर्वं तदात्मकत्वेन एकजातीयवत् एकाकारमवभासत इति जगति न किंचिदपि नानाभूत-मस्तीति, ब्रह्मात्मकत्वेनैकजातीयत्वात् कृत्स्नस्य जगतः ; अन्यथा " यस्मिन् पञ्च पञ्च-जना आकाशश्च प्रतिष्ठितः " इत्याद्युपक्रमविरोधः ; " सर्वस्य वशी सर्वस्येशानः " इत्युप

संहारविरोधश्च । यथा ह्रस्वदीर्घशुक्लकृष्णादीनां गवामेव गोत्वैकाकारानुवृत्तिः, एवमन्यत्राप्यनेकरूपाणामेव भावानां ब्रह्मात्मकत्वैकाकारता न विरुद्धा । तद्विवक्षया नानात्वनिषेधश्चेति । इयान्विशेषः—आत्मत्वेन ब्रह्म सर्वेषु प्रधानतयानुवर्तते ; जातिस्तु गुणभावेन । सर्वथैकाकारता तेषां द्रव्याणां सिध्यति । ततो जातिरप्रधानतया व्यक्तेरपृथक्सिद्धा । ब्रह्मणस्तु प्रधानतया तदपृथक्सिद्धं सर्वं जगदित्यनेन प्रकारेण पृथक्सिद्धिरेव सर्वस्य निषिध्यत इति पृथक्सिद्धिलक्षणभेदनिषेधपरा भेदनिषेधश्रुतय इत्युच्यते । अपृथक्सिद्धानेकविशेषणविशिष्टताप्रतिपादनेन ब्रह्मणः स्वगतनानात्वमेव ज्ञाप्यत इति । अथवात्र विकारलक्षणनानात्वं ब्रह्मस्वरूपस्य निषिध्यते । "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः" इति पूर्वस्मिन्वाक्ये प्राणादि सर्वं ब्रह्माधीनस्वकार्यमित्येव यथाश्रुताकारेण प्राणादिविकारैः प्राणादिरूपेण ब्रह्मणो नानाभाव आशङ्कितः स्यात्, स नास्तीत्याह—"नेह नानास्ति" "एकधैवानुद्रष्टव्यम् ।" "एतदप्रमेयं ध्रुवम्" इति । इह ब्रह्मणि न किंचिदपि विकाररूपनानात्वमस्ति ; किंतु सदैकरूपं ध्रुवमेव द्रष्टव्यमित्यर्थः । एतेन तमःशरीरकस्य कारणभूतस्य ब्रह्मणो "बहु स्याम्" इति संकल्पितस्य बहुभवनस्य न निषेधः—किंतु अन्तर्यामिरूपेणावस्थितस्य तत्तद्रूपस्य तत्तत्संबन्धाधीनविकारदोषप्रसङ्गनिषेधः—तद्ब्रह्म सर्वत्रैकप्रकारमेवानुद्रष्टव्यमिति । अथवा "सर्वं खल्विदं ब्रह्म" "आत्मैवेदं सर्वम्" इत्यादिभिः मृत्पिण्डस्य घटशरावादिरूपेण नानाभाववत् स्वरूपपरिणामेन बहुत्वमुच्यमानमाशङ्क्य तन्निषेधः क्रियते—शरीरद्वारा तस्य नानात्वं न स्वरूपत इति ।

श्रीभाष्यम्

"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति" इति ब्रह्मणि नानात्वं पश्यतो भयप्राप्तिरिति यदुक्तम् ; तदसत्, "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति तन्नानात्वानुसंधानस्य शान्तिहेतुत्वोपदेशात् । तथाहि—सर्वस्य जगतस्तदुत्पत्तिस्थितिलयकर्मतया तदात्मकत्वानुसंधानेनात्र शान्तिर्विधीयते । अतो यथावस्थितदेवतिर्यङ्मनुष्यस्थावरादिभेदभिन्नं जगद् ब्रह्मात्मकमित्यनुसंधानस्य शान्तिहेतुतयाऽभयप्राप्तिहेतुत्वेन न भयहेतु-

त्वप्रसङ्गः । एवं तर्हि "अथ तस्य भयं भवति" इति किमुच्यते? इदमुच्यते—"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति" इत्यभयप्राप्तिहेतुत्वेन ब्रह्मणि या प्रतिष्ठाभिहिता, तस्या विच्छेदे भयं भवतीति । यथोक्तं महर्षिभिः—

"यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते ।
सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिया ॥"

इत्यादि । ब्रह्मणि प्रतिष्ठाया अन्तरमवकाशो विच्छेद एव । यदुक्तम्—"न स्थानतोऽपि" इति सर्वविशेषरहितं ब्रह्मेति वक्ष्यतीति, तन्न; सविशेषं ब्रह्मेत्येव हि तत्र वक्ष्यति । "मायामात्रं तु" इति च स्वाप्नानामप्यर्थानां जागरितावस्थानुभूतपदार्थवैधर्म्येण मायामात्रत्वमुच्यत इति जागरितावस्थानुभूतानामिव पारमार्थिकत्वमेव वक्ष्यति ।

श्रुतप्रकाशिका

"यदा ह्येवैषः" इत्यादिश्रुतिमुपादाय तत्र "ब्रह्मणि" इत्यादिना पूर्वपक्षिणोक्तमर्थमनूद्य दूषयति—**तदसदिति** । **तदसत्**; भयप्राप्तिहेतुत्वं नेत्यर्थः । कुत इत्यत्राह—**सर्वमिति** । ब्रह्मणः कार्यजगद्रूपेण नानात्वानुसंधानं मुक्तिहेतुरिति सिद्धान्तार्थः । इदानीं परोक्तं शान्तिहेतुत्वमभ्युपगम्योक्तम् । कथं तत्र नानात्वानुसंधानप्रतीतिः? कथं वा तस्य भयप्राप्तिहेतुताविरोधित्वमिति शङ्कायामेतद्विवृणोति—**तथाहीति** । अत्र नानात्वानुसंधानप्रतीतिं दर्शयति—**सर्वस्येति** । न हि 'केवलं ब्रह्म' इत्युक्तम्; अपितु "इदं सर्वं ब्रह्म" इति ह्युक्तम् । सर्वशब्दश्च विविधभेदप्रपञ्चपरः । अतो नानात्वविशिष्टब्रह्मानुसंधानं प्रतीतमित्यर्थः । ततः किमित्यत्राह—**अत इति** । नानात्वानुसंधानस्य शान्तिहेतुत्वद्वारा समस्तभयनिवृत्तिरूपमोक्षोपायत्वात् भेदबुद्धेर्भयप्राप्तिहेतुत्वोक्तिस्तद्विरुद्धेत्यर्थः । ननु मणिकृपाणदर्पणादिगतप्रतिबिम्बेष्विव देहेषु रागद्वेषादिनिवृत्त्यर्थं सर्वस्य ब्रह्मण्यध्यस्ततानुसंधानविधिः किं न स्यात्? नैवम्; प्रवृत्तिनिमित्तभेदेनैकार्थवृत्तित्वं हि सामानाधिकरण्यमित्युपपादितत्वात्, बाधार्थत्वस्य वक्ष्यमाणदूषणोपहतत्वाच्च । अथ चोद्यपूर्वकमेतच्छुत्यर्थमाह—**इदमुच्यत**

इति । **अदृश्य** इत्यचिद्व्यावृत्तिः । **अनात्म्य इति** बद्धव्यावृत्तिः । स हि *परमात्मना व्याप्यः । यद्वा **आत्म्यं** व्याप्यं कर्मकृतशरीरम् ; तद्रहितोऽनात्म्यः । **अनिरुक्त इति** मुक्तव्यावृत्तिः । स हि बद्धावस्थायां देवादिशब्दैर्निरुक्तः । **अनिलयन इति** नित्यमुक्तव्यावृत्तिः । तेषां हि भगवानाधारः । स्वोक्तार्थविषयमुपबृंहणं दर्शयति—**यथोक्तमिति ।** **हानिः**, इष्टहानिः । **छिद्रम् ;** अनिष्टप्राप्तिरन्ध्रम् । **भ्रान्तिः ;** तत्कृतचित्तस्खलनम् । **विक्रिया ;** तेनाज्ञानामवशादयथायथव्यापारः ।

"एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते ।
दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृशम् ॥"
"वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः ।
न शौरिचिन्ताविमुखजनसंवासवैशसम् ॥"

---

* परमात्मना व्याप्य इति । आत्मना व्याप्यमात्म्यमिति व्युत्पत्तिः । तेभ्यः प्रयोगेभ्यो हिताः तद्धिता इत्यन्वर्थसंज्ञाविज्ञानात् आत्मन्शब्दात् व्याप्यमित्यर्थे ड्यप्रत्ययो बोध्यः । व्युत्पत्त्यन्तरमाह—यद्वेति । आप्नोतीत्यात्मा इतिवत् आप्यत इत्यात्म्यमिति आप्धातोः कर्मणि व्युत्पत्तिरवगन्तव्या । आत्मना व्याप्यत्वात् शरीरमुच्यते । अनात्म्ये अशरीर इत्यर्थः । अत्रात्म्यशब्दस्य शरीरार्थकत्वं शंकराचार्यैरप्युक्तम्— "अनात्म्ये अशरीरे" इति । व्याख्यातं च सुरेश्वरवार्तिके—

"दृश्यान्वयि हि यद्वस्तु तदात्म्यमिति भण्यते ।
स्वतो ह्यस्यात्मदारिद्र्यादर्हार्थं लभते च यत् ॥
स्याद्वा जाग्रदवस्थेयं दृश्यत्वेन प्रसिद्धितः ।
कोशत्रयमिहात्म्यं स्यादात्मार्थत्वसमन्वयात् ॥" इति ।(7 ख. 138, 139 श्लो.)

अत एव "ऐतदात्म्यमिदं सर्वम्" इत्यत्र एतेन आत्मना व्याप्यमिति वा, एतेन आत्म्यं व्याप्यमिति वा व्युत्पत्तिमभिसंधाय दशोपनिषद्भाष्यकारैः "उपादानभूतेनान्तर्यामिभूतेन च ब्रह्मणा व्याप्यमित्यर्थः" इति भाषितम् । आत्म्यशब्दस्य शरीरार्थकतया औपनिषदीं प्रसिद्धिमालम्ब्य 'एतस्य आत्म्यं शरीरमिदं सर्वम्' इत्यर्थोऽपि स्वरस इति प्रतिभाति । इदमत्रावधेयम्—"स एषोऽणिमैतदात्म्यमिदं सर्वम्" इति संहितापाठे अणिमा ऐतदात्म्यमितिपदच्छेदमभिसंधाय स्वार्थेष्यञ् पूर्वाचार्यैरुपवर्णितः—एतदात्मैव, एतदात्म्यमेव वा ऐतदात्म्यमिति । एतेनात्मना व्याप्यम्, एतेनात्म्यम्, एतस्यात्म्यमिति वा उपदर्शितव्युत्पत्तौ तु एतदात्म्यमित्यपि साधुशब्दः संभवतीति तथैव पदच्छेदं कृत्वा स्वार्थे ष्यञमगतिकमतिमनालम्ब्यैव निर्वाहः संभवति, यदि एतदात्म्यमिति कुत्रचित् प्रामाणिकः पाठः स्यादिति ।

इत्यादिवचनान्यादिशब्दविवक्षितानि । भेदवाचिनोऽन्तरशब्दस्य विच्छेदार्थकत्वं कथमित्यत्राह—**ब्रह्मणीति** । अविच्छिन्नं हि ध्यानं निरन्तरमित्युच्यते । अतोऽन्तरं विच्छेद एव । स कस्येत्यपेक्षायां प्रतिष्ठायाः प्रकृतत्वात्तस्या विच्छेदः । प्रकृतब्रह्मविषये "तदप्येषः" इत्युदाहृते "भीषास्मात्" इत्यनन्तरश्लोके वायुसूर्यादिसर्वचेतनप्रशासितृत्वकथनादन्तरशब्दस्योपासनविच्छेदपरत्वमेव युक्तम्, न तु भेदपरत्वम् । अतोऽयमर्थः पूर्वापरश्रुत्यन्तरवाक्यानुगुणः, उपबृंहणानुगुणश्च । परोक्तस्तु तदुभयविरुद्ध इति भावः । ननु "यदा ह्येवैषः" इत्यत्र प्रतिष्ठाविच्छेदोऽर्थश्चेत् 'एतस्याम्' इति स्त्रीलिङ्गता स्यात् । "अदितिः पाशान्" इति न्यायात् विभक्त्यवगतनपुंसकत्वाविवक्षेति चेत्, तथाप्यस्वारस्यमवर्जनीयम् । तच्च स्वरसार्थे संभवति नोपपद्यते । सप्तमी चास्वरसा । 'तस्या विच्छेदः' इति ह्युक्तिः स्वरसा, न तु 'तस्यां विच्छेदः' इति । प्रातिपदिकास्वारस्यं च प्रतिष्ठापरत्वे स्यात् । पूर्ववाक्ये "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्ये" इति ब्रह्मपरतया प्रयुक्तस्य 'एतस्मिन्' इति पदस्यानन्तरवाक्येऽपि बुद्धौ विपरिवृत्तेः । उच्यते—न तावल्लिङ्गसप्तम्योः प्रातिपदिकस्य चास्वारस्यम्, ब्रह्मपरामर्शित्वादेतच्छब्दस्य । अन्तरशब्दश्चावकाशपरः, 'निरन्तरं, सान्तरम्' इति प्रयोगात् । अन्तरं च देशतः कालतश्च भवति । कालकृतं चान्तरं विच्छेद एव । नन्वेवं सति कस्य विच्छेद इत्यपेक्षायां 'प्रतिष्ठाया अन्तरम्' इत्यध्याहारः स्यात्; तच्चायुक्तम्ः, अनध्याहारेण निर्वाहसंभवादिति चेत्—न; संनिधिलब्धस्यार्थस्याध्याहारनिरपेक्षत्वात् । अथाप्यस्वारस्यमिति चेत्; तद्वरम्, पक्षान्तरे बह्वस्वारस्यसंभवात् । तथाहि—भयहेतोरभयहेतुप्रतियोगित्वादभयहेतुपरप्रतिष्ठापदस्यैक्यवाचित्वाभावात् वाक्यवृत्तेरसामञ्जस्यम् । तत्सामञ्जस्याय प्रतिष्ठाशब्दस्यैक्यपरत्वे मुख्यार्थहानिः । दृढसंबन्धो हि प्रतिष्ठा; यथा 'राज्ये प्रतिष्ठितः' इति । प्रथमप्रतिपन्नप्रतिष्ठापदस्यार्थभङ्गश्चानुपपन्नः । पूर्वसिद्धैक्यावगतिपरत्वात् विन्दतिधात्वर्थस्यास्वारस्यं च । सप्तमी चास्वरसा, भेदप्रतियोगित्वावधित्वसंबन्धविवक्षायां तृतीयापञ्चमीषष्ठीनामेव स्वारस्यात् । करोतेः प्रतिपत्त्यर्थत्वादस्वारस्यं च । 'मनसि कुरुते' इति योजनायामध्याहारः । "एष ह्येवानन्दयाति" इति पूर्ववाक्यप्रतिपन्नभेदविरोधश्च । अनन्तरं च "भीषास्मात्" इति प्रशासितृत्वेन भेद उच्यते । अतो मध्ये भेदनिषेधश्चानुपपन्नः । "आनन्दं ब्रह्मणो विद्वान्; न बिभेति कुतश्चनेति, कदाचनेति" इति पूर्वापरवाक्ये गुणविशिष्टवेदनस्याभयहेतुत्वोक्तेर्ब्रह्मणि भेदनिषेधस्याभयहेतुत्वकथनं च

विरुद्धम् । "ब्रह्मविदाप्नोति" इति विद्युपक्रमत्वाच्च ब्रह्मणि प्रतिष्ठाया वेदनरूपत्वमेव युक्तम्, न त्वैक्यरूपत्वम् । न ह्यैक्यतद्बुद्ध्योरुभयस्य च प्रतिष्ठाशब्दवाच्यत्वम् । दृढसंबन्धवाचिनः प्रतिष्ठाशब्दस्य तूपास्यं ब्रह्म प्रत्युपासकतया संबन्धे पर्यवसानं युक्तम् । ब्रह्मणो निर्विशेषत्वे व्यतिरिक्तमिथ्यात्वे च परोक्तं सूत्रद्वयं परिहरति— **यदुक्तमिति** ।

## भावप्रकाशिका

**अदितिः पाशानिति न्यायादिति** ; "अदितिः पाशान् प्रमुमोक्तु" इत्यत्र बहुवचनप्रतिपादितमपि बहुत्वं न विवक्षितम् ; एवम् "एतस्मिन्" इति विभक्तिविकार-सूचितं पुंनपुंसकान्यतरत्वमपि न विवक्षितमित्यर्थः । **तथाप्यस्वारस्यमवर्जनीयमिति** ; अत एव हि दशमे "बार्हस्पत्यं ग्रहं गृह्णाति" इत्यत्र प्राकृतग्रहानुवादेन देवताविधाने तेषां बहुत्वादेकवचनमयुक्तमिति उद्देश्यगतत्वेनाविवक्षायामप्यभिधानबाधोऽवर्जनीय इत्युक्तम् । किंच "प्रास्मा अग्निं भरते" इति मन्त्रस्य सारस्वतेष्ट्यां प्रातिपदिकार्थभूतलिङ्ग-विरोधादप्रवृत्तिरिति नवमे स्थापितमिति भावः । **तथाप्यस्वारस्यमिति चेदिति** ; समभिव्याहृतपदाप्रतिपन्नत्वादिति भावः । **अभयहेतुप्रतियोगित्वादिति** ; पूर्ववाक्येऽभय-हेतुतया यदुपन्यस्तं तद्विरुद्धस्यैव भयहेतुत्वेन प्रदर्शनौचित्यादिति भावः । **पूर्वसिद्धैक्येति** ; "विद्लृ लाभे" इति धातोरेव शविकरणपठितादस्य रूपस्य संभवात् "विद ज्ञाने" इत्यस्यावगत्यर्थस्य लुग्विकरणपठिततया परस्मैपदितया चास्य रूपस्यासंभवात् । न च लाभार्थत्वेऽप्यैक्यमिदानीं लभत इति वक्तुं शक्यमिति शङ्क्यम्, ऐक्यस्य पूर्वसिद्धत्वादिति भावः । **प्रतियोगित्वावधित्वेति** ; साहित्यप्रतियोगित्वविवक्षायां 'घटेन सह भेदः' इति तृतीया, अवधित्वविवक्षायां 'घटाद्भेदः' इति पञ्चमी; संबन्धविवक्षायां 'घटस्य भेदः' इति षष्ठीति भावः ।

## श्रुतप्रदीपिका

"यदा ह्येव" इति श्रुतेरर्थं वक्तुं परोक्तमनुवदति—**यदेति** । दूषयति—**तदिति** । कुत इत्यत्राह—**यदेति** । दूषयति—**तदिति** । कुत इत्यत्राह—**सर्वं खल्विति** । शान्तिहेतुत्वं पराभ्युपगमेनोक्तम् । अस्मिन्वाक्ये कथं नानात्वधीः? तस्याश्च कथमभयविरो-धित्वमित्यत्राह—**तथाहीति** । **तदुत्पत्तीत्यादौ** उत्पत्त्यादिशब्दा अन्तर्भावितणिजर्थत्वेनो-त्पादनादिप्रयोजकव्यापारपराः । अतः सर्वस्य कर्मत्वम् । उत्पत्त्यादिः क्रिया यस्येति

बहुव्रीहिर्वा । ततः किमित्यत्राह—**अत इति ;** सद्द्वारकमभयहेतुत्वमित्यर्थः । "यदा ह्येव" इति वाक्यस्यार्थं परः पृच्छति—**एवं तर्हीति** । स्वयं वक्ति—**इदमिति** । दृश्यम् अचेतनम् । आत्म्यं शरीरम् , व्याप्यत्वात् । मुक्तोऽपि बद्धदशायां देवादिशब्द-निरुक्तः । नित्याश्च भगवद्धार्याः । उपबृंहणमाह—**यथेति** । **हानिः;** इष्टहानिः । **छिद्रम्;** अनिष्टप्राप्तिरन्ध्रम् । **भ्रान्तिः;** चित्तविकारः । **विक्रिया;** देहविकारः । विच्छेदवाचि पदं किमित्यत्राह—**ब्रह्मणीति;** निरन्तरशब्दस्याविच्छेदपरत्वप्रसिद्धेरिति भावः । चिद्ब्रह्मनिर्विशेषत्वान्यमिथ्यात्वपरत्वेन परोदाहृतयोः सूत्रयोस्तद्विपरीतार्थत्वमाह—**यदुक्तमिति** ।

### नयप्रकाशिका

"न स्थानतोऽपि" इत्यादि सूत्रमपि हेयगुणरहितकल्याणगुणकब्रह्मपरमेवेत्युत्तर-त्रोक्तम् । "मायामात्रम्" इत्यत्र स्वप्नसृष्टेः परमार्थत्वं परमात्मकर्तृकत्वं च तत्रैवोक्तम् ।

---

**इति श्रुतिघट्टः**



# स्मृतिपुराणघट्टः

श्रीभाष्यम्

स्मृतिपुराणयोरपि निर्विशेषज्ञानमात्रमेव परमार्थोऽन्यदपारमार्थिकमिति प्रतीयत इति यदभिहितम्—तदसत् ;

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।"
"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ।
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ।"
"अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।"
"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।"
"उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

श्रुतप्रकाशिका

अथ स्मृतिपुराणयोः सविशेषपरत्वमुपपादयति—**स्मृतिपुराणयोरिति** । स्मृतीत्यादिना सामान्येन प्रमाणस्य तदवान्तररूपस्य शब्दस्य च सविशेषवस्तुपरत्वोपपादनात्, शास्त्रस्य प्रत्यक्षविरुद्धार्थप्रतिपादनासामर्थ्योपपादनाद्विशेषेण वेदान्तवाक्यानां सविशेषपरत्वोपपादनेन स्मृतिपुराणयोः श्रुतिविरुद्धार्थे प्रामाण्यासंभवाच्च तयोः सविशेषपरत्वं सिद्धम् । इदानीं स्मृतिपुराणयोरपि परोदाहृतवचनानां पूर्वापरपर्यालोचनया सविशेषपरत्वमुपपाद्यते । यथा लौकिकप्रमाणश्रुतिविरुद्धानर्थान्नेदं शास्त्रं प्रतिपादयति, एवमेव पूर्वापरवाक्यविरुद्धमप्यर्थं

न स्मृतिपुराणानि प्रतिपादयितुं शक्नुवन्तीति भावः। परेण सर्वस्याप्याविधिकत्वाविशेषेण स्वाभाविकवक्तृवैषम्यानभ्युपगमादद्वैतस्पष्टताभ्रमाच्च पूर्वं पुराणवचनान्युपन्यस्य पश्चाद्भगवद्गीता-वचनान्युदाहृतानि। अत्र तु स्वाभाविकवक्तृवैषम्याभ्युपगमादनन्तगुणविभूतिमत्त्वस्य स्पष्टतया च भगवद्गीतावचनानि पूर्वमुपन्यस्य पश्चात्पुराणवचनानि प्रदर्श्यन्ते। अतः स्मृतिपुराणयो-रित्युक्तम्। परेण स्वोदाहृतवचनप्रतिपाद्यतया योऽर्थोऽभिहितः, तद्विपरीतार्थपरत्वेन स्पष्ट-तमानि वचनानि प्रथमं प्रदर्श्यन्ते पश्चात्तदविरोधेन परोक्तवचनानामर्थप्रतिपादनार्थम्—**यो मामिति**। अत्र **अजमिति** पदेनाचित्संसृष्टचेतनव्यावृत्तिः। **अनादिमिति** मुक्तव्यावृत्तिः। तस्याजत्वं ह्यादिमत्। **लोकमहेश्वरमिति** नित्यमुक्तव्यावृत्तिः। लोक्यत इति लोकः; प्रमाणसिद्धत्रिविधचेतनाचेतनवर्गः। अत्रोत्तरार्धोऽप्यनुसन्धेयतयाभिप्रेतः—"असंमूढः स मर्त्येषु" इति। चेतनाचेतनविलक्षणत्वेन जानन्नसंमूढ इति कथनात् सर्ववैलक्षण्यं तात्त्विक-मित्युक्तं भवतीत्यभिप्रायः। धारकत्वादिभिर्वैलक्षण्यं वैशद्यार्थमुपादत्ते—**मत्स्थानीति**। अत्र शरीरलक्षणं सूचितं भवति। सर्वभूतानि मदायत्तस्थितीनि, नाहं तदायत्तस्थितिरित्यर्थः। लोकदृष्टप्रकारेण नाहमाधारः, अपितु संकल्पमात्रादित्याह—**न चेति**। निषेधस्य विहित-व्यतिरिक्तविषयत्वादयमेवार्थः। **योगमैश्वरम्**; ईश्वरासाधारणं सर्वशक्तियोगमित्यर्थः। "न च मत्स्थानि" इति धारकत्वपारमार्थ्यनिषेधश्चेत् "योगमैश्वरं पश्य" इति विरुद्धम्; 'मम भ्रान्तिं पश्य' इति हि तदा वक्तव्यम्। "योगमैश्वरम्" इत्येतद्विवृण्वन् इममे-वार्थमाह—**भूतभृदिति**। **ममात्मा**; मम संकल्प इत्यर्थः। आत्मशब्दो हि मतिवाची। "यत्नेऽर्केऽग्नौ मतावात्मा" इति। अतोऽत्रात्मशब्दः संकल्परूपज्ञानवाची। "ममात्मा भूतभावनः" इत्यनेन "न च मत्स्थानि भूतानि" इत्यस्यार्थः स्पष्टीकृतः। **भूतभावनः**; भूतानां सत्तानुवर्तकः। अर्वाचीनस्येश्वरस्य हि सगुणत्वमिति शङ्कायां कारणातिरिक्तवस्तुनिषेध-प्रदर्शनार्थं लक्षणप्रदर्शनार्थं च जगत्कारणत्वमाह—**अहमिति**। प्रभवः प्रलयश्चोक्तः। स्थितिस्तु धारकत्वकथनेन सिध्यतीति धारकत्वं विशिनष्टि—**मयीति**। **विष्टभ्याह**मित्यनेन नियन्तृत्वमुक्तम्। **विष्टभ्य**; अधिष्ठाय। **एकांशेन**; संकल्पैकदेशेन। एतच्छरीरित्व-लक्षणम्। "यो मामजम्" इत्यादिनाभिप्रेतचिदचिद्वैलक्षण्यकण्ठोक्तिं दर्शयति—**उत्तम इति**। पूर्वस्मिन् वचने क्षराक्षरशब्दोक्तौ बद्धमुक्तौ। कूटस्थः निर्विकारः, ज्ञानसंकोचरूपविकारा-भावान्मुक्तस्य। कूटस्थशब्दः साधारणवाची वा। "सर्वेषु लोकेषु कामचारो भवति"

इति मुक्तात्मन उभयविभूतिसाधारणत्वात्कूटस्थत्वम् । **परमात्मेत्युदाहृत** इत्यनेन "परमात्मा व्यवस्थितः" इत्येतद्वाक्यान्वितो नारायणानुवाकः स्मारितः, **अक्षरादपि चोत्तमः** इत्यनेन च। तत्रैव हि "सोऽक्षरः परमः स्वराट्" इत्युक्तम् । ज्ञानसंकोचरूपक्षरणाभावादक्षरो मुक्तः। स्वराट् स्वतन्त्रः । अकर्मवश्यः। परमः ; जीवगतावस्थास्वतः परमुत्कृष्टावस्थान्तराभावात्पारम्यम् । सर्वाणीति पदं ब्रह्मशिवाद्यभिप्रायम् । तस्मिन्ननुवाके हि "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इति बद्धमुक्तजीववाचिपदैः समानाधिकृतैर्भगवानुक्तः । तत्र "विश्वमेवेदं पुरुषः" इति च सामानाधिकरण्यवाक्यं श्रूयते । सामानाधिकरण्यहेतुश्च तस्मिन्ननुवाके स्पष्टः। "तद्विश्वमुपजीवति । पतिं विश्वस्यात्मेश्वरम्" "व्याप्य नारायणः स्थितः" इति च वाक्यजाते धार्यत्वधारकत्वनियन्तृत्वनियाम्यत्वशेषित्वशेषत्वव्याप्यत्वव्यापकत्वादिकमेव सामानाधिकरण्यनिबन्धनम्; न तु तदैक्यमिति स्पष्टम्। तदत्राप्युच्यते—**आविश्येति ;** "व्याप्य नारायणः स्थितः" इत्यस्यार्थ उक्तः । "पतिं विश्वस्य" इत्यस्यार्थ ईश्वरशब्देनोक्तः । । ईश्वरशब्दो हि शेषिवाचकः । अत एव हि "पतिं विश्वस्यात्मेश्वरम्" इत्यत्र पत्यन्तरराहित्यविवक्षयात्मेश्वरमित्युक्तम् । "तद्विश्वमुपजीवति" इत्यस्यार्थो **बिभर्ती**त्युक्तः । तथा "व्यापनाद्भरणात्स्वाम्यादन्यः पञ्चदशोदितः" इति । "यो मामेवमसंमूढः" इति कृत्स्नवैलक्षण्यज्ञानवतोऽसंमूढत्वमुक्तम् । "इति गुह्यतमं शास्त्रम्" इति तस्यार्थस्य गुह्यतमत्वमुक्तम् । अतोऽस्मिन्नर्थे तात्पर्यमिति स्पष्टम् । पुरुषोत्तमशब्दस्य समासासाधुत्वमशङ्कनीयम्, "नागोत्तमादि च सिद्धं भवति" इति महाभाष्यवचनात्; पाणिनिवत् पुरुषोत्तमशब्दनिर्वाहकृतामृषीणामाप्ततमत्वाच्च। पुरुषोत्तम इति पञ्चमीसमासो वा; "अक्षरादपि चोत्तमः" इति ह्युक्तम्। पूर्वनिपातस्तु सामानाधिकरण्यविवक्षायामेव, न तु तदविवक्षायामपीति नानुशासनविरोधशङ्काप्रसङ्गः । एवमेभिर्वचनैश्चिदचिद्वैलक्षण्यस्य प्रतिपादितत्वात् "क्षेत्रज्ञं चापि मां विद्धि" इत्यादेस्तदविरोधेनार्थो वर्णनीयः । "यो लोकत्रयमाविश्य बिभर्ति" इत्यादिना कृत्स्नस्य भगवच्छेषत्वधार्यत्वनियाम्यत्वव्याप्यत्वशरीरत्वादेर्विहितत्वात्, तस्य च निषेद्धुमयुक्तत्वात् "न तदस्ति विना यत्स्यात्" इत्यादिना अतदात्मकस्य नास्तित्वमुच्यते । अविनाभावशब्दस्य मिथ्यात्वपरत्वेन प्रसिद्ध्यभावाच्च तथाभ्युपेत्यमित्यभिप्रायः। विनाशब्दो हि संबन्धविरहपरः, अविनाभावशब्दस्य संबन्धनियमवाचित्वात् ।

भावप्रकाशिका

**अर्थप्रतिपादनार्थमिति ;** पूर्वेणान्वयः ।

"यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥"

इत्ययं श्लोको दशमेऽध्याये ; "मत्स्थानि सर्वभूतानि" इत्यारभ्य सार्धश्लोको नवमाध्याये ; "अहं कृत्स्नस्य जगतः" इति सार्धश्लोको सप्तमाध्याये ;

"अथवा बहुनोक्तेन किं ज्ञानेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥"

इति श्लोको दशमे ;

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥"

इति पञ्चदशेऽध्याये । **अकर्मवश्य इति ;** अकर्मवश्यत्वं परमत्वं चाक्षरशब्दनिर्दिष्टे मुक्तशरीरके भगवति मुक्तद्वारा अन्वेति, "महानुदारः" इत्यादौ महत्त्वस्यौदार्यद्वारान्वयदर्शनात् । न च पारम्यस्वाराज्ययोः साक्षाद्भगवत्यन्वयसंभवे सद्वारकान्वयो न युक्त इति वाच्यम्, ब्रह्मत्वादीनां सद्वारकान्वयवत् पारम्यस्वाराज्ययोरपि प्रायपाठात् सद्वारकान्वयस्यैव वक्तव्यतया संनिहिताक्षरशब्दनिर्दिष्टमुक्तस्यैव द्वारत्वौचित्यादिति भावः । यद्वा अस्मिन् प्रकरणे ब्रह्मादिशब्दा न परमात्मपर्यन्ताः, अपितु भगवद्वाचितच्छब्द एव लक्षणया तच्छरीरपरः । ततः परमः स्वराडक्षरो मुक्तः । स एव तच्छरीरभूत एवेत्यर्थः । **पत्यन्तरराहित्य-**

**विवक्षायामिति ;** भगवतो विश्वपतित्वे कथिते तस्यापि पत्यन्तरमाशङ्क्य " आत्मेश्वरम् " इत्यनेन पत्यन्तरं निषिध्यते । अतः पतीश्वरशब्दयोः तुल्यार्थत्वमिति भावः । **समासासाधुत्वमशङ्कनीयमिति ;** उत्तमश्चासौ पुरुषश्चेति सामानाधिकरण्यविवक्षायाम् " सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः " इति समासे उत्तमपुरुष इति रूपप्रसङ्गात् । " यतश्च निर्धारणम् " " पञ्चमी विभक्ते " इति षष्ठीपञ्चमीसप्तमीपक्षेषु " पञ्चमी भयेन " इत्यादौ उत्तमशब्दाभावात् पञ्चमीसमासाप्रसङ्गात्, षष्ठीसमासस्य " न निर्धारणे " इति निषेधात्, सप्तमीसमासस्य च लक्षणाभावात्साधुत्वसंशय इति भावः । **आप्ततमत्वाच्चेति ;** " सप्तमी " इति योगविभागात् समासो भविष्यतीति भावः । **सामानाधिकरण्यविवक्षायामेवेति ;** " सन्महत्परमोत्तम " इति सूत्रेण समासे हि उत्तमशब्दस्य समासशास्त्रे प्रथमानिर्दिष्टत्वात् " प्रथमानिर्दिष्टं समास उपसर्जनम् " इत्युपसर्जनसंज्ञायाम् " " उपसर्जनं पूर्वम् " इत्युत्तमशब्दस्य पूर्वनिपातः स्यात् । " पञ्चमी " इति वा " सप्तमी " इति वा योगविभागेन समासाश्रयणे पञ्चम्यन्तस्य सप्तम्यन्तस्य वा पुरुषपदस्यैव प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातावश्यंभाव इति भावः ।

### श्रुतप्रदीपिका

श्रुतेः सविशेषविषयत्वेन स्मृत्यादेस्तदनुरोधित्वेन सविशेषार्थत्वे बलादभ्युपेयेऽपि स्मृतिपुराणपूर्वापरालोचनयापि तादात्म्यं विवक्षन्नाह—**स्मृतीति** । स्वतो वक्तृवैलक्षण्योपगमात् स्मृतेः प्रागुपादानम् । तद्धि परस्यावचम् । निर्विशेषपरत्वभ्रमास्पदवचःसामर्थ्यं वक्तुं सविशेषपरवचांसि दर्शयति—**यो मामित्यादिना** । **अजमित्यादिपदैः** अचित्तत्संसृष्टमुक्तनित्यव्युदासः । एवंविधमसंमूढत्वमुत्तरार्धोक्तमप्यभिप्रेतम् । धारकत्वेन व्यावृत्तिं विशदयति—**मत्स्थानीति** । निषेधस्य विहितान्यविषयत्वात् **न चेति** लोकवद्धारणनिषेधः । लौकिकं हि धारणमायासात्, ऐश्वरं तु संकल्पमात्रात् । **योगम् ;** शक्तियोगम् । तत्स्फुटयति—**भूतभृदिति** । **आत्मा ;** संकल्परूपज्ञानम् । गुणा अविद्योपहितस्येश्वरस्य, न तु परस्य ब्रह्मण इति शङ्कायां तस्यैव ब्रह्मलक्षणं परान्तराभावं चाह—**अहमिति** । स्थितिरर्थसिद्धा । मत्तोऽन्यत्परतरं नास्तीत्यन्वयः, समाभ्यधिकनिषेधपरश्रुतिस्मृत्यैकार्थ्यात् । स्थितिहेतुत्वमन्तःप्रविश्यैवेति दृष्टान्तेन विशिनष्टि — **मयीति ;** अनेन शरीरित्वं फलितम् । **विष्टभ्य ;** अधिष्ठाय ; इति नियमनोक्तिः । **एकांशेन ;** संकल्पैकदेशेन । व्यापनभरण-

स्वाम्यैवैलक्षण्यकण्ठोक्तिमाह—**उत्तम इति** । एवंविधासंमूढत्वमुत्तरत्रोक्तमनुसन्धेयम् । नारायणानुवाकार्थः स्मारितः । परमात्मा अक्षरादित्युक्तेः । " उपजीवति " इति धारकतयोपजीव्यत्वम् ; " विश्वमेवेदम् " " स ब्रह्मा " इति सामानाधिकरण्यं पतित्वव्यापकत्वादिभिस्तच्छरीरकतयेति स्फुटम् । " क्षेत्रज्ञं चापि माम् " इत्यत्राप्येवमेव । " न तदस्ति " इत्यतदात्मकत्वनिषेधः । विनाशब्दः संबन्धाभावे, अविनाभावशब्दस्य संबन्धे प्रयोगात् ।

**नयप्रकाशिका**

न स्मृतिपुराणयोरपि निर्विशेषवस्तुपरत्वम्, " यो मामजम् " इत्यादौ ब्रह्मणः सविशेषत्वप्रतीतेः, जगद्विभूतित्वप्रतीतेस्तस्य सत्यत्वप्रतीतेश्च ।

**श्रीभाष्यम्**

" स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद् भुवनान्तराले ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशाद्धृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥"

**श्रुतप्रकाशिका**

अथ पुराणवचनान्युपन्यस्यन्ते । तत्र " प्रत्यस्तमितभेदम् " इत्यस्य वचनस्यार्थं व्याचिख्यासुः तदुपयोगित्वेन तदुपक्रमोपसंहारयोः सविशेषपरत्वं दर्शयिष्यन्नुपक्रमवाक्यान्युपादत्ते—**स सर्वेति** । तत्र प्रथमग्रन्थो हेयप्रत्यनीकत्वपरः । **सर्वभूतप्रकृतिम्** ; प्रधानम् । **विकारान्** ; महदादीन् । **गुणादिदोषान्** ; सत्त्वरजस्तमोहेतुकान् दोषान् ; ते दोषाः क्लेशादयः । **व्यतीतः**; विशेषेणातीतः । नियमेनातत्परवशतया संबन्धानर्ह इत्यर्थः । **अतीतसर्वावरणः**; अवरणं प्रकृतिसंबन्धकर्मवासनादिकम्; तत्सर्वमतीतं येन स इत्यर्थः । यद्वा सर्वविषयज्ञानावरणं सर्वावरणम् ; सर्वविषयज्ञानसंकोचातीत इत्यर्थः । ज्ञानशक्त्यादिसर्वगुणसंकोचकातीत इति वाऽर्थः । अखिलात्मत्वं विवृणोति—**तेनेति** ; न तु 'मृदात्मको घटः' इतिवदित्यर्थः । **भुवनान्तराले**; उभयविभूत्यन्तराले । अथ दिव्यात्मस्वरूपस्य मङ्गलैकतानत्वमाह—**समस्तेति** । **समस्तकल्याणगुणात्मक** इति

कल्याणगुणवत्त्वमुच्यते चेत्, तदा आत्मशब्दः स्वभाववाची स्यात्। एवं संक्षिप्तार्थस्य "तेजोबलैश्वर्य" इत्यादिना विस्तरः क्रियत इति निर्वाहः। अस्मादपि निर्वाहाद् दिव्यात्मस्वरूपपरत्वं युक्तम्; अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायात्। तदा कल्याणशब्दो भावप्रधानः। समस्तकल्याणत्वं गुणः स्वभावो यस्य स समस्तकल्याणगुणः; यथा "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रस्थद्व्येकयोरिति पदं द्वित्वैकत्वपरं व्याख्यातम्। अन्यथा 'द्व्येकेषु' इति वाच्यम्, न तु 'द्व्येकयोः' इति। तच्च भावप्रधाननिर्देशस्य साधुत्वज्ञापनाय कृतम्। तत एव हि "गुणाः सत्यज्ञानप्रभृतयः" इत्यभियुक्तैरुक्तम्। समस्तकल्याणगुण आत्मा धर्मिस्वरूपं यस्य स समस्तकल्याणगुणात्मकः। बहुव्रीहिरौपचारिकः, 'शिलापुत्रकस्य शरीरम्' इति निर्देशवत्। दिव्यात्मस्वरूपमेव स्तौति—**स्वशक्तीति।** स्वांशलेशात् धृतभूतसर्गः। यद्वा शक्तिः सामर्थ्यम्; स्वगुणलवधृतभूतजात इत्यर्थः। **भूतसर्गः;** भूतसमूहः। यद्वा सृज्यत इति सर्गः; कार्यवस्तुजातमित्यर्थः। अभिप्रायविशेषेण षाड्गुण्यं पश्चाद्वक्ष्यन् प्रथमं दिव्यविग्रहवत्त्वमाह—**इच्छेति।** अभिमतत्वमभिमत्यर्हत्वम्; स्वानुरूपत्वमिति यावत्। अर्हार्थे निष्ठा; यथा "अदृष्टो द्रष्टा अश्रुतः श्रोता" इति। तत्र ह्यर्हार्थीयः क्तः; "अद्रेश्यमग्राह्यम्" इत्याद्यैकार्थ्यात्। अभिमतस्याननुरूपत्वम्; अनुरूपस्यानभिमतत्वं च लोके दृश्यते। तद्व्यावृत्त्यर्थमिच्छागृहीताभिमतशब्दौ। निरुपपदेच्छाशब्दो नित्येच्छाया अवतारसमयजन्येच्छायाश्च साधारणः, असंकोचात्। अथावतारद्वारेण साध्यं विग्रहप्रयोजनमाह—**संसाधितेति।** अथ षाड्गुण्यवत्तामाह—**तेज इति।** नात्र क्रमविवक्षा। महाशब्दसुशब्दौ सर्वगुणसाधारणौ। महत्त्वमपरिच्छिन्नत्वम्; यथा—"महोत्साहो महाबलः। महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः॥" इति; यथा च "प्रकृष्टं विज्ञानं बलमतुलम्" इत्यादि। सुशब्देन तेषां मङ्गलत्वमुच्यते। एवं स्वरूपतः विग्रहतः गुणतश्च पर इत्याह—**पर इति।** "गुणादिदोषान्" इत्यत्र दोषशब्दार्थं विवृणोति—**न यत्रेति।** **क्लेशादयः;** क्लेशकर्मविपाकाशयाः। अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः। कर्म पुण्यापुण्यात्मकम्। जात्यायुर्भोगा विपाकाः। आशयो वासना संस्कारः।

### भावप्रकाशिका

"स सर्वभूतप्रकृतिम्" इत्यारभ्य पञ्चश्लोकी षष्ठांशपञ्चमाध्यायसमाप्तौ पठिता। "शुद्धे महाविभूत्याख्ये" इत्यारभ्य सप्तश्लोकी तस्मिन्नेवाध्याये "स सर्वभूतप्रकृतिम्" इत्यतः

प्राक् पठिता । "समस्ताः शक्तयः" इत्यारभ्य त्रिश्लोकी षष्ठांशे सप्तमाध्याये केशिध्वजं प्रति खाण्डिक्यवचनम् । "एवंप्रकारम्" इति श्लोकः प्रथमांशसमाप्तौ । "परः पराणाम्" इत्यारभ्य पञ्चश्लोकी पुराणादौ पठ्यते । "प्रकृतिर्या मयाख्याता" इति श्लोकद्वयं षष्ठांशे चतुर्थाध्याये प्रतिसंचरणप्रकरणे । "द्वे रूपे" इत्यारभ्य सार्धश्लोकद्वयं प्रथमांशसमाप्तौ । "विष्णुशक्तिः परा प्रोक्ता" इत्यारभ्य श्लोकत्रयं षष्ठांशे सप्तमाध्याये खाण्डिक्यवाक्यम् । "प्रधानं च पुमांश्चैव" इत्यारभ्य "पुरुषात्मनः" इत्यन्तं द्वितीयांशे सप्तमाध्याये । "तदेतदक्षयं नित्यम्" इत्येतत् प्रथमांशसमाप्तौ । सर्वावरणपदे कर्मधारयमभिप्रेत्य व्याचष्टे—**तत्सर्वमतीतं येनेति ।** आवरणशब्दस्य विषयसापेक्षत्वात् षष्ठीसमासतया व्याचष्टे—**यद्वा सर्वविषयज्ञानावरणमिति ।** ज्ञानमात्रे संकोचो न युक्त इति व्याचष्टे—**ज्ञानशक्त्यादीति । समस्तकल्याणत्वं गुणः स्वभावो यस्येति;** अत्र बहुव्रीहिगर्भबहुव्रीहिमनाश्रित्य कल्याणत्वरूपो गुणः कल्याणगुणः, स आत्मा स्वभावो यस्येत्याश्रयणेऽप्ययमर्थः सिध्यत्येवेति वदन्ति । **अभिप्रायविशेषेणेति;** गुणेभ्योऽपि दिव्यविग्रहस्यात्यन्ताभिमतत्वाभिप्रायेणेत्यर्थः । **अभिमत्यर्हत्वमिति;** अनुरूपत्वमित्यर्थः । **अर्हार्थे निष्ठेति ;** "कृत्यल्युटो बहुलम्" इति बहुलग्रहणादिति भावः । **अभिमतस्याननुरूपत्वमिति ;** अत्राभिमतशब्दः इच्छागृहीतार्थकः, अनुरूपत्वमभिमतशब्दार्थ इति प्रागेवोक्तत्वात् । केचित्तु इच्छागृहीतपदस्यानुरूपत्वमर्थः, तथात्व एव ग्रन्थस्वारस्यमिति वर्णयन्ति । तत्तु न सम्यगिव, इच्छागृहीतपदस्यानुरूपत्वार्थकत्वाश्रयणापेक्षया अभिमत्यर्हशब्दस्यानुरूपत्वार्थाश्रयणस्य युक्तत्वात् । **नित्येच्छाया इति;** ततश्च नित्यविग्रहस्यापि नित्येच्छागृहीतत्वं सिद्धमिति भावः । ननु 'ज्ञानबलैश्वर्य' इति निर्देष्टव्ये "तेजोबलैश्वर्य" इति निर्देशः कथमित्यत आह—**नात्र क्रमविवक्षेति । सर्वगुणसाधारणाविति ;** ननु "महाबुद्धिर्महावीर्यः" इत्यादौ प्रत्येकं महत्त्वेन विशेषणादस्तु सर्वत्र महत्त्वम् ; तथापि नानेन वाक्येन सर्वगुणसाधारण्यं सिध्यति, महच्छब्दात् प्राङ् निर्दिष्टेषु तेजोबलैश्वर्येषु महत्त्वान्वयोपायासंभवादिति चेत्—न ; न्यायसाम्येन सिद्धिरस्तीत्यत्र तात्पर्यात् ।

**श्रुतप्रदीपिका**

वैष्णवे पुराणे "प्रत्यस्तमित" इति श्लोको यत्प्रकरणस्थः, तस्योपक्रमे उभय-

लिङ्गकत्वं दर्शयति—**स सर्वेति** । **गुणादिदोषाः**; क्लेशादयः । **सर्वावरणम्** ; सर्वविषय-ज्ञानसंकोचः । अविद्या कर्मवासनादिधीसंकोचहेतवो वा । अखिलात्मत्वं विवृणोति—**तेनेति** । **समस्तेति** विशेष्यपरं, समस्तस्वरूपपरम् । कल्याणत्वस्वभाव आत्मा स्वरूपं यस्य स तथोक्तः "द्व्येकयोः" इतिवत् । स्वरूपं स्तौति—**स्वशक्तीति** । **भूतसर्गः**; भूतजातम् । **इच्छासंसाधितेति** पदद्वयेन विग्रहभेदप्रयोजनोक्तिः । **अभिमतत्वम्** ; अभिमत्यर्हत्वम् ; स्वानुरूपत्वमिति यावत् । **तेज इति** ; महत्सुशब्दावपरिच्छेदानन्तत्वपरौ साधारणौ । **परः**; विलक्षणः । गुणादिदोषात्ययं विवृणोति—**न यत्रेति** । आदिशब्दात्कर्मादयः । अनेन "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः" इति योगसूत्रं स्मारयति ।

**श्रीभाष्यम्**

**"स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।**
**सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः ।**
**संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ॥**
**संदृश्यते वाप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥"**
**"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते ।**
**मैत्रेय भगवच्छब्दः सर्वकारणकारणे ॥"**
**"संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः ।**
**नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥**
**ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।**
**ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥**
**वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि ।**
**स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥"**
**"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।**
**भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"**

"एवमेष महाशब्दो मैत्रेय भगवानिति ।
परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥
तत्र पूज्यपदार्थोक्तिपरिभषासमन्वितः ।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः ॥"

**श्रुतप्रकाशिका**

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति योगसूत्रं स्मारयति—**स ईश्वर इति**। योगशास्त्रादपि वेदान्तार्थस्य वैषम्यमाह—**व्यष्टीति**। पूर्वं भेदश्रुत्यर्थ उक्तः; अथैक्यश्रुतिनिर्वाहार्थं घटकश्रुत्यर्थ उच्यते—**व्यष्टीति**। व्यष्टिसमष्टिशब्दाभ्यां कार्यकारणावस्थश्चेतनवर्ग उच्यते। **रूपम्**; शरीरम्। **स्वरूपम्**; स्वासाधारणं शरीरम्। शरीरिलक्षणं सूचयति—**सर्वेश्वर इति**। ईश्वरो नियन्ता। अनेन नियाम्यत्वं शरीरत्वं सिद्धम्। नियाम्यविशेषो हि शरीरम्। **सर्वदृक् सर्ववेत्ता**; स्वरूपतः प्रकारतश्च सर्वं जानातीत्यर्थः। यद्वा "विश्वतश्चक्षुः" इत्यादिश्रुतिप्रक्रियया सर्वतोदृग् भवन् सर्वं वेत्तीत्यर्थः। यद्वा सर्वेषां दृक् सर्ववेत्ता च, "चक्षुर्देवानामुत मर्त्यानाम्" इति श्रुतेः। चक्षुर्ज्ञानप्रदः। सर्वं विन्दतीति वा सर्ववेत्ता; अवाप्तसमस्तकाम इत्यर्थः। **समस्तशक्तिः**; शक्तिः कार्योपयोग्यपृथक्सिद्धविशेषणम्। उक्तप्रकारेण सर्वशरीरकत्वात् अस्य सर्वमपृथक्सिद्धविशेषणमित्यर्थः। **परमेश्वराख्य इति**; परशब्देनान्येश्वरत्वं निषिद्धम्। परो मा अस्येति परमः। एवंविधेश्वरविषयज्ञानस्यैवापवर्गोपायवेदनत्वमाह—**संज्ञायत इति**। **संज्ञायत** इति पाठे अस्तदोषमित्यादि ब्रह्मविशेषणम्। **येन**; शास्त्रजन्यज्ञानेन विज्ञायते; येनोपासनात्मकेन संदृश्यते; येन परभक्तिरूपेणानुभवरूपेण च प्राप्यते, अनुभूयत इत्यर्थः।

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"

इति वचनात्। **स ज्ञायत** इति पाठे अस्तदोषमित्यादि ब्रह्मज्ञानविशेषणम्। "**अर्थेनैव** विशेषो हि निराकारतया धियाम्" इति वचनात्। ज्ञानस्यास्तदोषत्वादिकं विषयद्वारा। **अस्तदोषमिति** दोषास्पदाचिद्विषयज्ञानाद् व्यावृत्तिः। **शुद्धमिति** "अशुद्धास्ते समस्तास्तु" इत्याद्युक्तकर्मवश्याशुद्धबद्धजीवविषयज्ञानाद् व्यावृत्तिः। **परं निर्मलम्**;

अत्यन्तनिर्मलम् । अनेन कदाचित्कर्मसंबन्धार्हतारूपमलान्वितमुक्तविषयज्ञानाद् व्यावृत्तिः । **एकरूपमिति** नित्यमुक्तविषयानेकरूपज्ञानाद् व्यावृत्तिः । अनया दिशा ब्रह्मविशेषणत्वेऽपि व्यावृत्तिर्द्रष्टव्या । ब्रह्मविशेषणत्वे एकरूपमित्याश्रयणीयत्वोपयोगिविशेषणं च भवति; स्थिरस्वभावम्, आश्रितसंरक्षणादिप्रतिज्ञायां दृढतरमित्यर्थः । **अज्ञानम्**; मोक्षोपायज्ञानादन्यत् । तद्विरोधि वा; "सा विद्या या विमुक्तये" इति वचनात् । यद्वा अज्ञानं ज्ञानाभावः; ब्रह्मपर्यन्तत्वाभावेनायथावस्थितवस्तुविषयत्वात् । ब्रह्मविशेषणत्वे एकवाक्यम् । ज्ञानविशेषणत्वे वाक्यद्वयम् । "प्रत्यस्तमित" इत्यादिश्लोके प्रत्यस्तमितभेदपदं हृदि निधाय सविशेषत्वे वचनानि दर्शितानि । अथ "अगोचरं वचसाम्" इत्येतद्व्याचिख्यासया शब्दगोचरत्वे वचनानि दर्शयति—**शुद्ध इत्यादिना** । तत्र "अशब्दगोचरस्य" इत्यादिके पूर्वश्लोके मुक्तात्मनि भगवच्छब्द औपचारिक इत्युक्तम्; तत्कथमित्यपेक्षायां मुक्तात्मव्यावर्तकं भगवच्छब्दप्रवृत्तिनिमित्तमाह—**शुद्ध इति** । यत्र प्रवृत्तिनिमित्तपौष्कल्यं तत्रैव हि मुख्यत्वं, नान्यत्रेति भावः । **शुद्धे**; "सिद्धे शब्दार्थसंबन्धे" इत्यत्र सिद्धशब्दवत् शुद्धशब्दोऽवधारणगर्भः । शुद्ध एव नित्यशुद्ध इत्यर्थः । 'अब्भक्षो वायुभक्षः' इतिवत् सिद्धशब्दस्यावधारणगर्भत्वात् सिद्धशब्दो नित्यपरत्वेन हि व्याख्यातः तद्वत् । अनेन नित्यशुद्धत्वेन सकलचेतन व्यावृत्तिः । नित्यसिद्धानामपि नित्यशुद्धत्वस्य भगवन्नित्येच्छायत्तत्वात् । **महाविभूत्याख्ये**; विभूतिभूतस्य महाविभूतित्वायोगात् उभयविभूतिशेषित्वं समस्तचेतनव्यावर्तकम् । **परे ब्रह्मणीत्यनेन** च चेतनव्यावृत्तिः सिद्धा; अपरात्मा हि केवलब्रह्मशब्देनोक्तः—"अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज" इति । उत्तरत्र तु "परमब्रह्मभूतस्य" इति हि परमात्मा वक्ष्यते । प्रदेशान्तरेऽपि परब्रह्मशब्दः परमात्मपर एव दृश्यते । अतोऽपरमात्मव्यावृत्त्यर्थं 'महाविभूत्याख्ये परे ब्रह्मणि' इत्युक्तम् । सर्वकारणकारणत्वं च भगवत एव । जगद्व्यापारविरहितो हि मुक्तात्मा । एवमुक्तप्रवृत्तिनिमित्तपौष्कल्यात् सर्वेश्वर एव भगवच्छब्दो मुख्यवृत्तः, नान्यत्रेत्यर्थः ।

इममर्थं विवृण्वन् अक्षरशः समुदायतश्च भगवच्छब्दार्थमाह—**संभर्तेत्यादिना** । शुद्धत्वं "विना हेयैः" इति विवृतम् । भोग्यसंपद्वाचकेन "ऐश्वर्यस्य" इति श्लोकस्थश्रीशब्देन भोगविभूतेः संभरणाद्युक्त्या लीलाविभूतेश्च दर्शितत्वान्महाविभूतित्वं विवृतम् ।

सर्वकारणकारणत्वं चोपरि स्पष्टम् । अत एव ज्ञानशक्त्यादिभिश्च निरतिशयबृहत्त्वात्पर-ब्रह्मत्वं स्फुटम् । अत उत्तरग्रन्थानां "शुद्धे" इत्यादिश्लोकविवरणरूपत्वं युक्तम् । भश्च गश्च वश्चेति विभज्यार्थ उच्यते । एतेषां पदानां तत्तद्धातुषु "अन्येष्वपि दृश्यते" इति उप्रत्यये टिलोपे च कृते एवं रूपं भवति । भार्थमाह—**समित्यर्धेन । संभर्ता ;** संभरणम् उपकरणसंविधानम् ; प्रकृतिपुरुषकालान् कार्योत्पत्तियोग्यान् करोतीत्यर्थः । महदादिसृष्टिरण्डरूपकार्योत्पत्त्युपयुक्ता संभरणमिति वा विवक्षिता । **भर्ता ;** स्वामी । धारणस्य वकारवाच्यत्वात् पोषकत्वस्य गकारवाच्यनेतृत्वान्तर्भावादपेक्षितविधेरनपेक्षित-विधानदौर्बल्याच्च स्वामित्वमिह विवक्षितम् । यद्यपि प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वं, तथापि पूर्वोक्तयुक्तिसचिवार्षवचनबलाद्धातुमात्रस्य स्वामिवाचित्वं निश्चीयते । इतिकरणेन संभर्तृत्वभर्तृत्वे प्रवृत्तिनिमित्ते निष्कृष्योच्येते । अत एव "अर्थद्वयान्वितः" इत्युक्तम् । उत्तरत्र तु प्रवृत्तिनिमित्तत्रये सत्यपीतिकरणेन तेषामनिष्कृष्टत्वात्प्रवृत्तिनिमित्तत्रय-विशिष्टो धर्म्येक एवार्थ उक्तः । गकारार्थमाह—**नेतेति ।** उपसर्गस्फुटीकृतानामर्थानां धातुलीनत्वादुद्गमयिता गमयिता संगमयितेत्येवंरूपपदानामर्थमाह—**नेतेति । स्रष्टेत्यनेनो-**द्गमयितृशब्दार्थ उक्तः । **नेतेति** गमयितृशब्दार्थ उक्तः, स्थितिकर्तेत्यर्थः । **गमयितृ-**शब्देन संगमयितृशब्दार्थ उक्तः । स च संहारः । यथा "यस्मिन्निदं सं च वि चैति सर्वम्" इत्यत्र व्येति समेतीति सर्गसंहारावुच्येते, तद्वत् । यद्वा कारणभूतं स्वात्मानं गमयिता ; स्वस्मिन् कार्यवर्गस्य लयकर्तेत्यर्थः । उपसर्गाप्रयोगेऽप्यर्थानां धातुलीनत्वादेवं व्याख्यातं भगवता पराशरेण । अथ वकारव्याख्यानात्पूर्वमेव भकारगकारसमुदायस्यार्थमाह—**ऐश्वर्यस्येति ।** समग्रशब्दः सर्वत्रान्वेति । परिच्छिन्नचतुर्मुखाद्यैश्वर्यव्यावृत्त्यर्थः समग्रशब्दः । **यशः ;** गुणवत्ताप्रथा । **श्रीः ;** भोग्यसंपत् । **वैराग्यम् ;** विरक्तिः । परिपूर्णत्वादनादरते-त्यर्थः । यथा "अवाक्यनादरः" इति । मतुप्प्रत्ययस्य प्रसिद्धार्थत्वान्न तद्व्याख्यातम् । अथ वकारार्थमाह—**वसन्तीति ।** "अन्येष्वपि दृश्यते" इति उप्रत्ययस्यानेकार्थत्वादधि-करणे कर्तरि च व्युत्पत्तिः । **भूतात्मनि ;** भूतानामात्मनि । **अखिलात्मनि ;** अखिल-शरीरके । यद्वा भूतशब्देन कार्यजातमुच्यते ; तस्यात्मनि । **अखिलात्मनि ;** कार्यानन्तर्भूतानां नित्यमुक्तानामात्मनीत्यर्थः । अथ समुदायशक्तिविषयमर्थमाह—**ज्ञानशक्तीति ।** पाठक्रमे तु "एवमेषः" इत्यादिश्लोकद्वयानन्तरम् "ज्ञानशक्तिबलैश्वर्य" इत्यादिश्लोकः पठ्यते ;

तथापि प्रवृत्तिनिमित्तवाचित्वसंगतिवशात् "एवमेषः" इत्यादिश्लोकद्वयात्पूर्वम् "ज्ञान-शक्ति" इत्यादिश्लोक इहोपात्तः। "उत्पत्तिं प्रलयं चैव" इत्यादिश्लोकस्य प्रस्तुतानुपयुक्तत्वाच्चैवमुपादानं कृतम्। **भगवच्छब्दवाच्यानि**; प्रवृत्तिनिमित्तत्वेन वाच्यानीत्यर्थः। **अशेषतः**; न प्रत्येकम्, अपितु समुच्चित्येत्यर्थः। अशेषशब्देन षाड्गुण्यावान्तरभिदा रूपशीलादिगुणजातं च क्रोडीकृतम्। यद्यप्यैश्वर्यवीर्यज्ञानानि पूर्वं कण्ठोक्तानि, तथापि कतिपयसमुदाय्यावापोद्वापप्रयुक्तसमुदायभेदादपुनरुक्तिः। न चात्र समुदायशक्तिः कल्प्यते, येनानुक्तगुणमात्रगोचरता स्यात्। वचनबलादेव शक्तिस्वीकारः। पूर्वमक्षरार्थकथनेन भकार-गकारवकारा व्याख्याताः। अथ 'अन्' इत्यस्यार्थमाह-- **विनेति**। "कश्यपः पश्यको भवति" इति न्यायात् 'अन्' इत्यनेन नेरुक्तं भवति। निषेध्यं च हेयमित्यर्थः। एवं प्रवृत्ति-निमित्तपौष्कल्यात् भगवत्येव मुख्यवृत्तत्वमाह— **एवमिति**। महार्थगर्भत्वान्महाशब्दत्वम्। मुक्तात्मव्यावृत्त्यर्थं **परमब्रह्म**ेत्युक्तम्, कथं तत्रैव मुख्यवृत्तत्वम्? अन्यत्रापि तत्प्रयोगो दृश्यत इत्यत्राह— **तत्रेति**। **पूज्यपदार्थोक्तिः**; पूज्यानामवयवार्थानामुक्तिः। **परिभाषा**; रूढिः। ताभ्यां समन्वितः योगरूढिभ्यां विशिष्टः। अत एव, **नोपचारेण**; मुख्यवृत्त इत्यर्थः। अन्यत्रामुख्यत्वमित्याह— **अन्यत्र हीति**। मुक्तात्मन्यौपचारिकत्वोक्त्यार्थान्तरप्रयोगेष्वौप-चारिकत्वमर्थाद्दर्शितमिति हि शब्दाभिप्रायः। भगवच्छब्दप्रयोगविषयेषु सर्वेषु प्रयोगेऽन्यथा-सिद्धे न हि शक्तिभेदकल्पनं युक्तम्। यत्र ज्ञानादयो निरङ्कुशाः स एव मुख्यार्थः। गुणलेशयोगादपि प्रयोगसंभवात् अन्यत्र वृत्तिरौपचारिकीत्यर्थः।

### भावप्रकाशिका

श्लोकोपात्तयोः रूपस्वरूपशब्दयोरर्थमाह— **रूपं शरीरं, स्वरूपं स्वासाधारण-मिति। सर्वं विन्दतीति वा सर्ववेत्तेति**; अत्र 'विदिर् लाभे' इत्यस्य सेट्त्वेऽपि इड-भावश्छान्दस इति द्रष्टव्यम्। **नित्यमुक्तविषयानेकरूपज्ञानाद्यावृत्तिरिति**; अनेक-नित्यमुक्तविषयकज्ञानाद्यावृत्तिरित्यर्थः। **यद्वा अज्ञानं ज्ञानाभाव इति**; न चेतरज्ज्ञानं कथं ज्ञानाभावः स्यादिति वाच्यम्, सिद्धान्ते भावस्याभावरूपत्वे विरोधाभावात्। **ज्ञान-विशेषणत्वे वाक्यद्वयमिति**; ब्रह्मविशेषणत्वपक्षे येन ज्ञानेनास्तदोषत्वादिविशिष्टं वस्तु संज्ञायते संदृश्यते गम्यते वा तदेव ज्ञानम्, अन्यत्त्वज्ञानमित्येकवाक्यत्वमेव। ज्ञान-विशेषणत्वपक्षे तु येन ज्ञानेन परमात्मा ज्ञायते गम्यते वा तज्ज्ञानमस्तदोषत्वादि विशिष्टं

तदेव ज्ञानमिति वाक्यद्वयं स्यात्, इतरथा तच्छब्दद्वयवैयर्थ्यप्रसङ्गात्। न च "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते" इतिवत् स्यादिति वाच्यम्, तत्राप्यगत्या वाक्यभेदस्याभ्युपगन्तव्यत्वादिति भावः। **पूर्वश्लोक इति ;**

"अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज।
पूजायां भगवच्छब्दः क्रियते ह्युपचारतः॥"

इति श्लोक इत्यर्थः। **औपचारिक इत्युक्तमिति ;**

"श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम्।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः॥
वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः॥"

इति तत्पूर्वश्लोके परमात्मन एव प्रस्तुततया "अशब्दगोचरस्यापि" इत्यत्र श्लोके तच्छब्दः कथं मुक्तात्मानं परामृशेत् इति चेत्; सत्यम्,

"तत्रपूज्यपदार्थोक्तिपरिभाषासमन्वितः।
शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः॥"

इति परमात्मनि भगवच्छब्दस्यौपचारिकत्वासंभवात् पूर्वोक्तवाक्ययोः परमात्मनो भगवच्छब्दमुख्यार्थत्वप्रतिपादनविरोधाच्च तच्छब्दस्याप्रस्तुतमुक्तपरामर्शित्वं वक्तव्यमिति भावः। **प्रत्ययविशेषयुक्तस्य भरतेः स्वामिनि रूढत्वमिति ;** तृच्प्रत्ययविशेषयुक्तस्येत्यर्थः। **भरतेः स्वामिनि रूढत्वमित्यत्र** भरतेरित्येतदुपलक्षणम्; बिभर्तेर्वेत्यपिद्रष्टव्यम्। **धातुमात्रस्येति ;** यद्यपि डप्रत्ययुक्तस्य भ इत्यस्यैव स्वामिवाचित्वम्, न तु प्रत्ययविनिर्मुक्तस्य; तथापि तृच्प्रत्ययरहितस्यापीत्यत्र तात्पर्यम्। अथवा डप्रत्ययस्य साधुत्वमात्रार्थत्वमेव। अत एव "भकारोऽर्थद्वयान्वितः" "गकारार्थः" इत्येकवचनोक्तिरिति द्रष्टव्यम्। **प्रवृत्तिनिमित्ते निष्कृष्योच्येते इति ;** अयमर्थः—भशब्दस्य संभर्तृत्वभर्तृत्वे द्वे अपि प्रवृत्तिनिमित्ततापर्याप्त्यधिकरणे, अतोऽर्थद्वयान्वित इत्युक्तम्। गकारे तु नेतृत्वादीनां न प्रत्येकं पर्याप्त्यधिकरणत्वम्, अपितु मिलितानामेव; यथा कृतिसाध्यत्वेऽष्टसाधनत्वबलवदनिष्टाजनकत्वानां मिलितानां विध्यर्थत्वम्। अत एव "गकारार्थः" इत्येकवचनोक्तिरिति। केचित्तु संभर्तृत्वभर्तृत्वरूपप्रवृत्तिनिमित्ते आश्रयान्निष्कृष्य इतिकरणेनोच्येते; ते च द्वे इति कृत्वा अर्थद्वयान्वित इत्युक्तम्। गकारस्थले इतिकरणाभावेन प्रवृत्तिनिमित्तस्या-

श्रयान्निष्कर्षाभावात् प्रवृत्तिनिमित्ताश्रयस्यैव ग्रहणे तस्यैकत्वात् 'गकारार्थ' इत्युक्तिरिति भाव इत्याहुः । **धातुलीनत्वादिति ;** यदि सोपसर्गाणामेव क्रियावाचित्वं तर्हि सोपसर्गाणां भ्वादिषु पाठाभावात् धातुसंज्ञाभावप्रसङ्गात् धात्वधिकारविहितकार्याभावप्रसङ्गात् क्वचिदुपसर्गमन्तरेणापि तदर्थावगमाच्च धातुरेवानेकार्थाभिधायी ; प्रादयस्तु प्रकरणादिवद्विशेषस्मृतिहेतवो द्योतकाः ; द्योतकापेक्षा च शब्दशक्तिस्वाभाव्यात् क्वचिदेव ; यथा—हरिशब्दो भेकादावेव प्रकरणादिसापेक्ष इति भावः । **उद्भमयिता गमयिता संगमयितेति ;** इदं च सृष्टिस्थितिलयक्रमेणोपात्तम्, न तु "नेता" इत्यादिश्लोकक्रमेणेति द्रष्टव्यम् । **नेतेति गमयितृशब्दार्थ उक्त इति ;** रक्षकत्वमुक्तमित्यर्थः ; "अधिभूर्नायको नेता" इत्यादौ रक्षकत्वस्यैव प्रतीतेरिति भावः । गमयिता इत्यस्य समित्युपसर्गमन्तरेणैव संहारार्थप्रकाशकत्वप्रकारं दर्शयति—**यद्वा कारणभूतमिति** । केचित्तु—स्रष्टेत्यस्य स्रष्टृत्वमर्थः ; गमयितेत्यस्य गमयितृत्वरूपं रक्षकत्वमर्थः ; न तयोर्विवादः । नेतेत्यस्य तु द्विकर्मकत्वात् कारणभूतं स्वात्मानं कार्यवर्गं नेतेति संहर्तृत्वमुच्यते । यद्वा एतस्यापि नेतृशब्दार्थप्रदर्शकत्वमेवेति वदन्ति । **उत्पत्तिं प्रलयं चैवेत्यादिश्लोकस्येति ;**

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

इति श्लोकस्येत्यर्थः ।

## श्रुतप्रदीपिका

**ईश्वर इति ;** योगसूत्रस्मरणम् । ततो वेदान्तसिद्धान्त वैषम्यमाह—**व्यष्टीति** । व्यष्टिसमष्टीकार्यकारणचिद्वर्गौ रूपत्वोपपादनं—**सर्वेश्वर इति** । स्वरूपतः प्रकारतश्च वेत्तीति **सर्ववित् सर्ववेत्ता** । समस्तं शक्तिः अयुतधर्मो यस्य स तादृक् । परमेति परान्तरनिषेधः । स ज्ञायत इति पाठे विषयद्वारा ज्ञानविशेषणम्—**अस्तदोषत्वादि** । अर्थेन हि धीविशेषः । तेनाचिद्बद्धमुक्तनित्यधीव्युदासः । **गम्यत इति ;** निवृत्ते प्रतिबन्धेऽनुभवः । **अज्ञानम् ;** उपादेयज्ञानादन्यत् । संज्ञायत इति पाठे तु तदस्तदोषमित्यादीनि ज्ञेयविशेषणानि । "प्रत्यस्तमितभेदं सत्तामात्रम्" इति पदद्वस्य ब्रह्मणि गुणविभूतिरूपार्थानन्वयपरत्वव्युदासाय तदन्वयपराः श्लोकाः प्रथममुदाहृताः । "अगोचरं वचसाम्" इत्यस्य ब्रह्मणि सर्वशब्दानन्वयपरत्वव्युदासाय भगवच्छब्दवाच्यत्वपराः पश्चादुदाह्रियन्ते—

**शुद्ध इत्यादयः** । "अशब्दगोचरस्य" इति पूर्वश्लोकोक्तमुक्ताद् व्यावर्तकानि शुद्धत्वादीनि विशेषणानि । **शुद्धे** ; नित्यशुद्धे । भृञ्गमवस् इति धातुषु डप्रत्ययान्तेषु भश्च गश्च वश्चेति रूपाणि स्युः । संभरणं प्रकृत्यादीनां सर्गोन्मुख्यकरणम् । **भर्ता** ; स्वामी । इतिशब्देन प्रवृत्तिनिमित्तनिष्कर्षात् द्वित्वोक्तिः । उत्तरत्र धर्म्यैक्यविवक्षया त्रित्वानुक्तिः । **नेतृत्वं** ; स्थापकत्वम् । **गमयिता** ; संगमयितेत्यर्थः । उपसर्गव्यङ्ग्योऽर्थो धातुलीन इति भावः । संहर्तृत्वं "सं च वि चैति" इतिवत् । कारणावस्थं स्वात्मानमिति वा । **स्रष्टेत्यु**त्पूर्वस्यार्थः । वर्णद्वयसंघातार्थमाह—**ऐश्वर्यस्येति** । वैराग्यमनादरः । वकारार्थमाह—**वसन्तीति** । अधिकरणे कर्तरि च डो विवक्षितः । प्रवृत्तिनिमित्तवाचित्वसंगतिवशात् । व्यवहितमपि ग्रन्थमादत्ते—**ज्ञानेति** । 'अन्' इत्यस्यार्थमाह—**विनेति** । "कश्यपः पश्यकः" इतिवत् । विभक्त्यन्तरसमासयोरपि तकारस्त्यक्तदोषत्वपरः । "तानि वा एतानि त्रीण्यक्षराणि" इत्यत्र तकारस्य त्यज्यमानावस्थवस्तुवाचित्वदर्शनात् । **परमेत्यु**त्तीर्णव्युदासः । अन्यत्रापि प्रयुज्यत इत्यत्राह—**तत्रेति** । **पूज्यपदार्थोक्तिः** ; अवयवार्थोक्तिः । **परिभाषा** ; रूढिः ।

**श्रीभाष्यम्**

**"समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः ।**
**तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥**
**समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।**
**देवतिर्यङ्मनुष्याख्यचेष्टावन्ति स्वलीलया ॥**
**जगतामुपकाराय न सा कर्मनिमित्तजा ।**
**चेष्टा तस्याप्रमेयस्य व्यापिन्यव्यहतात्मिका ॥"**
**"एवं प्रकारममलं नित्यं व्यापकमक्षयम् ।**
**समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥"**
**"परः पराणां परमः परमात्मात्मसंस्थितः ।**
**रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥**

अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥
सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥
तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥
तदेव सर्वमेवैतद् व्यक्ताव्यक्तस्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥ "

### श्रुतप्रकाशिका

अथ तस्मिन्नेव योगप्रकरणे उपसंहारेऽपि सविशेषपरवाक्यानि दर्शयन् दिव्यविग्रहवत्त्वं चाह—**समस्ता इति** । बद्धो मुक्तः कर्मरूपाविद्या च शक्तयः । तत्तदभिमानिदेवताद्वारेण तत्र तासां प्रतिष्ठितत्वम्, यत्रेत्यनुवादस्य पुरोवादसापेक्षत्वात् अस्त्रभूषणाध्याये यथोक्तप्रकारेण पुरोवादाच्च । **तद्विश्वरूपवैरूप्यमिति** संनिवेशवैलक्षण्यमुक्तम् । **अन्यदिति** द्रव्यान्तरत्वमुक्तम् । **महदिति** अपरिच्छेद्यत्वम् । विलक्षणसंनिवेशस्य सकलेतरविसजातीयस्य कथं चिन्तयितुं शक्यत्वमित्यत्राह—**समस्तेति** । केन हेतुनेत्यत्राह—**स्वलीलयेति** । लीलायाः प्रयोजनत्वात्तदभिसंधिर्हेतुः, न तु कर्मणेत्यर्थः । किं प्रयोजनमित्यत्राह—**जगतामिति**; न तु स्वकर्मफलभोगायेत्यर्थः । एतद्विवृणोति—**न सेति** । **व्यापिनी**; देशनियमरहिता; यथा वैदिकपुत्रानयनादिषु । व्यापनशक्तत्वेऽपि प्रतिबन्धः संभवतीत्यत्राह—**अव्याहतात्मिका**; न तस्याः प्रतिहतिरस्तीत्यर्थः । यद्वा **व्यापिनी**; सर्वावतारानुगुणा । **अव्याहता**; देशकालवस्तुकृतप्रतिबन्धरहिता । एवं "प्रत्यस्तमित" इति श्लोकस्य परमात्मपरत्वाभ्युपगमेऽपि निर्विशेषपरत्वनिराचिकीर्षयोपक्रमोपसंहारयोस्तस्मिन्नेव प्रकरणे सविशेषपरत्वं दर्शितम् । अथास्य श्लोकस्य परिशुद्धजीवात्मस्वरूपविषयत्वं, प्रत्यस्तमितभेदादिपदानां कतिपयविषयत्वं च विवक्षुस्तदर्थं परमात्मविषयभेदनिषेधादीनां कतिपयविषयत्वाभिधायीनि वाक्यानि दर्शयिष्यन् परमात्मविषयकतिपयभेदनिषेधपरवचनोदा-

हरणेन मुक्तात्मविषये किमायातमिति शङ्कायां मुक्तस्य परमात्मसाम्यप्रतिपत्तये मुक्तगुणान् परमात्मन्यतिदिशन्तं श्लोकं दर्शयति—**एवंप्रकारमिति** । एतच्छ्लोकोदाहरणेन "प्रत्यस्तमित—" इत्यादिश्लोकानन्तरं पूर्वपक्षे पठितस्य "ज्ञानस्वरूपम्" इत्यादेः प्रथमांशोपक्रमश्लोकस्य चतुश्लोक्याश्च सविशेषपरत्वप्रतिपादनाय प्रथमांशोपसंहारेऽपि सविशेषपरत्वं दर्शितं भवति । उपसंहारवचनोपादानमुपसंहारस्य बुद्धिस्थत्वात्क्रियते । **एवंप्रकारम्**; मुक्तात्मानं प्रति, "निर्व्यापारमनाख्येयम्" इत्यादिना यः प्रकार उक्तस्तदुपेतमित्यर्थः । एवं भगवति मुक्तगुणातिदेशः कृतः—भेदराहित्यस्य सत्तामात्रत्वस्य वचसामगोचरत्वस्य च मुक्तगुणस्य निर्व्यापारमित्यादिनोक्तस्य भगवत्यतिदिष्टत्वात्, भगवति च तेषां निषेधानां कतिपयविषयत्वस्य प्रामाणिकत्वाच्च ते निषेधा मुक्तात्मन्यपि तथाविधा इति कतिपयविषयत्वं सिद्धमिति भावः । अथ परमात्मनोऽधिकान् गुणानाह—**अमलम्**; मलप्रतिभटम् । सोपाधिकहेयविरोधिनमित्यर्थः । **नित्यम्**; उक्ताकारेण नित्यम् । मलप्रतिभटत्वं नित्यमित्यर्थः । **व्यापकम्**; स्वरूपेण व्यापकम् । **अक्षयम्**; स्वत एव धर्मतोऽपि विकाररहितम् । मुक्तस्य हि पूर्वावस्थायां ज्ञानसंकोचविकासरूपविकारो विद्यते । नित्यसिद्धानामपि तथात्वं परायत्तमिति तद्व्यवच्छेदः । **समस्तहेयरहितम्**; पूर्वं हेयप्रत्यनीकत्वमुक्तम् । अत्र हेयराहित्यमुक्तम् । स्वतो हेयाभावोऽपि मुक्तस्य नास्ति, परमात्मप्रसादाधीनत्वात्तस्य । पद्यत इति पदं दिव्यात्मस्वरूपम् । परमपदशब्दस्य दिव्यलोके मुक्तात्मनि च प्रयोगात्तद्व्यावृत्त्यर्थं **विष्ण्वाख्यमि**त्युक्तम् । अथ प्रथमांशोपक्रमेऽपि सविशेषपरत्वं दर्शयति—**परः पराणामिति** । अनेन शास्त्रोपक्रमस्यापि सविशेषपरत्वमुक्तं भवति । अनेन "प्रत्यस्तमितभेदम्" इत्यादिपदानां कतिपयभेदनिषेधपरत्वं च सिद्धमिति त्रिविधं प्रयोजनम् । अनेन "परः पराणाम्" इत्यादिग्रन्थजातस्य "अविकाराय" इत्यादिसंग्रहश्लोकविवरणरूपत्वात् "ज्ञानस्वरूपम्" इत्यादिश्लोकं प्रत्युपक्रमत्वमर्थक्रमेण सिद्धमिति तस्यापि सविशेषपरत्वसिद्धिः । यद्वा प्रथमांशोपक्रमोपसंहारयोः सविशेषपरत्वादुपक्रमोपक्रमभूतस्यापि "ज्ञानस्वरूपम्" इति श्लोकस्य महावाक्यस्वारस्यविरोधो न न्याय्य इति तस्यापि सविशेषपरत्वं सिध्यति । यद्वा नमस्कारश्लोकस्य शास्त्रोपक्रमशेषभूतत्वात् तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इति सिध्यति । उपक्रमोपक्रमभूतनमस्कारश्लोकार्थानुगुणं "परः पराणाम्" इत्यादेरर्थो वर्णनीय इति चेत्—न; तस्याप्युपक्रमभूतप्रश्नोत्तरवरलाभकथन-

श्लोकानुगुणं तदर्थस्य वाच्यत्वादित्यभिप्रायः। अत्र ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्ध्यर्थं वेदान्तेषु "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यैरानन्त्यमुक्तम्। तच्च त्रिविधपरिच्छेद-राहित्यम्, न हि देशकालादिभिः परिच्छिन्नानां घटादीनां कृत्स्नस्य सर्वविधकारणत्वं दृष्टम्। कालत्रयवर्तिकार्यजातकारणत्वे सर्वदेशगतकार्यकारणत्वे च देशतः कालतोऽप्यपरिच्छेदा-वपेक्षितौ। उपादानत्वसिद्ध्यै वस्त्वपरिच्छेदोऽपेक्षितः। न हि वस्तुतः परिच्छिन्नः कुलाल उपादानं भवति, मृत्पिण्डकुलालयोः सामानाधिकरण्यासंभवात्। अतः कृत्स्नकारणत्वसिद्ध्यर्थं त्रिविधपरिच्छेदराहित्यं विस्तरेण विवक्षुः "परः पराणाम्" इत्यर्धेन तत्संग्रहेण प्रतिजानीते— **परः पराणां परम इति**। अनेन कालानवच्छेदः सिद्धः, अधिककालवर्तित्वस्य परशब्द-वाच्यत्वात्। **परमात्मेति** देशापरिच्छेद उक्तः। आप्नोतीति ह्यात्मशब्दव्युत्पत्तिः। **आत्मसंस्थितः;** सर्वेषामात्मत्वेन सर्ववस्तुभिर्विशिष्टः। यद्वा आत्मत्वेन संस्थिततया सर्वशरीरकत्वात् स्वस्मिन् पर्यवस्थितः स्वनिष्ठः। अन्यत्सर्वं तन्निष्ठम्, शरीरतया विशेषणत्वात्। अतः सर्वपर्यवसानभूमिः स्वनिष्ठ इति वस्त्वपरिच्छेद उक्तः। सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः। 'इदमिदं न भवति' इति हि वस्तुपरिच्छेदः। यद्वा नित्यत्वविभु-त्वव्यतिरिक्तगुणैः समाभ्यधिकरहितत्वं वस्त्वपरिच्छेदः। स्वनिष्ठं परमात्मानमपेक्ष्य तन्निष्ठा-नामन्येषां समत्वाभ्यधिकत्वासंभवादात्मसंस्थित इत्यनेन वस्त्वपरिच्छेदसिद्धिः। एवं संक्षिप्त-मर्थमुपपादयति—**रूपेत्यादिना**। तत्र कालापरिच्छेदं प्रथमं विवक्षुः कालपरिच्छिन्नेषु वर्तमानं पञ्चकल्पनान्वितत्वं ब्रह्मणि नास्तीत्याह—**रूपेति**। रूपशब्देन जातिरुच्यते। "जातिगुणौ च रूपिणां रूपे" इति हि नीतिविदः। वर्णशब्दो रूपाख्यगुणविशेषपरः। आदिशब्देन गन्धरसादिः। आसनशयनादिक्रिया विषाणाद्यवयववत्त्वं च विवक्षितम्। "रूपवर्गादि" इति पाठे रूपशब्दो नीलपीतत्वादिगुणपरः। वर्गशब्दो देवमनुष्यादि वर्गपरः, जातिपर इत्यर्थः। तन्निबन्धनस्तद्विषयो निर्देशः शब्दः, शब्दवाच्यास्त एव विशेषणं तैर्विवर्जितः। यद्वा रूपवर्णादितद्वाचिशब्दरूपैर्विशेषणैर्विवर्जितः। एवमनित्य-त्वव्यापकं कर्मकृतं रूपादिमत्त्वं ब्रह्मणि नास्तीति कर्मकृतरूपादिनिवृत्त्या तद्व्याप्यकाल-परिच्छेदनिवृत्तिरित्यर्थः। यद्वा अनित्यत्वव्याप्यकर्मकृतरूपाद्यभावान्नानित्यत्वं ब्रह्मण्यनुमातुं शक्यमित्यर्थः। अनेन "प्रत्यस्तमितभेदम्" इत्यस्य पदस्य विषयो दर्शितः। अथा-नित्यत्वव्यापकत्वाद्विकाराणामनित्यत्वनिवृत्तये तद्व्यापकविकारराहित्यमाह—**अपक्षयेति**।

'जायते, अस्ति' इत्यवस्थाद्वयं जन्मशब्देन विवक्षितम् । उत्पत्तिस्थितिनाशानामेकैकत्र विधाद्वयेन विकारषट्कसिद्धिः । तद्वर्जितत्वात् सदास्तीति वक्तुं शक्यते । सदाशब्देन कादाचित्कास्तित्वनिवृत्तिः । न तु 'उत्पद्यते' इत्यादिशब्दैरिति केवलशब्दाभिप्रायः । अनेन "सत्तामात्रम्" इत्यस्य विषयो दर्शितः । "अगोचरं वचसाम्" इत्यस्य च विषयो दर्शितो भवति । रूपवर्णादिप्रवृत्तिनिमित्ताभावादुत्पत्त्यादिप्रवृत्तिनिमित्ताभावाच्च कल्पनाविकारवाचिशब्दैर्न वक्तुं शक्यत इति तस्य पदस्यार्थ इत्यभिप्रायः । "अगोचरं वचसाम्" इति सर्वशब्दागोचरत्वमुच्यते चेत्, "वचसामगोचरं, सत्तामात्रम्" इत्यपि वक्तुं न शक्यते । अथ देशापरिच्छेदं नामनिर्वचनमुखेनाह—**सर्वत्रेति** । ब्रह्मण ईश्वरातिरिक्तत्वनिषेधार्थं देवतान्तरव्युदासार्थं च नामनिर्वचनमुखेन तदुक्तिः । औणादिकप्रत्ययस्यानेकार्थत्वादधिकरणे कर्तरि च व्युत्पत्तिर्वासुदेवशब्दस्योच्यते । **सर्वत्रेति**; वेदान्तेषु परब्रह्मणो हि निर्विकारत्वादिकमुक्तम्; तत्कथं वासुदेवस्योच्यत इत्यत्राह—**तद्ब्रह्मेति** । "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इतिवत्तदिति निर्देशः । निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति हि शाब्दाः । **नित्यमिति** कार्यमात्रव्यावृत्तिः । **अजमक्षयमव्ययमेकस्वरूपमिति** सविकारनित्यप्रधानव्यावृत्तिः । एकस्वरूपशब्देन वृद्धिपरिणामराहित्यं विवक्षितम् । "हेयाभावाच्च निर्मलम्" इति बद्धव्यावृत्तिः । **सदेति** मुक्तव्यावृत्तिः । **परममिति** नित्यसिद्धव्यावृत्तिः । यद्वा एकस्वरूपमिति बद्धव्यावृत्तिः । सदेत्यादिना मुक्तव्यावृत्तिरिति । एवं स्वव्यतिरिक्तसमस्तवस्तुविलक्षणत्वेनोपनिषत्सूक्तं ब्रह्म वासुदेव एवेत्यर्थः । त्रिविधापरिच्छेदवाचिनी श्रुतिरपि देवताविशेषं निरचिनोत्—"अनन्तम्" इति । अनन्तशब्दो योगरूढः । अतो नारायणादिशब्दपर्यायस्त्रिविधानन्त्ययोगिनि भगवति मुख्यो वर्तते । सत्यज्ञानादिवाक्येऽनन्तमिति पदं पुंलिङ्गं द्वितीयान्तम् । "यो वेद" इति वेदनशब्देनान्वयात् । प्रथमान्तत्वे "तद्यो वेद" इति तत्पदाध्याहारः स्यात्, वाक्यभेदश्च स्यात् । अतस्तत्र यथोक्त एवार्थः । तस्मात्तदनुसारेणात्राप्यपरिच्छेदकथनसमये देवताविशेषो निर्णीतः । वस्त्वपरिच्छेदमाह—**तदेवेति** । **सर्वमेवैतदिति** व्यक्ताव्यक्तपुरुषकालसमुदाय उच्यते । व्यक्ताव्यक्तस्वरूपमेतत्सर्वं तद्ब्रह्मेत्यर्थः । अनेन वस्त्वपरिच्छेद उक्तः । सर्ववस्तुसामानाधिकरण्यार्हत्वं हि वस्त्वपरिच्छेदः । सर्ववस्तुसामानाधिकरण्यार्हत्वेनैव चिदचिच्छरीरकत्वहेतुभूतव्यापनभरणादि-

गुणतः समाभ्यधिकराहित्यसिद्धेश्च वस्त्वपरिच्छेदसिद्धिः । न हि ब्रह्मव्यतिरिक्तस्य कस्य-चित्समस्तचिदचिच्छरीरकत्वसंभवः ।

भावप्रकाशिका

**कथं चिन्तयितुं शक्यत्वमित्यत्राहेति ;** नन्वस्याः शङ्कायाः "समस्तशक्ति-रूपाणि" इति श्लोकेन कथं परिहार इति चेत्, अत्र केचित्—देवादिसजातीयराम-कृष्णादिविग्रहसजातीयतया सर्वशक्त्याश्रयपरविग्रहस्य चिन्त्यत्वं संभवतीति श्लोकाभिप्राय इति । केचित्तु—रामकृष्णाद्यवतारस्यैव योगयुक्चिन्त्यत्वम्, योगयुक्तस्य परविग्रहश्चिन्त्यो-ऽस्त्विति मन्यन्ते । केचित्तु—परविग्रहस्य समस्तशक्तित्वसर्वविग्रहकारणत्वप्रतिपादनप्रवृत्त-त्वेनैतच्छङ्कानिवर्तकत्वाभावादियमवतारिका चिन्तनीयेति मन्यन्ते । लीलायाः पश्चाद्भावित्वेन प्रयोजकत्वेन कथं हेतुत्वमित्याशङ्क्याह—**तदभिसन्धिर्हेतुरिति** । लीलाशब्दस्तदभि-सन्धिलक्षक इति भावः। **किं प्रयोजनमित्यत्राहेति;** लीलामात्रस्य प्रयोजनत्वे असमञ्जस-न्यायप्रसङ्गात् लीलामात्रं न प्रयोजनं भवितुमर्हतीति भावः । **परमात्मन्यतिदिशन्तं श्लोकमिति;** 'ननु देवदत्तो गुणशून्यः, तद्वदेव यज्ञदत्तोऽपि' इत्युक्ते यज्ञदत्ते मानान्तराव-गतस्यान्नदातृत्वादिगुणविशेषस्यापि देवदत्ते सिद्धयदर्शनात् परमात्मनि मानान्तरसिद्धस्य धर्मान्तरस्य मुक्तात्मन्यापादने किं प्रमाणम्? तथा हि सति वैकृतवैशेषिकधर्माणामपि प्रकृतौ प्राप्तिप्रसङ्गात् । किंच "तद्भावभावमापन्नः" इत्यादीनां मुक्तात्मनि कण्ठरवेण परमात्मसाधर्म्यप्रतिपादकानां प्राकरणिकानामेव वचनानामुपन्याससंभवे परमात्मसाम्यापेक्ष-कस्य परमात्मनि मुक्तधर्मातिदेशकवचनस्योपन्यासः शिरोवेष्टनेन नासिकाग्रहणन्यायमनु-सरतीति चेत्—न; असति बाधकेऽस्यापि न्याय्यत्वात् । 'देवदत्त इव यज्ञदत्तः पुत्रवान्' इत्युक्त्वा "यज्ञदत्तस्य चत्वारः पुत्राः" इत्युक्ते देवदत्तस्यापि तावन्तः पुत्रा इति प्रतीतेरनु-भवसिद्धत्वादिति भावः । केचित्तु—भाष्ये "एवंप्रकारम्" इति श्लोकोपन्यासः समस्त-हेयराहित्यप्रमाणविवक्षयैव कृतः । तथोदाहृतवचनार्थानुक्रमणभाष्ये "परं ब्रह्म स्वभावतो निरस्तनिखिलदोषगन्धम्" इत्यादि वक्ष्यति, न तु "प्रत्यस्तमितभेदम्" इत्यस्यार्थान्तर-कथनार्थम् । "यो मामजमनादिं च" इत्यारभ्य "पारमार्थिकमेवेति ज्ञायते" इत्यन्तस्य भाष्यसंदर्भस्य सामान्यतः स्मृतिपुराणप्रतिपाद्यार्थविशेषनिर्णयमात्रार्थप्रवृत्तत्वेन "प्रत्यस्तमितभेदम्" इति श्लोकविशेषार्थनिर्णयमात्रप्रवृत्तत्वाभावात्, विशिष्य तेषां वचना-

नामन्यथाकरणस्य पूर्वोत्तरपर्यालोचनयोत्तरत्र करिष्यमाणत्वादिति वदन्ति । **सविशेषपरत्वं दर्शितं भवतीति ;** नित्यत्वव्यापकत्वादीनां प्रतिपादकस्य श्लोकस्य सविशेषपरत्वमिति भावः । **उपसंहारस्य बुद्धिस्थत्वादिति ;** 'समस्ताः शक्तयश्चैताः' इत्यादीनां योगोपसंहारगतत्वेनोपसंहारसाम्येन तस्यैव बुद्धिस्थत्वादित्यर्थः । **निर्व्यापारमनाख्येयमित्यादीति ;**

"निर्व्यापारमनाख्येयं व्याप्तिमात्रमनूपमम् ।
आत्मसंबोधविषयं सत्तामात्रमलक्षणम् ॥
प्रशान्तमनसं शुद्धं दुर्विभाव्यमसंस्थितम् ।
विष्णोर्ज्ञानमयस्योक्तं तज्ज्ञानं परमं पदम् ॥
तत्राज्ञाननिरोधेन योगिनो यान्ति ये लयम् ।
संसारकर्षणादेते यान्ति निर्बीजतां द्विज ॥
एवंप्रकारममलं नित्यं व्यापकमक्षयम् ।
समस्तहेयरहितं विष्ण्वाख्यं परमं पदम् ॥"

इति श्लोकक्रमः । **एवं भगवति मुक्तगुणातिदेशः कृत इति ;** ननु "निर्व्यापारम्" इत्यादिकमपि परमात्मस्वरूपपरमेवास्तु ; "एवंप्रकारम्" इत्यपि नातिदेशकम् ; अपितूक्तोपसंहाररूपमेवास्तु । न च पूर्वत्र "विष्णोः परमं पदम्" इति व्यतिरेकप्रतीतेः "एवंप्रकारम्" इति श्लोके "विष्ण्वाख्यं परमं पदम्" इति प्रतिपादनात् भेदोऽवश्यं वक्तव्य इति वाच्यम्, "विष्णोः परमं पदम्" इत्यत्र पदशब्दस्य स्वरूपपरत्वेन घटस्य स्वरूपमितिवदुपपत्तेः । अन्यथा—

"श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ।
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः ॥"
"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।"

इत्यादावगतेः । न च पूर्वश्लोकस्यापि ब्रह्मविषयत्वे "एवंप्रकारममलं नित्यं व्यापकमक्षयम्" इति व्यापकत्वादिकीर्तनवैयर्थ्यम्, व्यापकत्वादीनां "व्याप्तिमात्रमनूपमम्" इत्यादिनोक्तेरिति वाच्यम्, तस्योभाभ्यां समाधेयत्वात् । अत एव "प्रत्यस्तमितभेदम्" इत्यस्यापि न मुक्तपरत्वम् ; तत्र हि प्रकरणे वेदान्तवेद्यस्यादित्यवर्णस्य मूर्तस्य शुभाश्रयत्वमुच्यते । तत्र च मूर्तस्यैव शुभाश्रयत्वं वदता दिव्यात्मस्वरूपस्यालम्बनत्वं हि प्रथमतः

प्रतिक्षेप्तव्यम्, न तु जीवस्वरूपस्य। परमात्मनो ध्येयत्वे सिद्धे परमात्मनः परिशुद्धस्वरूपे ध्येयत्वचिन्तावतरति। ततश्च तन्निराकरणमन्तरेण शुद्धजीवस्वरूपध्येयत्वनिराकरणेऽपेक्षित-परित्यागोऽनपेक्षितस्वीकारश्च स्यादिति चेत्—न; अस्याक्षेपस्य द्वैतपर्यवसितत्वेन पार्थक्येन निरसनीयाभावात्; अद्वैतविषये च पूर्वाचार्यैरेव पराकृतत्वेन इदानीं निरसनीयांशाभावादुपरम्यते। पाठक्रमाधीनोपक्रमत्वं हि मुख्यं, न त्वर्थक्रमाधीनमित्यपरितोषादाह—**यद्वा प्रथमांशोपक्रम इति। महावाक्यस्वारस्यविरोध इति;** "प्राणस्तथानुगमात्" इत्यत्र महावाक्यविरुद्धप्रक्रमस्य दुर्बलत्वप्रतिपादनादिति भावः। **तच्छेषभूतस्तदनुगुणार्थो वर्णनीय इतीति;** मुख्याया अपि दीक्षणीयायाः प्रधानसोमयागविरोधात् न पूर्वकालानुग्रह इति "अङ्गगुणविरोधे च तादर्थ्यात्" इत्यत्र निर्णीतत्वादिति भावः। **उपक्रमोपक्रमभूतेति;** विधिशेषभूतस्याप्यर्थवादस्य प्रक्रमस्थत्वेन प्राबल्यमित्युपक्रमाधिकरणनिर्णीतत्वादिति भावः। **प्रश्नोत्तरवरलाभेति;**

"सोऽहमिच्छामि सर्वज्ञ श्रोतुं त्वत्तो यथा जगत्।
बभूव भूयश्च यथा महाभाग भविष्यति॥"
"देवता पारमार्थ्यं च यथावद्वेत्स्यते भवान्।
प्रवृत्ते च निवृत्ते च कर्मण्यस्त्वमला मतिः॥"

इत्यादिना जगत्सृष्टितत्क्रमतत्प्रकारादिप्रश्नतदुत्तरग्रन्थनिर्माणानुगुणवरदानाद्यसंगतिप्रसङ्गात्। निर्विशेषविषयत्वे किमधिष्ठानमिति प्रश्नस्य निर्विशेषमधिष्ठानमित्येवोत्तरं स्यादिति भावः। तृतीयातत्पुरुषाश्रयणे आत्मशब्दस्य भावप्रधानत्वाश्रयणं क्लिष्टम्। संस्थितशब्दस्य विशिष्टत्वार्थाश्रयणं च क्लिष्टम्। सर्ववस्तुरूपविशेषणप्रतिपत्तिगौरवं चेत्यस्वरसादाह—**यद्वा आत्मत्वेन संस्थिततयेति;** अत्रात्मसंस्थित इत्यस्य 'आत्मनि संस्थितः' इति सप्तमीतत्पुरुषः। तदर्थोपपादकः "आत्मत्वेन संस्थिततया सर्वशरीरकत्वात्" इत्यंश इति द्रष्टव्यम्। सर्वपर्यवसानभूमिः स्वनिष्ठ इति छेदः। इति वस्त्वपरिच्छेद उक्त इति ग्रन्थ उक्तपक्षद्वयशेषः। द्विविधो हि वस्त्वपरिच्छेदः, सर्ववस्तुसामानाधिकरण्यार्हत्वं, गुणैः समाभ्यधिकराहित्यं चेत्यभिप्रेत्याह—**सर्ववस्तुसामानाधिकरण्यार्हत्वमित्यादिना समत्वाभ्यधिकत्वासंभवादित्यन्तेन।** देशकालापरिच्छेदयोः "परः पराणां, परमात्मा" इत्येताभ्यां सिद्धत्वात् नित्यत्वविभुत्वव्यति-

रिक्तगुणैरित्युक्तम् । **पञ्चकल्पनान्वितत्वमिति ;** संज्ञाजातिगुणक्रियावयवलक्षणपञ्च-कल्पनान्वितत्वमित्यर्थः । **शब्दवाच्यास्त एव विशेषणमिति ;** रूपवर्णादेर्निर्देशो रूपवर्णादिनिर्देशः ; षष्ठीतत्पुरुषः । ततो निर्देशविषयो विशेषणं निर्देशविशेषणमिति मध्यम-पदलोपिसमास इति भावः । अस्मिन् पक्षे निर्देशविशेषणपदं व्यर्थम्, तेन विनैव तदर्थ-प्रतीतेरित्यस्वरसात् द्वन्द्वमभिप्रेत्याह—**यद्वा रूपवर्णादितद्वाचिशब्दरूपैरिति ।** अनि-त्येषु रूपादिषु रूपादिमत्त्वाभावात् नानित्यत्वव्यापकं रूपादिमत्त्वमित्यस्वरसादाह—**यद्वा अनित्यत्वव्याप्येति । जायते अस्तीत्यवस्थाद्वयमिति ;** अत्र केचित्—इतराणि हि वस्तूनि 'अस्ति जायते' इत्यादिभिः षड्भिः शब्दैर्व्यवह्रियन्ते । ब्रह्म तु 'अस्ति' इति शब्देनैव सर्वदा व्यवह्रियते । न तु तद्व्यतिरिक्तैः पञ्चभिरित्युक्तेरुचितत्वादवस्थाद्वया-परिग्रहेऽपि न दोष इति वदन्ति । **औणादिकप्रत्ययस्येति ;** "उणादयो बहुलम्" इति बहुलग्रहणादिति भावः । **निरचिनोदनन्तमिति ;** "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यत्रानन्तमिति श्रुतिरित्यर्थः ।

### श्रुतप्रदीपिका

अथ तदुपसंहारेऽपि विग्रहमुखेन सविशेषत्वमाह—**समस्ता इति ।** समस्त-शक्तितद्ब्रह्मचेष्टावन्ति रूपाणि करोतीत्यन्वयः । परविषयत्वोपगमेन सविशेषपरता दर्शिता ; अथ जीवस्वरूपपरत्वे निषिद्धानां सङ्कुचितविषयं तादृगर्थपरविषयान्यवचनैः उपपादयिष्यं-स्तदुभयघटनाय परस्मिन्नतिदिष्टजीवगुणग्रन्थमुदाहरति—**एवंप्रकारमिति ।** अमलत्वादयो मुक्तेऽप्यसंभाविनः । अमलं मलविरोधि समस्तैः स्वत इति भावः । पूर्वं परमपदशब्दोक्त-मुक्तव्यावृत्त्यर्थमाह—**विष्ण्वाख्यमिति ।** अनेन ज्ञानस्वरूपमित्यादेः परोक्तार्थपरत्व-व्युदासाय बुद्धिस्थक्रमेण प्रथमांशोपसंहारेऽपि तत्प्रतिकूलार्थो दर्शितो भवति । अथ तदर्थ-निष्कर्षाय प्रथमांशोपक्रमसमर्थनात् शास्त्रोपक्रमस्थं च वचनमुदाहरति—**पर इति ।** पूर्वार्धेन त्रिविधानन्त्यसंग्रहः । पूर्वपादेन कालात्यन्तसिद्धिः । अस्मदादेः परेषां देवादीनां चानन्त्यात् । **आत्मसंस्थितः ;** स्वनिष्ठः । कालपरिच्छेदव्यापकनिवृत्तिपूर्वकं तन्निवृत्ति-माह—**रूपेत्यादिना ।** कर्मकृता जातिः गुणक्रियावयवतन्निर्देशा एव विशेषणानि । **केवलम् ;** न तु 'जायते वर्धते' इत्यादिशब्दैः । सर्वत्रेत्यादिश्लोकत्रयेण नामनिर्वचन-मुखेन देशानवच्छेदप्रसङ्गात् तन्नामवत एव ब्रह्मत्वं वस्त्वनवच्छेदं चाह—**सर्वत्रेति ।**

श्रीभाष्यम्

" प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः ।
विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ "

" द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।
क्षराक्षरस्वरूपे ते सर्वभूतेषु च स्थिते ॥
अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं जगत् ।
एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ॥
परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् । "

" विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथापरा ।
अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ।
संसारतापानखिलानवाप्नोत्यतिसंततान् ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता ।
सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥ "
प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया ।
विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ।
तयोः सैव पृथग्भावकारणं संश्रयस्य च । "

" यथाऽसक्तो जले वातो बिभर्ति कणिकाशतम् ।
शक्तिः सापि तथा विष्णोः प्रधानपुरुषात्मनः । "

" तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
आविर्भावतिरोभावजन्मनाशविकल्पवत् । "

इत्यादिना परं ब्रह्म स्वभावत एव निरस्तनिखिलदोषगन्धं समस्तकल्याणगुणात्मकं जगदुत्पत्तिस्थितिसंहारान्तःप्रवेशनियमनादि-लीलं प्रतिपाद्य कृत्स्नस्य चिदचिद्वस्तुनः सर्वावस्थावस्थितस्य पारमार्थिकस्यैव परस्य ब्रह्मणः शरीरतया रूपत्वं शरीररूपतन्वंशशक्तिविभूत्यादिशब्दैस्तत्तच्छब्दसामानाधिकरण्येन चाभिधाय तद्विभूतिभूतस्य चिद्वस्तुनः स्वरूपेणावस्थितिमचिन्मिश्रयता क्षेत्रज्ञरूपेण स्थितिं चोक्त्वा क्षेत्रज्ञावस्थायां पुण्यपापात्मककर्मरूपाविद्यावेष्टितत्वेन स्वाभाविकज्ञानरूपत्वाननुसंधानमचिद्रूपार्थाकारतयाऽनुसन्धानं च प्रतिपादितमिति परं ब्रह्म सविशेषं, तद्विभूतिभूतं जगदपि पारमार्थिकमेवेति ज्ञायते ।

**श्रुतप्रकाशिका**

एवं शास्त्रोपक्रमे वासुदेवाख्यमुभयलिङ्गकं वस्तुप्रतिपाद्यमुक्तम् ; शास्त्रोपसंहारे च तथोक्तमिति दर्शयति—**प्रकृतिर्येति** । परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात्तद्व्यावृत्त्यर्थं साक्षात्परमात्मलक्षणं जगत्कारणत्वमुक्तम्—**लीयेते परमात्मनीति** । स चेश्वरानतिरिक्त इति ज्ञापनार्थः **परमेश्वर**शब्दः । ईश्वरश्च न देवतान्तरमिति ज्ञापनाय **विष्णुनामे**त्युक्तम् । अत्र 'परमात्मा, आधारः, परमेश्वरः' इति पदैः शरीरिलक्षणं स्पष्टम् । एवं शास्त्रोपक्रमोपसंहारयोरवान्तरप्रकरणोपक्रमोपसंहारयोश्च हेयप्रत्यनीककल्याणगुणास्पदं नारायण एव परं ब्रह्मेति प्रतिपाद्यत इति दर्शितम् । अथाविद्यासंबन्धादयश्च ब्रह्मण एव हि प्रतिपाद्यन्ते ; तत्कथं यथोक्तस्वरूपस्य ब्रह्मण उपपद्यत इति शङ्कायां "काठिन्यवान् यो बिभर्ति" इतिवत् द्वारद्वारिभावेनोपपद्यत इति वक्तुं परमात्मनो जीवात्मनां चात्मशरीरभावेन संबन्धं तेषामविद्यासंबन्धादिकं च वक्ष्यन् प्रथमं जीवब्रह्मणोः शरीरिभावरूपसंबन्धं दर्शयति—**द्वे रूपे इत्यादिना** । **मूर्तं चामूर्तमेव चेति** ; बद्धश्च मुक्तश्चेत्यर्थः । एतद्विवृणोति—**क्षराक्षरस्वरूपे इति** ; ज्ञानसंकोचात्मकक्षरणवदसंकुचितज्ञानं चेत्यर्थः । **सर्वभूतेषु च स्थिते** ; अर्हार्थे क्तः, सर्वभूतस्थित्यर्हे । सूक्ष्मतरतया व्यापनक्षमे इत्यर्थः । यद्वा बद्धस्य स्वरूपेण सर्वभूतस्थितिः । मुक्तस्य तु धर्मभूतज्ञानद्वारेणेति । **अक्षरं तत्परं**

**ब्रह्मेति**; तन्मुक्तस्वरूपमक्षरम्। **क्षरं सर्वमिदं जगत्**; इदं बद्धस्वरूपं क्षरमित्यर्थः। रूपत्वं विशिनष्टि—**एकदेशेति**; **शक्तिः**; अपृथग्भूतं कार्योपयोगिविशेषणम्। **एकदेशस्थितस्य विस्तारिणीति** विशेषणद्वयेनासंकीर्णस्वभावत्वमुक्तम्। अस्मिन् श्लोके **अखिलं जगदिति** चिदचिदात्मकं जगदुच्यते। तुल्यन्यायत्वादक्षरस्यापि शक्तित्वसिद्धिः। यद्वा अखिलजगच्छब्देनाक्षरस्यापि क्रोडीकारः, त्रिपाद्विभूतेरपि लोकशब्दवाच्यत्वात्, तत्समानार्थत्वात् जगच्छब्दस्य, अखिलशब्दस्य संकोचकाभावाच्च। "क्षरं सर्वम्" इत्यत्र क्षरसामानाधिकरण्यमपवादः। इह तदभावादक्षरस्याप्यभिधानमुपपद्यते। इदंशब्दस्य प्रकृतवाचित्वात् क्षराक्षरपरत्वं युज्यते। नन्वत्र क्षराक्षरशब्दौ कार्यकारणरूपेणावस्थितपरब्रह्मपरौ, परब्रह्मशब्दमुख्यार्थसिद्धेः; अन्यथा ब्रह्मशब्दानामेकप्रकरणस्थानामर्थवैरूप्यं च स्यात्। जगतो ज्योत्स्नास्थानीयत्वं चोपपद्यते, प्रभायाविशीर्णावयवत्वेनाग्निकार्यत्वोपपत्तेः। नैवम्, "ब्रह्मणो रूपे" इति व्यतिरेकनिर्देशस्वारस्यभङ्गप्रसङ्गात्; स च कार्यकारणयोर्ब्रह्मव्यतिरिक्तत्वाभावात्। यदि षष्ठीस्वारस्याय मूर्तत्वामूर्तत्वे विवक्षिते, तदा मूर्तामूर्तशब्दस्वारस्यभङ्गः। भावप्रधानत्वाविवक्षायां रूपशब्दसामानाधिकरण्यायोगः। यद्युच्येत—ब्रह्मणो द्वे रूपे ब्रह्म हि मूर्तममूर्तं चेति, तदा प्रथमान्तब्रह्मशब्दाध्याहारदोषः स्यात्; षष्ठ्यन्तब्रह्मशब्दस्य मूर्तामूर्तशब्दसामानाधिकरण्यायोगात्। किंच "सर्वभूतेषु च स्थिते" इति चानुपपन्नम्; सर्वभूतशब्दस्य कार्यवाचितया तत्र कार्यस्थितावुच्यमानायां स्वस्मिन् स्ववृत्तिप्रसङ्गात्, कारणस्यापि कार्यादनन्यतया स्ववृत्तिप्रसङ्गाच्च। अवस्थाद्वयस्य सर्वभूतस्थितिरिति च न वाच्यम्, धर्मिपर्यन्तक्षराक्षरशसामानाधिकरण्यायोगात्; तयोरप्यवस्थापरत्वे स्वारस्यभङ्गात्; अवस्थावद्वाचिजगच्छब्दब्रह्मशब्दसामानाधिकरण्यायोगाच्च। तस्मिन् सोढेऽपि कारणावस्थायाः कार्ये विद्यमानत्वायोगाच्च, शक्तिशब्दस्य कार्यवाचित्वायोगाच्च श्लोकस्य नायमर्थः। उपचारतोऽपि कार्योपयोगिविशेषणं हि शक्तिशब्देन व्यपदेशमर्हति, कार्योपयोगिविशेषणत्वस्य सामान्यात्। शक्तिर्हि शक्तप्रत्यपृथग्भूतं कार्योपयोगि विशेषणम्। कार्यं तु न कारणस्यापृथग्भूतं विशेषणं कार्योपयोगि च भवति, कार्यकारणयोरनन्यत्वात् स्वस्य स्वयमेव विशेषणत्वायोगात्। कार्यत्वं विशेषणमिति चेत्—सत्यम्; तथापि धर्मिवाचिनो जगच्छब्दस्य कार्यतावाचित्वाभावात् शक्तिशब्दसामानाधिकरण्यमुपचारतोऽपि नोपपद्यते। कार्योपयोग्यपृथग्भूतविशेषणं शक्तिरिति मुख्यत्वमस्मन्मते संभवेत्।

क्षरशब्दस्य कार्यपरत्वे दृष्टान्तवैघट्यं च स्यात्; तच्च ज्योत्स्नाया विशीर्णावयवत्वाभावेना-ग्निकार्यत्वाभावात्। न च ' क्षरं प्रधानममृताक्षरं हरः'' इति प्रयोगानुसारेण चेतनाचेत-नपरत्वं युक्तम्, अचिदंशस्य स्वस्मिन् स्ववृत्तिप्रसङ्गेन सर्वभूतस्थित्युक्त्यनुपपत्तेः। चिदचि-त्संघातरूपेषु भूतेषु द्वयोरवस्थानमुपपन्नमिति चेत्—न; समुदायिनोः समुदायनिष्ठत्वानु-पपत्तेः। समुदायो हि समुदायिनिष्ठः। उपरितनग्रन्थवैरूप्यं च स्यात्। उत्तरत्र हि "भूप मूर्तममूर्तं च" इति मूर्तामूर्तशब्दाभ्यां रूपद्वयं प्रस्तुत्य हिरण्यगर्भादीन् निर्दिश्य "मूर्तमेतद्धरे रूपं भावनात्रितयान्वितम्" इति मूर्तशब्दवाच्यरूपस्य भावनात्रयान्वयकथ-नात्। न ह्यचेतनस्य कर्मब्रह्मभावनान्वयः। "सोक्षरः परमः स्वराट्" इत्यत्र हीन्द्रादि-बद्धविलक्षणवाचित्वात् "स स्वराड् भवति" इतिवन्मुक्तवाचिस्वराट्च्छब्दसामानाधिकर-ण्याच्चाक्षरशब्दो मुक्तात्मपरः। अतस्तदनुरोधेनाक्षरशब्दोऽत्रापि मुक्तात्मपरः। ब्रह्मशब्दार्थ-वैरूप्यं तु "तपसा चीयते ब्रह्म" "तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति श्रुता-विवानेकोपपत्तिबलाद्युज्यते। अतो यथोक्त एवार्थः। ब्रह्मणोऽविद्यासंबन्धद्वारभूते जीवा-त्मन्यविद्यान्वयं दर्शयति—**विष्णुशक्तिरित्यादिना; सर्वगा;** चतुर्मुखादिपिपीलिकान्त-सर्वशरीरस्था। जातावेकवचनम्। यद्वा धर्मभूतज्ञानेन स्वतः सर्वं व्याप्तुं क्षमा। कर्मणा वेष्टिता; कर्मणा संकुचितज्ञानेनेत्यर्थः। तर्हि सर्वे अज्ञाः स्युरित्यत्राह—**तयेति;** कर्म-तारतम्यानुगुणं ज्ञानतारतम्यवती क्षेत्रज्ञशक्तिरित्यर्थः। सर्वेषां ज्ञाननित्यत्वस्य मुक्तौ सर्व-विषयकत्वस्य च प्रामाणिकत्वाद्बद्धावस्थायां संकोचविकासौ सिद्धौ। तत्तारतम्यं च 'पुंसः शक्त्युपलक्षितः'' "तच्छक्त्या पशवोऽधिकाः'' इति स्पष्टीकृतम्। जातीनामप्यपृथक्सिद्ध-धर्मत्वेन रूपशब्दवाच्यत्वाच्च तद्व्यावृत्त्यर्थं प्रस्तुतं रूपत्वं नियाम्यत्वलक्षणमित्याह—**प्रधानं चेति**। चिदचितोः परमात्मनियाम्यत्वधार्यत्वव्याप्यत्वनित्यत्वादेः प्रमाणान्तरागोचरतया विहितत्वान्निषेध्यत्वमयुक्तमिति नियाम्यत्वादिधर्माणां पारमार्थ्येन तदाश्रयभूतयोश्चिदचितोश्च पारमार्थ्यान्नित्यत्वोक्त्या च तयोर्भ्रमविषयत्वासंभवश्च दर्शितो भवति। न हि धर्मिसत्यत्वेन विना धर्मसत्यत्वं युक्तम्। नापि बाध्यस्य नित्यत्वं युक्तम्। **सर्वभूतात्मभूतया;** सर्व-भूतव्यापिकयेत्यर्थः। **विष्णुशक्त्या;** विष्णोर्नियमनशक्त्या। अन्यथा "शक्तिः सापि तथा विष्णोः'' इत्यनन्तरोक्तिविरोधात्। तया **वृतौ;** व्याप्तौ। नियमनेन च धारणं श्रुतिसिद्धम्। "एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः'' इति

हि श्रूयते । अतो बिभर्तीत्युत्तरश्लोकसामञ्जस्यम् । **संश्रयधर्मिणौ**; भगवदपृथक्स्थिति-धर्मकौ । **पृथग्भावः**; उपकरणोपकरणित्वलक्षणसंबन्धविशेषराहित्यं संहारः । तत्र हि करणकलेबरं नास्ति । **संश्रयः**; करणकरणित्वेन संबन्धः, सृष्टिरित्यर्थः । यद्वा **संश्रयः**; तयोः संबन्धः संसारः । पृथग्भावो मोक्षः । तत्सर्वं भगवन्नियमनाधीनमित्यर्थः । अत्र दृष्टान्तमाह—**यथेति** । कारणात्कार्यस्य विभागे दृष्टान्तः—जलस्य कणिकास्तस्माद्भेदेन बिभर्ति वायुः । संयोजकत्ववियोजकत्वयोर्वा दृष्टान्तः—परस्परं संकलिता असंकलिताश्च बिभर्ति वायुः । यद्वा प्रकृतिपुरुषगतदोषलेशराहित्ये दृष्टान्तः । वायुर्हि कणिकाशतं तत्स्वभावास्पृष्टो बिभर्ति । **प्रधानपुरुषात्मनः**; प्रधानपुरुषयोरात्मनः । समस्तचिदचिद्वस्तुजातमिति कर्माध्याहर्तव्यम् । यद्वा प्रधानशब्दानन्तरपुरुषशब्दो बद्धपरः । आत्मशब्दः प्रकृतिसंसर्गरहितमुक्तात्मपरः । तान् बिभर्तीति । एवंविधस्य जगतः परमार्थत्वमाह—**तदेतदिति** । मिथ्या हि बाध्यत्वेनानित्यम् । पारमार्थ्ये सति हि नित्यत्वसंभवः । उदाहृतवचनार्थान् संक्षेपेणाह—**इत्यादिनेति** । निरस्तनिखिलदोषत्वं कल्याणगुणात्मकत्वं च "स सर्वभूतप्रकृतिम्" "समस्तकल्याण—" इत्यादिश्लोकार्थः । जगदुत्पत्त्यादिलीलत्वं भगवच्छब्दनिर्वचनसिद्धम् । **अन्तःप्रवेशनियमनादी**त्यादिशब्देनाध्यक्षत्वानुमन्तृत्वे उच्येते । **इत्यादिने**त्यादिशब्देन "क्रीडतो बालकस्येव" इत्यादिवचनं विवक्षितम् । तदर्थो लीलाशब्देन विवक्षितः । **सर्वावस्थावस्थितस्य**; कार्यकारणावस्थितस्य बद्धमुक्तावस्थितस्य चेत्यर्थः । प्रमाणान्तरगोचरस्यार्थस्य हि **निषेधार्थं** भ्रान्तिसिद्धत्वेनानुवादसंभवः । परमात्मनियाम्यत्वादिकं तु प्रमाणान्तरागोचरत्वाद्विधित्सितमेवेति विहितस्य निषेधोऽनुपपन्न इत्यभिप्रायेण **पारमार्थिकस्यैवे**त्युक्तम् । नियन्तृत्वनियाम्यत्वादिप्रतिपादनसिद्धोऽर्थः शरीरतया रूपत्वं "तदैव सर्वमेवैतत्" इत्यत्र तच्छब्दसामानाधिकरण्यं, 'द्वे रूपे ब्रह्मणस्तस्य' इत्यादिनोक्तमर्थमाह—**शरीररूपतन्त्रेणेति** । **प्रतिपादितमितीति**; एवं शास्त्रोपक्रमोपसंहारेष्ववान्तरप्रकरणोपक्रमोपसंहारेषु च प्रतिपादितत्वादित्यर्थः । **ज्ञायत** इत्यन्तेनोक्तवचनार्थसंग्रहः कृतः । उदाहृतवचनैर्वस्तुनः सविशेषत्वं जगतः सत्यत्वं च स्थितम् ।

### भावप्रकाशिका

**परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनादिति**; "अभेदव्यापिनो वायो-

स्तथासौ परमात्मनः'' इत्यादौ परमात्मशब्दस्य क्वचिज्जीवेऽपि प्रयोगदर्शनात् । ''प्रकृतिर्या मयाख्याता'' इति श्लोकानुपन्यासेनैव '' परमात्मा च सर्वेषामाधारः परमेश्वरः'' इति श्लोकोक्तौ जीवस्यापि परिग्रहप्रसङ्गात् लयाधारस्य साक्षात्परमात्मन एव परमेश्वरत्वविष्णुनामत्वादिकं प्रतिपादनीयमित्यभिप्रेत्य लयाधारत्वं '' प्रकृतिर्या मयाख्याता '' इति पूर्वश्लोके वर्णितम् । ततश्च प्रकृतिपुरुषौ यस्मिन् परमात्मनि लीयेते स परमात्मा सर्वाधारः परमेश्वरो विष्णुनामा वेदान्तप्रतिपाद्य इति श्लोकद्वयैकवाक्यतयेति भावः । एतेन '' लीयेते '' इत्यनेन कथं जीवव्यावृत्तिरिति शङ्का निरस्ता । **काठिन्यवान् यो बिभर्तीतिवदिति ;** '' काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः'' इत्यत्र परमात्मस्वरूपे भूमिद्वारा काठिन्यवदित्यर्थः । **अर्हार्थे क्त इति ;** बहुलग्रहणादिति भावः । एतदस्वरसादेवाह— **यद्वा बद्धस्य स्वरूपेणेति ;** बद्धजातीयस्येत्यर्थः । **असंकीर्णस्वभावत्वमुक्तमिति ;** परस्परासंकीर्णस्वभावाग्निज्योत्स्नादृष्टान्तबलेन दार्ष्टान्तिकेऽपि तथा सिध्यतीति भावः । **चिदचिदात्मकं जगदुच्यत इति ;** ' गच्छति, नश्यति ' इति व्युत्पत्त्या जगच्छब्दस्य विनाशिमात्रपरत्वेन मुक्तपरत्वासंभवेऽपि तुल्यन्यायतया मुक्तस्यापि ग्रहणं सिध्यतीति भावः । **ब्रह्मशब्दानामेकप्रकरणस्थानामिति ;** ' द्वे रूपे ब्रह्मणस्तस्य '' '' परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत् '' इत्यादीनां ब्रह्मपरत्वात् '' अक्षरं तत्परं ब्रह्म '' इति परशब्दसमानाधिकृतब्रह्मशब्दस्य जीवेऽत्यन्तास्वारस्याच्चेति भावः । ननु क्षराक्षरशब्दाभ्यां कार्यकारणावस्थब्रह्मपरामर्शे कार्यकारणभावानापन्नपरस्परभिन्नाग्निज्योत्स्नादृष्टान्तसम्प्रतिपत्तिरित्याशङ्क्याह—**जगतो ज्योत्स्नास्थानीयत्वं चेति । स चेति ;** व्यतिरेकनिर्देशस्वारस्यभङ्ग इत्यर्थः । ननु रूपशब्दः स्वरूपपरोऽस्तु ; ब्रह्मणो द्वे रूपे मूर्तामूर्ते इत्येवं किं न स्यात् ? ततश्च न भावप्रधानत्वं विवक्षणीयम् , नापि षष्ठ्यस्वारस्यमित्याशङ्क्याह— **भावप्रधानत्वाविवक्षायामिति ।** स्वरूपरूपगुणविभूत्यादिषु स्वरूपरूपशब्दयोर्भेदेनोपात्ततया स्वरूपशब्दास्वारस्यप्रसङ्गेन रूपशब्देन स्वरूपपरिग्रहासंभवात् भावप्रधानत्वमवश्यं विवक्षणीयम् । अतो मूर्तामूर्तशब्दास्वारस्यमिति भावः । **यद्युच्येत ब्रह्मणो द्वे रूप इति ;** द्वे रूपे इति प्रतिज्ञाय ब्रह्म मूर्तं चामूर्तं चेति कथिते मूर्तत्वामूर्तत्वे एव रूपे फलिष्यत इति भावः । **धर्मिपर्यन्तक्षराक्षरेति ;** क्षराक्षरस्वरूपे मूर्तामुर्ते इति सामानाधिकरण्यं न स्यादित्यर्थः । **अवस्थावद्वाचिजगच्छब्देति ;** '' अक्षरं तत्परं ब्रह्म क्षरं सर्वमिदं

जगत् " इत्यत्रावस्थावद्वाचिब्रह्मजगच्छब्दयोः क्षराक्षरशब्दसामानाधिकरण्यायोगाच्चेत्यर्थः । **शक्तिशब्दस्य कार्यवाचित्वायोगाच्चेति ;** कार्यावस्थब्रह्मवाचित्वायोगाच्चेत्यर्थः । शक्तिशब्दस्य कार्यवाचित्वाभावेऽप्युपचारेण कार्यपरत्वमस्त्वित्यत आह— **उपचारतोऽपीति ।** अपृथक्सिद्धकार्योपयोग्यद्रव्यविशेषः शक्तिशब्दस्य मुख्यार्थः । औपचारिकप्रयोगे तु कार्योपयोगिविशेषणत्वमात्रं निमित्तमित्यर्थः । केचित्तु—अत्र विशेषणपदमपृथक्सिद्धविशेषणपरम् ; वाशब्दश्चाध्याहर्तव्यः ; ततश्च कार्योपयोगि वा अपृथक्सिद्धविशेषणं वा शक्तिशब्देन व्यपदेशमर्हतीति व्याचक्षते । **मुख्यत्वमस्मन्मत इति ;** मुख्यकल्पत्वमित्यर्थः । अत एवोक्तं वेदान्ताचार्यैर्न्यायसिद्धाञ्जने शक्तिनिरूपणे—"क्षेत्रज्ञाविद्यानां जगतश्च परब्रह्मशक्तित्वव्यपदेशोऽपि गौण्या लक्षणया वा " इति । **भावनात्रयान्वयकथनादिति ;**

" ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ।
सनन्दनादयो ब्रह्मन् ब्रह्मभावनया युताः ॥
कर्मभावनया चान्ये देवाद्याः स्थावरावराः ।
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ॥"

इत्युक्तप्रकारेण कर्मभावनाब्रह्मभावनोभयभावनारूपभावनात्रयम् ; भावना वासना संस्कार इति यावदिति द्रष्टव्यम् । " तपसा चीयते ब्रह्म " इति मुण्डके " यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यत्र ब्रह्मशब्दः प्रधाने प्रयुक्तः । तत्रैव प्रकरणे " तपसा चीयते ब्रह्म " इत्यत्र ब्रह्मशब्दः परमात्मनि प्रयुक्तः । इदं च " अदृश्यत्वादिगुणको धर्मोक्तेः" " स्याच्चैकस्य ब्रह्मशब्दवत् " इत्यादौ स्पष्टम् । सर्वशरीरस्थत्वस्यैकस्मिन् जीवेऽसंभवात् जीवमात्रपरत्वे जीवानां बहुत्वात् बहुवचनं प्राप्नोतीत्याशङ्क्याह—**जातावेकवचनमिति ।** यथा 'मनुष्यः, सर्वदेशः' इत्यादाविति द्रष्टव्यम् । **तत्तारतम्यं चेति ;**

" अप्राणिमत्सु स्वल्पा सा स्थावरेषु ततोऽधिका ।
सरीसृपेषु तेभ्योऽन्याप्यधिका च पतत्रिषु ॥
पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः ।
पशुभ्यो मनुजाश्चापि शक्त्या पुंसः प्रभाविताः ॥

तेभ्योऽपि नागगन्धर्वयक्षाद्या देवता नृप ।
शक्रः समस्तदेवेभ्यस्ततश्चापि प्रजापतिः ॥
हिरण्यगर्भश्च ततः पुंसः शक्त्युपलक्षितः ।''

इत्यादिनेत्यर्थः । **तद्व्यावृत्त्यर्थमिति ;** जातित्वनिबन्धनरूपत्वव्यावृत्त्यर्थमित्यर्थः । ननु "विष्णुशक्त्या" इत्यत्र विष्णुरूपशक्त्येत्यर्थः किं न स्यादित्याशङ्क्याह—**अन्यथा शक्तिः सापीति ।** अत्रशब्दार्थमाह—**कारणादिति । जलस्य कणिका इति ;** जलस्य कारणत्वं कणिकानां कार्यत्वमिति भावः । प्रथमव्याख्यानुसारेण दृष्टान्तं व्याख्याय द्वितीयव्याख्यानुसारेण व्याचष्टे—**संयोजकत्ववियोजकत्वयोर्वेति ;** अस्मिन् पक्षे सक्तमसक्तं च बिभर्ति संयोज्य च वियोज्य च बिभर्तीत्यर्थः । **प्रधानपुरुषयोरात्मन इति ;** "प्रधानपुरुषात्मन" इति षष्ठ्यन्तमेतत् विष्णोरित्यस्य विशेषणं द्रष्टव्यम् । अध्याहारदोषादाह—**यद्वा प्रधानशब्दानन्तर इति । तदेव सर्वमेवैतदित्यत्र तच्छब्दसामानाधिकरण्यमिति ;** यद्यपि व्याख्येयभाष्यक्रमानुरोधेन शरीररूपतन्वंशेत्यादिभाष्यं व्याख्यायैव तच्छब्दसामानाधिकरण्येनेत्येतद्भाष्यं व्याख्यातुमुचितम् , तथाप्युदाहृतपुराणवचनक्रमानुसारेण तच्छब्दसामानाधिकरण्यं व्याख्यातम् । भाष्यकारेण तु शरीरतन्वादिशब्दानां शरीरत्वसाधकस्फुटप्रमाणत्वादुदाहृतपुराणवचनक्रममतिलङ्घ्य व्याख्यातमिति द्रष्टव्यम् ।

### श्रुतप्रदीपिका

शास्त्रोपसंहारेऽपि प्रासङ्गिकोक्तदेवताविशेषपरमात्मपरौ श्लोकावुदाहरति—**प्रकृतिरिति ।** अथाविद्याद्यन्वयस्य सद्वारकत्वज्ञापनाय द्वारभूतयोः शरीरत्वं तत्र तदन्वयं च दर्शयति—**द्वे रूपे इत्यादिना ; स्थिते ;** स्थित्यर्हे । जगद्ब्रह्मणोः स्वभावासंकरज्ञापनायाह—**तत्परमिति । एकदेशस्थितस्य, विस्तारिणीति** पदाभ्यामसंकीर्णस्वभावत्वमुक्तम् । **शक्तिरयुतधर्मः** । अनेन रूपत्वं विवृतम् । **सर्वगा ;** सर्वशरीरगा । धर्मद्वारा सर्वव्यापनार्हेति वा । चिदचितोः मानान्तरावगतपरमात्मनियाम्यत्वधार्यत्वनित्यत्वविधानेन तत्पारमार्थ्यनिश्चायकेन भ्रमविषयत्वासंभवं दर्शयन् **"प्रधानं च" इत्यादि** सार्धश्लोकत्रयमुदाहरति । परमात्मनियाम्यत्वादिवचनेन पूर्वोक्तं रूपत्वं चोपपादितम् । नियाम्यत्वमाह—**प्रधानं चेति ; आत्मभूतया ;** व्यापिन्या । **शक्तिः ;** नियमनशक्तिः ।

**संश्रयधर्मिणौ** ; पराश्रयत्वस्वभावौ । **तयोरिति** ; बन्धमोक्षहेतुत्वम् । असंकीर्णधारणे दृष्टान्तमाह—**यथेति** । **असक्तम्** ; स्वेन मिथश्चासंकीर्णम् । **प्रधानेत्यादि** द्वितीया-बहुवचनम्; षष्ठ्येकवचनं वा । अबाध्यत्वमाह—**तदेतदिति** । एषामर्थं संगृह्णाति—**इत्यादिनेति** । **इत्यादिने**त्यादिशब्देन परोदाहृताः श्लोका विवक्षिताः । स्वोदाहृतान् परोदाहृतान् श्लोकान् समाहृत्य पर्यालोचनायामयमर्थोऽवगम्यत इत्याह—**इत्यादिने**त्यारभ्य **प्रतीयते** इत्यन्तेन । "स सर्व" इत्याद्यर्थमाह—**निरस्तेति** । "संभर्ता" इत्याद्यर्थ-माह—**जगदिति** । आदिशब्दादध्यक्षत्वादिः । "द्वे रूपे" इत्याद्यर्थमाह—**कृत्स्न-स्येति** । "अविद्या कर्मसंज्ञान्या" इत्याद्यर्थमाह—**क्षेत्रज्ञेति** । पारमार्थिकं विभूतित्वं विहितत्वान्न मिथ्येति भावः ।

### न्यायसुदर्शनम्

ननु "प्रकृतिर्या मयाख्याता" इत्ययं श्लोकः ब्रह्मणः सविशेषत्वोपन्यासदशायां किमर्थं पठितः ? अनेन श्लोकेन ब्रह्मणो निर्विशेषत्वमेव प्रतीयते । प्रकृतिपुरुषयोर्ब्रह्मणि लयवचनेन तस्य निर्विकारत्वेन घटादिवत्तयोस्तेन कार्यकारणतायोगात् तयोर्ब्रह्मणि लयो नाम तस्मिन् कल्पितयोर्ज्ञानबाध्यत्वमेवेति । उच्यते—न तावत्कारणे लयोऽत्र लयशब्देनोच्यते; अपितु स्थितिरेव । नैमित्तिकप्राकृतात्यन्तिकाख्यस्य लयस्य वक्तव्यतया उपक्षिप्तस्य मध्यमलय उच्यते । आत्यन्तिकस्तु पञ्चमाध्याये वक्ष्यते । मध्यमलयश्च ।

"गुणसाम्यमनुद्रिक्तमन्यूनं च महामुने ।
प्रोच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ॥
इत्येषां प्रकृतिः सर्वा व्यक्ताव्यक्तस्वरूपिणी ।
व्यक्तस्वरूपमव्यक्ते तस्मान्मैत्रेय लीयते ॥" इति,

"एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान् ।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः ॥
न सन्ति यत्र देवेशे नामजात्यादिकल्पनाः ।
सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥
तत्परं ब्रह्म तद्धाम परमात्मा स ईश्वरः ।
स विष्णुःसर्वमेवेदं यतो नावर्तते यतिः ॥"

इत्यन्तैः श्लोकैस्तत्परंपरोपदेशो विवृतः । तस्मादस्मिन्नध्याये वक्तव्यस्य मध्यलयस्य प्रतिपादितत्वात्,

"सर्वेषामेव भूतानां विविधः प्रतिसंचरः ।"

इति लयत्रयस्यैव प्रस्तुतत्वात्,

"प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु तत् ।

तस्मात्प्राकृतसंज्ञोऽयमुच्यते प्रतिसंचरः ॥"

"प्रयाति प्राकृतं चैव ब्रह्माण्डं प्रकृतौ लयम् ।"

इति च प्राकृतप्रलयरूपस्य कथितत्वात् अस्य ब्रह्मणि लयपरत्वे प्राकृतलयत्वायोगात् लयान्तरत्वे लयचतुष्टयत्वप्रसङ्गात् सृष्टिदशायां प्रकृतिपुरुषयोः सृष्ट्यनुक्तेरस्मिन्नन्यत्र च तयोर्बहुशो नित्यत्ववचनाच्च अयं लयशब्दो "लीङ् संश्लेषणे" इत्यस्माद्धातोरुत्पन्नः स्थितिवचन एव लोके च स्थितिवचनोऽपि लयशब्दो दृश्यते—"श्यामीभूताः कुसुमसमूहे लीनालीनां श्रेणीमिह तरवो बिभ्राणाः" इत्यादिषु । तथात्र च "यन्मयं च जगत्" इत्यादिश्लोके "लीनमासीद्यथा यत्र" इति स्थितिवाची दृष्टः । तादात्म्यसृष्टिस्थितिलया ह्यत्र पृष्टाः । उत्तरग्रन्थे "विष्णोः सकाशादुद्भूतम्" इति त एव हि प्रत्युक्ताः । तत्र च "लीनमासीद्यथा यत्र" इत्यस्य प्रश्नस्य "तत्रैव च स्थितम्" इत्युत्तरम् । तथास्मिन्नप्युत्तरत्र भगवान् पराशरः—

"व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा ।

तत्र स्थिते निशा चास्य तत्प्रमाणा महामुने ॥"

इति "प्रकृतिर्या मयाख्यता" इत्यत्रोक्तं लयं "तत्र स्थिते" इति शब्देन विशिष्यानुबभाषे । "परमात्मा च सर्वेषाम्" इति चेममर्थं द्रढयति । ननु गीताभाष्ये सप्तमेऽध्याये—"एतयोश्चिदचित्समष्टिभूतयोः प्रकृतिपुरुषयोरपि परमपुरुषयोनित्वं श्रुतिस्मृतिसिद्धम्" इत्युक्त्वा, "महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देवे एकीभवति" इति श्रुतिरुपन्यस्ता । "विष्णोः स्वरूपात्परतो दिते द्वे" इत्यादिश्लोकः "प्रकृतिर्या मया" इत्यादिश्लोकश्च स्मृतिवचनतयोपन्यस्तौ । सत्यम्; श्रुतिस्तदर्थैव । एवं तर्हि स्मृतिरपि तथास्तु । नैवम्; * द्विविधाः स्मृतिकाराः—केचिदव्यक्तकारणवादिनः,

* **इत आरभ्य 'उभयेषामविरोधः' इत्यन्तो ग्रन्थः न्यायसिद्धाञ्जने जडद्रव्यपरिच्छेदे उद्धृतः । तत्र 'तमःकारण' इति पाठो दृश्यमानः 'तमस्कारण' इत्यत्रत्येन पाठेन शोधनीयो विज्ञायते ।**

केचित्तमस्कारणवादिनः। अव्यक्तस्यैव सूक्ष्मावस्थाभेदोऽक्षरं तमश्च नातीव भेद इत्यव्यक्ते पर्यवस्यतामभिप्रायः। तमपि भेदमुररीकृत्य तमसि पर्यवस्यताम्। तस्मादुभयेषामविरोधः। अयं तु भगवानव्यक्तपर्यवसायी। प्रायेण द्वितीयाध्यायादिषु "अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमैः" इत्यादिष्वव्यक्तस्यैव कारणतया व्यपदेशात्। "यतः प्रधान-पुरुषौ" इति यदधीनसत्तास्थितिकौ प्रधानपुरुषावित्यर्थः। यत इति हेतौ पञ्चमी। न तु "जनिकर्तुः प्रकृतिः" इति पञ्चमी। हेतुत्वं च द्विविधम्—कस्यचित्कालविशेषसह-कृतरूपेण हेतुत्वम्, कस्यचित्स्वरूपेण हेतुत्वं चेति। पूर्वहेतुना हेतुमन्तः कार्यभूता अनित्या इति चेष्यन्ते। स्वरूपमात्रहेतुना हेतुमन्तः प्रकृत्यादयः स्वाभाविकाः स्वभावहेतुका नानित्या भवन्ति; यथा परमाणुपारमाण्डिल्यादयः स्वाभाविकाः स्वभावहेतुकाः नानित्या भवन्ति। तस्मात् "यतः प्रधानपुरुषौ" इत्यत्र हेतुहेतुमद्भावमात्रं, न कार्यकारणभावः। "प्रकृतिपुरुषयोरपि परमपुरुषयोनित्वम्" इत्यादि भाष्यं चैवंपरं व्याख्येयम्। अन्यथा "प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि" इत्यादिभिस्तत्रैव विरोधः। अथवा "यतः प्रधानपुरुषौ" इत्यत्र—

"स संकोचविकासाभ्यां प्रधानत्वेऽपि च स्वतः।<br>विकासाणुस्वरूपैश्च ब्रह्मरूपादिभिस्तथा॥<br>व्यक्तस्वरूपश्च तथा विष्णुः सर्वेश्वरेश्वरः॥"

इति प्रधानपुरुषाव्यक्तशरीरकस्य भगवतस्तत्र तत्र संकोचविकासवचनात् सूक्ष्माव्यक्तशरीरात् ब्रह्मणः स्थूलप्रधानपुरुषव्यक्तीनामुत्पत्तिरिति श्लोकभाष्ययोस्तद्विषयता स्यात्। "विष्णोः सकाशात्परतो दिते" इत्यादिश्च भेदमात्रपरः। तत्र 'दिते' इति पदच्छेदः। उदिते इति छेदे सन्धिविरोधः। तस्मादेषां श्लोकानां यथोक्त एवार्थः। "द्वे रूपे ब्रह्मणस्तस्य" इत्यारभ्य "अक्षरं तत्परं ब्रह्म" इत्यत्र "तत्परम्" इति समस्तपदम्—तदेकपरं ब्रह्मेति; अन्यपरतां विहाय परब्रह्मैकप्रवणमित्यर्थः। एतच्च मुक्तात्म-स्वरूपम्। अन्यथा "द्वे रूपे" इत्युपक्रमविरोधः। "अक्षरादपि चोत्तमः" इति शास्त्रान्तरविरोधश्च। तथा "अनादि मत्परं ब्रह्म" इत्यत्र मत्परमिति पदच्छेदः। "अत्रान्तरे विविदो विदित्वा लीना ब्रह्म तत्परा ये निर्मुक्ताः" इति श्रुतौ ब्रह्मपरा मुक्ता-स्तत्परा इति ह्युक्तम्।

श्रीभाष्यम्

“ प्रत्यस्तमितभेदम् ” इत्यत्र देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्याप्यात्मनः स्वरूपं तद्गतभेदरहिततत्वेन तद्भेदवाचिदेवादिशब्दागोचरं ज्ञानसत्तैकलक्षणं स्वसंवेद्यं योगयुङ्मनसो न गोचरमित्युच्यत इति अनेन न प्रपञ्चापलापः। कथमिदमवगम्यत इति चेत्; तदुच्यते—अस्मिन् प्रकरणे संसारैकभेषजतया योगमभिधाय योगावयवान् प्रत्याहारपर्यन्तांश्चोक्त्वा धारणासिद्ध्यर्थं शुभाश्रयं वक्तुं परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयं रूपद्वयं मूर्तामूर्तविभागेन प्रतिपाद्य, तृतीयशक्तिरूपकर्माख्याविद्यावेष्टितमचिद्विशिष्टं क्षेत्रज्ञं मूर्ताख्यविभागं भावनात्रयान्वयादशुभमित्युक्त्वा, द्वितीयस्य कर्माख्याविद्याविरहिणोऽचिद्वियुक्तस्य ज्ञानैकाकारस्यामूर्ताख्यविभागस्य निष्पन्नयोगिध्येयतया योगयुङ्मनसोऽनालम्बनतया स्वतः शुद्धिविरहाच्च शुभाश्रयत्वं प्रतिषिध्य, परशक्तिरूपमिदममूर्तमपरशक्तिरूपं क्षेत्रज्ञाख्यं मूर्तं च परशक्तिरूपस्यात्मनः क्षेत्रज्ञतापत्तिहेतुभूततृतीयशक्त्याख्यकर्मरूपाविद्या चेत्येतच्छक्तित्रयाश्रयो भगवदसाधारणम् “ आदित्यवर्णम् ” इत्यादिवेदान्तसिद्धं मूर्तरूपं शुभाश्रय इत्युक्तम्। अत्र परिशुद्धात्मस्वरूपस्य शुभाश्रयतानर्हतां वक्तुं “ प्रत्यस्तमितभेदं यत् ” इत्युच्यते। तथा हि—

> “ न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः।
> द्वितीयं विष्णुसंज्ञस्य योगिध्येयं परं पदम्॥”
>
> “ समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः।
> तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥ ”

इति च वदति । तथा चतुर्मुखसनकसनन्दनादीनां जगदन्तर्वर्तिनामविद्यावेष्टितत्वेन शुभाश्रयतानर्हतामुक्त्वा बद्धानामेव पश्चाद्योगेनोद्भूतबोधानां स्वस्वरूपापन्नानां च स्वतः शुद्धिविरहाद्भगवता शौनकेन शुभाश्रयता निषिद्धा—

" आब्रह्म स्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः ।
प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥
यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः ।
अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥
पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः ।
नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥
तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् ।"

इत्यादिना । परस्य ब्रह्मणो विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्तम् । अतोऽत्र न भेदापलापः प्रतीयते ।

**श्रुतप्रकाशिका**

अथ परोदाहृतवचनानि पूर्वोदाहृतवचनार्थानुगुण्येन व्याचिख्यासुः प्रथमं " प्रत्यस्तमितम् " इत्यादि श्लोकं व्याचष्टे—प्रत्यस्तमितेति ।

" दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनि ।"
" पुमान्न देवो न नरो न पशुर्न च पादपः ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥"

इत्यादिषु प्रकृतिर्देवादिशरीरं चोपाधित्वेन प्रतीयत इत्युभयविधवचनार्थं संघटयितुं **देवमनुष्यादिप्रकृतिपरिणामविशेषेत्युक्तम्** । प्रकृतेरित्यत्र प्रकृतिशब्दनिर्देशः शरीरस्य प्रकृतिपरिणामरूपत्वादित्यभिप्रायकः । **देवमनुष्यादीति**शब्देन प्रतिषेध्यभेदस्य शरीरे विद्यमानता दर्शिता । ननु मुक्तानामुपास्यत्वाभावादुपासकस्वरूपस्याचित्संसृष्टतया प्रत्यस्तमित-

भेदत्वायोगाच्च तादृक्त्वोपदेशायोगादस्य श्लोकस्य परिशुद्धात्मस्वरूपविषयत्वानुपपत्तेः परमात्मविषयत्वं स्यादिति शङ्कापरिहाराय चोक्तम्—**देवमनुष्यादिप्रकृतिपरिणामविशेषसंसृष्टस्यापीति**। इदानीं संसरतोऽपि स्वाभाविकाकारस्य तिरोहितस्य विद्यमानत्वादाविर्भविष्यतस्तस्य तथानुसंधानायोपदेश इति भावः। "तस्यात्मपरदेहेषु सतोऽपि" इत्येतत्स्मारयितुं **संसृष्टस्यापी**त्युक्तम्। अपिर्विरोधे। पातकिसंसर्गात्पातकित्वं भवति; रुमासंसर्गात्पदार्थानां लवणत्वं भवति; अतो विरोधः। **तद्गतभेदरहितत्वेन;** भेदो रूपवर्णादिः। अनेन प्रत्यस्तमितभेदशब्दो व्याख्यातः। प्रत्यस्तमितभेदशब्देन भेदस्यापुनरुदयविनाशोऽभिप्रेतः। ततश्च प्रलयकालव्यावृत्तिः। **तद्भेदवाचिदेवादिशब्दागोचरमि**त्यनेन "अगोचरं वचसाम्" इति पदं व्याख्यातम्। **ज्ञानसत्तैकलक्षणमिति** ज्ञानपदं सत्तामात्रमिति च पदं व्याख्यातम्। 'सत्तैकलक्षणम्' इत्यत्रैकशब्देन सत्तामात्रमिति पदगतमात्रजर्थं विवृण्वता 'जायते, अस्ति' इत्यादिविकारा व्यावृत्ताः। सत्तामात्रमित्युक्ते केनाकारेण सत्तेत्यपेक्षायां ज्ञानसत्तैकलक्षणमित्युक्तम्। ज्ञानत्वाकारेण सत्तेत्यर्थः। वचसामगोचरत्वे सत्ताव्याघातपरिहारार्थं न्यायवैशेषिकोक्तजडस्वरूपताव्युदासार्थं च "आत्मसंवेद्यम्" इति पदस्यार्थमाह—**स्वसंवेद्यमिति**। यद्वा अगोचरं वचसामित्यन्तैः पदैः कल्पनाविकारराहित्ये तद्वाचिशब्दागोचरत्वे चोक्ते भेदकधर्माभावात्कथं स्वव्यावृत्तिग्रहणमिति शङ्कायामाह—**आत्मसंवेद्यमिति**। प्रत्यक्त्वेन भासमानत्वं स्वव्यावर्तकम्। अन्ये हि इदंतया भासन्त इत्यर्थः। ज्ञानपदं धर्मधर्मिणोरविशेषेणाजडत्वमाह। धर्मभूतज्ञानस्य बृहत्तया परिशुद्धात्मस्वरूपस्य ब्रह्मशब्दवाच्यत्वं "ब्रह्मणो हि प्रतिष्ठाहम्" इत्यादिष्विवोपपद्यते। **योगयुक्;** प्रक्रान्तयोगः। "एवंप्रकारममलम्" इति वचनेन परमात्मनि मुक्तस्वभावस्यातिदिष्टत्वेन मुक्तस्य परमात्मसाम्यप्रतिपत्तेः, परमात्मनश्च "अपक्षयविनाशाभ्याम्" "रूपवर्णादिनिर्देश—" इत्यादिवचनैः कतिपयभेदराहित्यस्य षड्भावविकारराहित्यस्य च स्पष्टत्वात्तदानुगुण्येनानतिविस्तरं श्लोको व्याख्यातः। अस्य श्लोकस्य मुक्तात्मविषयत्वं तस्य च प्रक्रान्तयोगस्यागोचरत्वं च कथं ज्ञायत इत्यभिप्रायेणाह—**कथमिदमिति**। प्रकरणादेवावगम्यत इति परिहरति—**तदुच्यत इत्यादिना**। **अस्मिन् प्रकरणे;** न ह्ययं मुक्तकश्लोकः, अपि तु प्रबन्धस्थः। अतः "पूर्वापरापरामृष्टः शब्दोऽन्यां कुरुते मतिम्" इति तत्परिहाराय पूर्वापरपरामर्शेनैवार्थो वर्णनीय इति भावः।

**संसारैकभेषजतया योगमभिधायेति ;** एकशब्देन "क्लेशानां च क्षयकरं योगादन्यन्न विद्यते" इत्यस्यार्थोऽभिप्रेतः ; वाक्यार्थज्ञानमात्रस्यापवर्गोपायत्वनिरासश्च स्फोरितः । **योगावयवान् प्रत्याहारपर्यन्तानिति ;**

"प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये ।
वशीकृते ततः कुर्यात् स्थितं चेतः शुभाश्रये ॥"

इत्यादिवचनार्थः संक्षिप्तः । **परस्य ब्रह्मणो विष्णोः शक्तिशब्दाभिधेयमिति ;** "विष्णुशक्तिः परा प्रोक्ता" इत्यत्र विष्णुरेव शक्तिर्ब्रह्मण इति केचिद्वदन्ति ; तद्व्यावृत्तये विष्णोरिति व्यासः कृतः । "परस्य ब्रह्मणः शक्तिः" "परमब्रह्मभूतस्य वासुदेवस्य" "ततः स वासुदेवेति" "तद्ब्रह्म परमं नित्यम्" "परमात्मा च सर्वेषाम् ।"

"विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ।"
"परब्रह्मस्वरूपस्य विष्णोः शक्तिसमन्वितम् ॥"

"शक्तिः सापि तथा विष्णोः" इत्यादिभिर्विष्णोरेव परब्रह्मत्वं जगतस्तच्छक्तित्वं तच्छक्तिनियाम्यत्वं चोक्तमिति तत्प्रतिपादकतत्तद्वचनविरोधात्तदयुक्तमित्यभिप्रायः । **शक्तिशब्दाभिधेयम् ;** अपृथक्सिद्धविशेषणं हि शक्तिः । ब्रह्म च न कस्यचिद्विशेषणम् । अतो विष्णोरेव शक्तिः । स हि ब्रह्मशब्दवाच्य इत्यभिप्रायः । अत्र "नारायणः परं ब्रह्म" "विष्णुस्तदासीद्धरिरेव निष्कलः" "पतिं विश्वस्यात्मेश्वरम्" "न तस्येशे कश्चन" "न तत्समश्चाभ्यधिकश्च दृश्यते" "यस्मात्परं नापरमस्ति किंचित्" "न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रये" इत्यादिश्रुतिस्मृतयोऽनुसन्धेयाः । शक्तित्रयाश्रयो दिव्यविग्रह उपास्यत्वेनोच्यते, विष्णुरेव शक्तिश्चेत्कथं विष्णोर्विग्रहैकदेशो विष्णोरेवाश्रयः? तदाश्रयभूतो विग्रहो न हि ब्रह्मणोऽस्तीतीदं च दूषणं फलितम् । **शक्तिशब्दाभिधेयं रूपद्वयमिति ;** परापरसंज्ञस्यस्य रूपद्वयस्योत्तरत्र परापरशब्दसमानाधिकरणशक्तिशब्देन परामर्शात् परसंज्ञरूपगोचरः शक्तिशब्दो न परमात्मविषय इत्यभिप्रायः । "तच्च विष्णोः परं रूपम्" "विष्णुशक्तिः परा प्रोक्ता" इति ह्युच्यते । "भूप मूर्तममूर्तं च" इत्यादिवचनार्थमभिप्रेत्याह—**मूर्तामूर्तविभागेनेति ;** "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते" इत्यस्यार्थमाह—**तृतीयेति** । मूर्तामूर्तविभागेनेत्युक्तत्वात् मूर्ताख्यविभागमिति विभज्यनिर्देशः कृतः । **निष्पन्नयोगिध्येयतयेति** न विध्यर्थे कृत्यप्रत्ययः, अपि तु शक्यत्वाभि-

प्रायः। "योगिध्येयं परं पदम्" इत्यत्रापि स एवार्थः। निष्पन्नयोगिध्येयतया प्रक्रान्तयोगस्य ध्यातुमशक्यत्वं फलितम्। **स्वतः शुद्धिविरहादिति**; अत्र न शुद्धेरस्वाभाविकत्वमुच्यते; अपि त्वौपाधिकदोषनिरासे स्वयमशक्तत्वेन भगवत्प्रसादसापेक्षत्वं विवक्षितम्। **शुभाश्रयत्वं प्रतिषिध्येति**; "स्वतः शुद्धिविरहात्" इत्यनेनाश्रयत्वं प्रतिषिद्धमिति शुभाश्रयत्वप्रतिषेधः। **शुभत्वम्**; हेयविरोधित्वम्; न तु हेयराहित्यमात्रम्, "चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम्" इत्युक्तत्वात्। शक्तित्रयाश्रयत्वकथनाय शक्तित्रयमनुवदति—**परेति**। अत्र "समस्ताः शक्तयश्चैताः" इति वचनार्थो विवक्षितः। "एताः शक्तयः" इति बहुवचने सत्यपि समस्तपदं बहुव्यक्तिक्रोडीकारार्थम्। परशक्तिरेव परमात्मनो रूपमिति परशक्तिरूपं परशक्त्यात्मकं वा। एवमुत्तरत्रापि। **भगवदसाधारणमिति**; चतुर्मुखादि शरीरव्यावृत्तिः, भगवदधिष्ठितत्वेऽपि तत्तज्जीवविशेषाभिमानविषयत्वात् तेषां शरीराणाम्। श्रुतिमूलतां दर्शयति—**आदित्येति**। **मूर्तरूपमित्यनेन** "मूर्ते भगवतो रूपे" इति वचनार्थ उक्तः। उक्तेष्वर्थेष्वयं श्लोकः किं विषय इत्यत्राह—**अत्रेति**। शुभाश्रयतानर्हत्वकथनार्थमुच्यते चेत् अन्यत्रास्यानर्हत्वकथनं वस्त्वन्तरस्य तदर्हत्वकथनं वस्त्वन्तरस्य तदर्हत्वकथनं च द्रष्टव्यमित्याह—**तथाहीति**। अस्मिन्नर्थद्वये वचनद्वयमुपादत्ते—**न तदिति**। **योगयुजा**; प्रक्रान्तयोगेन। अनालम्बनत्वमनेन ग्रन्थेनोक्तम्। स्वतः शुद्धिविरहश्च प्रकरणसिद्ध इत्यभिप्रेतः।

"अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः॥"

इत्यादिना भगवद्विग्रहव्यतिरिक्तानां हि शुद्धिविरह उक्तः। अन्यस्य रूपस्यार्हताकथनं चास्य रूपस्यानर्हत्वविवक्षासूचकमिति चशब्दार्थः। "अन्ये तु" इति ग्रन्थेन कर्मसंबन्धलक्षणाशुद्धिकथनात्कर्मसंबन्धविनिर्मुक्तानामपि स्वतः शुद्धिविरहः सूचितः। तेषामपि शुभाश्रयपदस्थशुद्धशब्देन व्यवच्छेद्यत्वं स्पष्टयितुमाह—**तथेति**। "पश्चादुद्भूतबोधाश्च" इत्येतद्व्याख्यातं **स्वस्वरूपापन्नानामिति** पदेन। **आब्रह्म स्तम्बपर्यन्ता** इत्यत्राऽऽङभिविधौ, स्तम्बसमभिव्याहारात्। स्तम्बो हि कर्मवश्यः, "पुमान्न देवः" इत्यारभ्य "भूपैते कर्मयोनयः" इत्युक्तेः। "तेषामप्यन्यतो यतः" इत्येवमन्तस्य ग्रन्थस्यार्थः पूर्वमुक्तः।

अथ "तस्मात्तदमलं ब्रह्म" इत्यादेरर्थमाह— **परस्येति।** **स्वासाधारणमि**त्यस्य पूर्ववदर्थः। "प्रत्यस्तमित" इत्यादिश्लोकस्य भेदनिषेधपरत्वाभावं निगमयति— **अत इति।**

**भावप्रकाशिका**

**देवादिशरीरं चोपाधित्वेन प्रतीयत इति ;** जपाकुसुमादिवदात्मनिष्ठभेदादिधर्मासञ्जकत्वेनोपाधित्वम्। **ननु मुक्तानामुपास्यत्वाभावादिति ;** मुक्तात्मान्तरस्य स्वप्राप्यत्वाभावेन तस्य शुभाश्रयत्वस्य वा योगयुक्चित्तालम्बनत्वस्य वा प्रतिषेध्यत्वादुपाधिस्वरूपस्य च कर्तृत्वादिबन्धाश्रयत्वस्याप्राप्यत्वेन, शुभाश्रयत्वप्रसक्तेरेवाभावेन तत्प्रतिषेधेऽप्रसक्तप्रतिषेधत्वापातादयं श्लोकः परमात्मस्वरूपस्यैव योगयुङ्मनआलम्बनत्वप्रतिषेधकः किं न स्यादित्याशङ्क्य मुक्तावाविर्भविष्यतः स्वरूपस्य प्राप्यत्वेनोपास्यत्वप्रसक्तिसद्भावात्तस्योपासननिवृत्तयेऽयमुपदेश इत्याहेत्यर्थः। **अनुसन्धानायोपदेश इति** निर्देशो 'मशकेभ्यो धूमः' इतिवत् द्रष्टव्यः। तथाननुसन्धानायेति पाठः। केचित्तु— **तथानुसन्धानाय ;** अनुपास्यत्वेनानुसन्धानायेत्यर्थ इति वदन्ति। **अस्मिन् प्रकरणे** इति व्याख्येयं पदम्। **कथं विष्णोर्विग्रहैकदेश इति ;** विष्णोः शरीरतया विष्णुधार्यस्य तद्द्वारकत्वायोगादित्यर्थः। शक्तित्रयसमावेशे एकैकस्या एव शक्तेः कृत्स्नविग्रहाश्रयत्वासंभवमभिप्रेत्य विग्रहैकदेशाश्रयत्वोक्तिः। यद्वा विग्रहरूपोऽयमेकदेशः परिच्छिन्नः तदाश्रित इत्यर्थः। ननु विष्णोः शक्तित्रयाश्रयभूतविग्रहासंभवेऽपि ब्रह्मणस्तादृशो विग्रहः संभवेदिति शङ्कामपाकरोति— **तदाश्रयभूतो विग्रह इति। परसंज्ञरूपगोचर इति ;** "तच्च विष्णोः परं रूपम्" इत्यादौ व्यतिरेकिनिर्देशेन पररूपस्य विष्णुभिन्नत्वावगमात् परशक्तिशब्देन पररूपस्यैव निर्देशात् "विष्णुशक्तिः" इत्यत्र षष्ठीसमास एव युक्त इति भावः। **विभज्यनिर्देशः कृत इति ;** विभज्यस्य निर्देशो विभज्यनिर्देशः, विभक्तव्यनिर्देश इत्यर्थः। द्वितीयान्तो विभागशब्दः कर्मणि घञन्त इत्यर्थः। अयं भावः—यद्यपि पूर्ववाक्ये "मूर्तामूर्तविभागेन" इत्यत्र विभागशब्दो न कर्मार्थकः, तथापि पूर्ववाक्ये विभागशब्देन विभजनस्य प्रस्तुतत्वात् तत्कर्मण इह द्वितीयान्तविभागशब्देन परामर्शे नानुपपत्तिरिति। केचित्तु ननु विभज्यनिर्देशः मूर्तामूर्तशब्देनैव क्रियताम्; किं विभागशब्देनेत्याशङ्क्याह—मूर्तामूर्तविभागेनेत्युक्तत्वादिति वदन्ति। **अपि तु शक्यत्वाभिप्राय इति ;** "कृत्याश्च" "शकि लिङ् च" इति शक्यार्थे कृत्यप्रत्ययविधानात् "न तद्योगयुजा शक्यम्" इति

च प्रतिपादनादिति भावः। **बहुव्यक्तिक्रोडीकारार्थमिति;** सकलव्यक्तिक्रोडीकारार्थमित्यर्थः। "परशक्तिरूपम्" इत्यत्र रूपप्रतिसंबन्धितया परमात्मप्रतीतौ विलम्बादाह— **परशक्त्यात्मकं वेति। मूर्ते भगवतो रूपे इति;**

"मूर्ते भगवतो रूपे सर्वापाश्रयनिस्पृहा।
एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते॥"

इति वचनार्थ इत्यर्थः। **अन्यत्रास्यानर्हत्वकथनमिति;** श्लोकान्तरेऽस्यानर्हत्वकथनमित्यर्थः। प्रकरणसिद्धिमेवोपपादयति—**अन्ये तु पुरुषव्याघ्रेत्यादिना।** बद्धानामेव शुद्धिविरहः प्रतिपाद्यते, न मुक्तानामित्याशङ्क्य सिंहावलोकितकेनाह—**अन्ये त्विति ग्रन्थेनेति। स्तम्बसमभिव्याहारादिति;** 'स्तम्बपर्यन्तात्' इति वा 'स्तम्बपर्यन्तम्' इति वा रूपप्रसङ्गेन 'स्तम्बपर्यन्ताः' इति रूपासिद्धेश्च आङित्यस्य वाक्यस्मरणार्थकत्वस्यैव युक्ततया "आङभिविधौ" इत्यस्यायुक्तत्वात् तत्सिद्धवत्कारेण स्तम्बसमभिव्याहारादित्युक्तिरयुक्तेति चेत्, उच्यते—आङित्यस्याभिविध्यर्थकत्वसंभवे गत्यभावकल्प्यस्य वाक्यस्मरणार्थकत्वस्यायुक्तत्वात्। आङित्यस्य ब्रह्मशब्देन समासः। स्तम्बपर्यन्ता इति पृथक्पदम्। ततश्च समभिव्याहृतस्तम्बपर्यन्तपदे स्तम्बस्याभिविधित्वदर्शनात् आब्रह्मशब्देऽप्याङभिविधाविति भावः।

### श्रुतप्रदीपिका

अथ "प्रत्यस्तमित" इत्यादेरर्थमाह—**प्रत्यस्तमितेति।** "प्रकृते स्ते" "शरीराकृतिभेदास्तु" इत्यनयोरैक्यार्थं दर्शितम्—**देवेति।** भेदं विशिंषन् "वचसामगोचरम्" इत्यस्यार्थमाह—**तद्भेदेति।** केन रूपेण सत्तेत्यपेक्षायां **ज्ञान**शब्दः। **एक**शब्देन विकारव्युदासः। ज्ञानशब्दस्तद्गुणवाची। स्वरूपाजडत्वमुक्तम्—"आत्मसंवेद्यम्" इति। कल्पनाविकाराभावात् प्रक्रान्तयोगचित्तागोचरत्वम्। तद्गतभेदः रूपवर्णादिः। जीवविषयत्वं कथम्? न चात्र योगयुक्प्रसङ्ग इत्यभिप्रयन्नाह—**कथमिति।** नायं मुक्तकग्रन्थ इत्यभिप्रयन् परिहरति—**तदुच्यत इत्यादिना।** "क्लेशानां च क्षयकरम्" "प्राणायामेन पवने" इत्यनयोरर्थमाह—**संसारेति। विष्णोरिति;** विष्णुशक्तिरिति षष्ठीसमासः। अन्यथा "ततः स वासुदेवेति" "तद्ब्रह्म" "परमात्मा च" "विष्णुनामा" "परब्रह्मस्वरूपस्य" "तच्च विष्णोः परं रूपम्" इत्यादिविरोधः। "विष्णुस्तदा-

सीत्'' ''एको ह वै'' इत्यादि श्रुतिविरोधः। विष्णोर्विष्णुविग्रहाश्रयत्वविरोधश्चेति भावः। ''द्वे रूपे ब्रह्मणस्तस्य ''अविद्या कर्मसंज्ञान्या'' ''यया क्षेत्रज्ञ'' इत्याद्यर्थमाह—**रूपद्वयमित्यादिना**। **ध्येयतया**; ध्यातुं शक्यतयेत्यर्थः। ''योगिध्येयम्'' इत्यत्राप्येवमेव। **स्वत इति**; औपाधिकाशुद्धिनिरासस्य परापेक्षताभिप्रेता। विशेषणद्वयेनाश्रयत्वशुभत्वे भग्ने। ''समस्ताः'' इत्याद्यर्थमाह—**परेति**। असाधारण्यं चेतनान्तराभिमानाभावात्। **आदित्येति** मानसूचनम्। उक्तार्थेषु किमर्थोऽयं श्लोक इत्यत्राह—**अत्रेति**। तदशुभाश्रयानर्हत्वं परस्य तदनर्हत्वं च कुतो ज्ञायत इत्यत्राह—**तथा हीति**। ''अन्ये तु'' इत्यादिना स्वतः शुद्धयभावश्च सिद्धः। मुक्तानामप्यध्येयत्वं विशदयितुमाह—**तथेति**। **स्वस्वरूपापन्नाः** मुक्ताः। परोक्तार्थपरत्वाभावं निगमयति—**अत इति**।

**नयप्रकाशिका**

न च ''प्रत्यस्तमितभेदम्'' इत्यनेन निर्विशेषवस्तुप्रतीतिः, योगं प्रारभमाणानां मनोविषयत्वाशक्यतोपपादनाय जीवात्मनः परिशुद्धस्वरूपबोधनायोपक्रान्तत्वेन विशेषापलापाप्रतीतेः। ''तद्विष्णोः परमं रूपम्'' इति जीवस्वरूपस्य परमात्मविशेषणत्वाभिधानाच्च। विशेषणत्वमेव हि विशेषः। रूपं हि रूपिणो विशेषणम्। न च ''विष्णोः परमं रूपम्'' इति 'राहोः शिरः' इतिवदौपचारिकमिति वाच्यम्, अनुपपत्त्यभावात् ''स्थूलं हरेः'' इत्यत्रापि तथात्वप्रसक्तेश्च। अतस्तच्छ्लोके प्रत्यस्तमितभेदं देवादिसंस्थानादिभेदरहितम्, अतः सन्मात्रं षड्भावविकाररहितं; विकाराणां विनाशित्वेनासत्त्वान्मात्रचा तदेव निवर्त्यते। अत एव वचसामगोचरम्। अत एव हि ''विश्वरूपवैरूप्यलक्षणम्'' इत्युक्तिरुत्तरत्र। वागविषयत्वेऽपि स्वयंप्रकाशत्वेन न शून्यतेत्युच्यते—आत्मसंवेद्यमिति। तज्ज्ञानं गुणाधारत्वात् ज्ञानशब्दवाच्यमिति। योगयुङ्मनसामविषयत्वेन बोध्यत इति न भेदापलापः।

**न्यायसुदर्शनम्**

ननु ''प्रत्यस्तमितभेदम्'' इत्यादि श्लोकः परिशुद्धात्मस्वरूपपर इति व्याख्यातं भाष्ये। तत्कथम्? ब्रह्मशब्दस्यौपचारिकत्वप्रसङ्गात्। नैवम्—परब्रह्मविषय एवायं श्लोकः।

''तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम्।
विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः॥''

इत्ययं श्लोको हि परिशुद्धात्मविषयः।

तथाहि—

“ आश्रयश्चेतसो ब्रह्मन् द्विधा तच्च स्वरूपतः ।
भूप मूर्तममूर्तं च परं चापरमेव च ॥”

इति परावररूपद्वययुक्तं ब्रह्म प्रकृतम् । तत्र—

“ सनन्दनादयो ये वै ब्रह्मभावनयान्विताः ।
कर्मभावनया चान्ये देवाद्याः सचराचराः ॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा ।
अधिकारबोधयुक्तेषु विद्यते भावभावना ”

इति । अत्र “सनन्दनादयो ये वै” इत्यादिषु ब्रह्मशब्देन ज्ञानयोगोऽभिधीयते । उभयभावनायोगिषु “ अधिकारबोधयुक्तेषु ” इति विशेषणात् । अनन्तरम्—

“ अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु ।
विश्वमेतत्परं चान्यद्भेदभिन्नदृशां नृप ॥”

इति भावनात्रयान्वितमेतज्जगद्विश्वमुच्यते । एतदपरं रूपम् । परश्च भावनात्रयान्विता-नामन्यदिति । प्रकृतब्रह्मणस्तस्य परावररूपयोश्च स्वरूपं विस्पष्टं वदन्ति—**प्रत्यस्तमित इत्यादिना** । प्रत्यस्तमितभावनात्रयान्वयविशेषं देवादिभेदरहितमित्यर्थः । एवंलक्षणं ज्ञानं स्वयंप्रकाशम् । जीवस्तु “ ब्रह्मसंज्ञितम् ”; अस्य परब्रह्मणः परमात्मनो विष्णोः तत्परं रूपम्, अपरं चान्यदित्युक्तम् । रूपाख्यारहितं भावनात्रयान्वितरहितम् । विश्ववैरूप्यलक्षणम् ”; अन्ते ब्रह्मस्वरूपवत् तद्योगयुजा चिन्तयितुमशक्यम् । उभयोरपि विश्वविलक्षणस्वरूपत्वात् “ परस्य ब्रह्मणो रूपं पुरुषं प्रथमं द्विज ।” इति पुरुषात्मस्वरूपमित्युक्तम् ।

“ योगयुक्प्रथमं योगी युञ्जमानोऽभिधीयते ।
विनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् ।”

इति समाधिवेलायामेव ब्रह्मस्वरूपग्रहणमशक्यम्; योगयुजस्तत्र शक्यमिति च पूर्वमेवोक्तम् । अतः पूर्वश्लोको ब्रह्मविषयः । उत्तरः परिशुद्धात्मविषयः । भाष्यं च ब्रह्मस्वरूपवदात्मस्वरूपं च विश्वविलक्षणमुच्यते—“ तच्च विष्णोः परं रूपम् ” इत्यादिना । अतस्तद्योगयुङ्मनसो न गोचरमित्येवं व्याख्येयम् ।

श्रीभाष्यम्

"ज्ञानस्वरूपम्" इत्यत्रापि ज्ञानव्यतिरिक्तस्यार्थजातस्य कृत्स्नस्य न मिथ्यात्वं प्रतिपाद्यते। ज्ञानस्वरूपस्यात्मनो देवमनुष्याद्यर्थाकारेणावभासो भ्रान्तिरित्येतावन्मात्रवचनात्। न हि शुक्तिकाया रजततयावभासो भ्रान्तिरित्युक्ते जगति कृत्स्नं रजतजातं मिथ्या भवति। जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेर्ब्रह्मणो ज्ञानस्वरूपस्यार्थाकारता भ्रान्तिरित्युक्ते सत्यर्थजातस्य कृत्स्नस्य मिथ्यात्वमुक्तं स्यादिति चेत्—तदसत्; अस्मिन् शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्य महाविभूतेः प्रतिपन्नतया तस्य भ्रान्तिदर्शनासंभवात्। सामानाधिकरण्येनैक्यप्रतिपादनं च बाधासहमविरुद्धं चेत्यनन्तरमेवोपपादयिष्यते। अतोऽयमपि श्लोको नार्थस्वरूपस्य बाधकः।

श्रुतप्रकाशिका

अथ "ज्ञानस्वरूपम्" इत्यादिश्लोकस्य भेदमिथ्यात्वपरत्वाभावमाह—**ज्ञानस्वरूपमितीति**। अपिः समुच्चये। कृत्स्नमिथ्यात्वप्रतिपादनाभावमुपपादयति—**ज्ञानेति**। ज्ञानस्वरूपस्यार्थाकारतयावभासे भ्रमे सत्यर्थाकारस्य तथात्वेनावभासो न भ्रमो भवतीत्यर्थः। तमेव दृष्टान्तेनोपपादयति—**न हीति**। दृष्टान्ताद्वैषम्यमुखेन चोद्यं शङ्कते—**जगद्ब्रह्मणोरिति**। तत्र हि सर्वं रजतजातं न शुक्तिकाशकलेन समानाधिकरणं दृष्टम्, अपि तु व्यधिकरणत्वेन प्रमाणप्रतिपन्नम्; अतो न कृत्स्नस्य रजतजातस्य शुक्तित्वेन विरोधः, अपितु समानाधिकरणरजतस्यैव विरोधः; तत्र विरोधात्समानाधिकृतरजतस्य मिथ्यात्वम्; अविरुद्धस्यासमानाधिकृतरजतस्यामिथ्यात्वं च। अत्र तु ब्रह्मव्यतिरिक्तं कृत्स्नं ब्रह्म समानाधिकरणं प्रतीयते। अतो ज्ञानाकारस्यार्थाकारस्य च विरोधे कृत्स्नस्यार्थजातस्य मिथ्यात्वं फलितमिति। एतत्परिहरति—**तदसदिति**। तत्र प्रथमं परोक्तार्थस्य प्रबन्धवाक्यार्थविरोधमाह—**अस्मिन्निति**। ब्रह्मणोऽविद्यान्वयो जगतो मिथ्यात्वं चात्र विरुद्धम्। 'समस्तहेय-

रहितं विष्ण्वाख्यं परमं पदम् ” “ततः स वासुदेवेति ” “तद्ब्रह्म परमं नित्यम् ” “हेया-भावाच्च निर्मलम् ” “तानि सर्वाणि तद्वपुः ” “विभूतयो हरेरेताः ” इत्यादिवचनादित्यर्थः । “भ्रान्तिदर्शनतः स्थितम् ” “विष्णुं ग्रसिष्णुम् ” इति विष्णोः सगुणस्य भ्रमाश्रयत्वमुच्यते; अतस्तद्युक्तम्; परं ब्रह्म हि निर्दोषमिति शङ्काव्यावृत्त्यर्थं “परस्य ब्रह्मणो विष्णोः” इत्युक्तम्। **निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगुणात्मकस्ये-** त्याभ्यां पदाभ्यामविद्यान्वयानुपपत्तिरुक्ता । अविद्यासम्बन्धे सति निरस्तसमस्तहेयत्वं समस्तकल्याणगुणात्मकत्वमपि ह्यनुपपन्नं स्यात् । **महाविभूतेरिति** जगन्मिथ्यात्वानुपपत्तिरुक्ता । जगतो भगवद्विभूतित्वं हि न प्रमाणान्तरसिद्धम्, येन निषेधार्थमनुवादः स्यात् । अतो विधीयत एव । विधिस्तु न भ्रमं जनयति । तथा सति निषेधवचनस्यापि सतो भेदस्यासत्त्वविषयबुद्धिरूपभ्रमपरत्वस्यानिवार्यत्वात् । प्रामाण्यं हि वाक्यद्वयस्य समानम् । तस्माद्विहितोऽर्थः परमार्थ एवेति न जगन्मिथ्यात्वमित्यर्थः । सामानाधिकरण्येनैक्यप्रतीतौ सत्यां ज्ञानाकारार्थाकारयोर्विरोधादन्यतरमिथ्यात्वं स्यात्, यथा ‘शुक्तिरेव रजतम्’ इत्यत्रेति शङ्कायामाह—**सामानाधिकरण्येनेति । बाधासहम्**; न केवलमाकारद्वये अन्यतरबाधनिरपेक्षमपि सामानाधिकरण्यं संभवतीति, किंतु बाधं न सहते; आकारद्वयासिद्धौ सामानाधिकरण्यलक्षणासिद्धेरित्यर्थः । तर्ह्येकस्मिन्वस्तुन्याकारद्वयविरोधः कथं परिह्रियत इत्यत्राह—**अविरुद्धं चेतीति** । आकारद्वयाङ्गीकारेऽप्यैक्यप्रतिपादनमविरुद्धम्, सद्वारकत्वादिति भावः । **अनन्तरमेव**; न त्वधिकरणान्तर इत्यर्थः । प्रथमश्चशब्दः शङ्कानिवृत्तिपरः । द्वितीयः समुच्चयपरः । मिथ्यात्वपरत्वाभावं निगमयति—**अतोऽयमिति** ।

भावप्रकाशिका

भाष्ये—**जगद्ब्रह्मणोः सामानाधिकरण्येनैक्यप्रतीतेरिति**; “ज्योतींषि विष्णुः” इत्यादिना सर्वस्य जगतः सामानाधिकरण्येनैक्योपदेशादित्यर्थः । **न शुक्तिकाशकलेन सामानाधिकरण्यं दृष्टमिति**; ‘सर्वं जगत् ब्रह्म’ इतिवत् ‘सर्वं रजतं शुक्ति’ इत्युपदेशादर्शनादित्यर्थः । **तथा सति निषेधवचनस्यापीति**; यदि विधिवाक्यमपारमार्थिकत्वेन बोधयेत्, तर्हि निषेधवाक्यमपि वस्तुतः पारमार्थिकमेव भेदमपारमार्थिकत्वेन किमिति न प्रतिपादयेदित्यर्थः । **न केवलमाकारद्वय इति**; त्वया हि सामानाधिकरण्यं बाधसापेक्षमित्यु-

च्यते, मया तु सामानाधिकरण्यस्य बाधसापेक्षत्वप्रतिषेधमात्रं न क्रियते, प्रत्युत बाधविरोधित्वमपीत्युच्यते । अन्यतरविरोधे सामानाधिकरण्यभङ्गप्रसङ्गादिति भावः ।

श्रुतप्रदीपिका

**ज्ञानस्वरूपमिति** श्लोकस्य पराभिमतार्थानानुगुण्यं दर्शयति—**ज्ञानेति** । कुत इत्यत्राह—**ज्ञानस्वरूपस्येति** । तदेव दृष्टान्तेनोपपादयति—**न हीति** । दृष्टान्ताद्वैषम्यं शङ्कते—**जगदिति** । कृत्स्नसामानाधिकरण्यतदभावाभ्यां भेदः । तथा सति ज्ञानार्थाकारयोर्विरोधादन्यतरमिथ्यात्वमित्यर्थः । परिहरति—**तदिति** । कुत इत्यत्राह—**अस्मिन्निति** । उभयलिङ्गकतया परस्य भ्रमो विभूतित्वविधानाज्जगतो मृषात्वं चायुक्त इत्यर्थः । तर्हि कथं विरुद्धयोः सामानाधिकरण्यमित्यत्राह—**सामानाधिकरण्येनेति** । **बाधासहमिति**; अन्यथा तल्लक्षणानुपपत्तेरिति भावः । **अविरुद्धम्**; सद्वारकत्वादिति भावः । **अनन्तरम्**; न त्वधिकरणान्तरे । अतदर्थत्वं निगमयति—**अत इति** ।

नयप्रकाशिका

न च "ज्ञानस्वरूपम्" इत्यनेन ज्ञानमात्रस्वरूपस्यैव सत्यत्वमन्यस्य भ्रान्तिविवृत्तत्वमुच्यत इति वाच्यम्, ज्ञानैकाकारस्यात्मनोऽर्थाकारदर्शनमात्रस्य भ्रान्तित्वप्रतिपादनपरत्वात् । न ह्यन्याकारस्य सतोऽन्याकारताज्ञानस्य भ्रान्तित्वे कृत्स्नस्यापि भ्रान्तिता । तथात्वे च न सत्यासत्यवस्तुव्यवस्था स्यात् । (विवर्तपक्षस्तु सूत्रकृतानङ्गीकृतः—"परिणामात्" इत्यभिधानात्; तच्छ्लोके विवर्तशब्दस्याश्रवणाच्च ।)

श्रीभाष्यम्

तथा हि—"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" इति जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सति,

"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ॥"

इति शास्त्रेणार्थस्येतिहासपुराणाभ्यामुपबृंहणं कार्यमिति विज्ञायते । उपबृंहणं नाम विदितसकलवेदतदर्थानां स्वयोगमहिमसाक्षात्कृतवेदतत्त्वा-

**र्थानां वाक्यैः स्वात्रगतवेदवाक्यार्थव्यक्तीकरणम् । सकलशाखागतस्य वाक्यार्थस्याल्पभागश्रवणाद् दुरवगमत्वेन तेन विना निश्चयायोगादुपबृंहणं हि कार्यमेव ।**

**श्रुतप्रकाशिका**

एवं "ज्ञानस्वरूपम्" इति श्लोकस्य प्रपञ्चमिथ्यात्वपरत्वमनुपपत्त्युद्घाटनेन निरस्तम् । अथ श्लोकं स्वपक्षे व्याख्यातुमुपक्रमते— **तथा हीति** । अथ किमर्थं प्रश्नश्लोकव्याख्यानम् ? उच्यते—"ज्ञानस्वरूपम्" इति श्लोके द्वितीयान्तपदानां विशेष्यो विष्णुरिति न प्रतीयते । तेषां "प्रणम्य" इति पदेनान्वयश्च न ज्ञायते । श्लोकस्य विशिष्टार्थपरत्वं च प्रकरणस्य विशिष्टपरत्वेन विना नावगम्यते । अतो नमस्कारश्लोका व्याख्यातव्याः । तेषु व्याख्यातव्येषु द्वितीयाध्यायारम्भे नमस्कारकरणं किं निबन्धनम् ? प्रथमत एव हि तत्कर्तव्यमिति शङ्का जायते । शास्त्रस्य प्रश्नप्रतिवचनरूपेणावतीर्णत्वात्प्रथमं प्रश्नानां संक्षेपेण प्रतिवचनं कृत्वा विस्तरविवक्षायां द्वितीयाध्यायारम्भे नमस्कारः कृतः । अन्यथा प्रश्नानन्तरमेव नमस्यायां क्रियमाणायामस्मत्प्रश्नस्य किमुच्यत इति शिष्यबुद्धेर्व्याकुलता स्यादिति पूर्वोक्तशङ्कानिरसनमुखेन नमस्कारश्लोकसंगतिप्रदर्शनार्थं प्रश्नश्लोका व्याख्याताः । "ज्ञानस्वरूपम्" इत्यस्मिन्नुपक्रमग्रन्थे निर्विशेषवस्तुव्यतिरिक्तस्य भ्रान्तिसिद्धत्वदर्शनात्तदनुगुण एवार्थ उत्तरत्र वर्णनीय इति शङ्कापरिहारायोपक्रमोपक्रमभूतैः प्रश्नोत्तरवरलाभश्लोकैः शास्त्रप्रतिपाद्यः सविभूतिकदेवताविशेषः, न तु ज्ञप्तिमात्रमिति शास्त्रतात्पर्यज्ञापनार्थं च प्रश्नश्लोकव्याख्यानम् । व्याचिख्यासितश्लोकोक्तभ्रान्त्यन्वयस्य सद्वारकत्वसिद्धये सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति मयट्प्रत्ययेन ज्ञापनार्थं च प्रश्नश्लोका व्याख्यायन्ते । तत्र किमयं श्रुतवेदान्तप्रश्नः ? उताश्रुतवेदान्तप्रश्नः ? इति विकल्पेऽश्रुतवेदान्तस्य विशेषप्रश्नानुपपत्तिः । श्रुतवेदान्तस्य श्रोतव्याभावात्प्रश्नानुपपत्तिरिति शङ्कायां श्रुतवेदान्तप्रश्न इत्याह— **यतो वा इमानीत्यादिना । अवसिते सतीत्यनेन** ब्रह्ममीमांसाश्रवणं कृतमित्युक्तम् । श्रुतवेदान्तस्य कथं प्रश्नोपपत्तिरिति शङ्कायां श्रुतवेदान्तस्येतिहासपुराणश्रवणविधिं दर्शयति—**इतिहासेति** । "इतिहास-" इत्यादिश्लोके वेदशब्दो वेदान्तपरः । वेदोपबृंहणभूतेषु धर्मशास्त्रेतिहासपुराणेषु धर्मशास्त्राणि पूर्वभागोपबृंहणानि; इतिहासपुराणान्युपरितन-

भागोपबृंहणपराणीति विभागः। स च स्मृत्यधिकरणे व्यक्तीभविष्यति। तत्र धर्मशास्त्रेषु ब्रह्मप्रतिपादनं कर्मणां तदाराधनरूपत्वज्ञापनार्थम्। इतिहासपुराणेषु कर्मप्रतिपादनं कर्मणां ब्रह्मोपासनाङ्गत्वप्रतिपादनार्थम्। इतिहासस्य पुराणेभ्योऽभ्यर्हितत्वं विशेषः। "अल्पाच्तरम्" इति पुराणशब्दस्य पूर्वनिपाते प्राप्ते "अभ्यर्हितं पूर्वम्" इति पूर्वनिपातितस्येतिहासस्याभ्यर्हितत्वप्रतीतेः। अस्य श्लोकस्य प्रथमार्धं व्याचष्टे—**उपबृंहणं नामेति**। षष्ठ्यन्तविशेषणद्वयेनागमोत्थं विवेकजं च ज्ञानमस्तीत्युक्तम्। **तत्त्वार्थानामिति** बहुवचनं कपिलमतादपीतिहासादीनां प्राबल्यद्योतनार्थम्। **व्यक्तीकरणम्**; अज्ञानविशेषैः सह स्वावगतार्थनिष्कर्षः। यथा वेदेन कर्तव्यतया विहितस्य सन्ध्योपासनादेः शरीरशुद्धिप्रकारदन्तधावनस्नानादिविशेषैः सह निष्कर्षः। एवमुपनिषद्भागेऽप्यर्थनिष्कर्षः संपाद्यः। उपनिषदर्थनिष्कर्षो ब्रह्मविचारसिद्ध इति सोपबृंहणापेक्षेति शङ्कायामुत्तरार्धं व्याचष्टे—**सकलेति**। पूर्वार्धविहितोपबृंहणकार्यतोपपादकमुत्तरार्धम्। उपबृंहणं नामानधीतशाखान्तरार्थैः सहाधीतशाखार्थनिष्कर्षः। अतो नोपबृंहणविचारनैरपेक्ष्यमित्यर्थः। ननु यथा आपातप्रतीत्या फलवदर्थावगमात् कर्मविचारे तदनन्तरं ब्रह्मविचारे च रागतः प्रवृत्तिः, तथाऽधीयमानशाखान्तर्गतेन "अनन्ता वै वेदाः" इति वाक्येन वेदानामानन्त्यावगमात् अधीतशाखानवगतानां तदविरुद्धानां विरुद्धानां चार्थानां संभवात् "स्मृतेश्च" "अपि स्मर्यते" इत्यादिसूत्रेषु वेदान्तार्थनिर्णयस्योपबृंहणसापेक्षत्वदर्शनाच्चोपबृंहणश्रवणे रागतः प्रवृत्तिरुपपद्यते। तत्र पूर्वभागोपबृंहणेषु धर्मशास्त्रेषु श्रुतेषूपनिषद्भागोपबृंहणरूपेतिहासपुराणेष्वपि रागात्प्रवृत्तिरिति विधिवैयर्थ्यम्। अप्राप्ते हि शास्त्रस्यार्थवत्त्वम्। न च गुरोरेव श्रोतव्यमिति नियमविधिः। अस्मिन्वचने तद्वाचिशब्दाभावात्। इतिहासपुराणयोः श्रवणप्रवृत्तस्यैतद्वचनार्थज्ञानम्। तस्मादितिहासपुराणश्रवणे प्रवृत्तिरित्यन्योन्याश्रयश्च। अत उपबृंहयेदिति विधिरनुपपन्न इति—सत्यम्; भारतादिप्रबन्धविशेषश्रवणाय तन्मध्यगतेनानेन वचनेन न्यायसिद्धं सामान्यत उपबृंहणस्यापेक्षितत्वमनूद्यते। **उपबृंहणं कार्यमिति ज्ञायत** इत्यस्यायमर्थः—न्यायसिद्धमुपबृंहणस्य करणीयत्वमनेन वचनेनापि ज्ञायत इति। **उपबृंहणं नामेत्यादि** भाष्येण न्यायप्राप्तिरेव प्रदर्श्यते। यद्वा समन्वयविरोधपरिहारलक्षणाभ्यामेव तत्त्वस्थितेर्निश्चितत्वाद्वस्तुनि विरुद्धाकारासंभवादधीयमानश्रुतिनिर्णीतविरुद्धार्थप्रतिपादकप्रदेशान्तरसंभवे वेदस्य भ्रान्तजल्पितायमानत्वप्रसङ्गाच्च; निर्णीततत्त्वविरुद्धार्थप्रतिपादकप्रसङ्गासंभवात्, ब्रह्म-

ण्यनवगतगुणविभूतिविशेषसद्भावेऽप्युपबृंहणसहस्रैरपि तदियत्ताप्रतिपादनायोगात् अवगत-कतिपयगुणविशेषोपासनेष्वन्यतमेनैव पुरुषार्थसिद्ध्युपपत्तेश्चोपबृंहणश्रवणनिरपेक्षं प्रति "उप-बृंहयेत्" इति विधानं युज्यते । नन्वेवं तर्हि न्यायानुगृहीतवाक्यावगतेष्वर्थेषूपबृंहणनिष्क-ष्टव्याभावात् निष्कष्टव्यांशस्य सूत्रोदाहृतवचनैरेव निष्कृष्टत्वाच्चोपबृंहणविधिरदृष्टार्थः स्यात् । न च दृष्टे संभवत्यदृष्टकल्पनं न्याय्यम् । दृष्टार्थत्वं च वचनं दर्शयति "मामयं प्रतरिष्यति" इति । वेदस्य प्रतारणं नाम तदभिप्रेतविपरीतार्थवर्णनमेव । अतस्तन्निवृत्तिरूपं दृष्टफलं वाचनिकम् । तस्मिन् सति अदृष्टकल्पनमयुक्तम् । तर्हि तदेव दृष्टं फलमिति चेत्; तदप्ययुक्तम् , तत्त्वविपर्यासप्रतिपादनासंभवस्य त्वयैवोक्तत्वात् ; साकल्येन ब्रह्मगुण-विभूत्यनवगमस्य समस्ततदवान्तरविशेषानवगमस्य च वेदप्रतारणरूपत्वाभावेन तन्निवृत्तेः फलत्वायोगाच्च । उच्यते—यद्यपि परतत्त्वतदुपासनप्रतिपादनेषु विपर्यासासंभवः, तथापि "किं ते कृण्वन्ति कीकटेषु गावो नाशीरं दुहे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयानः ॥" इत्यादिवाक्यप्रतिपन्नप्रमगन्दादिवृत्तान्तस्येव परमात्म-सृज्यसुरनरतिर्यगादिविशेषतदुत्पत्तितद्वृत्तविशेषाणां श्रुतिसामान्यप्रतीतत्वेन वाक्याविवक्षितत्वं मन्यमानोऽहल्याजारादिवाक्यानां पण्डितमानिभिरितरैरुक्तमर्थमिव वेदपूर्वभागोपनिषद्भाग-गतानां मन्त्रार्थवादानामन्यथार्थत्वं मन्यते चेत् , अश्रुतोपबृंहणतया वेदं प्रतारयत्येवायमिति तत्परिहारार्थोपबृंहणविधिरुपपद्यत इति । न चान्योन्याश्रयः; स्वाध्यायविधिवाक्यस्य स्वाध्या-यान्तर्भावेऽप्यध्ययनाद्विध्यवगमः, विध्यवगमादध्ययनमिति यथा नान्योन्याश्रयस्तद्वत् । तत्र हि विध्यभिज्ञपुरुषप्रेरणात्तदनुष्ठानदर्शनाद्वा माणवकप्रवृत्तिः । एवमुपबृंहणविध्यभिज्ञशिष्टजन वादप्रसिद्ध्या वा तदभिज्ञस्वगुरुवचनेन वा तेनोपबृंहणाधिगमप्रवृत्तपुरुषान्तरदर्शनाद्वा उप-बृंहणज्ञानस्य संपाद्यताज्ञानाच्छिष्यस्य प्रश्न उपपद्यते । अत उपबृंहणविधिरुपपन्नः । तत्र स्वगुरोः पराशरस्य सार्वज्ञ्यप्रसिद्धेस्तेनैव सर्वविद्यास्थानेषु स्वस्य कृतशिक्षत्वाच्च मैत्रेयस्य तत्प्रणीतपुराणश्रवणप्रवृत्त्युपपत्तिः ।

## भावप्रकाशिका

भाष्ये— **जगज्जन्मादिकारणं ब्रह्मेत्यवसिते सतीति ;** इतिहासपुराणाभ्यामुप-बृंहणं कार्यमित्ययमर्थः 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वाक्येन ज्ञायत इति योजना । श्रुत्वोपबृंहणं कर्तव्यमिति "इतिहासपुराणाभ्याम्" इति श्लोकात् प्रतीयत

इत्यर्थः। न चोपबृंहणस्य श्रवणानन्तर्यं नास्माद्वचनात् प्रतीयते, श्रुत्वोपबृंहयेदित्याद्यश्रवणात् "उपबृंहयेत्" इत्येतावत एव श्रवणादिति वाच्यम्, उपबृंहणस्य श्रुतार्थविशदीकरणरूपत्वेनोपबृंहणे श्रवणानन्तर्यलाभात्। ततश्चावसिते सत्यस्माद्वाक्यादुपबृंहणं कार्यमिति ज्ञायत इति कथमुच्यते? श्रवणात् प्रागप्यस्माद्वाक्यादर्थावगतिसंभवादिति शङ्का पराकृता। केचित्तु पूर्वस्माद्वाक्यादर्थावगतिसंभवेऽप्यश्रुतवेदान्तस्य प्रवृत्त्यौपयिकोपबृंहणकर्तव्यताज्ञानस्यानुत्पत्तेः श्रवणानन्तरमेव प्रवृत्त्यौपयिकोपबृंहणकार्यताप्रतीतिरुत्पद्यत इत्यर्थ इति मन्यन्ते। **भारतादिप्रबन्धविशेषश्रवणायेति**; ननु न्यायसिद्धानुवादित्वे कथमस्य वाक्यस्य भारतादिप्रबन्धविशेषश्रवणप्रवर्तकत्वमिति चेत्—न; अनुवादकस्याप्यस्य वाक्यस्य 'अक्षैर्मा दीव्यः' इति वाक्यवत् स्वाभाविकप्रवृत्तिविषयविमुखीकरणद्वारेण प्रवृत्त्युपयोगाददोषात्। **नन्वेवं तर्हीति**; "मामयं प्रतरिष्यति" इति दृष्टार्थत्वप्रतिपादनमनुपपन्नमिति शङ्कार्थः। ततश्च दृष्टादृष्टरूपोभयविधप्रतिक्षेपकत्वं विरुद्धमिति न मन्तव्यम्। "किं ते कृण्वन्ति कीकटेषु गावः" इत्यादेरयमर्थः—हे मघवन् कीकटदेशेषु ते गावः किं कुर्वन्ति, न कंचिदप्युपकारं कुर्वन्तीत्यर्थः। तदेवोपपादयति—आशीरं प्रवर्ग्यार्थं पयः न दुहन्ति, घर्मं प्रवर्ग्यार्थं घृतं न दापयन्ति, घर्मोपयुक्तं क्षीरं न प्रयच्छन्ति तद्देशस्थानां नास्तिकत्वात्। प्रमगन्दस्य कीकटाधिपतेः राज्ञः वेदः धनं नैचाशाखं नीचशाखीनगरस्थम् आभर रन्धय वर्धय—इति। अत्र प्रमगन्दनामकराजवृत्तान्तप्रतिपादने नित्यायाः श्रुतेरनित्यार्थप्रतिपादकत्वेनाप्रामाण्यप्रसङ्गात् प्रमगन्दशब्देन प्रकृष्टं धनं मा मागमिष्यतीति प्रमगन्द इति व्युत्पत्त्या वार्धुषिकः प्रतिपाद्यते। नैचाशाखशब्देन षण्डसंबन्धिधनं प्रतिपाद्यते। एवं च सति वार्धुषिकादीनां प्रवाहतो नित्यत्वात् नानित्यार्थसंयोग विरोधः। तथैव "अहल्यायै जाराः" इत्यत्रापि अह्नि लीयते इत्यहल्या रात्रिः, तस्या जारा जरणहेतुः सूर्यः इत्यादिरेवार्थः। अतो नानित्यार्थसंयोगविरोधः। एवं च सति शब्दसाम्यात् प्रमगन्दाहल्यादिवृत्तान्तः स्फुरतीति चेत् सोऽविवक्षित एवेति मीमांसकानां स्थितिः। तद्वदेव वेदान्तभागेष्वपि नारायणपरब्रह्मादिशब्दप्रतिपन्नार्थेषु देवताविशेषादिष्वविवक्षितार्थत्वशङ्काव्युदासार्थमुपबृंहणं कार्यमिति प्रघट्टार्थः।

## श्रुतप्रदीपिका

सामानाधिकरण्यस्यात्मशरीरतानिबन्धनत्वं च ज्ञापयितुं प्रश्नश्लोका व्याख्येयाः। तत्र श्रुतवेदान्तस्य न ज्ञातव्यम्, इतरस्य तु विशेषप्रश्नायोग इति शङ्कायां पूर्वस्यैव प्रश्न इति

वदन् उपबृंहणविधिं दर्शयति—**तथा हीति**। वेदशब्दो वेदान्तपरः, मानवादिभिः पूर्वभागस्योपबृंहितत्वात्। उपबृंहणशब्दार्थमाह—**उपबृंहणमिति**। षष्ठ्यन्तपदद्वयेन परोक्षापरोक्षज्ञानद्वयोक्तिः। बहुवचनं कापिलादिभ्यः प्राबल्यार्थम्। व्यक्तीकरणमनधीतशाखार्थैः सहाधीतार्थनिष्कर्षः। उत्तरार्धं विवृण्वन् कर्तव्यतामुपपादयति—**सकलेति**।

**श्रीभाष्यम्**

तत्र पुलस्त्यवसिष्ठवरप्रदानलब्धपरदेवतापारमार्थ्यज्ञानवतो भगवतः पराशरात् स्वावगतवेदार्थोपबृंहणमिच्छन्मैत्रेयः परिपप्रच्छ—

"सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत्।
बभूव भूयश्च यथा महाभाग भविष्यति।
यन्मयं च जगद् ब्रह्मन् यतश्चैतच्चराचरम्।
लीनमासीद्यथा यत्र लयमेष्यति यत्र च॥"

इत्यादिना। अत्र ब्रह्मस्वरूपविशेषतद्विभूतिभेदप्रकारतदाराधनस्वरूपफलविशेषाश्च पृष्टाः। ब्रह्मस्वरूपविशेषप्रश्नेषु 'यतश्चैतच्चराचरम्' इति निमित्तोपादानयोः पृष्टत्वात् 'यन्मयम्' इत्यनेन सृष्टिस्थितिलयकर्मभूतं जगत् किमात्मकमिति पृष्टम्। तस्य चोत्तरं 'जगच्च सः' इति। इदं च तादात्म्यमन्तर्यामिरूपेणात्मतया व्याप्तिकृतम्, न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम्। 'यन्मयम्' इति प्रश्नस्योत्तरत्वात् 'जगच्च सः' इति सामानाधिकरण्यस्य। 'यन्मयम्' इति मयडत्र न विकारार्थः। पृथक्प्रश्नवैयर्थ्यात्। नापि प्राणमयादिवत् स्वार्थिकः। 'जगच्च सः' इत्युत्तरानुपपत्तेः; तदा हि विष्णुरेवेत्युत्तरमभविष्यत्। अतः प्राचुर्यार्थ एव "तत्प्रकृतवचने मयट्" इति मयट्। कृत्स्नं च जगत्तच्छरीरतया तत्प्रचुरमेव। तस्माद्यन्मयमित्यस्य प्रतिवचनं 'जगच्च सः' इति सामानाधिकरण्यं जगद्ब्रह्मणोः शरीरात्मभावनिबन्धनमिति निश्चीयते। अन्यथा निर्वि-

शेषवस्तुप्रतिपादनपरे शास्त्रेऽभ्युपगम्यमाने सर्वाण्येतानि प्रश्नप्रतिवचनानि न संगच्छन्ते। तद्विवरणरूपं कृत्स्नं च शास्त्रं न संगच्छते। तथाहि सति प्रपञ्चभ्रमस्य किमधिष्ठानमित्येवंरूपस्यैकस्य प्रश्नस्य निर्विशेषज्ञानमात्रमित्येवंरूपमेकमेवोत्तरं स्यात्। जगद्ब्रह्मणोरेकद्रव्यत्वपरे च सामानाधिकरण्ये सत्यसङ्कल्पत्वादिकल्याणगुणैकतानता निखिलहेयप्रत्यनीकता च बाध्येत। सर्वाशुभास्पदं च ब्रह्म भवेत्। आत्मशरीरभाव एवेदं सामानाधिकरण्यं मुख्यवृत्तमिति स्थाप्यते।

### श्रुतप्रकाशिका

पुराणान्तरेभ्योऽस्य वैषम्यं वदन् प्रश्नानवतारयति—**तत्रेति**। अस्य तावत्पुराणरत्नस्य प्राच्योदीच्यादिसर्वविद्वज्जनविदितस्य पुराणान्तरेभ्योऽपि प्रसिद्धिप्राचुर्यात् धर्मशास्त्रे मानवस्येव व्याकरणेषु पाणिनीयस्येव च सजातीयप्रबन्धेभ्यः प्रकर्षातिशयो नापह्नोतुं शक्यते। तत एव प्रसिद्धिप्राचुर्यात्कौर्मादेरिव नष्टकोशत्वशङ्का दूरोत्सारिता। अनतिविस्तरत्वाच्च प्रक्षेपशङ्का नावतरति। अन्यपरोक्तिप्रसिद्धपरिग्रहातिशयं चेदम्—"पढइ परासर सद्दम्" इति।

"अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्त्यते।
राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः॥
सात्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः।
तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिम्॥
यस्मिन् कल्पे तु यत्प्रोक्तं पुराणं ब्रह्मणा पुरा।
तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते॥"

इति। सम्यग्ज्ञाननिष्पादकसत्त्वमूलत्वादन्यथाज्ञानविपरीतज्ञानहेतुमूलरजस्तमोमूलत्वाभावाद्दुष्टकारणपुराणान्तरसाम्यं न संभावनीयम्। सत्त्वस्य यथार्थज्ञानहेतुत्वं रजस्तमसोश्चान्यथाज्ञानविपरीतज्ञानहेतुत्त्वं "सत्त्वात्संजायते ज्ञानम्"

"अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी॥"

इति च वचनात्सिद्धम् । "सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः । गुरु वरणकमेव तमः" इति "सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः" इति च प्रसिद्धम् । ननु चतुर्मुखशिवादिप्रतिपादकपुराणानां रजस्तमोमूलत्वपरवचनस्य रजस्तमोमूलत्वेन प्रामाण्याभावात्सात्त्विकपुराणप्राबल्यासिद्धिः । अस्य वचनस्य सत्त्वमूलत्वे प्रमाणं नास्ति । अत एव तद्वचनमात्रस्याप्रामाण्यं वक्तुं युक्तम् । न बहूनां पुराणानां, भूयसां बलीयस्त्वात् । उच्यते—न तावदस्य वचनस्य प्रामाण्ये विमतिर्न्याय्या, बाधकादर्शनात्स्वतःसिद्धप्रामाण्यस्यानपोदितत्वात् । "यो ह खलु वा अस्य राजसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मा, यो ह खलु वा अस्य सात्विकोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः, । यो ह खलु वा अस्य तामसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं रुद्रः" इति "महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः" इति च श्रुत्यानुगुण्येन तत्तद्गुणमयत्वेनावगतस्य तत्तत्त्वस्य तत्तत्कल्पे तत्तद्गुणमयेन ब्रह्मणा तेषु तेषु पुराणेषु प्रतिपादितत्वपरस्य वचनस्योपपन्नार्थत्वाच्च । सकलशास्त्रार्थव्यवस्थापके महाभारते च मोक्षधर्मे—

"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥"

इत्यादिनाभगवत्कटाक्षेण सत्त्वगुणमूलसम्यग्ज्ञाननिश्चयमुक्त्वा

"पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः ।
रजसा तमसा चास्य मानसं समभिप्लुतम् ॥"

इति चतुर्मुखशिवयोः कटाक्षेण रजस्तमोमूलकालुष्यप्रतिपादनाच्च चतुर्मुखशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वमुपपद्यते । अस्य वचनस्य रजस्तमोमूलपुराणस्थत्वेऽपि नाप्रामाण्यं शङ्कनीयम् । ब्रह्मशिवादिप्रतिपादनाभिनिविष्टस्य प्रबन्धस्य भगवत्प्रकर्षोक्तावाग्रहासंभवेनास्य वचनस्य तत्त्वपरत्वोपपत्तेः । स्वप्रतिपाद्यदेवतायामेव हि वक्तुराग्रहसंभवः, न त्वन्यत्र । तस्मान्नास्य वचनस्य कारणदोषसंभवः । यदुक्तम्—अनेकपुराणाप्रामाण्यादेतद्वचनमात्राप्रामाण्यं युक्तम्, भूयसां बलीयस्त्वादिति; तदयुक्तम्, साक्षादर्थविरोधाभावात् । न हि विधिशिवप्रतिपादकप्रबन्धानां रजस्तमोमूलत्वं नेति तेषु पुराणेष्ववगम्यते । तत्तत्प्रबन्धेष्वेव प्रमाणतया प्रतिपन्नानां तेषां प्रामाण्यं रजस्तमोमूलत्वं च विरुद्धमिति परंपरया विरोधः फलितः; तत्र भूयसां बलीयस्त्वमिति चेत्; यदि केवलमेतद्वचनमात्रविरोधेन तेषामप्रा-

माण्यं तदा स्यादयं दोषः। पुराणानां परस्परविरोधेन सर्वेषामविशेषेण प्रामाण्येऽनुपपन्ने सर्वाप्रामाण्यादपि कतिपयप्रामाण्यसिद्ध्यनुगुणनिर्वाहे न्याय्ये सति कस्याप्रामाण्यं कस्य च प्रामाण्यमित्यपेक्षायां विषयव्यवस्थामात्रपरत्वादस्य वचनस्य। अतोऽनेन सत्त्वादिमूलत्वे ज्ञापिते सति अदुष्टमूलैः प्रबन्धैः दुष्टमूलप्रबन्धबाधः। अतो न भूयसां बलीयस्त्वनयेनैतद्वचनबाधः। भगवत्प्रतिपादकपुराणेभ्यो विधिशिवपुराणबाहुल्यात्तत्प्रामाण्यमिति चेत्, इदं तावद्वचनमबाधितम्। इह भूयसां बलीयस्त्वनयानवतारात्। एवं बाधकरहितेनानेन वचनेन सत्त्वादिमूलत्वे पुराणानामवगते सति दुष्टमूलपुराणबाहुल्यमदुष्टमूलमेकमपि पुराणं न बाधितुं प्रभवति। न हि भ्रान्तपुरुषसहस्रवचनैरेकस्याभ्रान्तस्य वचनं बाध्यते। अतो भगवत्प्रतिपादकत्वेन सत्त्वमूलत्वान्न कारणदोषः। तथा पुराणान्तराणामिवास्य बाधकप्रत्ययो न दृश्यते, नारायणस्यैव परमकारणत्वप्रतिपादनात्। प्रत्यक्षश्रुतिषु हि नारायणस्यैव सामान्यशब्दविशेषशब्दाभ्यां कारणत्वमुक्त्वा "न चास्य कश्चिज्जनिता न चाधिपः" "न तत्समश्चाभ्यधिकश्च दृश्यते" "न ह्येतस्मादिति नेत्यन्यत्परमस्ति" "यस्मात्परं नापरमस्ति किंचित्" इति कारणभूतात्तस्मादन्यस्य परत्वं च निषिध्यते। "न ब्रह्मा नेशानः" "तत्र ब्रह्मा चतुर्मुखोऽजायत" "त्र्यक्षः शूलपाणिः पुरुषोऽजायत" "ततो जज्ञे उग्रस्त्वेष नृम्णः" "विरूपाक्षाय ब्रह्मणः पुत्राय" "अजस्य नाभावध्येकमर्पितम्" "स प्रजापतिरेकः पुष्करपर्णे समभवत्" "यन्नाभिपद्मादभवन्महात्मा प्रजापतिः" इति ब्रह्मशिवयोश्च नारायणादुत्पत्तिः श्रूयते। लैङ्गे तु ब्रह्मविष्णू प्रति— "युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ" इति रुद्रोक्त्या रुद्राद्धरिचतुर्मुखयोरुत्पत्त्यवगमात्पुराणान्तराणां श्रुतिविरोधः स्फुटतरः। यद्यपि कैश्चित् त्रयाणां देवानां साम्यमैक्यं चाभ्युपगतम्, तथाप्ययं विरोधः दुष्परिहरः; तुल्यानामेकीभूतानामपि तेषामुत्पत्तिप्रतिपादने भगवतश्चतुर्मुखशिवयोरुत्पत्तिश्रवणाद्रुद्रादितरयोरुत्पत्तेः क्वचिदपि वाक्ये श्रवणाभावाच्च; कारणवाचिशिवादिशब्दानामाकाशादिशब्दानामिव कार्यतयावगतप्रसिद्धरुद्रादिपरत्वाभावाच्च।

"सर्वे विष्णुमया वेदाः सर्वे विष्णुमया गुणाः।
न हि विष्णुसमा काचिद्गतिरन्या विधीयते॥
इत्येवं सततं वेदा गायन्ते नात्र संशयः॥"

इति लैङ्गादावपि वेदानां भगवत्परत्वप्रतिपादकत्वाभ्युपगमाच्च। अतो नारायणस्यैव परमकार-

णत्वपराभिः प्रत्यक्षश्रुतिभिः बाधकप्रत्ययवद्भ्यः पुराणान्तरेभ्यो वैलक्षण्यं स्फुटम् । तथा नारायणमेव परमकारणं प्रतिपादयद्भिर्मानवादिधर्मशास्त्रैरप्यैकार्थ्यं स्पष्टम् । "आपो नारा इति प्रोक्ताः" "तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ।" "विद्यात्तु पुरुषं परम्" "नारायणः परोऽव्यक्तात्" इत्यादिभिः नारायणस्यैव हि कारणत्वं तेषूच्यते । पुराणान्तराणि तु धर्मशास्त्रविरुद्धानि च । तथा वक्तृवैलक्षण्यं च प्रत्यक्षश्रुतिसिद्धम्—"स होवाच व्यासः पाराशर्यः" इति । अत्र पराशरात्मजत्वेन हि व्यासोत्कर्ष उच्यते । तथा लैङ्गेऽपि पराशरवैलक्षण्यं प्रतीयते । यथा तत्र द्वितीयेऽध्याये—

"पराशरस्यावतारो व्यासस्य च शुकस्य च ।
विनाशं राक्षसानां तु कृतं वै शक्तिसूनुना ॥"

इति । अत्र पराशरस्यावतार इत्युक्तिर्हि प्रकर्षातिशयार्था । अन्यथा पराशरस्य चोत्पत्तिर्व्यासस्य च शुकस्य चेत्यपि हि वक्तुं शक्यते । पुलस्त्यवसिष्ठवरदानलब्धदेवतापारमार्थ्यज्ञानवत्त्वं च महद्वैलक्षण्यम् । वरदाने सत्येतत्पुराणप्रामाण्यं तत्प्रामाण्ये सति तत्प्रतिपन्नवरलाभसत्यत्वमित्यन्योन्याश्रय इति न वाच्यम्, वरलाभवचनस्य पराशरो न लब्धवर इति बाधकप्रत्ययाभावेन स्वतःसिद्धप्रामाण्यस्यानपोदितत्वात् । लैङ्गे च देवतापारमार्थ्यज्ञानलाभः पराशरस्यावगम्यते । यथा तत्र द्वितीयेऽध्याये—

"देवतापारमार्थ्यस्य विज्ञानं च प्रसादतः ।
पुराणकरणं चैव पुलस्त्यस्याज्ञया गुरोः ॥"

इति । तत्रैव त्रिषष्टितमे—

"अथ तस्य पुलस्त्यस्य वसिष्ठस्य च धीमतः ।
प्रसादाद्वैष्णवं चक्रे पुराणं वै पराशरः ॥"

इति च । तदनन्तरं च—

"षट्प्रकारं समस्तार्थसाधकज्ञानसंश्रयम् ।
दशसाहस्रमितं सर्ववेदार्थसंयुतम् ॥"

इत्यनेनास्य पुराणरत्नस्य सर्ववेदार्थसंयुतत्वम्, अत एव समस्तपुरुषार्थसाधकज्ञानप्रसाधकत्वं चोच्यते । अतो वक्तृवैलक्षण्यं प्रबन्धवैलक्षण्यं च पुराणान्तरसिद्धमिति तद्दुरपह्नवम् । इदं चापरं सुमहद्वैलक्षण्यम् । यत्सामान्यप्रश्नपूर्वकविशेषनिष्ठप्रतिवचनरूपत्वम् ;

" सोऽहमिच्छामि धर्मज्ञ श्रोतुं त्वत्तो यथा जगत् ।
बभूव भूयश्च यथा महाभाग भविष्यति ॥"
" यन्मयं च जगद्ब्रह्मन् यतश्चैतच्चराचरम् ।"

इत्यादिना सामान्येन पृष्टे " विष्णोः सकाशादुद्भूतम् " इति विशेषनिष्ठं प्रतिवचनं ह्यवगम्यते । विशेषे पृष्टे सति प्रतिवचनस्य पृष्टविशेषपक्षपातेन तदुत्कर्षकथनं प्रशंसामात्रं न तत्त्वपरमिति शङ्कनीयं स्यात् । सामान्येन पृष्टे सति प्रतिवचनमर्थवशाद्विशेषपर्यवसितमिति तत्त्वपरत्वमेव स्यात् । अतश्च—

" तस्माद्भवन्तं पृच्छामः सूत पौराणिकाद्य तु ।
पुराणसंहितां पुण्यां लिङ्गमाहात्म्यसंयुताम् ॥"

इति विशेषनिष्ठप्रश्नोपक्रमतत्प्रतिवचनरूपपुराणान्तरेभ्यः प्रकर्षातिशयः स्पष्टतमः । एतत्पुराणार्थश्च लैङ्गादिषु क्वचित्क्वचिदङ्गीक्रियते । यथा लैङ्गे द्वितीये पुराणार्थानुक्रमणे—

" सर्वावतेषु विष्णोश्च जननं लीलयैव तु ।
विष्णोः प्रसादाज्जिष्णोश्च विष्णोश्चैव तु संभवः ॥"

तत्र—

" लीलया चैव कृष्णेन स्वकुलस्य च संहृतिः ।
जरकास्त्रच्छलेनैव गमनं स्वेच्छयैव तु ॥ "

इति भगवदवतारस्य भूलोकपरित्यागस्य च लीलामात्रनिबन्धनत्वं हि तत्रोच्यते । अत एवैतत्पुराणार्थस्यान्यत्राभ्युपगतत्वादप्रकम्प्यत्वमवगम्यते । तर्ह्येतदैकार्थ्यात्तान्यपि पुराणानि प्रमाणानि स्युरिति चेत्—न; कार्त्स्न्येनाविरुद्धत्वाभावात् । भगवदुत्कर्षप्रतिपादकांशस्तु तस्मिन्नंशे आग्रहासंभवादादरणीय इति पूर्वमेवोक्तम् । अस्य च पुराणरत्नस्य कार्त्स्न्येनाऽनाग्रहमूलत्वं चोपक्रमगतप्रश्नस्वाभाव्यादवगतमिति चोक्तम् । अतोऽन्यत्र बद्धाग्रहैरप्यादरणीयस्वोक्तार्थत्वमप्रकम्प्यता हेतुः । किंच पुराणान्तरेष्विवास्य पुराणस्य न स्वव्याहतार्थप्रतिपादकत्वं दृश्यते । कार्त्स्न्येन भगवत्प्रकर्षस्यैवावगमात् । पुराणान्तरेषु व्याघातः प्रतीयते । यथा लैङ्गे—

" युवां प्रसूतौ गात्रेभ्यो मम पूर्वं सनातनौ ।
अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ॥
वामपार्श्वे च मे विष्णुर्विश्वात्मा हृदयोद्भवः ।"

इति । तत्र—

" ततः प्रहृष्टः सुमनाः प्रणिपत्य महेश्वरम् ।
प्राह नारायणो देवः सलिङ्गं लिङ्गवर्जितम् ॥
यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ ।
भक्तिर्भवतु नौ नित्यं त्वयि चाव्यभिचारिणी ॥"

इति हरिविरिञ्चयोः शिवादुत्पत्तितदाराधनवरवरणादिकमुक्तम् । तत्र क्वचित्—

" त्वत्कोपसंभवो रुद्रस्तमसा च समावृतः ।
त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः ॥"

इति चतुर्मुखशिवयोर्भगवत्प्रसादकोपसंभवत्वमुक्तमिति स्वव्याघातः । न च वसुदेवादेरुत्पत्तिवत् कैलासयात्रादिवच्च रुद्रादुत्पत्तितदाराधनवरणरूपलीलोक्तिरित्यविरोधः । पुराणरत्नभारतादौ—

" मनसैव जगत्सृष्टिं संहारं च करोति यः ।
तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥
तथापि यो मनुष्याणां धर्मस्तदनुवर्तनम् ।
कुर्वन् बलवता संधिं हीनैर्युद्धं करोत्यसौ ॥
साम चापि प्रदानं च तथा भेदप्रदर्शनम् ।
करोति दण्डपातं च क्वचिदेव पलायनम् ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते ।
लीला जगत्पतेस्तस्य छन्दतः संप्रवर्तते ॥ "

" ईशन्नपि महायोगी सर्वस्य जगतः प्रभुः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥
तेन वञ्चयते लोकान् मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ "

इत्यादिभिरिव तत्र तत्र प्रसक्तापकर्षपरिहारपरग्रन्थादर्शनात्; भारतादिषु दशरथवसुदेवादीनां रामकृष्णाद्यपेक्षया परत्वस्य जगत्कारणत्वादिमुखेन प्रतिपादनाभावात्, इह च भगवदपेक्षया रुद्रपरत्वस्य प्रतिपादनाच्च । अतः स्वव्याघातो दुष्परिहरः । न च तथात्र स्वव्या-

हतिः प्रतीयत इतीदं च महद्वैलक्षण्यम्। उक्तलक्षणप्रकर्षवतो वैष्णवपुराणस्य कारणदोष-बाधकप्रत्ययस्वव्याहतिमत्प्रबन्धान्तरस्य च विरोधे सति पुराणरत्नस्य प्राबल्यमन्येषां दौर्बल्यं च सुस्पष्टम्। एवं प्रसिद्ध्यतिशयलब्धसजातीयप्रबन्धप्रकर्षवत्त्वात्, तत एव नष्टकोशत्वाभावात्, अनतिविस्तृततया प्रक्षेपशङ्कारहितत्वात्, अन्यपरोक्तिसिद्धपरिग्रहातिशयवत्त्वात्, सामान्यप्रश्न-पूर्वकप्रतिवचनरूपत्वेनानाग्रहमूलत्वात्, अत एवेदृशवैलक्षण्यरहितकारणदोषबाधकप्रत्ययस्व-व्याहतिमत्प्रबन्धान्तराणामेतद्विरोधे सति दौर्बल्यस्यावर्जनीयत्वाच्च श्रीमद्वैष्णवमिदं पुराणं प्रमाणतमम्। एतत्सर्वं हेतुजातमभिप्रेत्य प्रधानभूतयुक्तिं कण्ठोक्त्या प्रदर्शयन् तन्मुखेन प्रबन्धवैलक्षण्यं वदन् प्रश्नानवतारयति—**तत्रेति**। **पुलस्त्यवसिष्ठवरप्रदान-लब्धपरदेवतापारमार्थ्यज्ञानवत** इत्यत्र देवतापारमार्थ्यशब्देन तमस्कार्यं धर्म्यन्तरत्वेन धर्म्यन्तरस्य प्रतीतिरूपं विपरीतज्ञानं व्यवर्तितम्। अनेन "देवतापारमार्थ्यं च" इति वचनं स्फोरितम्। प्रशंसार्थेन मतुप्प्रत्ययेन रजस्कार्यं प्रकारान्तरोपेतस्य तद्विरुद्धप्रकारान्तरविशिष्टता-प्रतीतिरूपमन्यथाज्ञानं व्यावर्तितम्। अनेन सविशेषत्वसिद्धिः। "यथावत्" इति प्रकार-कथनेनापि सविशेषत्वसिद्धिरिति. वरलाभकथनं सविशेषत्वोपपादकमित्यभिप्रायः। **भगवच्छब्देन** ज्ञानवत्त्वमुक्तम्। वरलाभात्तदतिशयसिद्धिः। **सोऽहमित्यादि; सोऽहम्;** त्वयैव सर्वविद्यासु शिक्षितपूर्वोऽहमिति भावः। **धर्मज्ञ;** "विशेषोऽस्ति न सतां शिष्यपुत्रयोः" इत्येवंरूपधर्मज्ञ। यद्वा "आनृशंस्यं परो धर्मः" इति धर्मज्ञ। आनृशंस्यम्; आश्रितसंरक्षणपरत्वम्, "आश्रितेत्यानृशंस्यतः" इति वचनात्। **महाभाग;** परिपूर्णकृत्यं हि परसंरक्षणम्। किंचित्कारमप्यनपेक्ष्य रक्षकत्वमेवेति भावः। **यथा यतो बभूव;** ब्रह्मरुद्रादिषु कः कारणमिति ज्ञातुं **यत** इति प्रश्नः। किं विवर्ताधिष्ठानत्वं कारणत्वम्, उत परिणामित्वम्, तत्रापि किं सद्वारकपरिणामित्वम्, उताद्वारकपरिणामित्वमिति प्रकारभेदजिज्ञासया **यथेति** प्रश्नः। कल्पभेदेन सृष्टिवैषम्यशङ्कया **भविष्यतीति** प्रश्नः। वृश्चिकस्य गोमयवृश्चिकोपादानकत्वदर्शनात्कल्पभेदेनोपादानादिभेदशङ्का ह्युपपद्यते। तत्रापि यतो यथेति पदयोः पूर्ववदर्थः। यतो यथा बभूवेत्येकप्रश्नत्वशङ्का **यन्मयमिति** प्रश्नान्तरव्यवधानेन निरस्यते। यथा कारणं ज्ञातव्यं तथा सृष्टिप्रकारोऽपि पृथग्ज्ञातव्य इति ज्ञापनार्थं ज्ञातव्यत्वेऽपि प्राधान्यद्योतनाय प्रकारप्रश्नः पूर्वमेव कृतः। यत इति हेतौ पञ्चमी। अतो निमित्तोपादानयोस्तन्त्रेण प्रश्नः। अन्तःस्थित्याद्युपयुक्तात्मशरीर-

भावप्रश्नः **यन्मयमिति** । मयट्प्रत्ययः प्राचुर्यार्थः । अनेन व्याप्तिर्दर्शिता । व्याप्यात् व्यापक-प्राचुर्यं हि घटाकाशादौ दृष्टम् । आत्मतया हि व्याप्तिः । आत्मत्वं च धारकत्वम् । अतोऽन्तर्यामिकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नः फलितः । **यन्मयम्**; येनान्तर्यामिणा धारकेण प्रचुरं जगत्स्थितमित्यर्थ उक्तो भवति । अन्तः प्रविश्य प्रशासनेन धारकत्वं स्थितिहेतुत्वमिति प्रागेव विशदीकृतम् । चशब्दाद्बहिर्भूतपोषकादिकृता पोषणादिलक्षणा स्थितिः, मातापित्रादिभिः कार्येष्टप्रापणानिष्टनिवारणलक्षणा स्थितिश्च पृष्टा भवति । यत इत्युपादानस्यापि पृष्टत्वान्मयट् प्राचुर्यार्थ एव । न च गोबलीवर्दन्यायेन यत इति पञ्चम्यर्थः संकोचयितव्यः, बलीवर्दशब्दवत् मयटोऽनन्यथासिद्धत्वाभावात्संकोचकत्वानुपपत्तेः । पदान्तरवैयर्थ्यपरिजिहीर्षया पदान्तरार्थसंकोचो गोबलीवर्दनय इति हि न्यायविदः । अत्र तु मयटोऽर्थान्तरसंभवान्नायं संकोचकः । यत इति पदं निमित्तमुपादानं च बोधयितुं शक्तम् । स्थितिप्रश्नोऽपेक्षितश्च । अतोऽपेक्षितविधेरनपेक्षितविधानं दुर्बलम् । "यतो वा इमानि" इत्यादिश्रुतावपि यत इति पदेनैव निमित्तोपादानयोरुक्तत्वाच्छ्रुतिच्छायानुविधानाच्च यत इति तन्त्रेण प्रश्न इति यन्मयमिति स्थितिप्रश्न एव क्रियते । अर्थान्तरस्वीकारे अपेक्षितावचनमनपेक्षितवचनं च स्यात् । नापि स्वार्थिको मयट्, प्रत्ययस्यार्थवत्त्वे संभवति तत्परित्यागस्यान्याय्यत्वात् । अतो यथोक्त एवार्थः । लयस्थानप्रश्नो लयप्रकारप्रश्नश्चानधीतशाखान्तरेषु स्थानभेदप्रकारभेदशङ्कया कृतः । देवतान्तरस्य लयस्थानत्वं तत्रापि सद्वारकत्वाद्वारकत्वकार्यश्रमनिवृत्तिरूपताख्यप्रकारभेदश्च हि शङ्कास्पदं भवति । भूतभविष्यत्प्रश्नश्च कल्पभेदेन लयस्थानप्रकारभेदशङ्कया कृतः । चकाराल्लयकर्तृप्रश्नश्च सूचितः । स च कर्तृभेदशङ्कानिबन्धनः । स्वरूपप्रश्नश्लोकद्वयं व्याचिख्यासितश्लोकापेक्षितत्वेनोदाहृत्य आदिशब्देन प्रश्नान्तरपरश्लोकाः क्रोडीकृताः। "विष्णोः सकाशात्" इति श्लोकस्यार्थान्तरप्रश्नोत्तररूपत्वशङ्काव्युदासार्थं तेषां श्लोकानामर्थं संग्रहेणाह—**अत्रेति** । **ब्रह्मस्वरूपेति;** स्वरूपशब्दो विभूत्यादिव्यावर्तकः । स्वरूपविशेषशब्दो ब्रह्मादिव्यावर्तकः । विभूतिभेदानां प्रकारो विभूतिभेदप्रकारः । स च ज्योतिश्चक्रभुवनकोशादिप्रश्नेऽन्तर्गतः । वर्णाश्रमादिधर्मप्रश्नेन तदाराधनस्वरूपं पृष्टम् । प्रतिवचने फलविशेषोक्तिदर्शनात्प्रतिवचनप्रकारेण प्रश्नार्थो विज्ञायत इति रीत्या फलविशेषश्चात्र पृष्टो भवतीति पूर्वोक्तेषु प्रश्नेष्वन्तर्भावित इत्यभिप्रायेण फलविशेषाश्च पृष्टा इत्युक्तम् । सप्रयोजनमाराधनं पृष्टमिति तत्र तदन्तर्भावः । अयमेवार्थः सकलश्रुतीतिहासपुराणानां

प्रतिपाद्य इति भावः। ततः किं प्रस्तुतश्लोकार्थस्येत्यपेक्षायां यन्मयमिति पदस्यार्थं सोपपत्तिकमाह—**ब्रह्मस्वरूपेति**। **सृष्टिस्थितिलयकर्मभूतमिति** पदं सृष्टिप्रलययोरुक्तत्वेन स्थितिकथनस्यापेक्षितत्वज्ञापनार्थम्। स्थितिलयशब्दाभ्यां रक्षासंहारौ विवक्षितौ। स्थितिलययोः प्रयोज्यव्यापारत्वेन तदाश्रयत्वेन तत्कर्मत्वाभावाज्जगतः सृष्टिस्थितिलयकर्मभूतं जगत् स्थित्यर्थं किमात्मकं भवतीति प्रश्नार्थः। ततः किमित्यत्राह—**तस्य चेति**। 'जगच्च सः' इति सामानाधिकरण्यप्रतिपन्नं तादात्म्यं स्वरूपैक्यलक्षणमाशङ्क्य परिहरति—**इदं चेति**। इदं सामानाधिकरण्यप्रतिपन्नमित्यर्थः। गगनादौ व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति तद्व्यावृत्त्यर्थमात्मत्वं विवृणोति—**अन्तर्यामिरूपेणेति**। अन्तः प्रविश्य नियन्तृत्वं ह्यात्मत्वम्। **व्याप्यव्यापकयोरिति;** जगद्ब्रह्मणोर्व्याप्यत्वेन व्यापकत्वेन च श्रुतिसिद्धत्वादिति भावः। न तु वस्त्वैक्यकृतमिति प्रतिज्ञामुपपादयति—**यन्मयमिति**। विकारार्थत्वमाशङ्क्य परिहरति—**यन्मयमिति मयडिति**। कुत इत्यत्राह—**पृथगिति**। विकारार्थत्वे उपादानं पृष्टं स्यात्। न च तत्प्रष्टव्यम्, यत इति पञ्चम्यन्तपदेनोपादानस्यापि पृष्टत्वात्। अतः पृथक्प्रश्नवैयर्थ्यम्। न च गोबलीवर्दनयः, अर्थान्तरसंभवादिति। अपेक्षितविधेरनपेक्षितविधानं दुर्बलमिति न्यायश्चाभिप्रेतः। ब्रह्माज्ञानवादिनोऽभिमतं स्वार्थिकत्वपक्षं दूषयति—**नापीति**। न तु भेदाभेदपक्षाभ्युपगतम्; तत्तु दूषयिष्यते। न ह्यर्थे संभवति निरर्थकत्वाश्रयणमुपपन्नमिति भावः। श्रुतार्थस्वीकारेणाश्रुतकल्पनं ह्युचितम्; न तु श्रुतपरित्यागः। ब्रह्माज्ञानवादिनाभ्युपगतस्य स्वार्थिकत्वस्यासाधारणं दूषणमाह—**जगदिति**। स्वार्थिकत्वपक्षे 'यदिदं जगत् तत्किम्' इत्युक्तं स्यात्। 'यदिदं जगत् तत्किम्' इत्युक्ते ज्ञातस्य जगद्रूपमात्रस्य प्रष्टव्यत्वायोगात् प्रश्नावैयर्थ्याय 'तत्किं सत्यम्, उत मिथ्या' इति पृष्टं भवतीत्यभ्युपेतव्यम्। तत्र मिथ्येत्युत्तरं वक्तव्यम्। तत्रान्यतराकारोपस्थापके आकारान्तरनिषेधके च शब्दे वक्तव्ये आकारद्वयोपस्थापकं सामानाधिकरण्यमनुपपन्नमित्यर्थः। बाधार्थं सामानाधिकरण्यमिति चेत्—तन्नास्ति, 'माता मे वन्ध्या' इतिवत् सामानाधिकरण्यं बाधार्थमिति व्याहतत्वादिति भावः। तर्हि कथमुत्तरं स्यादित्यत्राह—**तदा हीति**। विष्णुरित्यन्यतराकारोपस्थापकशब्दः। आकारान्तरनिषेधशब्द एवकारः। साक्षादर्थमाह—**अत इति; अतः;** स्वार्थिकत्वविकारार्थत्वयोरनुपपन्नत्वादित्यर्थः। शब्दानुशासनानुमतिं दर्शयति—**तदिति**। प्रकृतम्; प्रकर्षेण कृतम्, प्रभूतम्; प्रचुरमित्यर्थः। 'अन्नमयो यज्ञः' 'शकटमयी

यात्रा' इति हि तस्योदाहरणम्। किमत्र प्राचुर्यमस्तीत्यत्राह—**कृत्स्नं चेति**। "अन्तर्बहिश्च व्याप्य" इत्यादिश्रुतेस्तदुपपन्नमिति भावः। सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वं प्रतिपिपादयिषितमुपसंहरति—**तस्मादिति**। यन्मयमित्यस्य प्राचुर्यार्थत्वेन तस्योत्तरत्वात् 'जगच्च सः' इति सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वम्; तेन स्वार्थिकत्वनिवृत्त्या यन्मयमिति मयट्प्रत्ययस्य प्राचुर्यार्थत्वमित्यन्योन्याश्रय इति चेत्—नैवम्, मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तेः प्राचुर्यार्थत्वनिर्णयस्य च सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वानपेक्षत्वात्। स्वार्थिकत्वं तावत् अर्थवत्त्वे संभवति निरर्थकत्वस्वीकारायोगादपास्तम्। 'जगच्च सः' इति सामानाधिकरण्येन चापास्तम्; स्वार्थिकत्वे सति आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगात्, न तु तस्य शरीरात्मभावनिबन्धनत्वायोगात्। न च सामानाधिकरण्यस्य प्रवृत्तिनिमित्तभूताकारद्वयोपस्थापकत्वं मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिसापेक्षम्, सामानाधिकरण्यलक्षणस्वभावादेव तस्याकारद्वयोपस्थापकत्वसिद्धेः। अतो मयट्प्रत्ययस्य स्वार्थिकत्वनिवृत्तिः सामानाधिकरण्यस्याकारद्वयोपस्थापकत्वादिति नान्योन्याश्रयः। एवं स्वार्थिकत्वे व्युदस्ते पृथक्प्रश्नवैयर्थ्येन विकारार्थत्वेऽनुपपन्ने परिशेषाच्च स्थितेः प्रष्टव्यत्वे सति स्थितिस्वाभाव्यादनुशासनानुरोधाच्च मयट्प्रत्ययस्य प्राचुर्यरूपार्थविशेषपरत्वसिद्धिः। ततो 'जगच्च सः' इति सामानाधिकरण्यस्य शरीरात्मभावरूपप्रवृत्तिनिमित्तविशेषसिद्धिरिति नान्योन्याश्रयः। एवं सामानाधिकरण्यस्य मृषावाद्यभिमतैक्यपरत्वे मयडानर्थक्यं सामानाधिकरण्यानुपपत्तिश्चेति दूषणद्वयम्। स्वरूपैक्यपरत्वेऽर्थविरोधः, यन्मयमित्युक्तप्रश्नस्योत्तरत्वानुपपत्तिश्चेति दूषणद्वयं च दर्शितं भवति। स्वोक्तार्थपरत्वानभ्युपगमे दूषणमाह—**अन्यथेति**। अन्यथा कथं प्रश्नप्रतिवचने स्यातामित्यत्राह—**तथाहि सतीति**। सामानाधिकरण्यस्य भेदाभेदवाद्यभ्युपगतैकद्रव्यतापरत्वं दूषयति—**जगदिति**। अस्मिन्नपि पक्षे जगद्यन्मयं जगद्यद्द्रव्यमिति पृष्टं स्यात्। तदानीं मयड्वैयर्थ्यमस्तीति द्रष्टव्यम्, यत इत्युपादानस्य पृष्टत्वात्। अधिकं दूषणमाह—**सत्येत्यादिना**। सत्यसङ्कल्पेत्यादिना जीवगतदोषः सर्वाशुभेत्यादिना प्रकृतिगतदोषश्च ब्रह्मणि प्रसज्यत इत्युक्तम्। यद्वा उभयलिङ्गकत्वहानिः विपरीताकारप्राप्तिश्चेत्यर्थः। शरीरवाचिपदस्य शरीरिपरत्वे मुख्यत्वं न स्यादित्यत्राह—**आत्मशरीरेति**। **स्थाप्यते**; स्थापयिष्यत इत्यर्थः। अनन्तरभावित्वात् स्थाप्यत इत्युक्तम्।

**भावप्रकाशिका**

"पैढइ परासरसद्दं सोवि जुआ सरसकव्वदुल्लहिओ।
अह्मो कालस्स गई अह्मेवि णिअं पइं गमिआ॥"

इति पठ्यते। इदं चासत्काव्यालापप्रवणस्योपपतेः कालविशेषे विष्णुपुराणपाठबद्धादरतामात्मनश्च स्वैरविहारनिवृत्तिं च स्मृत्वा विस्मितायाः कस्याश्चिद्वचनम्। अतोऽन्यार्थप्रवृत्तत्वमस्येति द्रष्टव्यम्। ननु पराशरपुराणेऽपि पराशरशब्दो भवत्येव; तत्र चामूलाग्रं शिवपारम्यमेव दृश्यत इति चेत्—न; तस्मिन् विष्णुपुराण इव पराशरशब्दप्रसिध्द्यभावेन श्लोकस्थपराशरशब्देन विष्णुपुराणस्यैव विवक्षितत्वादिति भावः।

**अग्नेः शिवस्येति;**

"संकीर्णाः सात्विकाश्चैव राजसास्तामसास्तथा।
कल्पाश्चतुर्विधाः प्रोक्ता ब्रह्मणो दिवसाश्च ते॥"

इति कल्पानामेव सात्त्विकादिविभागकथनात् "सात्त्विकेष्वथ कल्पेषु" इति च दर्शनात् 'तामसेषु राजसेषु' इत्येतत्सर्वं कल्पविशेषणम्। ततश्च तामसेषु कल्पेषु प्रकीर्तितं ब्रह्मणा अग्निशिवमाहात्म्यं, राजसेषु कल्पेषु ब्रह्मणो माहात्म्यं प्रोक्तं विदुरित्यर्थः। यस्मिन् कल्पेष्वित्यस्यायमर्थः—उत्तरार्धे तस्य तस्येति श्रवणात् यस्य यस्याग्न्यादेः पुराणं माहात्म्यप्रतिपादकं यत्प्रोक्तं, तस्य तस्य माहात्म्यं माहात्म्यप्रतिपादकं तदिति पदमध्याहर्तव्यम्, पूर्वत्र यत्प्रोक्तमिति श्रवणात्। तस्य तस्य माहात्म्यप्रतिपादकं तत्पुराणं तत्तत्स्वरूपेण तस्य कल्पस्य स्वरूपमेव स्वरूपं यस्य; सात्त्विकत्वादिकं हि कल्पस्य स्वरूपं सत्त्वादिगुणप्रचुरेण ब्रह्मणा वर्ण्यत इति फलितार्थः। ततश्च तमःप्रचुरेण ब्रह्मणा अग्निशिवमाहात्म्यं वर्ण्यते, रजःप्रचुरेण ब्रह्ममाहात्म्यं, सत्त्वप्रचुरेण विष्णुमाहात्म्यमिति फलितार्थ इति द्रष्टव्यम्। केचित्तु "यस्मिन् कल्पे तु यत्प्रोक्तम्" इत्यत्र यद्दैवतमधिकृत्य पुराणं प्रवृत्तं, तस्य माहात्म्यं तत्स्वरूपेण वर्ण्यत इत्यर्थ इति वदन्ति। अन्ये तु "तत्स्वरूपेण" इत्यत्र तदिति पृथक् पदम्; यस्मिन् कल्पे यत्पुराणं प्रोक्तं तस्य तन्माहात्म्यं तस्य स्वरूपेण वर्ण्यत इति योजना। एवं हि तस्य तस्येति षष्ठ्यन्तद्वयसाफल्यम्। तस्य च स्वरूपमसाधारणाकारः सत्त्वरजस्तमांस्येव। ततश्च सत्त्वरजस्तमोभिर्वर्ण्यत इत्यर्थ इति वदन्ति। ननु—

१. अयं श्लोको गाथासप्तशतीस्थः। यद्यप्ययं काव्यमालामुद्रितपुस्तके न दृश्यते, तथापि लिप्सिगनगरमुद्रितपुस्तके दृश्यते।

"त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् ।
ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ॥
तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः ।
तपसा तोषयित्वा तु पितरं परमेश्वरम् ।
कल्पान्तरेऽसृजद्ब्रह्मा विष्णुरुद्रौ जगन्मयः ।
कल्पान्तरे तथा विष्णुर्ब्रह्मरुद्रौ तथा हरः ॥
नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ।
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥
तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति ।"

इति पुराणवचनानुसारेण तत्तत्कल्पवर्तिपारमार्थिकवृत्तान्तप्रतिपादनमुखेन सकलपुराणप्रामाण्य-प्रतिपादनपरमिदं वचनं किं न स्यात्? 'तस्य तस्य तु माहात्म्यम्' इत्यत्र यस्मिन् कल्प इति पूर्वनिर्दिष्टकल्पपरामर्शस्योचिततया कल्पसंबन्धिमाहात्म्यमेव तत्स्वरूपेण तत्कल्पप्रवृत्त-पुराणस्वरूपेण वर्ण्यत इति वक्तुं शक्यत्वादिति चेत्—न; "त्रयस्ते कारणात्मानः" इति श्लोकस्य पूर्वैरनुदाहृतत्वेन प्रामाण्यस्य निश्चेतुमशक्यत्वात्। यस्मिन् कल्पे यत् पुराणं प्रोक्तं, तस्य कल्पस्य माहात्म्यं तेन पुराणेन वर्ण्यत इत्यस्य विवक्षितत्वे तत्स्वरूपेण वर्ण्यत इत्यस्या-युक्तत्वाच्च यथोक्त एवार्थः । **अन्यथाज्ञानविपरीतज्ञानेति; अन्यथाज्ञानं** धर्मान्यथा-भावज्ञानम् । विपरीतज्ञानं धर्म्यन्तरज्ञानम् । केचित्तु इमे संसर्गारोपतादात्म्यारोपरूपे, धर्म्यंशे भ्रान्तेरभावादिति वदन्ति । **सत्त्वं लघु प्रकाशकमिति;** "गुरु वरणकमेव तमः" इत्यत्र एवकारः सर्वत्र संबध्यते, सत्त्वं लघु प्रकाशकमिष्टं साङ्ख्याचार्यैः । उद्गमनहेतुः गौरवप्रतिद्वन्द्वी हि धर्मो लाघवम्, यतोऽग्नेरूर्ध्वज्वलनं, यतो वायोस्तिर्यग्गमनं च । तच्च लाघवं करणानां चक्षुरादीनां स्वस्वविषयप्रवृत्तौ हेतुः । अतः प्रकाशकं भवति । तद्धि सत्त्वं स्वयमक्रियत्वात् स्वकार्यं प्रत्यवसीदति । तच्च रजसा उपष्टभ्यते प्रवर्त्यते । अतः प्रवर्तकत्वाद्रज उपष्टम्भकम् । तत्र च हेतुश्चलत्वं; यतः स्वयं चलस्वभावं भवति, अतश्चलयद्रजः प्रवर्तकम् । तादृशं च रजो गुरुणा आवृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्यत इति 'गुरु वरणकमेव तमः' इत्युच्यते । वरणकं नियमनहेतुरित्यर्थः । सत्त्वरजस्तमसां प्रकाशप्रवृत्तिनियमार्थत्वात्सत्त्व-स्य प्रकाशकत्वम्, तमसश्च गुरुत्वेन करणमान्द्यहेतुत्वं च सिद्धमिति भावः । **तस्मान्नास्य**

**वचनस्येति**; वस्तुतस्तु सात्त्विके गारुडपुराणेऽस्य वचनस्योपलम्भादेतस्य तामसमात्स्यपुराण-वचनस्य प्रामाण्यासिद्धावपि न क्षतिरिति द्रष्टव्यम् । **अनेन वचनेन सत्त्वादिमूलत्व इति** ; नन्वेवं द्वैताद्वैतग्राहिप्रमाणाविरोधेऽपि "जनैः स्वकर्मस्तिमितात्मनिश्चयैः" "ततो हि शैला-ब्धिधरादिभेदान्" इत्यादिप्रमाणानुसारात् द्वैतज्ञानस्य सर्वस्यापि दोषमूलत्वनिश्चयसंभवात् द्वैतग्राहिप्रत्यक्षस्याद्वैतश्रुतिपरिपन्थित्वं न स्यादिति चेत्—न ; तेषां वचनानां भेदप्रत्यक्षादे-र्दोषमूलत्वप्रतिपादकत्वस्याद्याप्यसिद्धेः । " न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इत्यस्यायमर्थः— "अथात आदेशो नेति नेति" इत्येवमितिनेतिशब्दनिर्दिष्टादेतस्माद् ब्रह्मणोऽन्यत्परं नास्तीति। **कारणवाचिशिवादिशब्दानामिति**; "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः" "शिव एको ध्येयः" इत्यादीनाम् "आकाशादेव समुत्पद्यन्ते" इत्यादिवाक्य-तुल्ययोगक्षेमत्वादिति भावः । **दशसाहस्रसंमितमिति**; षट्साहस्रप्रतिपादकवचनविरोधस्तु वृत्तभेदादिनाधिक्यमात्रपरतया सङ्ख्याया अविवक्षितत्वेन वा समाधेयः । **आश्रितेत्या-नृशंस्यत इति** ; "यतो यथा बभूव" इत्यत्रेव "यतो यथा भविष्यति" इत्यत्रापीत्यर्थः । **प्रश्नान्तरव्यवधानेनेति**; इदमुपलक्षणं "यतश्चैतच्चराचरम्" इति चशब्दादीनाम-पीति द्रष्टव्यम् । **आत्मतया हि व्याप्तिरिति**; यद्यपि 'यन्मयम्' इति मयडर्थप्राचुर्यबलेन व्यापकत्वमात्रं सिध्येत् नात्मत्वम् , अथापि सृष्टिलयसमभिव्याहारात् स्थितिहेतोर्व्यापकस्यैव प्रष्टव्यतयात्मत्वसिद्धिरिति भावः । ननु यस्य यथोत्पत्तिस्थानत्वं तस्य तथा लयस्थानत्वं च सिद्धमिति लयस्थानतत्प्रकारप्रश्नावयुक्तावित्यत्राह—**लयस्थानप्रश्न इति** । **सद्वारकत्वा-द्वारकत्वेति**; सद्वारकत्वं सिद्धान्ते ; अद्वारकत्वं यादवभास्करमतयोः ; कार्यभ्रमनिवृत्तिरूपत्वं शंकरमत इति विभागो द्रष्टव्यः । **स च कर्तृभेदशङ्कानिबन्धन इति**; लोके उत्पादक-संहर्त्रोर्भेददर्शनादिति भावः । "यत्प्रमाणानि भूतानि" इत्यादिप्रश्नश्लोकानां भाष्ये कण्ठतोऽनु-पादाने हेतुमाह—**स्वरूपप्रश्नश्लोकद्वयमिति**; स्थितिलययोरकर्मकत्वात् 'स्थितिलयकर्म-भूतम्' इत्युक्तिरसंगता स्यादित्याशङ्क्याह—**स्थितिलयशब्दाभ्यां रक्षासंहारौ विव-क्षिताविति** । इदमिति पदं व्याचष्टे—**सामानाधिकरण्यप्रतिपन्नमित्यर्थ इति** । अत्र केचित्—'इदं च तादात्म्यम्' इति भाष्ये इदंशब्दस्य सामानाधिकरण्यपरत्वं युक्तम्; तादात्म्य-शब्दश्च तत्प्रतिपादकसामानाधिकरण्यपर एव व्याख्यातुमुचितः ; तादात्म्यप्रतिपादकं सामा-नाधिकरण्यं जगदन्तर्यामिणो जगच्छब्दार्थस्य तच्छब्दार्थस्य परमात्मनश्चैक्यनिबन्धनं, न तु

व्याप्यव्यापकयोर्जगद्ब्रह्मणोरैक्यनिबन्धनम्; "यन्मयम्" इति प्रश्नोत्तरत्वात् "जगच्च सः" इति सामानाधिकरण्यस्येति योजनैव स्वरसतः प्रतीयते। यदि च तादात्म्यशब्दः सामानाधिकरण्यप्रतिपन्नैक्यपरः, तदा 'न तु व्याप्यव्यापकयोर्वस्त्वैक्यकृतम्' इति भाष्यस्यास्वारस्यम्; न हि तादात्म्यस्यैक्यनिबन्धनत्वशङ्कास्ति। अतस्तादात्म्यशब्द एव सामानाधिकरण्यपरतया योजनीयः। टीकाया अपि तत्रैव तात्पर्यमिति वदन्ति। **व्याप्तिमात्रेण तादात्म्यं न दृष्टमिति;** 'गगनं घटः' इति सामानाधिकरण्यं न दृष्टमित्यर्थः। न त्वैक्यमिति भ्रमितव्यम्, शरीरात्मनोरपि तादात्म्यलक्षणैक्याभावादिति द्रष्टव्यम्। **श्रुतिसिद्धत्वादिति भाव इति;** व्याप्यत्वव्यापकत्वरूपविरुद्धधर्माध्यस्तयोरैक्यासंभवादिति भावः। **ब्रह्माज्ञानवादिनोऽभिमत इति;** यद्यपि विकारार्थत्वमप्यभिमतं, तथापि यत इत्यनेन सिद्धत्वादिदमेव तस्याभिमतमिति भावः। ननु त्वन्मतेऽपि मयटः प्राचुर्यार्थत्वाश्रयणमात्रेणात्मत्वपर्यन्तार्थालाभात् तत्कल्पने च प्रतिपत्तिगौरवात् मयटो निरर्थकत्वमविशिष्टमित्यत आह—**श्रुतार्थस्वीकारेणेति। असाधारणं दूषणमाहेति;** अर्थवत्त्वे संभवत्यानर्थक्याश्रयणमन्याय्यमित्यस्य भेदाभेदवादिसाधारणत्वादिति भावः। ननु 'विष्णुरेवेत्युत्तरमभविष्यत्' इति भाष्यमयुक्तम्; किमत्र जगत्पदं न प्रयोक्तव्यमित्यभिप्रायः? उत एवकारः प्रयोक्तव्य इति? न प्रथमः, 'जगत् किम्?' इति जगद्धर्मिकप्रश्ने उत्तरस्यापि जगद्धर्मिकस्यैवोचितत्वात्; नाप्येवकारप्रयोगः, 'सर्वं वाक्यं सावधारणम्' इति न्यायेन सिद्धेः; किंच जगद्विष्णुरेवेत्युत्तरं चासंगतम्; न हि शुक्तिरेव रूप्यमित्युत्तरं क्वचिद् दृष्टचरमित्याशङ्क्य मिथ्यैवेत्युत्तरमभविष्यत्, न तु विरुद्धाकारद्वयसामानाधिकरण्येनेति भाष्यतात्पर्यार्थं हृदि निधायाह—**स्वार्थिकत्वपक्ष इत्यादिना। अन्यतराकारोपस्थापक इति;** सत्यत्वमिथ्यात्वयोरन्यतराकारोपस्थापक इत्यर्थः। **विष्णुरित्यन्यतराकारोपस्थापकशब्द इति;** 'विष्णुरेव' इति भाष्ये विष्णुशब्दस्य न विष्णुत्वे तात्पर्यं, किंतु सत्यत्वमिथ्यात्वयोरन्यतराकारे तात्पर्यमित्यर्थः। **प्रभूतं प्रचुरमित्यर्थ इति;** यद्यपि काशिकायां "प्राचुर्येण प्रस्तुतं प्रकृतम्" इति व्याख्यातम्; तद्व्याख्यात्रा हरदत्तेनापि "यद्यपि प्रस्तुतमात्रं वक्ति प्रकृतशब्दः; तथापीह वचनग्रहणादयं विशेषो लभ्यते; वचनग्रहणं हि यादृशस्य प्रकृतस्य लोके मयड्वचनं प्रत्यासन्नं तत्र यथा स्यादित्येवमर्थः" इत्युक्तं, तथाप्यस्य ततोऽपि सुन्दरत्वादिदमेव ज्याय इति ध्येयम्। शङ्कते—**यन्मयमित्यस्येति। आकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वायोगादिति;** यद्यपि 'जगन्मिथ्या'

इत्याकारद्वयोपस्थापकसामानाधिकरण्यस्योत्तरत्वं संभवति, तथापि 'जगद्विष्णुरेव' इति सामानाधिकरण्यस्योत्तरत्वं न संभवतीत्यत्र तात्पर्यम्। **न तु तस्य शरीरात्मभावनिबन्धनत्वायोगादिति;** स्वार्थिकत्वमपास्तमिति पूर्वेणान्वयः। सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वायोगप्रसङ्गात् स्वार्थिकत्वं नापास्तम्, येन शरीरात्मभावनिबन्धनत्वस्याद्याप्यसिद्धत्वादन्योन्याश्रयः स्यादित्यर्थः। **अर्थविरोध इति;** जडाजडयोरैक्यविरोध इत्यर्थः। **यन्मयमित्युक्तप्रश्नस्योत्तरत्वानुपपत्तिश्चेति ;** मयटोऽर्थवत्त्वाय विकारप्राचुर्ययोरेव प्रष्टुमुचितत्वादिति भावः। ननु न मयड्वैयर्थ्यं, यन्मयमिति विकारप्रश्नसंभवादित्याशङ्क्याह—**यत इत्युपादानस्य पृष्टत्वादिति।** "निखिलहेयप्रत्यनीकता च बाध्येत। सर्वाशुभास्पदं च ब्रह्म भवेत्" इत्यनयोः पौनरुक्त्यं परिहरति—**सत्यसंकल्पेत्यादिनेति।** असंकोचादेकेनैव पदेनोभयदोषप्रसङ्गोक्तिसंभवादन्यथा पौनरुक्त्यं परिहरति—**यद्वोभयलिङ्गकत्वहानिरित्यादिना।** ननु 'स्थापयिष्यते' इत्यर्थे कथं "स्थाप्यते" इत्यस्य साधुत्वमित्यत आह—**अनन्तरभावित्वादिति;** "वर्तमानसामीप्ये वर्तमानवद्वा" इत्यनुशासनादिति भावः।

### श्रुतप्रदीपिका

प्रबन्धान्तरेभ्योऽस्य वैषम्यं वदन् प्रश्नमवतारयति—**तत्रेति। भगवत इति;** स्वतो ज्ञानवत्त्वम्। तदतिशयो वरलाभात्। **पारमार्थ्यज्ञानवतः;** प्राशस्त्ये मतुप्। तच्च रजस्कार्यनिवृत्तिरूपम्। पारमार्थ्यधीस्तमोनिवृत्तिफलम्। रजस्तमसी हि धर्मधर्मिविपर्यासधीहेतू। अत्र "देवतापारमार्थ्यं च यथावत्" इत्यस्यार्थोऽभिप्रेतः। आराध्यवस्तुवाचिदेवताशब्दाद्यथावच्छब्दाच्च सविशेषत्वसिद्धिरिति भावः। **सोऽहमित्यादि** प्रश्नप्रकारश्च शाखान्तरेषु कल्पभेदेन सृष्टिस्थितिलयस्थानकर्तृतत्प्रकारभेदोक्तिशङ्कायाम्, न भ्रमाधिष्ठानशङ्कायाम्। **यन्मयं च यत्र चेति** चशब्दाभ्यां बाह्यस्थितिसंहारयोः कर्ता समुच्चितः। श्लोकानामर्थं संक्षेपेणाह—**अत्रेति। तद्विभूतीत्यादिना** आदिशब्दोपात्तश्लोकानामर्थ उक्तः। फलप्रश्नस्तु फलितः। "धर्माश्च" इति चशब्दसूचितो वा, प्रतिवचन करादिति भावः। ततः किं प्रस्तुतस्येत्यत्राह—**ब्रह्मेति। निमित्तोपादानयोरित्यत्र** श्रुतिच्छायानुरोधादिति भावः। **किमात्मकमिति;** स्थित्यर्थमिति भावः। अर्थान्तरपरत्वशङ्कायामाह—**इदं चेति।** इदं सामानाधिकरण्यप्रतिपन्नम्। **आत्मतयेति;** शरीरप्रतिसंबन्धित्वम्। तद्विवरणम् **अन्तर्यामिशब्दः।** व्याप्तिनियमनाभ्यां नृपनभोव्यावृत्तिः। कथं न वस्त्वैक्यकृतमित्यत्राह—**यन्मयमिति।** 'मृन्मयम्' इत्यादि-

वन्मयऽत्र विकारार्थः स्यादित्याशङ्क्याह—**यन्मयमिति**। कुत इत्यत्राह—**पृथगिति**। मयटोऽर्थान्तर संभवान्न गोबलीवर्दनयात् संकोच इति भावः। स्वार्थत्वमाशङ्क्याह—**नापीति**। चिन्मात्रव्यतिरिक्तमृषात्वबाधभिमतस्वार्थत्वे दूषणमाह—**जगच्चेति**। स्वरूपोपस्थापने तदितराकारबाधे च विवक्षिते सति आकारद्वयोपस्थापकसामानाधिकरण्येनोत्तरं न घटत इत्यर्थः। तर्हि कथं तद्वाच्यमित्यत्राह—**तदा हीति**। 'जगद् भवति; तत्किम्?' इति पृष्टे 'सत्यं वा, अनृतं वा' इति पृष्टं स्यात्। तदा 'विष्णुरेव नान्यत्'इति वाच्यमित्यर्थः। विष्णु-शब्दः स्वरूपोपस्थापकः। एवकारस्तदितराकारनिषेधपरः। बाधायां सामानाधिकरण्यमनुप-पन्नमिति भावः। परिशेषादपेक्षितत्वाच्च प्राचुर्यार्थत्वमाह—**अत इति**। अनुशासनं दर्शितम्—**तत्प्रकृतेति**। तच्चात्र संभवतीत्याह—**कृत्स्नं चेति**। तत्फलितार्थमाह—**तस्मादिति**। अनेवमर्थत्वेऽनिष्टमाह—**अन्यथेति**। तदा कथं प्रश्नप्रतिवचने स्यातामित्यत्राह **तथाहि सतीति**। स्वरूपपरिणामपक्षेऽनिष्टमाह—**जगदिति**। उभयलिङ्गत्वबाधः तद्विरो-ध्याकारत्वं च प्रसजेदित्यर्थः। यद्वा निखिलेत्यादिवचनद्वयेन चिदचिद्गतदोषसंबन्ध उक्तः। मयड्वैयर्थ्यं तु स्पष्टतया नोक्तम्, यत इत्युपादानस्य पृष्टत्वात्। त्वन्मते मुख्यत्वं नेत्यत्राह—**आत्मेति**। आसत्त्या वर्तमानत्वोक्तिः।

**नयप्रकाशिका**

नन्वत्रैव "जगच्च सः" इति सामानाधिकरण्येनैक्यावगमात् ज्ञानस्वरूपस्यार्थाकार-ताया भ्रान्तित्वेऽभिहितेऽर्थस्य भ्रान्तितोक्तेति चेत्—न; अत्रैव परमात्मनो निरस्तहेयगुण-त्वस्य "समस्तहेयरहितम्" इत्यादौ साधितत्वेन भ्रमायोगात्; मिथ्यावाद्यभिमतसामानाधि-करण्यपरत्वाभावाच्च। न हि"जगच्च सः"इति व्याप्यव्यापकयोरैक्यपरम्। न चास्य शास्त्र-स्य निर्विशेषपरत्वम्, तथात्वे "यन्मयम्" इत्यादिप्रश्नाद्यनुपपत्तेः। "यन्मयम्" इति प्रश्नस्य ह्युत्तरं "जगच्च सः" इति सामानाधिकरण्यनिर्देशः। नात्र मयटो विकारार्थपरत्वम्, "यतश्चैतत्" इत्यनेन गतार्थत्वेन पृथक्प्रश्नवैयर्थ्यात्। अतो "यन्मयम्" इति किमात्मक-मित्यर्थः। "जगच्च सः"इति तस्योत्तरम्। जगतः परमात्मान्तरात्मकत्वेन तदात्मकत्वमित्यर्थः। निर्विशेषवस्तुपरत्वे तु 'भेदभ्रमाधिष्ठानं किम्? निर्विशेषं ब्रह्म' इति प्रश्नोत्तरौ भवेताम्। अतः शास्त्रस्य पौर्वापर्यालोचनायां न निर्विशेषवस्तुपरता; "निर्गुणस्य" इत्यादौ सर्वशक्ति-योगस्य प्रतीतेश्च।

श्रीभाष्यम्

अतः—

" विष्णोः सकाशादुद्भूतं जगत्तत्रैव च स्थितम् ।
स्थितिसंयमकर्तासौ जगतोऽस्य जगच्च सः ॥ "

इति संग्रहेणोक्तमर्थं "परः पराणाम्" इत्यारभ्य विस्तरेण वक्तुं परब्रह्मभूतं भगवन्तं विष्णुं स्वेनैव रूपेणावस्थितम् "अविकाराय" इति श्लोकेन प्रथमं प्रणम्य, तमेव हिरण्यगर्भस्वावतारशङ्कररूपत्रिमूर्ति-प्रधानकालक्षेत्रज्ञसमष्टिव्यष्टिरूपेणावस्थितं च नमस्करोति । तत्र "ज्ञानस्वरूपम्" इत्ययं श्लोकः क्षेत्रज्ञव्यष्ट्यात्मनावस्थितस्य परमात्मनः स्वभावमाह । तस्मान्नात्र निर्विशेषवस्तुप्रतीतिः ।

श्रुतप्रकाशिका

एवं प्रकृतश्लोकव्याख्यानौपयिकार्थः प्रपञ्चितः । अथ शास्त्रार्थसंग्रहानन्तरं विस्तरोपक्रमे सप्तश्लोकीं नमस्कारविषयामवतार्य व्याख्येयश्लोकस्य नमस्कारश्लोकान्तरैः संगतिं दर्शयितुम् " अविकाराय " इत्यादीनां षण्णां वाक्यार्थमाह—**अत इति । अतः;** प्रश्नप्रतिवचनादिभिः शास्त्रस्य सविभूतिकसगुणवस्तुपरत्वावगमात् सामानाधिकरण्यस्य विशिष्टवस्तुनि मुख्यवृत्तत्वाच्चेति भावः । 'अतः' इत्यस्य 'व्यष्टिरूपेणावस्थितं च नमस्करोति' इत्यनेनान्वयः । यद्वा शास्त्रवाक्यार्थस्यैवंरूपत्वात् " विष्णोः सकाशात् " इत्यस्य संग्रहरूपत्वं " परः पराणाम् " इत्यादीनां विस्तररूपत्वं च सिद्धमित्यर्थः । **विष्णोः सकाशात्** इत्यत्र सकाशादिति पदं षष्ठ्याः पञ्चम्यर्थत्वसंपादनार्थम्; यथा 'अस्य कृते' इत्युक्ते 'कृते' इति शब्दस्य चतुर्थ्यर्थत्वसंपादनपरत्वं, तद्वत् । यद्वा **सकाशात्** ससंकल्पात् । काशनं प्रकाशनं संकल्परूपज्ञानम्; तद्वत इत्यर्थः । अनेन निमित्तत्वसिद्धिः । यद्वा सकाशशब्दः पार्श्ववचनः । तेन शरीरमुपलक्षितम् । " सोऽभिध्याय शरीरात् स्वात् " इतिवत् शरीरादित्यर्थः । **तत्रैव च स्थितमिति** लयस्थानप्रश्नोत्तरम् । **तत्र स्थितम्;** निष्ठां गतम् । अनेन जगतो नित्यत्वमवस्थानामागमापायित्वं च सूचितम् । लयस्थानप्रश्नस्योत्तरमुक्तम् । अथ लयकर्तृप्रश्नस्य बाह्यस्थितिप्रश्नस्य चोत्तरमाह—**स्थितीति । जगच्च स इति** " यन्मयम् "

इति फलितस्य कृत्स्नान्तर्यामित्वकृतसत्तानुवृत्तिलक्षणस्थितिप्रश्नस्योत्तरम्। यद्वा "यन्मयम्" इति फलितस्थितिप्रश्नस्यापि **स्थितिसंयमकर्तेत्येवोत्तरम्**। 'जगच्च सः' इति तु "यन्मयम्" इति कण्ठोक्तस्यार्थस्योत्तरम्। इदं सामानाधिकरण्यमात्मतया व्याप्तिनिबन्धनमिति पूर्वमेवोपपादितम्। ननु निष्कर्षकशब्दानां शौक्ल्यादीनां धर्मिपर्यन्तत्वं न दृष्टम्; "यन्मयं जगत्" इत्यनेन जगच्छब्दस्य निष्कर्षकशब्दत्वं दृष्टमिति धर्मिपर्यन्ताभिधायित्वाभावात् "जगच्च सः" इति सामानाधिकरण्यमनुपपन्नमिति चेत्, उच्यते—निष्कर्षकशाब्दा हि द्विविधाः—नियतनिष्कर्षकाः, वैवक्षिकनिष्कर्षकाश्च। तत्र शौक्ल्यादिशब्दा नियतनिष्कर्षकाः। मनुष्यशुक्लादिशब्दाः वैवक्षिकनिष्कर्षकाः, प्रयोगस्य नियामकत्वात्; अन्यथा निष्कर्षकानिष्कर्षकविभागोऽपि नोपपद्यते। तथा जगच्छब्दोऽपि वैवक्षिकनिष्कर्षक इति। अत एव "यन्मयम्" इति वैयधिकरण्येन प्रश्नस्य "जगच्च सः" इति सामानाधिकरण्येनोत्तरमर्थभेदाभावादुपपन्नम्, 'शुक्लगुणस्याश्रयः कः' इति प्रश्नस्य 'शुक्लः पटः' इत्युत्तरवत्। एवं संक्षेपेणोक्तस्य वक्ष्यमाणमहाविस्तरस्यार्थस्येषद्विस्तररूपेण श्लोकैर्नमस्कारः क्रियत इति नमस्कारश्लोकसंगतिः। **स्वेनैव रूपेणावस्थितम्**; न तु प्रकृत्यादिविशिष्टमित्यर्थः। परब्रह्मणो हि हेयसंबन्धाभावः, न तु विष्णोरिति शङ्कायां "विष्णुनामा स वेदेषु" "समस्तहेयरहितं विष्ण्वाख्यं परमं पदम्" इत्यादिवचनात् ब्रह्मण एव विष्णुशब्दवाच्यत्वात् विष्णोरेव भगवच्छब्दवाच्यत्वाच्च विष्णोर्हेयसंबन्धोऽनुपपन्न इत्यभिप्रायेण **परब्रह्मभूतम्** इत्यादिविशेषणमुक्तम्। **अविकाराय**; विकारशब्दो धर्मिपरो धर्मपरश्च, "षोडशकश्च विकारः" इत्यादिप्रयोगात्। स्वयं कस्यचिद्विकारभूतः कार्यभूतो न भवतीत्यविकारः। अनेन कार्याचिद्व्यावृत्तिः। यद्वा विकारः अवस्था महत्त्वाहंकारत्वादिः। नित्यं तत्संबन्धविरहादविकारः। अतो विकारवती प्रकृतिरविकारपदेन व्यावर्त्यते। एवं तत्पुरुषबहुव्रीहिभ्याम्'अविकाराय' इति पदेन कार्यकारणरूपोभयावस्थाचिद्व्यावृत्तिः। 'शुद्धाय' इति बद्धव्यावृत्तिः। नित्याय; शुद्धत्वेन नित्याय। अन्यथा 'अविकाराय' इत्यनेन पुनरुक्तिः स्यात्। नित्यपदं शुद्धिं विशिंषदेव शुद्धिमद्वस्तुविशेषणम्, यथा 'महोदारः' इत्यत्र महच्छब्द औदार्यं विशिंषन्नेव दातुर्विशेषणम्; तद्वत्। अतो मुक्तव्यावृत्तिः। 'परमात्मने' इति नित्यमुक्तव्यावृत्तिः। ते हि परवन्तः; न तु परमाः, "प्रधानपुरुषव्यक्तकालानां परमम्" इति वक्ष्यमाणत्वात्। अविकारायेत्यादिना पदचतुष्टयेन प्रधानपुरुषव्यक्त-

कालव्यावृत्तिरिति केचित् । निमेषाद्यवस्थकालस्य व्यक्तस्याप्यविकारपदव्यावर्तितत्वात् पुरुषत्रैविध्यस्य प्रामाणिकत्वात् विशेषणानां तद्व्यावर्तनसमर्थत्वाच्च यथोक्तानामेवार्थानां व्यावर्तितत्वमुचितम् । विलक्षणविग्रहवत्तयापि समस्तवैलक्षण्यमाह— सदैकरूपरूपायेति । प्रथमो रूपशब्दः स्वभाववाची; एकस्वभाव इत्यर्थः । परव्यूहविभवादिसर्वावस्थासु सकलहेयप्रत्यनीकत्वमङ्गलास्पदत्वध्येयत्वादिस्वभावोऽप्रच्युत इत्यर्थः । यद्वा एकरूपम्; दिव्यात्मस्वरूपेण समानस्वभावम् । तेनापि हेयप्रत्यनीकत्वादिसिद्धिः । एभिः पदैरीक्षत्यानन्दमयाधिकरणान्तरादित्यविद्यार्था विवक्षिताः । पूर्वोक्तमात्मत्वं न 'मृदात्मको घटः' इतिवद्भवतीति तद्वैशद्यमवयवशक्त्या क्रियते विष्णुशब्देन, 'सर्वजिष्णवे' इति पदेन च । पदद्वयेन नृपनभोव्यावृत्तिः । अन्तः प्रविश्य नियन्तृत्वं हि शरीरित्वम् । अत एवमात्मत्वं विवृतं भवति । विष्णुशब्दस्य रूढत्वाद्देवताविशेषनिर्णयश्च सिद्धः । यद्वा विष्णुशब्देनैव नियमनपर्यन्तव्याप्तिरुक्ता । व्याप्तिकृततद्गतदोषस्पर्शशङ्कां व्युदस्यति—सर्वजिष्णव इति । कथं विष्णोः कारणत्वम् ? हिरण्यगर्भादीनां हि सृष्ट्यादिकारणत्वमवगम्यत इत्यत्राह—नम इति । तत्तच्छरीरको विष्णुरेव सृष्ट्यादिकं करोतीत्यर्थः । "रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान्" इत्युक्तविष्ण्वाख्यावतारविग्रहद्वारा भगवत्पर्यन्तो हरिशब्दः । हिरण्यगर्भशंकरशब्दौ जीवद्वारा भगवत्पर्यन्ताविति—

"ब्रह्माद्याः सकला देवा मनुष्याः पशवस्तथा ।
विष्णुमायामहावर्तमोहान्धतमसावृताः ॥"

इति "हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा" इति "हिरण्यगर्भो भगवान्" इत्यारभ्य

"मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् ।
अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥"

इत्याद्येतत्प्रबन्धस्थश्लोकतात्पर्यानुरोधात् ,

"एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥"

"तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित् ॥"

इति भारतादिवचनैकार्थ्याच्च निश्चीयते । हिरण्यगर्भादिसामानाधिकरण्यं व्याप्तिकृतमिति

सूचयति—वासुदेवायेति । ब्रह्मशिवमध्यस्थोऽप्यप्रच्युतस्वभाव इत्याह—तारायेति । यद्वा तेषु त्रिष्वप्ययमेव मोक्षप्रद इत्यर्थः, "अथ कस्मादुच्यते तारम्? यस्मादुच्चार्यमाण एव गर्भजन्मजरामरणसंसारमहाभयात्तारयति तस्मादुच्यते तारम्" इति श्रुतेः । "ब्रह्म-विष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः" इत्यादिभिर्विष्णोः परं तत्त्वं, विष्णोश्चतुर्मुखादि-साम्यं च न शङ्कनीयम् । शक्तिरपृथक्सिद्धविशेषणम् । तत्र धर्मिण्यसमानविभक्तिनि-र्दिष्टे धर्मिपर्यन्तस्यापि शब्दस्य धर्ममात्रपरत्वं दृष्टं 'पटस्य शुक्लः' इत्यादिषु । तथा विष्णु-शब्दो विशेषणभूतविग्रहमात्रपरः, असमानविभक्तिना ब्रह्मशब्देन धर्मिणः पृथङ्निर्दिष्ट-त्वात् । ब्रह्मणः शक्तयो हि ब्रह्मशक्तयः । अतोऽसमानविभक्तिनिर्दिष्टत्वमिति । यद्वा भगवतो देवमनुष्यादिशब्दव्यपदेशवत् शक्तिविभूत्यादिशब्दव्यपदेशोऽपि विभूतिसाजात्यात् । यथाहुः श्रीवत्साङ्कमिश्राः—"सजातीयस्तेषामिति तु विभवाख्यामपि भजन्" इति । अतो यथोक्त एवार्थः । अथ केवलप्रकृतिकारणव्यावृत्त्यर्थं प्रकृतिविशिष्टं परमात्मनं नमस्करोति—एकाने-केति । कारणावस्थायामेकः, कार्यावस्थायामनेकः । अथ धीस्थां कार्यावस्थामाह—स्थूलेति । तथा बुद्धिस्थां कारणावस्थामाह—अव्यक्तेति । तत्राप्यप्रच्युतस्वभावत्वमाह—मुक्तिहेतव इति । अथ कालविशिष्टत्वमाह—सर्गेति । कालस्य वक्ष्यमाणविशेषणोपपत्तेः प्रकरणस्य विशिष्टपरत्वात् विशेषणान्तरविशिष्टतायाः प्रतिपादितत्वेन कालविशिष्टताकथनं पारिशेष्यात्, तदप्रतिपादने अपेक्षितविध्यभावप्रसङ्गात् केवलं ब्रह्मस्वरूपकारणपरत्वेऽण्डा-न्तर्गतसर्गादेरुक्तत्वादण्डबहिर्भूततत्त्वसर्गादेर्वक्ष्यमाणत्वाच्च पौनरुक्त्यप्रसङ्गात् । विस्तरे च—

" प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।"

" व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च ॥"

" तथा पुरुषरूपेण कालरूपेण च स्थितम् ।"

" ब्रह्मा दक्षादयः कालः" इत्यादिभिर्व्यक्ताव्यक्तादिभिः सह वक्ष्यमाणत्वादयं श्लोकः कालपर एव । अचिद्विशिष्टवाचिश्लोकानन्तर्यादस्य श्लोकस्य कालपरत्वमुचितम् । उत्तरः श्लोकः समष्टिजीवपरः, व्यष्टिजीवपरश्लोकसाहचर्यात् । कालस्य सर्गस्थितिविनाशमूलभूतत्वं " ब्रह्मा दक्षादयः कालः" " विष्णुर्मन्वादयः कालः" " रुद्रः कालोन्तकश्च " इत्यादिषु सिद्धम् । जगन्मयः; अवच्छेदकतयाऽवच्छेद्यतया च जगत्प्रचुरः । अथ क्षेत्रज्ञसमष्ट्यात्म-नावस्थितं नमस्यति—आधारभूतमिति । अचेतनस्य चेतनः स्वरूपेणाधारभूतः, " एवमे-

वैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः" "जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति वचनात्। अणीयस्त्वं प्रकृतेरपि व्यापनयोग्यसूक्ष्मत्वम्। यद्वा "विकाराणुस्वरूपैश्च" इत्युक्तप्रकारेण सर्गदशायामिव ज्ञानविकासाभावादणीयस्त्वमेवेत्यर्थः। सर्वभूतस्थम्; भवतीति भूतं, पृथिव्यन्तेषु सर्वतत्त्वेष्ववस्थितम्। अनन्तरं क्षेत्रज्ञव्यष्टिविशिष्टं नमस्करोति—ज्ञानेति। 'हिरण्यगर्भः' इत्यादिभाष्ये निर्दिष्टेष्वर्थेष्वयं श्लोकः किंविशिष्टपरमात्मपर इति शङ्कायां समासान्तर्गतं प्रस्तुतश्लोकार्थं विविच्य दर्शयति—**तत्रेति**। परमात्मनः सद्वारक एव प्रमान्वय इत्यर्थः। ततः किमित्यत्राह—**तस्मादिति**।

### भावप्रकाशिका

**सप्तश्लोकीं नमस्कारविषयामिति**;

"अविकाराय शुद्धाय नित्याय परमात्मने।
सदैकरूपरूपाय विष्णवे सर्वजिष्णवे॥
नमो हिरण्यगर्भाय हरये शंकराय च।
वासुदेवाय ताराय सर्गस्थित्यन्तकर्मणे॥
एकानेकस्वरूपाय स्थूलसूक्ष्मात्मने नमः।
अव्यक्तव्यक्तरूपाय विष्णवे मुक्तिहेतवे॥
सर्गस्थितिविनाशानां जगतो यो जगन्मयः।
मूलभूतो नमस्तस्मै विष्णवे परमात्मने॥
आधारभूतं विश्वस्याप्यणीयांसमणीयसाम्।
प्रणम्य सर्वभूतस्थमनन्तं पुरुषोत्तमम्॥
ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥
विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे महाप्रभुम्।
प्रणम्य जगतामीशमजमक्षरमव्ययम्॥"

इति सप्तश्लोकी। **विस्तररूपत्वं च सिद्धमित्यर्थ इति**; 'अतः' इत्यस्य 'संग्रहेणोक्तं विस्तरेण वक्तुम्' इत्यनेन संनिहितेनैवान्वय इति भावः। विस्तररूपत्वं सिद्धमित्यर्थ इत्युक्तिस्त्वन्वयफलितार्थाभिप्रायेति द्रष्टव्यम्। **बाह्यस्थितिप्रश्नस्य चेति**; मातापित्रादिक्रिय-

माणस्थितिप्रश्नस्य चेत्यर्थः । **कण्ठोक्तार्थस्येति ;** आत्मत्वस्येत्यर्थः । **वक्ष्यमाणमहाविस्तरस्येति;** अत्र प्रथनस्य शब्दद्वारकत्वात् "प्रथने वावशब्दे" इति शब्दविषये घञः प्रतिषेधात् विस्तरेत्युक्तिः । **ईक्षत्यानन्दमयेति ;** पूर्वार्धेनेक्षत्यानन्दमयाधिकरणार्थभूतप्रकृतिजीववैलक्षण्यमुक्तम् ; "सदैकरूपरूपाय" इत्यन्तरादित्यविद्यार्थ उक्त इति भावः । **नृपनभोव्यावृत्तिरिति ;** विष्णुपदेन नृपव्यावृत्तिः, सर्वजिष्णुपदेन नभोव्यावृत्तिश्चेत्यर्थः । सर्वजिष्णुपदस्य नियन्तरि स्वारस्याभावाद्यासिबलादेव नियमनस्यार्थसिद्धेश्च जिष्णुपदं व्याप्यगतदोषास्पृष्टत्वपरं व्याचष्टे—**यद्वा विष्णुशब्देनैवेति । कथं विष्णोः कारणत्वमिति ;** यद्यपि "अविकाराय" इति श्लोके जगत्कारणत्वं नोक्तं, तथापि "विष्णोः सकाशादुद्भूतम्" इति तत्पूर्वश्लोके कारणत्वस्येरितत्वात् तथोक्तमिति द्रष्टव्यम् । **विष्णवाख्यावतारविग्रहद्वारेति ;** विग्रहविशेषद्वारेत्यर्थः । **देवमनुष्यादिशब्दव्यपदेशवदिति;** रामादिविग्रहेषु सत्त्वादिगुणपरिणामविशेषभूतमनुष्यत्वाभावेऽपि मनुष्यसंस्थानसजातीयतया 'रामो मनुष्यः' इति व्यपदेशवत् भगवच्छक्तिभूतजीवात्मभिरात्मत्वेन सजातीयतयौपचारिकः शक्तिशब्दव्यपदेश उपपद्यत इति भावः । केचित्तु—शक्तिशब्दस्यौपचारिकत्वममृष्यन्तो देवादिशरीरकतया देवादिशब्दवाच्यत्ववत् शक्तिभूतजगच्छरीरके तस्मिन् शक्तिशब्दव्यपदेशो मुख्य इत्यभिप्राय इति वर्णयन्ति । "एकानेकस्वरूपाय सूक्ष्मस्थूलात्मने नमः" इति वक्तव्ये "स्थूलसूक्ष्मात्मने नमः" इत्युक्तिरयुक्तेत्याशङ्क्याह—**धीस्थामिति ।** अनेकशब्दस्यात्यन्तसंनिहितत्वादिति भावः । **अण्डान्तर्भूतसर्गादेरिति ;** "सर्गस्थित्यन्तकर्मणे" इत्युक्तत्वादित्यर्थः । **अण्डबहिर्भूतेति ;** "विष्णुं ग्रसिष्णुं विश्वस्य स्थितिसर्गे महाप्रभुम्" इति वक्ष्यमाणत्वादित्यर्थः । ननु "आधारभूतं विश्वस्य" इत्युत्तरश्लोको वा कालपरः किं न स्यादित्याशङ्क्याह—**उत्तरश्लोकः समष्टिजीवपर इति । अवच्छेदकतया अवच्छेद्यतयेति ;** जगतः कालपरिच्छेद्यत्वात् कालस्यावच्छेदकत्वं निमेषादिभिः परिच्छिन्नत्वादवच्छेद्यत्वमप्यस्तीति भावः । **भवतीति भूतमिति ;** अकर्मकत्वात् कर्तरि क्त इत्यत्र तात्पर्यम्, न तु वर्तमानत्वेऽपीति द्रष्टव्यम् । **क्षेत्रज्ञव्यष्टिविशिष्टमिति ;** "ज्ञानस्वरूपम्" इति श्लोकस्यायमर्थः—ज्ञानस्वरूपम् ; ज्ञानस्वरूपजीवशरीरकमित्यर्थः । अत्यन्तनिर्मलत्वादिकं च जीवद्वारा विशेषणम् । यथा 'महोदारः, महाप्राज्ञः' इत्यादौ महत्त्वस्यौदार्यज्ञानद्वारान्वयः । न च साक्षादेवान्वयोऽस्त्विति वाच्यम् , परमात्मनि साक्षान्निर्मलत्वस्य

" अविकाराय शुद्धाय " इत्यादिवाक्यप्रतिपन्नत्वात् सर्वज्ञे तस्मिन् भ्रान्तिदर्शनतः स्थितत्वस्य च साक्षादसंभवात् सद्वारक एवान्वयो वक्तव्य इति ।

### श्रुतप्रदीपिका

ततः किं प्रकृतव्याख्येयश्लोकस्येत्यत्राह—**अत इति** । **अतः**; प्रश्नादिभिः शास्त्रस्य सविशेषार्थत्वाच्छरीरशरीरिभावेन सामानाधिकरण्यस्य मुख्यत्वाचेत्यर्थः । विष्णुशब्दस्यावयवशक्त्या प्रकारप्रश्नोत्तरत्वम् । रूढ्या कारणप्रश्नोत्तरत्वम् । सकाशशब्दः पञ्चम्यनतिरिक्तार्थः; ससंकल्पादिति वा । **स्थितम्**; लीनम्, "यत्र लीनम्"इत्यस्योत्तरत्वात् । शब्दद्वयसूचितप्रश्नद्वयोत्तरमाह—**स्थितीति** । परस्य हि दोषानन्वय इत्यत्राह—**परब्रह्मभूतमिति** । दोषानर्हत्वाय भगवच्छब्दः । **अविकारायेति**; अचिद्बद्धमुक्तनित्या व्यावृत्ताः । रूपैकरूप्यमुभयलिङ्गत्वमुपास्यत्वप्राप्यत्वैः । सर्वजिष्णुत्वं च व्याप्यदोषास्पर्शः । **हिरण्यगर्भेति**; हिरण्यगर्भशंकरशब्दौ जीवद्वारा भगवत्पर्यन्तौ । ताराय; त्रिष्वयमेव मुक्तिद इति भावः । एकेत्यादिश्लोकार्थमाह—**प्रधानेति** । चतुर्थार्थमाह—**कालेति** । अण्डात् बहिः सृष्ट्यादिव्यापारवत्त्वस्य प्राक् पश्चाच्चोक्तेः, अपेक्षितविधेरनपेक्षितविधिदौर्बल्यात्, विशिष्टपरप्रकरणात्, विस्तरानुरोधात्, विशेषणौचित्यात्, परिशेषात्, तत्राप्यचित्परग्रन्थसाहचर्याच्च कालविशिष्टपर इति भावः । "ब्रह्मा दक्षादयः कालः" इत्यादिना हेतुत्वावगमः । अवच्छेद्यतयावच्छेदकतया च जगत्प्रचुरः । पञ्चमार्थमाह—**क्षेत्रज्ञसमष्टीति** । समष्टिजीवस्वरूपेणाचिदाधारः, " तद्यथा रथस्यारेषु नेमिः" " ययेदं धार्यते " इत्यादेः । प्रकृतेश्चाणीयान् । भूतशब्दः समष्टिजीवपरः । षष्ठार्थमाह—**व्यष्टीति** । उत्तरार्धेषु प्रकृतश्लोकः किंपर इत्यत्राह **तत्रेति** । विशेषणान्वयः सद्वारः " महोदारः" इत्यादिवत् ।

### श्रीभाष्यम्

यदि निर्विशेषज्ञानस्वरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रं, तर्हि—

" निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः ।
कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥"

इति चोद्यम्,

" शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।
यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥
भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ।"

इति परिहारश्च न घटते । तथाहि सति निर्गुणस्य ब्रह्मणः कथं सर्गादिकर्तृत्वम् ? न ब्रह्मणः पारमार्थिकः सर्गः, अपितु भ्रान्तिपरिकल्पित इति चोद्यपरिहारौ स्याताम् । उत्पत्त्यादिकार्यं सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्येषु दृष्टमिति सत्त्वादिगुणरहितस्य परिपूर्णस्याकर्मवश्यस्य कर्मसंबन्धानर्हस्य कथं सर्गादिकर्तृत्वमभ्युपगम्यत इति चोद्यम् । दृष्टसकलविसजातीयस्य ब्रह्मणो यथोदितस्वभावस्यैव जलादिविसजातीयस्याग्न्यादेरौष्ण्यादिशक्तियोगवत् सर्वशक्तियोगो न विरुध्यत इति परिहारः ।

### श्रुतप्रकाशिका

निर्विशेषज्ञानपरत्वे प्रश्नोत्तरवरलाभकथनानुपपत्तिमुखेनोपक्रमविरोध उक्तः । अथोपरितनाध्यायगतचोद्यपरिहाराननुगुणत्वमुच्यते—**यदीति** । यद्वा शास्त्रारम्भोपयोगिप्रश्नोत्तरानुपपत्तिरुक्ता । इदानीमेतत्प्रश्नोत्तरविशेषानुपपत्तिरुच्यते—**यदीति** । पूर्वाध्याये—" जुषन् रजोगुणम् " इत्यादिना गुणान्वये कथितेऽपि निर्गुणस्येति चोदयतोऽयमभिप्रायः—गुणान्वयस्य सद्वारकत्वात् स्वयं निर्गुण इति । निर्विशेषपक्षे अप्रमेयस्येत्यादिपदवैयर्थ्यम्, निर्गुणस्येति पदेनैव निर्विशेषत्वसिद्धेः । परिपूर्णत्वादिगुणानभ्युपगमाच्च, अप्रमेयादिपदान्तरसमभिव्याहार एव निर्गुणपदोपस्थापितनिषेधस्य संकुचितविषयत्वसाधकः । **न घटत इति** ; सर्गाद्या भावशक्तय इति सर्वशक्तियोगेन चोद्यस्य परिहारान्निर्विशेषपक्षाननुगुणत्वमिति भावः । तर्हि कथं चोद्यपरिहारौ स्यातामित्यत्राह—**तथाहि सतीति** । **निर्गुणस्य ब्रह्मण** इत्यनेन पदान्तरवैयर्थ्यमभिप्रेतम् । निर्विशेषस्य कर्तृत्वानुपपत्तिचोद्ये कृते कर्तृत्वस्य पारमार्थ्ये सति हि तदनुपपत्तिः । अपरमार्थत्वाद्दुर्घटत्वमेव भूषणमिति परिहारो वक्तव्य इत्यर्थः । किमर्थाविमौ चोद्यपरिहारौ यद्ययमर्थो न प्रतिपाद्यत इति शङ्कायां स्वयमेव

तच्चोद्यपरिहारशरीरमाह—**उत्पत्त्यादीति** । निर्गुणस्येत्यादिविशेषणानां विपरीताकारैः कर्तृत्वस्य व्याप्तिं कथमित्यनेनाभिप्रेतां दर्शयति—**सत्त्वादिगुणयुक्तेत्यादिना** । सत्त्वादिगुणयुक्तापरिपूर्णकर्मवश्यत्वानि निर्गुणत्वादीनां यथाक्रमं विपरीताकाराः; अमलात्मन इत्यस्य विपरीताकारोऽपि कर्मवश्येत्यनेनार्थसिद्धः । **अमलात्मत्वम्** ; अमलस्वभावत्वम्; कर्मसंबन्धानर्हत्वम् । तद्विपरीताकारः कर्मसंबन्धार्हत्वम् । तच्च कर्मवश्यशब्देनार्थसिद्धम् । कर्मसंबन्धार्हत्वकार्यं हि कर्मवश्यत्वम् । निर्गुणस्येत्यादिपदानां यथाक्रममर्थमाह— **सत्त्वादिगुणरहितस्येत्यादिपदैः** । **कर्मसंबन्धानर्हस्ये**त्यनेनामलात्मन इति पदं व्याख्यातं भवति । अकर्मवश्यत्वं मुक्तस्यापि विद्यते; स पूर्वावस्थायां कर्मसंबन्धित्वात्तदर्हः; अतस्तद्व्यावर्तकं कर्मसंबन्धानर्हत्वममलात्मत्वम् । **अकर्मवश्यत्वम्** ; कर्मकृतसुखदुःखभाक्त्वाभावः । कर्मवश्यविसजातीयत्वं कर्मसंबन्धानर्हत्वम् । सर्गादिकर्तृत्वे गुणत्रयवश्यत्वसापेक्षत्वकर्माधीनफलभाक्त्वकर्मसंबन्धार्हत्वप्रसङ्ग इति विशेषविरोधप्रसञ्जनेन चोद्यम् । 'अग्नेर्द्रव्यत्वेऽनुष्णत्वप्रसङ्गः' इतिवदयं तर्को धर्मिग्राहकप्रमाणबाधितः । अतो विसजातीयधर्मिणो विसजातीयधर्मवत्त्वं युक्तम्; अग्नित्वे सत्यपि वैद्युताग्नेर्जलनिर्वाप्यत्वाभाववत् । अतः सर्वविसजातीयस्य ब्रह्मणः सर्वशक्तियोग उपपद्यत इति परिहार इत्यर्थः । "शक्तयः सर्वभावानाम्" इत्यस्य ग्रन्थस्यायमक्षरार्थः—अचिन्त्यज्ञानगोचराः; अतर्क्यप्रमितिसिद्धाः । सर्गाद्याः ; सर्गादिगोचराः । भावशक्तयः; वस्तुशक्तयः । ब्रह्मणो वस्तुशक्तय इति निर्देशो ब्रह्मतादात्म्यमितिवत् । यद्वा ब्रह्मणो भावशक्तयः वस्तुशक्तयः ब्रह्मणो वस्तुत्वप्रयुक्ताः सत्ताप्रयुक्ताः निरुपाधिकाः शक्तय इत्यर्थः । यद्वा भावशब्दः स्वभावपरः; स्वाभाविक्यः शक्तय इत्यर्थः ।

### भावप्रकाशिका

**यदि निर्विशेषज्ञानस्वरूपब्रह्माधिष्ठानभ्रमप्रतिपादनपरं शास्त्रमिति** भाष्ये शास्त्रपदस्य "ज्ञानस्वरूपम्" इति श्लोकमात्रपरत्वमभिप्रेत्य तस्य परोक्तार्थपरत्वे उपसंहारविरोधप्रतिपानपरतया यदीत्यादिभाष्यं व्याख्याय शास्त्रशब्दस्य एकश्लोकमात्रपरत्वमनुचितमिति मत्वा प्रवर्तिष्यमाणप्रश्नोत्तरानुपपत्तिपरतया व्याचष्टे—**यद्वा शास्त्रारम्भोपयोगीति** । स्वयं निर्गुण इति छेदः । कर्मवश्यत्वकर्मसंबन्धार्हत्वयोः पर्यायत्वं परिहरति—**अकर्मवश्यत्वं मुक्तस्यापीत्यादिना** । ब्रह्मण एव वस्तुत्वात् ब्रह्मणः शक्तय इति निर्देष्टव्ये ब्रह्मणो भावशक्तय इति निर्देशो न युक्त इत्याशङ्क्याह—**निर्देशो ब्रह्मतादात्म्यमिति-**

**वदिति ;** ब्रह्मात्मकमिति वक्तव्ये ब्रह्मशब्दनिर्दिष्टस्य पुनरपि तच्छब्देन परामर्शवदित्यर्थः । तादात्म्यशब्दस्याभेदपरत्वात् ब्रह्मतादात्म्यमित्यत्र नानुपपत्तिः, प्रकृते तु ब्रह्मणो भावशक्तय इत्युक्ते भावस्य ब्रह्मण इत्यर्थो न लभ्यते, न हि घटस्य भावरूपमित्युक्ते भावस्य घटस्येत्यर्थो लभ्यते इति चेत्—सत्यम्, समासैकदेशस्य नान्यविशेषणत्वं, तथापि 'शिवस्य भागवतः' इत्युक्ते शिवस्य भगवत्त्वलाभवत् ब्रह्मणो भावशक्तय इत्युक्ते अर्थात् ब्रह्मण एव भावरूपत्वं पर्यवस्यतीति भावः । एतदस्वरसादेवाह—**यद्वा ब्रह्मणो भावशक्तय इति ।**

### श्रुतप्रदीपिका

निर्विशेषपरत्वे बाधमाह—**यदीति ।** अयमपि प्रश्नप्रतिवचनविशेषोऽनुपपन्न इत्यर्थः । कथं स्यातामित्यत्राह—**तथाहीति ।** कीदृशौ तर्हि चोद्यपरिहारौ प्रतिपन्नावित्यत्राह—**उत्पत्त्यादीति ।** अमलात्मत्वविरोध्याकारोऽपि कर्मवश्यशब्दगर्भितः । अमलात्मशब्दार्थ उक्तः—**कर्मसंबन्धानर्हस्येति ।** सर्वशक्तियोगेन परिहारो न युक्तस्तवेति भावः ।

### श्रीभाष्यम्

**"परमार्थस्त्वमेवैकः" इत्याद्यपि न कृत्स्नस्यापारमार्थ्यं वदति ; अपि तु कृत्स्नस्यातदात्मकतया तद्व्यतिरेकेणावस्थितस्यापारमर्थ्यम् । तदेवोपपादयति—"तवैष महिमा येन व्याप्तमेतच्चराचरम्" इति । येन त्वयेदं चराचरं व्याप्तम्, अतस्त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति ; अतः सर्वात्मतया त्वमेवैकः परमार्थः ; अत इदमुच्यते—तवैष महिमा या सर्वव्याप्तिरिति । अन्यथा तवैषा भ्रान्तिरिति वक्तव्यम् । "जगतः पते त्वम्" इत्यादीनां पदानां लक्षणा च स्यात् । लीलया महीमुद्धरतो भगवतो महावराहस्य स्तुतिप्रकरणविरोधश्च । यतः कृत्स्नं जगत् ज्ञानात्मना त्वयात्मतया व्याप्तत्वेन तव मूर्तं तस्मात् त्वदात्मकत्वानुभवसाधनयोगविरहिण एतत् केवलदेव-**

**मनुष्यादिरूपमिति भ्रान्तिज्ञानेन पश्यन्तीत्याह—" यदेतद्दृश्यते " इति ।**

**श्रुतप्रकाशिका**

अथ चतुःश्लोकीं व्याचष्टे—**परमार्थ इति** । कृत्स्नस्य ब्रह्मपर्यन्तत्वेन तच्छरीरत्वात् कृत्स्नशरीरकं ब्रह्मैव परमार्थः; अतत्पर्यन्तो मिथ्येत्यर्थः । "जगतः पते" इत्याकाशव्यावृत्तिः । " येन व्याप्तम् इति " नृपव्यावृत्तिः । अनेन जगतः शरीरलक्षणं दर्शितं भवति । नियाम्यत्वधार्यत्वशेषत्वेष्वन्यतमं व्याप्यत्वसहचरं हि शरीरलक्षणद्योतकम् । जगच्छरीरक त्वदन्यो मिथ्येत्युक्ते, अतत्पर्यन्तस्य स्वतन्त्रवस्त्वन्तरस्यैव मिथ्यात्वं स्यात् , न तु जगतस्तच्छरीरभूतस्य । यथा ' हे भूपते त्वदन्यो नास्ति ' इत्युक्ते न भूर्मिथ्या भवति; तत्तुल्यराजान्तरस्यैव तु मिथ्यात्वम्; तद्वत् । यद्वा एकशब्दः प्राधान्यपरः; " एकादाकिनिश्चासहाये " इत्यत्रासहायपदव्यवच्छेद्यं हि प्राधान्यम्; ब्रह्मणश्च प्राधान्यं जगत्प्रति विशेष्यत्वरूपम् । तदानीं " नान्योऽस्ति " इति प्रधानभूतोऽन्यो निषिध्यते, न त्वप्रधानमर्थान्तरम् । उक्तार्थस्योपपादकं व्याप्यत्वप्रतिपादकमुत्तरार्धमित्याह—**तदेवेति** । तत्र फलितमर्थमाह—**येनेति; येन;** यस्मादित्यर्थः । **त्वदन्यः;** अत्वदात्मकः; त्वयात्मतया व्याप्तत्वात् सर्वं त्वदात्मकं त्वच्छरीरमिति त्वदन्योऽत्वदात्मको नास्ति; तस्मात् सर्वशरीरस्त्वमेव परमार्थ इत्यर्थः । " तवैष महिमा " इति श्लोकार्धैकदेशश्चोक्तार्थोपपादक इत्याह—**अत इति** । महिम्नो व्याप्तिरूपत्वात् या सर्वव्याप्तिरित्युक्तं, न तु व्याप्तौ तात्पर्यात् । व्याप्तेर्महिमत्व एव तात्पर्यम् । यद्वा व्याप्तेरुक्तार्थोपपादकत्वं महिमसमभिव्याहारादित्याह—**अत इदमुच्यत इति** । तस्य परप्रातिकूल्यं दर्शयति—**अन्यथेति** । व्याप्यव्याप्त्यादेर्मिथ्यात्वे ' सर्वव्याप्तिस्तव महिमा ' इति न वाच्यम् , अपि तु 'भ्रान्तिः' इति वक्तव्यमित्यर्थः । कृत्स्नापारमार्थ्यपरत्वे दूषणान्तरद्वयमाह—**जगतः पत इति । लक्षणा;** अधिष्ठानलक्षणा । अब्रह्मात्मकत्वेन स्वतन्त्रतायाः प्रत्यक्षसिद्धत्वात्तद्विरुद्धं ब्रह्मपर्यन्तत्वं न शास्त्रं प्रतिपादयति, " आदित्यो यूपः" इतिवदिति शङ्कायामन्यथासिद्धाया अपरोक्षरूपाया अपि स्वातन्त्र्यप्रतिपत्तेः परोक्षरूपाप्यनन्यथासिद्धा पारतन्त्र्यप्रतिपत्तिर्बलीयसीत्यभिप्रायेण द्वितीयश्लोकमवतारयति—**यत इति** । पारतन्त्र्यप्रतिपत्तिः परमात्मप्रतिपत्तिसापेक्षा; तदभावात्तत्प्रतिपत्त्यभाव इत्यन्यथासिद्धा स्वातन्त्र्यप्रतिपत्तिरित्यर्थः । **केवलदेवमनुष्यादिरूपमिति;**

परमात्मशरीरत्वरहितजगद्रूपमात्रमित्यर्थः। अयमर्थः—यथा देहात्मभ्रमोऽपरोक्षोऽपि परोक्षशास्त्रज्ञानेन बाध्यते, तथा स्वातन्त्र्यभ्रमोऽपीति।

भावप्रकाशिका

**अतत्पर्यन्तो मिथ्येत्यर्थ इति ;** त्वमेव स्वनिष्ठः; त्वदन्यः स्वनिष्ठो नास्तीत्यर्थः। ततश्च परमार्थशब्दः स्वनिष्ठपरः। परम उत्कृष्टोऽर्थः परमार्थः; स्वतन्त्र इति यावत्। **व्याप्यत्वसहचरं हीति ;** व्याप्यत्वविशेषितमित्यर्थः। **शरीरलक्षणद्योतकमिति ;** यस्य चेतनस्येत्युक्तशरीरलक्षणद्योतकमित्यर्थः। जगच्छरीरकेति संबुद्धिः। **अतत्पर्यन्तस्येति ;** अतच्छरीरकस्येत्यर्थः। परमार्थशब्दस्य परमप्रयोजनवाचित्वसंभवे स्वनिष्ठवस्तुपरत्वमयुक्तमित्यस्वरसादाह—**यद्वा एकशब्दः प्राधान्यपर इति। असहायपदव्यवच्छेद्यं हीति ;** नन्वन्यप्रधानासहायसंख्यासाधारणवाचिन एकशब्दस्यासहायपदव्यवच्छेद्यमर्थान्तरमपि संभवति, न तु प्रधानत्वमेवेति कथमिदमसहायपदमेकशब्दस्य प्रधानार्थकत्वं ज्ञापयेदिति चेत्—न ; 'असहाये' इति विशेषणस्यार्थान्तरसंभवमात्रसूचकत्वात्। "ष्णान्ता षट्" इति सूत्रे महाभाष्ये "एकशब्दोऽयं बह्वर्थः ; अस्त्यसहायवाची—एकाग्नयः एकहलः इति ; अस्ति संख्यार्थः—एकः द्वौ बहव इति ; अस्त्यन्यार्थेवर्तते—प्रजामेका रक्षत्यूर्जमेका" इत्युक्तेः ; "एके मुख्यान्यकेवलाः" इति निघण्टूक्तेश्चेति भावः। भाष्ये "त्वदात्मकमेवेदं सर्वमिति त्वदन्यः कोऽपि नास्ति" इत्युक्तमयुक्तम्, तदात्मकस्यैव जगतस्तदन्यत्वादित्याशङ्क्य शेषपूरणेन व्याचष्टे—**त्वदन्योऽत्वदात्मक इति ; अत्वदात्मकः;** स्वनिष्ठ इत्यर्थः। ननु **श्लोकार्धैकदेशश्लोक्तार्थोपपादक इत्याहे**त्यवतारिका न युक्ता, 'अत इदमुच्यते' इत्यादिभाष्येण श्लोकार्धैकदेशशब्दविवक्षितस्य महिमशब्दमात्रस्योपपादकत्वकथनात्, सर्वव्याप्तेरुपपादकतयोपन्यासादित्याशङ्क्याह—**महिम्नो व्याप्तिरूपत्वादिति।** सर्वमिथ्यात्वे सर्वव्याप्तिर्नोपपद्यत इति भाष्याभिप्रायः। अपितु सर्वव्याप्तिर्वा भवतु ; यत्किंचिद्व्याप्तिर्वा भवतु ; अन्या वा भवतु ; न तस्य महिमत्वप्रतिपादनमुचितमित्यत्रैव भाष्यसंरम्भ इति भावः। प्रयुक्तपदाविवक्षाकथनमस्वरसमित्याशङ्क्याह—**यद्वा व्याप्तेरुक्तार्थोपपादकत्वमिति।**

श्रुतप्रदीपिका

अथ चतुःश्लोकीं व्याचष्टे—**परमार्थ इत्यादिना।** सर्वशरीरकस्त्वमेव परमार्थः।

अत्वदात्मकं मिथ्येत्यर्थः । उत्तरार्धं तदुपपादकमित्याह— **तदेवेति** । तत्फलितमर्थमाह— **येनेति ; येन ;** यतः । **त्वमेवैक** इत्येकशब्दः प्रधानवाची " किमेकं दैवतम् " इतिवत् । अत एव हि " एकादाकिनिचासहाये " इत्यत्रासहायशब्देन प्रधानो व्यवच्छिद्यते । उत्तरार्धैकदेशो विशेषतस्तदुपपादक इत्याह—**अत इदमिति** । **अतः;** जगद्विशिष्टस्य पारमार्थ्यात् । दूषणान्तरद्वयमाह— **जगत इति** । त्वंशब्दो हि स्वाभिमुखाहमर्थमाह— **यत इति** । स्वनिष्ठप्रतीतेरन्यथासिद्धत्वात् भगवदात्मकत्वोक्तिर्न यूपादित्यैक्यवाक्यवदिति भावः । **मूर्तम् ;** मूर्तिः ।

### नयप्रकाशिका

" परमार्थस्त्वमेवैकः " इत्यादिचतुःश्लोक्यामपि न निर्विशेषवस्तुधीः । तथाहि—

" परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते ।
तवैष महिमा येन व्याप्तमेतच्चराचरम् ॥"

इति । एतत् प्रत्यक्षादिप्रमाणैर्गम्यं चराचरात्मकं जगत् येन यतः त्वयान्तरात्मत्वेन व्याप्तं ततः सप्रकारस्त्वमेव परमार्थः । अन्यो नास्ति, त्वदनन्तरात्मकवस्त्वभावात् । अतः सर्वान्तरात्मत्वात् त्वमेवैको जगतः पते । एवंविधो हि ते महिमा या सर्वव्याप्तिरिति । निर्विशेषवस्तुपरत्वे तु ' तवैषा भ्रान्तिर्या सर्वव्याप्तिः ' इति स्यात् । " जगतः पते " इत्यादिशब्दानां स्वार्थप्रहाणेनाधिष्ठानलक्षकत्वे स्तुतिप्रकरणविरोधो वाक्यार्थानन्वयश्च । पृथिव्युद्धरणप्रार्थनापूर्वं तदुद्धरणं हि वाक्यार्थः । मिथ्यात्वेन ज्ञाते कथमुद्धरणम् ? अतस्तस्य सविशेषपरत्वमेव । तथा—

" यदेतद् दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥"

इत्ययमपि । यदेतत् चेतनाचेतनात्मकं प्रत्यक्षादिप्रमाणसिद्धं जगद् दृश्यते तद् गुणतः स्वरूपतश्च ज्ञानात्मना त्वया व्याप्तमिति तव मूर्तं तव शरीरम् । एवमेतत्तव शरीरं जगत् अयोगिनोऽश्रुतवेदान्तत्वेनानुपासितगुरुचरणत्वेन च त्वदन्तरात्मकत्वानुभवसाधनचित्तसमाधानात्मकयोगविरहिणो मूढाः केवलमनुष्यादिरूपमेव पश्यन्तीति तस्यार्थात् ; अन्यथानन्वयोऽबोधकता च ।

न्यायसुदर्शनम्

" परमार्थस्त्वमेवैको नान्योऽस्ति " इत्यत्र भासमानत्वार्थक्रियाकारित्वाविकारित्वासंकुचितज्ञानत्वादिपारमार्थ्यहेतूनां सर्वेषामन्वयात् त्वमेवैकः परमार्थः । अन्येषां शुक्तिरजतमणिमहार्णवप्रकृतिपुरुषात्मकवस्तूनां सर्वपारमार्थ्यहेत्वन्वयाभावात् त्वदपेक्षया ते अपरमार्थभूता इत्यर्थः । " सत्यं ज्ञानमनन्तं ब्रह्म " इति पारमार्थ्यस्य ज्ञानरूपत्ववचनादयमेवार्थोऽत्र बोध्यते ।

श्रीभाष्यम्

न केवलं वस्तुतस्त्वदात्मकं जगद् देवमनुष्याद्यात्मकमिति दर्शनमेव भ्रमः, ज्ञानाकाराणामात्मनां देवमनुष्याद्यर्थाकारत्वदर्शनमपि भ्रम इत्याह—"ज्ञानस्वरूपमखिलम्" इति ।

ये पुनर्बुद्धिमन्तो ज्ञानस्वरूपात्मविदः सर्वस्य भगवदात्मकत्वानुभवसाधनयोगयोग्यपरिशुद्धमनसश्च ते देवमनुष्यादिप्रकृतिपरिणामविशेषशरीररूपमिदमखिलं जगत् शरीरातिरिक्तज्ञानस्वरूपात्मकं त्वच्छरीरं च पश्यन्तीत्याह—"ये तु ज्ञानविदः"इति। अन्यथा श्लोकानां पौनरुक्त्यं, पदानां लक्षणा, अर्थविरोधः, प्रकरणविरोधः, शास्त्रतात्पर्यविरोधश्च ।

श्रुतप्रकाशिका

देहातिरिक्तं स्वात्मानमप्यजानतः परमात्मपारतन्त्र्याप्रतिपत्तिः किंपुनर्न्यायसिद्धेति च दर्शयितुं तृतीयश्लोकारम्भः । तं व्याचष्टे— **न केवलमिति** । चिदचिदात्मके जगति चेतनरूपं जगत् विवक्षितं "ज्ञानस्वरूपमखिलं जगत्" इति जगच्छब्देन । यथा—

"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥"

इति । अत्र ज्ञानस्वरूपस्य जडरूपार्थस्वरूपत्वबुद्धिर्भ्रम इत्युक्ते, अर्थस्वरूपस्यार्थस्वरूपबुद्धिर्न भ्रमः स्यादिति च सिद्धम् । देहात्मभ्रमः संसर्गकृतः 'जलमुष्णम्' इतिवत् । आत्मासाधारणधर्मज्ञानस्फुरणेऽपि तस्यासाधारणत्वाज्ञानाद् भ्रमोपपत्तिः ।

चतुर्थं व्याचष्टे—**ये पुनरिति**। "विज्ञानं चाविज्ञानं च" इति विज्ञानशब्दस्यात्मवाचित्वात् **ज्ञानस्वरूपात्मविद्** इत्युक्तम्। "अबुद्धयः" इति पूर्वश्लोकोक्तार्थप्रतियोगित्वेन "ज्ञानविदः" इत्युक्तमिति स्मारयति—**बुद्धिमन्त इति**। "अयोगिनः" इत्यस्य प्रतियोगित्वेन "शुद्धचेतसः" इत्युक्तमिति सूचयति—**योगयोग्यपरिशुद्धमनस इति**। योगयोग्यत्वे हेतुः परिशुद्धत्वम्। मनसा तु विशुद्धेन हि भगवत्साक्षात्काररूपोपासननिष्पत्तिः श्रूयते। मनोविशुद्धिश्च कर्मयोगेन। योगेन योग्यता परिशुद्धिरिति वार्थः। पूर्वश्लोके अखिलजगच्छब्देन चेतनरूपं जगद्विवक्षितम्। अस्मिन् श्लोके अखिलजगच्छब्देनाचिद्रूपं जगद्विवक्षितम्। कृत्स्नापारमार्थ्यं विवक्षितमिति पक्षे प्रथमश्लोकसंक्षिप्तदूषणमनुक्तदूषणेन सह विस्तरेण सर्वश्लोकसाधारणमाह—**अन्यथेति**। स्वातन्त्र्यभ्रमो देहात्मभ्रमश्चेति विभागाभावे पौनरुक्त्यमित्यर्थः। **लक्षणा;** 'परमेश्वर, जगतः पते, तव महिमा, त्वम्' इत्यादिशब्दानां लक्षणा। त्वंशब्दो हि स्वाभिमुखाहमर्थान्तरवाची। अतस्तस्य लाक्षणिकत्वम्। **अर्थविरोधः;** प्रत्यक्षादिभिरबाध्यत्वेन सिध्यतोऽसत्यत्वे प्रमाणविरोधः। तिरोधानानुपपत्त्यादिस्तर्कविरोधः। उभयलिङ्गविरोधश्च। **प्रकरणविरोधः;** स्तुतिविरोधः। "रोमान्तरस्था मुनयः स्तुवन्ति" इति हि प्रकृतम्। स्तोतॄणामद्वैतज्ञानवत्त्वे स्तुत्यनुपपत्तिः। तदभावे च नितराम्। **शास्त्रतात्पर्यविरोधः;** उपक्रमोपसंहारावान्तरप्रकरणोपक्रमोपसंहारादिविरोधः।

### भावप्रकाशिका

भाष्ये—**न केवलं वस्तुतस्त्वदात्मकं जगत्** इत्यत ऊर्ध्वं 'तत्र' इति शब्दोऽध्याहर्तव्यः। ततश्च वस्तुतो यत्त्वदात्मकं जगत् तत्रेत्यर्थः। एतेन 'वस्तुतस्त्वदात्मकं जगत्' इत्यस्यांशस्य भ्रान्तिदर्शनाकारप्रदर्शकत्वासंभवात् 'वस्तुतस्त्वदात्मके जगति' 'वस्तुतस्त्वदात्मकस्य जगतः' इति वा षष्ठीसप्तम्यन्यतरान्ततया निर्देश एवोचितो नान्यथेति शङ्का पराकृता। नन्वपरोक्षस्य देहात्मभ्रमस्य शास्त्रजन्यज्ञानेन परोक्षेण बाधाभ्युपगमे द्वैतग्राहिप्रत्यक्षस्यापि शास्त्रजन्यज्ञानेन बाधः किं न स्यादिति शङ्कां सादृश्यादिरूपभ्रमहेत्वभावात् कथं देहात्मभ्रम इति शङ्कां च परिहरन् देहात्मभ्रममुपपादयति—**देहात्मभ्रमः संसर्गकृत इति**। यथा 'जलमुष्णम्' इति प्रत्यक्षं तेजोद्रव्यसंपर्करूपदोषसाहित्यात् शङ्कितदोषं सत् जलस्य शैत्यस्वभावत्वग्राहकशास्त्रेण बाध्यते तद्वदिति भावः। न चैवं ब्रह्मप्रपञ्चयोरप्युपादा-

नोपादेयभावेन परस्परसंसृष्टतया ब्रह्मगतसत्त्वप्रतीतिः प्रपञ्चे किं न स्यादिति वाच्यम्, ब्रह्मसंसर्गस्यैव दोषत्वे अद्वैतशास्त्रमसदेव अप्रमाणमेव अव्यावहारिकमेव सत्त्वेन प्रमाणत्वेन व्यावहारिकत्वेन च गृह्यत इति शङ्कितदोषतया तदपि न बाधकं स्यात् । किंच प्रपञ्चस्य सत्त्वाभावे ब्रह्मसंसर्गस्याप्यसंभवेन तस्य दोषत्वाभावादित्यन्यत्र विस्तरः । **अनुभवसाधन-योगयोग्येति** भाष्यम् । अनुभवसाधने ध्यानयोगे योग्यानि परिशुद्धानि मनांसि येषां ते तथोक्ताः; योग्यतायां च परिशुद्धिर्हेतुः; परिशुद्धौ च कर्मयोगो हेतुरित्येवंपरतया व्याख्याय—योगयोग्येत्यत्र तृतीयातत्पुरुषो विवक्षितः; योगशब्दश्च कर्मयोगपरः; योग्यतापरिशुद्ध्योश्च भेदाभावात् पूर्ववत्तयोर्हेतुहेतुमद्भावश्च न विवक्षितः; योग्यपरिशुद्धेति व्यपदेशश्च 'घटजननयोग्यदृढदण्डः' इतिवदुपपन्न इत्यभिप्रयन्नाह—**योगेन योग्यता परिशुद्धिरिति वार्थ इति** । **अखिलजगच्छब्देनाचिद्रूपं जगद्विवक्षितमिति;** अत्र केचित्—पूर्वश्लोक इव चिद्रूपजगद्विवक्षायामपि न दोषः । चिद्रूपं जगत् ज्ञानात्मकं पश्यतीत्युक्तेऽपि दोषाभावात् । यद्वा पूर्वश्लोकेऽपि जगच्छब्दोऽचित्पर एव; ततश्चार्थस्वरूपं जगद्देवमनुष्यादिरूपं ज्ञानस्वरूपमात्मस्वरूपं पश्यन्तः देहात्मभ्रमवन्त इत्यर्थः । ततश्च जगच्छब्दद्वयस्यापि न वैरूप्यमित्यपि वदन्ति । **प्रथमश्लोकसंक्षिप्तमित्यादि;** अयमर्थः—प्रथमश्लोके संक्षिप्तं तच्छ्लोकमात्रविषयतयोक्तमनुक्तदूषणैः सह पौनरुक्त्यार्थविरोधशास्त्रतात्पर्य-विरोधैः सह विस्तरेण सर्वश्लोकसाधारणतया आहेत्यर्थः । **सर्वश्लोकसाधारणमि-त्येतत्** विस्तरशब्दविवरणम् । न तु संक्षेपविस्तरशब्दयोर्दूषणस्वरूपसंक्षेपविस्तरपरत्वम् । दूषणस्वरूपं हि प्रथमश्लोके त्वमित्यादिपदानां लक्षणा, महावराहस्य स्तुतिप्रकरणविरोध इति विस्तरेणोक्तम् । उत्तरत्र तु पदानां लक्षणा, प्रकरणविरोध इति संक्षेपेण । अतो यथोक्त एवार्थः । **अवान्तरप्रकरणेति ;** अवान्तरप्रकरणस्योपक्रमोपसंहारादिविरोध इत्यर्थः ।

**श्रुतप्रदीपिका**

तृतीयं व्याचष्टे—**न केवलमिति** । पूर्वोक्तान्यथासिद्धावपरोक्षदेहात्मधियो दृष्टान्त-त्वमभिप्रेतम् । यद्वा स्वदेहान्यमजानतः परमात्मात्मकत्वभावः किमुतेति भावः । चतुर्थं व्याचष्टे—**ये पुनरिति** । "विज्ञानं चाविज्ञानं च" इतिवत् ज्ञानशब्दो जीवपरः । पूर्वग्रन्थ-द्वयस्थयोः "अयोगिनः, अबुद्धयः" इति पदयोर्विपरीतार्थपरं "शुद्धचेतसः, ज्ञानविदः" इति पदद्वयमिति भावः । निर्विशेषपरत्वपक्षे प्रथमोक्तं दूषणं साधारणयन् दूषणान्तरं चाह—**अन्यथेति** । प्रपञ्चस्य धर्मिग्राहकमानविरोधः, चित्स्वरूपतिरोधानानुपपत्त्यादिस्तर्कविरोधः,

परस्योभयलिङ्गत्वबाधश्चार्थविरोधः । प्रकरणविरोधः; स्तुतिपरत्वात् स्तोत्राणामद्वैतज्ञाने स्तुत्यनुपपत्तेरिति भावः । उपक्रमोपसंहारादिवचनविरोधस्तात्पर्यविरोधः ।

**नयप्रकाशिका**

तथा

"ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥"

इत्ययमपि । ज्ञानस्वरूपत्वेन श्रुत्यादिसिद्धमखिलं चेतनजातरूपं जगत् अबुद्धयो भ्रान्ताः अर्थस्वरूपं देवमनुष्याद्याकारेण पश्यन्तो मोहसंप्लवे संसारे परिप्लवन्तीति तस्यार्थः ।

अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः ।
अविद्यातरुसंभूतिबीजमेतद् द्विधा स्थितम् ॥"

इत्यादिवचनैकार्थ्यादयमेव श्लोकार्थः । "ज्ञानस्वरूपम्" इति श्लोकः परमात्मविषयः, युष्मच्छब्दश्रवणात् ।

"ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर ॥"

इत्ययमपि तथा । ये तु ज्ञानविदः ये ज्ञानस्वरूपजीवात्मविदः शुद्धचेतसः वर्णाश्रमाचार-शुद्ध्यादिना सर्वस्य भगवदन्तरात्मकत्वानुसन्धानयोग्यशुद्धान्तःकरणाः, ते जगद्देवमनुष्यादि-रूपं पृथिव्यादिरूपं च ज्ञानात्मकं शरीरातिरेकिज्ञानस्वरूपात्मकजीववर्गं च पश्यन्ति तदु-भयमपि त्वद्रूपमिति पश्यन्ति ; त्वद्रूपं त्वच्छरीरमिति तस्यार्थात् । अन्यथा 'परमे-श्वर' इत्यादिपदानन्वयः । परमेश्वरत्वं नाम परमनियन्तृत्वम् । ब्रह्मणो भ्रान्तत्वे तु तन्न संभवति । एवमेवार्थश्चतुःश्लोक्याः । अन्यथा पुनरुक्त्यादिदोषः ।

**न्यायसुदर्शनम्**

"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः"[1]

इत्यत्र "परः पराणाम्" इत्यारभ्योपदेश्यरूपाणामेव नमस्कार्यत्वात् तद्रूपं ब्रह्मस्वरूपं नमस्कृत्य, इतरेषामत्र प्रस्तुतत्वात् व्यक्ताव्यक्तकालपुरुषाणामेव ब्रह्मणो रूपतयोपदेशान्नम-स्कारोऽपि व्यक्ताव्यक्तपुरुषाणां स्वशब्दनिर्दिष्टत्वात् "सृष्टिस्थितिविनाशानाम्" इत्यत्र परि-

---

१. एतद्गीता "ज्ञानस्वरूपम्" इत्येव श्रीभाष्ये प्रतीकग्रहणपाठः । "ज्ञानस्व-रूपम्" इत्यनेन "ज्ञानस्वरूपमत्यन्त" इत्यादिश्लोकमभिसंधाय व्याख्यानं क्रियते ।

शेषन्यायेन कालरूपेणावस्थितपरमात्मनो नमस्कारः । अत्र "जगन्मयः" इति कालमयः, कालस्यापि जगदेकदेशत्वात् । "आधारभूतं विश्वस्य" इत्यत्र विश्वस्य चतुर्विंशतितत्त्वात्मकशरीरस्याधारभूतमित्यर्थः । "जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति जगतो जीवाधारत्वस्यान्यत्र वचनात् जगदाधारभूतजीवविशिष्टरूपेण स्थितमित्यर्थः । तस्मात् ब्रह्मशरीरभूतपुरुषस्य देवाद्यर्थाकारता भ्रान्तिः "अर्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्" इत्युच्यते, परमार्थतस्तस्य ज्ञानस्वरूपता च । अतो न ब्रह्मभ्रान्तिः ।

श्रीभाष्यम्

**"तस्यात्मपरदेहेषु सतोऽप्येकमयम्" इत्यत्र सर्वेष्वात्मसु ज्ञानैकाकारतया समानेषु सत्सु देवमनुष्यादिप्रकृतिपरिणामविशेषरूपपिण्डसंसर्गकृतमात्मसु देवाद्याकारेण द्वैतदर्शनमतथ्यमित्युच्यते ; पिण्डगतमात्मगतमपि द्वैतं न प्रतिषिध्यते । देवमनुष्यादिविविधविचित्रपिण्डेषु वर्तमानं सर्वमात्मवस्तु सममित्यर्थः । यथोक्तं भगवता— "शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" "निर्दोषं हि समं ब्रह्म" इत्यादिषु । "तस्यात्मपरदेहेषु सतोऽपि" इति देहातिरिक्ते वस्तुनि स्वपरविभागस्योक्तत्वात् ।**

श्रुतप्रकाशिका

अथादिभरतचतुःश्लोकीं परस्परव्यवहितां व्याचष्टे—**तस्येत्यादिना** । ब्रह्माद्वैतं जीवाद्वैतं चेत्यद्वैतं द्विविधं शास्त्रप्रतिपाद्यम् । तत्र ब्रह्माद्वैतं प्रकार्यद्वैतम् । जीवाद्वैतं प्रकाराद्वैतम् । कोऽत्र नियामक इति चेत् , उच्यते—ब्रह्मप्रकरणेषु सामानाधिकरण्येन ब्रह्माद्वैतप्रतिपादनात्, सामानाधिकरण्यस्य च प्रकारभेदविशिष्टप्रकार्यैकत्वपरत्वात् , "एकः सन् बहुधा विचारः" इति प्रकारबहुत्वस्य कण्ठोक्तत्वात् , ऐक्यविधिशेषस्य "नेह नानास्ति" इत्यादिभेदनिषेधस्य विहितैक्यविरोधिभेदविषयत्वात् ; सामान्यनिषेधस्य च विहितव्यतिरिक्तविषयत्वेन प्रकारिबहुत्वनिषेधपरत्वात् "न तत्समश्चाभ्यधिकश्च दृश्यते" इति ब्रह्मतुल्यप्रकार्यन्तरनिषेधकण्ठोक्त्या च प्रकार्यद्वैतमेव ब्रह्माद्वैतम् ; जीवात्मबहुत्वस्य श्रुतिसिद्धत्वात्, अन्यथा बद्धमुक्तव्यवस्थानुपपत्तेः, उपदेशानुपपत्तेः, सुखादिव्यवस्थानुपपत्तेः,

"पुमान्न देवो न नरो न पशुर्न च पादपः ।"
"चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः ।"

"देवादिभेदेऽपध्वस्ते" इत्यादिभिर्भेदविशेषनिषेधस्य कण्ठोक्तत्वात्, मुक्तानां साम्यवचनात्, "अहं त्वं च तथान्ये च" "तत्र त्वमहमप्यत्र" "तन्मनः समताल्भिन्न" इत्यादिप्राकरणिकवचनानुरोधात् 'एको व्रीहिः' इतिवदेकशब्दस्यैकजातीयपरत्वोपपत्तेः, वक्ष्यमाणश्लोकस्य शब्दस्वभावाच्च जीवाद्वैतं प्रकाराद्वैतमेव । "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यस्य वाक्यस्य कामविधानपरत्वान्न नित्यत्वबहुत्वयोस्तात्पर्यमस्ति; अस्ति चेद्वाक्यभेदप्रसङ्गादिति चेत्—न; "यदाग्नेयोऽष्टाकपालः" इत्यत्राष्टाकपालत्वविशिष्टाग्नेयपुरोडाशविधिवद्विशिष्टविधिपरत्वाद्वाक्यस्य । नित्यबहुचेतनविशिष्टकामप्रदानविधिपरं हीदं प्रतीयते । अनित्यानामल्पानां कामप्रदानादपि नित्यानां बहूनां कामप्रदाने कथिते हि कामप्रदानस्यातिशयो भवति । जीवबहुत्वस्य लोकसिद्धत्वान्न तत्र शास्त्रस्य तात्पर्यम्; अप्राप्ते हि शास्त्रमर्थवदिति चेत्—न; संसृष्टस्य हि बहुत्वप्रतीतिर्लोकसिद्धा । परिशुद्धात्मस्वरूपबहुत्वस्य लोकसिद्धत्वाभावात् तत्र शास्त्रतात्पर्यं संभवति । औपाधिकाकारस्यानित्यत्वात्, निष्कृष्टस्वरूपस्य नित्यत्वात्, नित्यत्वसमानाधिकरणबहुत्वेऽभिहिते परिशुद्धात्मस्वरूपबहुत्वं ह्युक्तं भवति । उपदेशोऽपि न संभवति—गुरुर्भ्रान्तश्चेन्नोपदेशः, अभ्रान्तश्चेद् द्वैतप्रतीत्यभावान्नतराम् । द्वैतप्रतीतावपि दर्पणस्थं स्वात्मनः प्रतिबिम्बं प्रति विवक्षितस्य नोपदेशः संभवतीति । सुखदुःखादिव्यवस्थया चात्मभेदः सिद्धः । ननु सुखदुःखव्यवस्था नाम किं सुखदुःखव्यक्तिबहुत्वम्, उत तदाश्रयबहुत्वम्? एकस्यैवानेकसुखदुःखव्यक्तिदर्शनात् सुखादिस्वरूपबहुत्वं नात्मैक्यविरोधीति न व्यवस्था । आश्रयभेदश्चेत् साध्याविशिष्टो हेतुरिति चेत्—न; त्वदुक्तोभयप्रकारविलक्षणत्वात् व्यवस्थायाः । संप्रतिपन्नैकाश्रयेषु सुखदुःखादिषु प्रतिसंधानं दृष्टम् । प्रतिबन्धकाभावे सत्येकाश्रयत्वेन सुखदुःखप्रतिसंधानाभावो व्यवस्थेति परिहारः । **एकमयम्** इत्यत्र मयट् स्वार्थिकः । यद्वा एकशब्दो भावप्रधानः, ऐक्यम्; तत्प्रचुरमेकमयम्; शुद्धावस्थस्यात्मनो ह्यैक्यप्राचुर्यम्, न तु संसृष्टस्य; तस्य बुद्धिसुखदुःखाद्यान्तरभेदेन देवत्वादिबाह्यभेदेन चैक्यप्राचुर्याभावात् । एकशब्दः समानवाची, "एको व्रीहिः सुनिष्पन्नः सुपुष्टाः कुरुते प्रजाः" इत्यादिषु तथा प्रयोगदर्शनात् । **देवमनुष्यादिप्रकृतिपरिणामविशेषरूपेत्यनेन**

"दुःखाज्ञानमला धर्माः प्रकृतेस्ते न चात्मनः"

"पुमान्न देवो न नरो न पशुर्न च पादपः ।
शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥"

इति वचनयोरैकार्थ्यं दर्शितम् । "पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्राकरणिकवचनं स्मारयति **पिण्डशब्दः** । "एकमयम्" इत्यात्मन्येकत्वं विधाय भेदे निषिध्यमाने आत्मस्वरूपभेद एव निषिद्धः स्यादिति चेत्—स्यादेवं यदि विधीयमानमेकत्वं व्यक्त्यैक्यं स्यात्; तत्तु प्रकारैक्यम् । अतो भेदनिषेधो वैजात्यनिषेध एवेति भावः । "द्वैतिनोऽतथ्यदर्शिनः" इति सामान्येनोक्ते कथं देवादिद्वैतनिषेध इत्युच्यत इति चेत्, कथं सामान्येन द्वैतनिषेधे प्रतीते आत्मद्वैतनिषेध इत्युच्यते ? न पिण्डात्मनोर्भेदनिषेधः । पिण्डात्मनोर्भेदस्य प्रामाणिकत्वादिति चेत्,—आत्मभेदस्यापि प्रामाणिकत्वान्न तद्भेदनिषेधः, अपितु देवादिभेदनिषेध इति भावः । आत्मगतद्वैतमप्रतिषिद्धं चेत् "आत्मा शुद्धोऽक्षरः शान्तः" "विज्ञानं यज्ञं तनुते" इत्येकवचनं नोपपद्यते । जातावेकवचनं चेत् देहशब्देऽप्येकवचनं स्यादिति शङ्का च देवमनुष्यादिपदेन परिहृता । देवादिष्ववान्तरभेदविवक्षया विविधशब्दः । तत्राप्यनेकविधत्वविवक्षया विचित्रशब्दः । आत्मसु जात्येकत्वादेकवचनम् । पिण्डेष्ववान्तरजातिबहुत्वाद्बहुवचनमित्यभिप्रायः । साम्ये प्रमाणमाह—**यथोक्तमिति** । बहुत्वस्य विहितत्वात्साम्यप्रतिपादनाच्चात्मव्यक्तिभेदनिषेधोऽनुपपन्न इत्यर्थः । हेत्वन्तरं चाह—**तस्येति** । अन्यथार्थश्चेत् एतच्छ्लोकस्थपदानां व्याघातः स्यादित्यर्थः । **उक्तत्वादिति** ; सममित्यर्थ इत्यन्वयः ।

**भावप्रकाशिका**

**वक्ष्यमाणश्लोकस्येति** ; "यद्यन्योऽस्ति परः कोऽपि" इति श्लोकस्थान्यपरशब्दस्वभावाच्चेत्यर्थः । **प्रकाराद्वैतमेवेति** ; एकप्रकारकत्वमित्यर्थः । **पुरोडाशविधिवदिति** ; अष्टाकपालपुरोडाशद्रव्यकाग्निदेवताकयागवदित्यर्थः । पौर्णमास्यधिकरणे आग्नेयस्याष्टाकपालपुरोडाशस्य विधेः प्रत्याख्यातत्वादिति द्रष्टव्यम् । **प्रतिबन्धकाभावे सतीति** ; सुखादिप्रतिसंधानप्रतिबन्धकाभावे सत्यपि सुखादिप्रतिसन्धानाभावो व्यवस्थेत्यर्थः । **मयट् स्वार्थिक इति** ; "तस्यात्मपरदेहेषु" इति श्लोकस्यायमर्थः—सतोऽपीति "षष्ठी चानादरे" इत्यनादराधिकभावलक्षणे द्योत्ये षष्ठी; आत्मपरदेहेषु सत्तामनादृत्य एकमयं समानैकरूपविज्ञानलक्षणमात्मस्वरूपमेव परमार्थो भवतीत्यर्थः । श्रीविष्णुचित्तार्यैस्तु 'सतो-

इति । अत्रैकशब्दः आकारैक्यपरः । स्वयंप्रकाशत्वनित्यत्वाणुत्वादिः सर्वात्मसाधारणः । व्यावर्तकदेवाद्याकारस्तु नात्मन्यस्ति । व्यावर्तकाभावात्तद्वाचिशब्देन निर्देशोऽनुपपन्नः । प्रत्यक्त्वपराक्त्वपरोक्षत्वापरोक्षत्वादीनि न व्यावर्तकानीति 'को भवान्' इति प्रश्नस्तदतिरिक्ताकाराभिप्रायः । न हि भवानिति प्रश्नः । भवच्छब्दो धर्मिमात्रपरः । किंशब्दो व्यावर्तकदेवाद्याकारपरः । तस्मात्तदतिरिक्ताकाराभावेन न तद्वाचिशब्देन निर्देश उपपद्यत इत्यर्थः । **ज्ञानैकाकारत्वेन समानत्वादेवेति ;** पूर्वोक्तादेवेति भावः ।

### भावप्रकाशिका

**स्थानत्रय इति ;** "अन्यः परः" इत्येकं स्थानम् ; "एषोऽहम्" इति द्वितीयम् ; "अयं चान्यः" इति तृतीयम् । ननु—अहंत्वतदन्यत्वाभ्यां वैषम्यं वक्तुं शक्यम् ; न चाहंत्वमपि परमात्मन्यास्त इति वाच्यम् , तथा सति 'अहं ब्रह्मास्मि' इत्यादीनामहमर्थब्रह्माभेदप्रत्यायकानां जीवब्रह्माभेदप्रत्यायकत्वशङ्काया एवाभावेन तत्परिहाराय यत्नो न कर्तव्यः स्यात् । अहंशब्दस्यात्मशब्दापरपर्यायतया आत्मत्वजातेः सकलजीवपरमात्मसाधारणतया अहंत्वमादीनामात्मत्वमात्रप्रवृत्तिनिमित्तकत्वेन "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिवाक्यानां ब्रह्मण आत्मत्वजात्याश्रयत्वप्रतिपादकत्वेन विरोधाप्रसक्तेस्तन्निराकरणाय यत्नोऽपि विफलः स्यादित्यस्वरसादाह—**पूर्वं देवादिष्विति । अन्यादृशाकार इत्युक्तमिति;** 'अयमेतदाकारः, अयमन्याकारः' इति निर्देष्टव्ये 'अन्यादृशाकारः' इत्युक्तिराकारेऽपि सुसदृशत्वमात्रमेव, न त्वैक्यमस्तीति द्योतयतीति भावः ।

### श्रुतप्रदीपिका

परविभाग एव श्लोकान्तरे निषिध्यत इत्याशङ्क्य तद्याचष्टे—**यदीति** । कस्तर्ह्यर्थ इत्यत्राह—**तत्रेति** । पदार्थे कथिते वाक्यार्थमाह—**एतदुक्तमिति** । प्रत्यक्त्वपराक्त्वे चानपेक्षिते सर्वात्मसाधारणे । अतो न ते व्यावर्तके इति हृदयम् । एतच्छ्लोकार्थविपर्ययपर्यवसानपरानन्तरग्रन्थस्य "यदा समस्त" इत्यादेरर्थमाह—**न चैवमिति** ।

### नयप्रकाशिका

न च

"यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥"

इत्यनेन भेदनिरासप्रतीतिरिति वाच्यम् , आत्मनामेकाकारत्वेन भेदकधर्माभावपरत्वात् तस्य ।

यद्यन्यः ; यद्यन्याकारः स्यात्; परः कोऽपि मत्तो मद्व्यतिरिक्तजीवेषुः, कोऽपि परो जीवो यद्यन्य इत्यन्वयः, तदा तेषाम् 'अहमेषः—एवमाकारः' 'अयमन्यः—अयमन्याकारः' इति वक्तुं युक्तम् । न हि तदाकारभेद इति तस्यार्थात् । अन्यथा परशब्दान्यशब्दयोरन्यतरस्य वैयर्थ्यम् । न हि देहमात्रभेदकधर्मैरात्मधर्मवैविध्यम् ।

### श्रीभाष्यम्

**" वेणुरन्ध्रविभेदेन " इत्यत्राप्याकारवैषम्यमात्मनां न स्वरूपकृतम्, अपितु देवादिपिण्डप्रवेशकृतमित्युपदिश्यते; नात्मैक्यम् । दृष्टान्ते चानेकरन्ध्रवर्तिनां वाय्वंशानां न स्वरूपैक्यम्, अपि त्वाकारसाम्यमेव । तेषां वायुत्वेनैकाकाराणां रन्ध्रभेदनिष्क्रमणकृतो हि षड्जादिसंज्ञाभेदः; एवमात्मनां देवादिसंज्ञाभेदः । तथा तैजसाप्यपार्थिवद्रव्यांशभूतानां पदार्थानां तत्तद्द्रव्यत्वेनैक्यमेव, न स्वरूपैक्यम्; तथा वायवीयानामंशानामपि स्वरूपभेदोऽवर्जनीयः ।**

### श्रुतप्रकाशिका

उक्तनिर्वाहागोचरदृष्टान्तमुखेनाद्वैतपरत्वेन परोक्तस्य श्लोकस्यार्थमाह—**वेणुरन्ध्रेति** । स्वत एकाकाराणामुपाधिवशादवान्तरभेदसद्भावमात्रे दृष्टान्तोपन्यासः । अन्यथा सर्वथा साधर्म्याभ्युपगमे ह्यात्मनोऽचित्त्वाकाशकार्यत्वादिकमपि स्यात् । तद्धि प्रमाणान्तरविरोधात् त्यज्यते । तथा दृष्टान्तगतमाकारान्तरमपीति भावः । "तथासौ परमात्मनः" इत्युक्ते षड्जादिसंज्ञाभेदो मा भूदित्यभिप्रायेणाह—**एवमात्मनां देवादिसंज्ञाभेद इति** । " भेदः षड्जादिसंज्ञितः " इति पाठे सत्यपि **षड्जादिसंज्ञाभेद** इति व्याख्यानं दुरवगमषड्जादिरूपभेदप्रतिपत्तिसौकर्यस्य संज्ञाभेदाधीनत्वादिति भावः । दार्ष्टान्तिकेऽपि तथैव । दृष्टान्ते व्यक्तिबहुत्वं किमस्तीति शङ्कायां वाय्वंशानामनेकत्वं तर्केण साधयति—**तैजसेति** ; स्पर्शवद्द्रव्यत्वादिति भावः । यत्र त्वाकाशदृष्टान्त उक्तः, तत्राप्येकस्यात्मनो दृष्टान्तत्वेनाकाशमुक्त्वा आत्मान्तरे तथात्वमिति मन्तव्यम् ।

" सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तदृष्टिभिरात्मापि तथैकः सन् पृथक् पृथक् ॥"

इति नभसः सितनीलादिभेदः शरत्प्रावृट्सन्ध्यासमयेषु मेघोपश्लिष्टस्य तस्य यथा क्रमभावी, तथैकस्यात्मनोऽपि देवादिभेदः क्रमभावीति । यद्वा तत्रापि प्रदेशभेदाङ्गीकारेण सर्वात्म-दृष्टान्तः स्यात् । आकाशस्य प्रदेशभेदानभ्युपगमे घटादेर्विभुत्वमाकाशस्याल्पत्वं वा प्रसजेत् । किं घटादेः कृत्स्नाकाशेन संबन्धः, उत प्रदेशभेदेन? पूर्वस्मिन् पक्षे घटादेर्वि-भुत्वमाकाशस्याल्पपरिमाणत्वं वा । द्वितीये प्रदेशभेदाङ्गीकार इति । वेदान्तिभिर्नभसो निरवय-वत्ववादोऽपसिद्धान्तः ; वेदान्तेषु तस्यांशभेदेन पञ्चीकरणोपदेशात्, एकांशेन वायुत्वेन परिणामवादात्, उत्पत्तिलयदर्शनाच्चेति । अत एव—

" घटध्वंसे घटाकाशो न भिन्नो नभसा यथा ।
ब्रह्मणा हेयविध्वंसे विष्ण्वाख्येन तथा पुमान् ॥"

इति शौनकवचनमपि नभस्यंशभेदाभिप्रायेण जीवस्य परस्मादात्मन औपाधिकवैषम्यविरहे दृष्टान्तसमर्पणपरं वेदितव्यम् । "यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्" इति तत्रैव साम्यदृष्टान्ताभिधानात् ।

### भावप्रकाशिका

**सर्वथा साधर्म्याभ्युपगमे हीति ;** एकत्वाश्रयत्वेनापि साम्याभ्युपगम इत्यर्थः । **भेदः षड्जादिसंज्ञित इति पाठे सत्यपीति ;** संज्ञाभेद इत्युक्ते यथैकस्य घटस्य घट-कलशादिसंज्ञाभेदः, एवं षड्जादिसंज्ञाभेदमात्रमेव, न तु संज्ञिभेदोऽस्तीति न मन्तव्यम्; संज्ञाभेदाधीनत्वात् संज्ञिभेदस्य । 'तदधीनत्वात्ताच्छब्द्यम्' इति न्यायेन भाष्ये संज्ञाभेदशब्देन संज्ञिभेद एवोपचर्यत इति भावः । ननु षड्जादिसंबन्धग्रहः केनचिदितरव्यावर्तकाकारेण गृहीत एव धर्मिणीति वक्तव्यम् ; ततश्च संज्ञाभेदमन्तरेणापि भेदकाकारस्याभ्युपगन्तव्य-त्वात् कथं तदेकभेदत्वमिति चेत्—सत्यम्; संज्ञासंबन्धो भेदप्रतीतौ प्रायेण हेतुरित्यत्र तात्पर्यात् । **दार्ष्टान्तिकेऽपि तथैवेति ;** दृष्टान्ते भेदसिद्धेर्दार्ष्टान्तिकेऽपि तथैव भवत्वित्यर्थः । **यत्र त्वाकाशदृष्टान्त इति ;** यथैकस्याकाशस्य कालभेदेन रूपभेदवत्त्वं तथै-कस्यैवात्मनः कालभेदेन देवादिभेदवत्त्वमित्येतावानेवेह वक्तव्योऽर्थः । ततश्च कस्या व्यक्तेः पूर्वत्वं, कस्या व्यक्तेः परत्वं, कुत्र व्यक्तावुपदेशः, कुत्र वातिदेश इत्यादिविचारे न संनद्ध-व्यमिति द्रष्टव्यम् । **वेदान्तिभिर्नभसो निरवयवत्ववाद इति ;** अत्र निरवयवत्वेन वादो निरवयवत्ववादः । तस्य च कर्म नभः; ततश्च "उभयप्राप्तौ" इति नियमात् कर्तरि तृतीया-

संभवात् तृतीयाया नानुपपत्तिरिति द्रष्टव्यम् । **नभस्यंशभेदाभिप्रायेणेति** ; न चैवं जीवानामप्याकाशवत् प्रदेशभेदमात्रत्वं स्यात्, तच्चात्मैक्यवादिनोऽपि संमतमेवेति वाच्यम्; सुखदु:खव्यवस्थाद्यनन्यथासिद्धभेदग्राहकप्रमाणेन भेदसिद्धिरित्यत्र तात्पर्यात् तत्रैव दृष्टान्ताभिधानादिति ।

**श्रुतप्रदीपिका**

उक्तनिर्वाहागोचरदृष्टान्तान्तरग्रन्थं व्याचष्टे—**वेण्विति** । **नात्मैक्य**मित्यनेन फलितं तात्पर्यं दर्शितम् । स्वत एकाकाराणामवान्तरभेदस्यौपाधिकत्वं दृष्टान्ते दर्शयति—**दृष्टान्ते चेति** । **तेषामि**त्यादिना श्लोकस्य वाक्यार्थमाह । दार्ष्टान्तिके षड्जादिसंज्ञाव्युदासाय **देवादि**शब्दः । अंशभेदं तर्केणोपपादयति—**तैजसेति** ।

**नयप्रकाशिका**

न च

" वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः ।
अभेदव्यापिनो वायोस्तथासौ परमात्मनः ॥ "

इत्यनेन भेदस्यौपाधिकत्वं प्रसाध्यत इति वाच्यम्; आत्मनामाकारवैषम्यं न स्वरूपकृतं, किंतु देवादिदेहप्रवेशकृतमित्येवंपरत्वात् तस्य । वेणुरन्ध्रविभेदेन यथा वायोरवान्तरभेदेऽपि वायुत्वेनैक्यादभिन्नस्य व्यापिनस्तस्य षड्जादिसंज्ञादिभेदः, तथात्मनोऽपि परं केवलं देहादिभेद इत्येवं हि तस्यार्थः; न तु जीवात्मनामवान्तरभेदस्यौपाधिकत्वमुच्यते । तथात्वे दृष्टान्तः साध्यविकलः स्यात् । न हि लोके वायुरेकः । आस्याद्विनिर्यतो वेणुरन्ध्रेषु पूर्यमाणस्यापि पृथिव्यादेरिवावान्तरभेदस्याल्पत्वादिभिः स्पष्टत्वात् । अत एकत्वव्यवहारो जात्यैक्यात् । तथात्मस्वपि । अन्यथा " नित्यो नित्यानाम् " इत्यादिश्रुतिविरोधः, सुखाद्यव्यवस्था, एकमोक्षे सर्वमोक्षप्रसङ्ग इत्याद्यनेकदोषश्च ।

**श्रीभाष्यम्**

"सोऽहं स च त्वम्"इति सर्वात्मनां पूर्वोक्तं ज्ञानाकारत्वं तच्छब्देन परामृश्य तत्सामानाधिकरण्येन 'अहं, त्वम्' इत्यादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह । अन्यथा देहातिरिक्तात्मोपदेश्यस्वरूपे 'अहं त्वं सर्वमेतदात्म-

स्वरूपम्' इति भेदनिर्देशो न घटते। अहंत्वमादिशब्दानामुपलक्ष्येण 'सर्वमेतदात्मस्वरूपम्' इत्यनेन सामानाधिकरण्यादुपलक्षणत्वमपि न संगच्छते। सोऽपि यथोपदेशमकरोदित्याह—"तत्याज भेदं परमार्थदृष्टिः" इति। कुतश्चैष निर्णय इति चेत्, देहात्मविवेकविषयत्वादुपदेशस्य। तच्च "पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः" इति प्रक्रमात्।

श्रुतप्रकाशिका

अथादिभरतनिगमनश्लोकमाह— **सोऽहमिति। पूर्वोक्तम्**; अध्यायचतुष्टयोक्तम्। 'सः' इति पदस्य ज्ञानाकारविशिष्टवस्तुवाचित्वेऽपि विशेषणांशे तात्पर्यं दर्शयितुं **सर्वात्मनां ज्ञानाकारत्वमिति** विशेषणांशस्य निष्कृष्य निर्देशः; अन्यथा **तत्सामानाधिकरण्येने**त्यनन्तरोक्तिविरोधात्। **ज्ञानमेवाकार इत्युपसंहरन्निति**; "सोऽहम्" इत्यादिश्लोकानन्तरपूर्वश्लोके "एकं समस्तं यदिहास्ति किंचित् तदच्युतो नास्ति परं ततोऽन्यत्" इत्यर्थेन सर्वात्मनां भगवच्छरीरत्वस्योक्तत्वात् "सोहम्"इत्यादिश्लोकस्य भगवदात्मकत्वनिगमनपरत्वशङ्का स्यात्। तच्चायुक्तम्; प्रकरणस्य शरीरात्मविवेकपरत्वात्, तन्निगमनस्य चापेक्षितत्वात्, तन्निगमनपरश्लोकान्तराभावात्, अपेक्षितविधेरनपेक्षितविधानायोगाच्चात्मनां देहव्यावर्तकैकाकारत्वनिगमनपरोऽयं श्लोक इत्यभिप्रायः। "त्यज भेदमोहम्" इत्यंशस्यार्थमाह— **देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेति**; देवादिशब्दो भेदशब्दविवरणरूपः। देहगतदेवत्वाद्याकारभेद आत्मनि भेदमोहहेतुः; तं भेदमोहं परित्यजेत्यर्थः। कृत्स्नभेदनिषेधपरत्वेऽनिष्टमाह—**अन्यथेति**। न चाहंत्वमादिशब्दा देहपराः; न हि तच्छब्देनात्मानं परामृश्य तेनात्मना देहानामैक्यमुपदिश्यते। नाप्यन्तःकरणपराः; न ह्यन्तःकरणानां परमात्मनैक्यं परस्परैक्यं वोपदिश्यते। नापि देहविशिष्टान्तःकरणपराः; न हि देहविशिष्टानामन्तःकरणानामैक्यमुपदिश्यते। अतोऽहंत्वमादिशब्दा देहातिरिक्तात्मपरा इत्यभिप्रायेण **देहातिरिक्तेत्युक्तम्**। 'अहं, त्वम्' इत्यादिपदानामुपलक्षणत्वादुपलक्ष्ये वस्तुनि न भेद इत्याशङ्क्य परिहरति—**अहमिति। अहंत्वमादी**त्यादिशब्देन सर्वशब्दो विवक्षितः। **उपलक्ष्येणे**त्यौपचारिकनिर्देशः; उपलक्ष्यवाचिपदेनेत्यर्थः। **सर्वमेतदात्मस्वरूपमित्यनेनेति**; 'अहं, त्वं, सर्वम्' इति त्रयाणामपि

पदानामात्मस्वरूपशब्देन सामानाधिकरण्यं फलितम् । तेष्वन्यतमेनाहंत्वमर्थसजातीयार्थवाचिना 'सर्वमेतत्' इति पदेनात्मस्वरूपशब्दस्य सामानाधिकरण्यनिर्देशादिति ज्ञापनार्थं **सर्वमेतदात्मस्वरूपमि**त्युपादनं कृतं भाष्ये । श्लोके "सर्वमेतदात्मस्वरूपम्" इति प्रदर्शनार्थमुक्तम् । अतोऽहंत्वमादिशब्दानामुपलक्ष्यवाचकाभिमतात्मस्वरूपशब्देन सामानाधिकरण्यादहंत्वमादिशब्दवाच्यानामर्थानामुपलक्षणत्वमसंगतम् । न हि 'चन्द्रः शाखा' 'सारसः केदारः' इत्युपलक्षणोपलक्ष्यवाचिब्दानां सामानाधिकरण्यं मुख्यतया दृष्टमित्यर्थः । लक्षणयास्त्विति चेत्, लक्षणैव दोष इति भावः । यद्वा **अनेनेति** पदमुपलक्ष्यविशेषणम्; 'सर्वमेतदात्मस्वरूपम्' इत्यात्मशब्दनिर्दिष्टेनानेनोपलक्ष्येणाहंत्वमादिशब्दानां सामानाधिकरण्यादुपलक्षणत्वमसंगतमित्यर्थः । अस्यां योजनायामहंत्वमादिसजातीयार्थवाचिसर्वपदसामानाधिकरण्यनिर्देशस्य हेतुत्वमर्थसिद्धम् । यद्यहंत्वमादिशब्दा उपलक्ष्यपर्यन्तवृत्तयस्तदानीमेवमर्थतयोपलक्ष्यवाचिना 'आत्मस्वरूपम्' इति पदेन 'सः' इति पृथक् सामानाधिकरण्यदर्शनादुपलक्षणवाचकाहंत्वमादिसामानाधिकरण्यवैयर्थ्यमिति । अहंशब्दस्यापेक्षिकप्रत्यक्त्वं प्रवृत्तिनिमित्तम् । त्वंशब्दस्य च चेतनत्वे सत्यभिमुखत्वम् । आत्मशब्दस्य च व्यापनक्षमत्वम् । 'सः' इति पदस्य प्रकृतज्ञानाकारः । ननु 'स च सर्वमेतदात्मस्वरूपम्' इत्यत्र कथमात्मस्वरूपविशेषणस्य तच्छब्दस्य पुंलिङ्गत्वम् ? उच्यते—"आत्मा शुद्धोऽक्षरः शान्तः" इत्यादिषु परज्ञानमयत्वेन प्रकृत आत्मा हि तच्छब्देन परामृश्यते । अतो न विरोध इति । अचित्संसृष्टं देवादिरूपेण प्रतीयमानं सर्वमेतदात्मस्वरूपं ज्ञानैकाकारः स आत्मेत्यर्थः । चतुर्थपादं व्याचष्टे—**सोऽपीति** । न जीवब्रह्माद्वैतपरमिदं प्रकरणम्; न चात्मस्वरूपबहुत्वनिषेधपरम्; प्रकारैक्यपरमिति कथं ज्ञायत इत्यभिप्रायेणाह—**कुतश्चेति** । परिहरति—**देहात्मेति** । तदपि कुत इत्यत्राह—**तच्चेति** । देहात्मविवेकपरत्वोपपादनेन जीवपरैक्यपरत्वमात्मबहुत्वनिषेधपरत्वं च दत्तोत्तरमेव ।

### भावप्रकाशिका

न च "यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्" इत्यत्र साम्यमात्रस्य प्रागपि सिद्धतया समानत्वमित्यस्यैक्यमेवार्थः समाश्रयणीय इति वाच्यम्, ऐक्यस्य बाधितत्वेन भेदकाकारविशेषप्रहाणेन साम्यविशेषस्यैव तदर्थत्वात् । **अध्यायचतुष्टयोक्तमिति** ; द्वितीयांशत्रयोदशाध्यायप्रभृत्यध्यायचतुष्टयेनोक्तमित्यर्थः । **अन्यथा तत्सामानाधिकरण्येनेत्यनन्तरोक्तिविरोधादिति । अन्यथा ;** ज्ञानाकारमात्रपरामर्शित्व इत्यर्थः । **तं भेदमोह-**

**मिति ;** देवाद्याकारहेतुकं भेदमोहमित्यर्थः। ननु " आत्मस्वरूपम् " इत्यस्यैवोपलक्ष्यवाचितया "सर्वमेतदात्मस्वरूपम्" इति सर्वशब्दस्योपादानं भाष्ये किमर्थमित्याशङ्क्याह— **अहं त्वं सर्वमिति त्रयाणामपि पदानामि**त्यादिना ; आत्मस्वरूपपदस्य श्लोके सर्वशब्दमात्रेण सामानाधिकरण्यं दृश्यते ; तत्कथमहंत्वंशब्दयोरात्मस्वरूपपदसामानाधिकरण्यमित्याशङ्कायामाह—**अहंत्वमर्थसजातीयेति** । अहंत्वमर्थसजातीयार्थवाचिसर्वशब्दस्यात्मस्वरूपशब्देन सामानाधिकरण्यदर्शनात् अहंत्वंशब्दयोरपि तत्सामानाधिकरण्यं फलितमिति ज्ञापनार्थं " सर्वमेवैतदात्मस्वरूपम् " इति सर्वशब्दस्यापि सहोपादानं कृतं भाष्य इति भावः । अत्र सर्वशब्दस्याहंत्वमर्थवचनसामर्थ्ये सत्यपि गोबलीवर्दन्यायमभिप्रेत्याहंत्वमर्थसजातीयवाचित्वोक्तिरिति द्रष्टव्यम् । इदं चोपलक्षणम्; परमते "सोऽहं स च त्वम् " इत्यत्रापि 'सः' इत्यस्यात्मस्वरूपपरामर्शितयोपलक्ष्यसामानाधिकरण्यस्य परेणाभ्युपेतत्वादिति द्रष्टव्यम् । **लक्षणयास्त्विति चेदिति ;** अहंत्वमादिशब्दानामन्तःकरणविशिष्टात्मवाचिनां विशेष्यस्वरूपमात्रे लक्षणा; यथा 'घटाकाश एव महाकाशः' इत्यत्रेति भावः। प्रक्रमस्थस्योपलक्ष्यपदस्योपलक्ष्यवाचिशब्दलक्षकत्वापेक्षयोपसंहारगतस्य " आत्मस्वरूपमित्यनेन " इत्यस्यात्मस्वरूपमित्युक्तेनार्थेनेत्यर्थपरत्वं युक्तमित्यन्यथा व्याचष्टे—**यद्वा अनेनेति पदमुपलक्ष्यविशेषणमिति ;** न तूपलक्ष्यवाचिपदविशेषणमिति भावः। नन्वस्यां योजनायां " सर्वमेतदात्मस्वरूपम् " इत्यस्य स्थलनिर्देशप्रदर्शनोपक्षीणत्वात् अहंत्वंशब्दसामानाधिकरण्यहेतोः सर्वशब्दसामानाधिकरण्यस्यानुक्तिरित्याशङ्क्याह—**अस्यां योजनायामिति** । यद्यपि पूर्वयोजनायामपि सर्वशब्दसामानाधिकरण्यप्रदर्शनमर्थसिद्धमेव, तथापि शब्दपरत्वे " सर्वमेतदात्मस्वरूपम् " इत्येतत् सर्वशब्दसामानाधिकरण्यप्रदर्शनपरं भवेत् ; द्वितीययोजनायां तूपलक्ष्यनिर्देशस्थप्रदर्शनमात्रपरमिति वैषम्यम् । द्वितीययोजनायाम् " अहंत्वमादिशब्दानाम् " इत्यत्राहंत्वमादयः शब्दा येषां त इति व्युत्पत्त्यार्थपरत्वं द्रष्टव्यम्, शब्दस्यार्थसामानाधिकरण्यासंभवात् । ननूपलक्षणत्वेऽपि सामानाधिकरण्यं 'घटाकाशो महाकाशः' 'शाखाग्रं चन्द्रमाः' इत्यादिषु दृष्टमित्याशङ्क्याह—**यद्यहंत्वमादिशब्दा इति ;** तथापि " स चात्मस्वरूपम् " इत्यनेनैव सामानाधिकरण्यस्य सिद्धत्वात् अहंत्वमादिसामानाधिकरण्यं व्यर्थमित्यर्थः । सिद्धान्तेऽहमादिशब्दानां प्रयोजनमाह—**अहंशब्दस्यापेक्षिकेति** । प्रत्यक्त्वमात्रस्य प्रवृत्तिनिमित्तत्वे सर्वेषां स्वात्मनां स्वात्मानं प्रति प्रत्यक्त्वात् परमात्मन्यप्यहं-

शब्दप्रयोगप्रसङ्ग इत्याशङ्क्य प्रत्यक्त्वस्य प्रवृत्तिनिमित्तत्वेऽपि स्वतन्त्रशब्दोच्चारयितृत्वमुपाधिरित्यभिप्रेत्याह—**आपेक्षिकेति । प्रकृतेति ;** द्वितीयांशत्रयोदशाध्यायमारभ्य प्रस्तुतत्वादित्यर्थः । अयमस्य श्लोकस्यार्थः—अहमपि ज्ञानैकाकारः, स आत्मा त्वमपि तादृशः, सर्वमेतदात्मस्वरूपमपि ज्ञानैकाकारम् । अत आत्मसु देवाद्याकारेण भेदमोहं परित्यजेति ।

### श्रुतप्रदीपिका

**"सोऽहम्" इत्यादिना पूर्वोक्तमिति;** "तदच्युतो नास्ति परं ततोऽन्यत्" इति पूर्वार्धोक्तं परमात्मात्मकत्वं सर्वप्रकरणसाधारणम् । इदं तु प्रकरणासाधारणार्थोपसंहारपरमित्यर्थः । विपक्षे बाधकमाह—**अन्यथेति ।** अहमादिशब्दा उपलक्षणपरा इत्यत्राह—**अहंत्वमिति । अनेनोपलक्ष्येणे**त्यन्वयः । यद्वा अनेन निर्देशेन फलितात् सामानाधिकरण्यादित्यर्थः । आत्मस्वरूपसमानाधिकरणसर्वशब्दसजातीयत्वादहंत्वमोश्चात्मस्वरूपशब्दसामानाधिकरण्यं फलितम् । तच्च त्वन्मते न युक्तम् ; न हि शाखाचन्द्रशब्दयोः सामानाधिकरण्यमित्यर्थः । तत्याजेत्यस्यार्थमाह—**सोऽपीति ।** जीवस्वरूपविषयत्वं तत्राप्याकारैक्यपरत्वं च कुतो निर्णीयत इति पृच्छति—**कुत इति ।** उत्तरमाह—**देहेति ।** तच्च कुत इत्यत्राह—**तच्चेति ।** नित्यानामात्मनां बहुत्वश्रुतेः, बद्धमुक्तशिष्याचार्यसुखादिव्यवस्थाभिः, देवत्वादिनिषेधकण्ठोक्त्या, मुक्तौ साम्यवचनात्, उदाहृतवचःसामञ्जस्यात्, 'एको व्रीहिः' इत्यादिप्रयोगाच्च जीवप्रकरणं प्रकाराद्वैतपरम् । सुखादिव्यवस्थानान्न सुखादिस्वरूपभेदः । नाप्याश्रयभेदः, देहविगमाद्यभावेऽपि तदेकाश्रयत्वप्रतिसन्धानात् । ब्रह्मप्रकरणेषु तु सामानाधिकरण्येनैक्यप्रतिपादनात् तस्य प्रकारभेदेनैकप्रकारिनिष्ठत्वात् "एकः सन् बहुधा" इति प्रकार्येकत्वकण्ठोक्तेरैक्यविधिशेषस्य भेदनिषेधस्य प्रकारिभेदविषयत्वात् गोबलीवर्दनयाच्च प्रकार्यद्वैतमेवेति भावः ।

### नयप्रकाशिका

**न च** "सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्" इत्यनेनात्माद्वैतद्वैतयोरभ्रान्तभ्रान्तत्वे प्रतिपाद्येते इति वाच्यम्, पूर्वोक्तार्थोपसंहाररूपत्वात् । **सोऽहम् ;** पूर्वोक्तज्ञानैकाकारोऽहम् । **सर्वम्;** सर्वदेहेषु स्थितजीवात्मनोऽपीत्युच्यते । देवाद्याकारभेदेनात्मसु भेदधीर्मोह इति तस्यार्थः । अन्यथा देहातिरिक्तात्मोपदेशे 'अहम्' इत्यादिभेदनिर्देशवैयर्थ्यम् । न चोपलक्षणतया भेदव्यपदेश इति वाच्यम्, 'सोऽहम्' इत्यादिशब्दानामुप-

लक्ष्यात्मस्वरूपसामानाधिकरण्यनिर्देशात्तदर्थानामुपलक्ष्यगतत्वात् । न चाहमादिशब्दानां स्व-रूपलक्षकत्वं, लक्षणाया एव दोषत्वात् ।

श्रीभाष्यम्

"विभेदजनकेऽज्ञाने" इति च नात्मस्वरूपैक्यपरम्; नापि जीवपरयोः । आत्मस्वरूपैक्यमुक्तरीत्या निषिद्धम् । जीवपरयोरपि स्वरूपैक्यं देहात्मनोरिव न संभवति । तथा च श्रुतिः—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥"
"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥"
"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" इत्याद्या ।

अस्मिन्नपि शास्त्रे—

"स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥"
"समस्तकल्याणगुणात्मकोऽसौ"
"परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।"
"अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥"

इति भेदव्यपदेशात् । "उभयेपिऽहि भेदेनैनमधीयते" "भेद-व्यपदेशाच्चान्यः" "अधिकं तु भेदनिर्देशात्" इत्यादिसूत्रेषु च "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" "प्राज्ञेनात्मना संपरिष्वक्तः" "प्राज्ञेनात्मनाऽन्वारूढः" इत्यादि-भिरुभयोरन्योन्यप्रत्यनीकाकारेण स्वरूपनिर्णयात् ।

**श्रुतप्रकाशिका**

अथ शास्त्रोपसंहारगतस्य "विभेदजनके" इत्यादिश्लोकस्यार्थं वक्ष्यन्नर्थान्तरपरत्वं व्युदस्यति—**विभेदेत्यादिना**। प्रथमं किमात्मस्वरूपैक्यपरम्? उत जीवपरैक्यपरम्? इति विकल्प्य दूष्यते। अत्र चशब्दाभावादात्मब्रह्मशब्दयोः सामानाधिकरण्यं संभावितम्। तथा सति ब्रह्मशब्दः शुद्धावस्थपरः स्यात्। एवं शुद्धावस्थात् जीवस्य भेदो नास्तीति जीवस्वरूपैक्यमुक्तं स्यात्। अतः शङ्कास्पदीभूतमात्मैक्यपरत्वं दूषयति—**आत्मेति। उक्तरीत्या;** श्रुतिस्मृत्यर्थापत्तिलौकिकार्थापत्त्यादिभिरित्यर्थः। द्वितीयं पक्षं दूषयति—**जीवेति। देहात्मनोरिवेति;** विरुद्धधर्मत्वादित्यर्थः। प्रत्यक्त्वपराक्त्वजडत्वाजडत्वनित्यत्वपरिणामित्वादिभिर्विरुद्धधर्मैर्यथा देहात्मनोर्भेदः, तथा जीवपरयोरपि हेयार्हत्वोभयलिङ्गत्वनियाम्यत्वनियन्तृत्वादिविरुद्धधर्मैरैक्यं हि नोपपद्यते। विरुद्धधर्मत्वे प्रमाणमाह—**तथाचेति। तथा;** विरुद्धधर्म इत्यर्थः। **चो** ह्यर्थः, हेतुवाची; वक्ष्यमाणहेतूनां पञ्चमी प्रयुक्ता; तत्स्थानीयोऽयं चशब्दः। **समानं वृक्षम्;** शरीरम्। **पिप्पलम्;** कर्मफलम्। **अभिचाकशीति;** स्वयमनश्नत्वादाशयितृत्वाच्च भृशं भातीत्यर्थः। ननु—कथमस्य मन्त्रस्य जीवपरमात्मभेदपरत्वम्? अन्तःकरणजीवपरो ह्ययं मन्त्रः, पैङ्गीरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात्। यथा "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति सत्त्वम्; "अनश्नन्नन्यो अभिचाकशीति" इति ज्ञः। "तावेतौ सत्त्वक्षेत्रज्ञाविति" "स्वाद्वत्ति" इत्यन्तेन सत्त्वमुक्तम्। "अभिचाकशीति" इत्यन्तेन वाक्येनानश्नन्नन्यो ज्ञ इति क्षेत्रज्ञोऽभिपश्यतीत्युक्तमिति व्याख्यातत्वमवगम्यते। न च सत्त्वशब्दो जीवपरः, क्षेत्रज्ञशब्दः परमात्मपर इति वाच्यम्; सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात्। "तदेतत्सत्त्वं येन स्वप्नं पश्यति; अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः; तावेतौ सत्त्वक्षेत्रज्ञौ" इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवपरत्वेन तत्रैव व्याख्यातत्वाच्च। "येन पश्यति" इति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणम्। स्वप्नद्रष्टृत्वादितरः क्षेत्रज्ञो हि जीवः। अतो "द्वा सुपर्णा" इति मन्त्रोऽयमन्तःकरणजीवपरः, न तु जीवपरमात्मपर इति। उच्यते—न तावज्जीवपरमात्मपरत्वमस्य मन्त्रस्यापवदितुं शक्यते, अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने "समाने वृक्षे पुरुषो निमग्नः" इत्यनन्तरमन्त्रे जीवपरमात्मनोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च। "समानं वृक्षं परिषस्वजाते" "समाने वृक्षे पुरुषो निमग्नः" इति तयोरैकार्थ्यं हि प्रतीयते।

"समाने वृक्षे" इति मन्त्रे च पुरुषो जीवः, अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्; "शोचति मुह्यमानः" "पश्यति वीतशोकः" इति पदानामस्वारस्यप्रसङ्गाच्च । अन्यश्च परमात्मा; ईशशब्दवाच्यत्वात्, स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च । न केवलमुत्तर-मन्त्रैकार्थ्यात् "द्वा सुपर्णा" इति मन्त्रस्य जीवपरमात्मपरत्वम्; किंतु तस्मिन्नेव "स्वाद्वत्ति" "अनश्नन्नन्यः" इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते । चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादि-वदन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं न संभवति । जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्ग-दशायामेवानश्नत्त्वमपि नोपपद्यते । तर्हि पैङ्गीरहस्यब्राह्मणस्य कोऽर्थः? उच्यते—सत्त्वं बद्धजीवः "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति नैघण्टुकपाठाज्जन्तुपरत्वावगतेः । जन्तुश्चेतनः, "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इति पाठात्;

"न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥"

इति प्रयोगात्, "वन्यान्विनेष्यन्निव दुष्टसत्त्वान्" इत्यर्वाचीनप्रयोगाच्च । क्षेत्रज्ञशब्दश्चात्र परमात्मपरः; अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः; "विष्णो-र्नामसहस्रं मे" इत्युपक्रम्य "क्षेत्रज्ञोऽक्षर एव च" इति प्रयोगात्, 'क्षेत्रं जानाति' इत्यवय-वार्थस्य तस्मिन्नेव पुष्कलत्वाच्च । मोक्षधर्मे—

"ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥"

"सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ।"

"विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥
क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥"

इति प्रयोगात् ।

"योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।
यः करोति च कर्माणि स भूतात्मेति चोच्यते ॥"

इति प्रयोगाच्च । "येन स्वप्नं पश्यति" इत्यत्र येनेतीत्थंभावे तृतीया; येन विशिष्टः पर-

मात्मा स्वप्नं पश्यतीत्युच्यते । ततश्च "काठिन्यवान् यो बिभर्ति" इति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्वं जीवात्मद्वारा परमात्मविशेषणं भवतीति न विरोधः। शारीरशब्दश्च "तस्यैष एव शारीर आत्मा" इतिवत् स्वव्यतिरिक्तसमस्तचिदचिद्वस्तुशरीरके परमात्मन्युपपद्यते । उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च सर्वज्ञस्य तस्यैवोपपद्यते । अतः "द्वा सुपर्णा" इति मन्त्रो जीवपरमात्मपरः । **ऋतं पिबन्ताविति** पानक्रियायां जीवपरयोः प्रयोज्यप्रयोजकभावेनान्वयः । "पिबन्तौ" इति शतृप्रत्ययः कर्मकर्तृमात्रपरः, न तु कर्तृविशेषपरः । तेन प्रयोज्यप्रयोजकौ द्वावपि कर्तृविशेषाविति तावविशेषेण क्रोडीकृतौ भवतः । अन्यथा "अनश्नन्" इत्यादिविरोधः स्यात् । यद्वा "छत्रिणो गच्छन्ति" इतिवदजहल्लक्षणा । सुकृतस्य ऋतं फलम् । यद्वा सुकृतस्य लोक इत्यन्वयः । तदा ऋतं सुकृतं तत्फलमुच्यते लक्षणया, "एवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इत्यत्र "एवमनृतादात्मानं जुगुप्सेत्" इति पुण्यप्रतियोगित्वेनानृतशब्दप्रयोगात् । **गुहाम्**; हृदयगुहाम् । **परमे परार्ध्ये** इति लोकविशेषणम् । जीवपरविशेषणं वा; छान्दसत्वाल्लिङ्गव्यत्ययः । **छायातपौ**; अज्ञसर्वज्ञौ । "ज्ञाज्ञौ द्वावजावीशनीशौ" इत्यनेनैकार्थ्यात् । **ब्रह्मविदः**; अध्यात्मविदः । **पञ्चाग्नयः त्रिणाचिकेताश्च** कर्मविशेषनिष्ठाः । ते **वदन्ति**; यथा—

"ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥"

इति । "ऋतं पिबन्तौ" इत्येतद्वैशद्यायाह—**अन्तः प्रविष्ट इति** । इत्याद्या श्रुतिरित्यन्वयः । न केवलं श्रुतिस्वारस्यात्; अस्मिन्नपि प्रबन्धे दृश्यत इत्याह—**अस्मिन्नपीति** । **स सर्वभूते**त्यादिना हेयप्रत्यनीकत्वकल्याणगुणाकरत्वे कथिते । जीवस्य हेयास्पदत्वम् **अविद्ये**त्यादिनोक्तम् । **सर्वगेति** भेदव्यपदेशादिति पूर्वेण संबन्धः । न तु सूत्रोपादानम्; उपर्यस्य सूत्रस्य विषयवाक्यानुपादानात्, उदाहृतपुराणवचनानां हेतुत्वकथनसापेक्षत्वाच्च । श्रुतिवाक्यस्य हेतुत्वं हि चशब्देनोक्तम् । **उभयेऽपी**त्याद्युपात्तसूत्रद्वयस्य विषयवाक्यम्—**य आत्मनीति** । **अधिकं त्वि**त्यादिसूत्रस्य विषयवाक्यम्—**प्राज्ञेनेति** । सूत्रेष्वाभिः श्रुतिभिरेवमर्थनिर्णयादित्यर्थः ।

### भावप्रकाशिका

**प्रथमं किमात्मस्वरूपैक्यपरमिति**; मुक्तपरैक्यं पश्चाद् दूषयिष्यत इति प्रथम-

शब्दाभिप्रायः । **द्वा सुपर्णाविति;** सुपर्णसाम्यात् सुपर्णौ । **सयुजौ ;** सर्वदा सह वर्तमानौ । **सत्त्वं ह्यन्तःकरणमिति** छेदः । **येनेतीत्थंभावे तृतीयेति;** उक्तयुक्तिबलात् दुर्बलाप्युपपदविभक्तिः सोढव्येति भावः । **द्वावपि कर्तृविशेषाविति ;** "स्वतन्त्रः कर्ता" "तत्प्रयोजको हेतुश्च" इति द्वयोरपि कर्तृसंज्ञाविधानादिति भावः । **चशब्देनोक्तमिति ; तथाच श्रुतिरित्यत्रेति** भावः । तच्च तत्र सुस्पष्टम् ।

श्रुतप्रदीपिका

**विभेदेत्यादि** । अथ शास्त्रोपसंहारग्रन्थं व्याचिख्यासुः किमयमात्मस्वरूपैक्यपरः ? उत जीवैक्यपरः ? इति विकल्पे चशब्दाभावात् सामानाधिकरण्यशङ्कयोदितं प्रथमं शिरः प्रतिवक्ति—**आत्मेति** । उक्तरीत्या श्रुत्यर्थापत्त्यादिभिर्द्वितीयं दूषयति—**जीवेति** । **देहात्मनोरिवेति ;** नियन्तृत्वनियाम्यत्वादिविरुद्धधर्मैरिति भावः । तत्र मानमाह— **तथेति**। **चो** ह्यर्थः पञ्चमीस्थाने । ननु "द्वा सुपर्णा" इति मन्त्रोऽन्तःकरणं जीवं च वदति । "तयोरन्यः पिप्पलं स्वाद्वत्ति" इति सत्त्वम्, "अनश्नन्न्योऽभिचाकशीति" इत्यनश्नन्नन्योऽभिपश्यति ज्ञः । "तावेतौ सत्त्वक्षेत्रज्ञौ" इति पैङ्गीश्रुत्यास्य मन्त्रस्य तत्परत्वेन व्याख्यातत्वात् । न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरविषयौ, तद्विषयत्वाप्रसिद्धेः ; तत्रैव "एतत् सत्त्वं येन स्वप्नं पश्यति, अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ" इति व्याख्यातत्वाच्च । नैवम् ; "समाने वृक्षे" इत्यनन्तरमन्त्रेण "द्वा सुपर्णा" इति मन्त्रस्यैकार्थतया समानवृक्षशब्देन प्रत्यभिज्ञातत्वात् । स हि मन्त्रो जीवपरविषयः । अन्यथा "पुरुषः शोचति मुह्यमानः, पश्यतीशं वीतशोकः" इति पदविरोधात् । इहापि "अत्ति अनश्नन्" इत्युक्तम् । न हि चक्षुरादेः करणस्य द्रष्टृत्वादिवदन्तःकरणस्यात्तृत्वं युक्तम् । पैङ्गीश्रुतौ तु सत्त्वशब्दो जीवपरः । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति जन्तुवाचित्वोक्तेः । जन्तुर्व्यष्टिजीवः, "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इत्युक्तेः । क्षेत्रज्ञशब्दः परवाची, अवयवार्थयोगात् "क्षेत्रज्ञोऽक्षर एव च" इति श्रीमन्नामसहस्रप्रयोगाच्च । **येन स्वप्नं पश्यति ;** येनेतीत्थंभूते तृतीया । परः स्वप्नं पश्यतीत्यर्थः । भूतात्मनः परस्य काठिन्यवत् जीवविशिष्टस्य सद्वारकं स्वप्नद्रष्टृत्वम् । शारीरः; जगच्छरीरः परमात्मैव शारीरः, "तस्यैष एव शारीर आत्मा" इति श्रुतेः । अतो "द्वा सुपर्णा" इति मन्त्रो जीवपरविषयः । "पिबन्तौ" इति परमा-

त्मनः प्रयोजकतया कर्तृत्वम् । छायातपौ; अज्ञसर्वज्ञौ । **ब्रह्मेत्यादि** ; उभयभागनिष्ठा इति भावः । " ये च वेदविदः " इत्यादिवत् प्रयोजककर्तृत्ववैशद्यायाह—**अन्तरिति** । न परं श्रुतिविरोधादतदर्थत्वम् ; प्रबलपौर्वापर्यविरोधाच्चेत्याह—**अस्मिन्निति** । ब्रह्मण उभयलिङ्गत्वायोपात्तं " स सर्व " इत्यादि । जीवे हेयान्वयं दर्शयति—**अविद्येति** । **इति भेदव्यपदेशादिति** पूर्वेणान्वयः । विषयवाक्यानुपादानान्न सूत्रत्वशङ्का, हेतुत्वनिर्देशस्यापेक्षितत्वाच्च । निर्णयादिति हि वक्ष्यते । **उभयेत्यादि**सूत्रद्वयविषयवाक्यं **य आत्मनीति** । **अधिकं** त्वित्यस्य विषयः—**प्राज्ञेनेति** । एतेषु सूत्रेषु एभिर्वाक्यैरेव निर्णयादित्यर्थः ।

**नयप्रकाशिका**

न च

" विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।

आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ "

इत्यनेन जीवपरयोरैक्यं प्रतिपाद्यत इति वाच्यम्, " द्वा सुपर्णा " इत्यादिश्रुतिविरोधात् । तत्रापि " स सर्वभूतप्रकृतिम् " इत्यादौ परमात्मनः प्रकृतितद्विकारजीवेभ्यो भेदप्रतीतेश्च, " उभयेऽपि हि भेदेन " इत्यादौ सूत्रकारैरेव तद्भेदस्य साधितत्वाच्च ।

**श्रीभाष्यम्**

नापि साधनानुष्ठानेन निर्मुक्ताविद्यस्य परेण स्वरूपैक्यसंभवः, अविद्याश्रयत्वयोग्यस्य तदनर्हत्वासंभवात् । यथोक्तम्—

" परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।

मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः ॥"

इति । मुक्तस्य तु तद्धर्मतापत्तिरेवेति भगवद्गीतासूक्तम्—

" इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।

सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥"

इति । इहापि—

" आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुने ।

विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा ॥"

इति। आत्मभावम्; आत्मनः स्वभावम्; न ह्याकर्षकस्वरूपापत्तिराकृष्यमाणस्य। वक्ष्यति च—"जगद्व्यापारवर्जम्" "प्रकरणादसंहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" "मुक्तोपसृप्यव्यपदेशाच्च" इति। वृत्तिरपि—"जगद्व्यापारवर्जं समानो ज्योतिषा" इति। द्रमिडभाष्यकारश्च—"देवतासायुज्यादशरीरस्यापि देवतावत् सर्वार्थसिद्धिः स्यात्" इत्याह। श्रुतयश्च—'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति'' "ब्रह्मविदाप्नोति परम्" "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चिता" "एतमानन्दमयमात्मानमुपसंक्रम्य, इमान् लोकान् कामान्नी कामरूप्यनुसंचरन्" "स तत्र पर्येति" "रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवति" "यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति नामरूपे विहाय।
तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥"
"तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"
इत्याद्याः।

श्रुतप्रकाशिका

एवमुपनिषत्पुराणसूत्रैर्जीवपरयोर्विरुद्धधर्मत्वमुपपादितम्; अथ "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवाक्यानि हृदि निधायास्यान्यथासिद्धिं शङ्कते—**नापीति**। तद् दूषयति—**अविद्याश्रयत्वेति**। **अविद्याश्रयत्वयोग्यत्वम्**; अविद्याशब्दः समस्तहेयप्रदर्शनार्थः। आश्रयत्वशब्दः संबन्धपरः। हेयसंबन्धात्यन्ताभावानधिकरणत्वं तद्योग्यत्वम्। हेयसंबन्धात्यन्ताभावाधिकरणत्वं तदनर्हत्वम्। "अनश्नन्नन्यः" इति श्रुत्या परमात्मनस्तदनर्हत्वं सिद्धम्। देशकालसंनिकर्षे सत्यपि तदस्पर्शो हि स्वभावसंनिकर्षाभावात्। स्वभावसंनिकर्षाभाव एव ह्ययोग्यत्वम्; यथा नभसः क्लेदनदहनाद्यनर्हत्वम्। अतो हेयार्हतदनर्हयोर्हेयापगमेऽपि न स्वरूपैक्यं संभवति। निग्राह्यस्य पश्चादनुगृहीतस्य हि निग्राह्यत्वापगमेऽपि निग्रहानुग्रहकर्त्रा पुरुषेण नैकत्वसंभव इत्यर्थः। कारागृहविनिर्मुक्तस्य नियन्त्रा नरपतिना

स्वरूपैक्यं न संभवतीत्यर्थः। अस्मिन्नर्थे पुराणवचनमाह—**यथोक्तमिति**। योगशब्द ऐक्यपरः। अन्यथा 'अन्यद् द्रव्यं हि तद्द्रव्यतां नैति' इति प्रतिक्षेपानुपपत्तेः। ननु "मिथ्यैतत्" इत्युत्तरत्रान्वयः; परमात्मात्मनोर्योगः परमार्थः, अन्यद् द्रव्यं हि तद्द्रव्यतां नैतीत्येतन्मिथ्येत्यर्थ इति चेत्—नैवम्, अन्यस्यान्यद्रव्यतानापत्तेः सत्यत्वात्। इतरथा जडाजडयोस्तादात्म्यप्रसङ्गः। "ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव" इतिवत् "इष्यते" इत्यनेन पूर्वार्धोक्तार्थस्य परमतत्वद्योतनात्। अन्यथा "इष्यते" इति पदवैयर्थ्यात्। किंच "परमार्थस्तु भूपाल संक्षेपाच्छ्रूयताम्" इति वक्ष्यमाणपक्षव्यतिरिक्त-पक्षाणां निराकरणपरत्वाच्च प्रकरणस्य, एतच्छ्लोकपूर्वार्धोक्तैक्यसमर्थनपरत्वमुत्तरार्धस्य नोपपद्यते। "धर्माय त्यजते" इत्यादिग्रन्थैस्तत्तदर्थानां परमार्थत्वं हि निरस्यते। स्वतः प्रकृतार्थे स्वरसस्यैतच्छब्दस्य प्रकृतार्थे सत्यपि वक्ष्यमाणपरत्वाश्रयणमप्ययुक्तम्। किंच 'अन्यद् द्रव्यं तद्द्रव्यतां नैतीति यत् एतन्मिथ्या' इति हि तदानीमर्थः; तथा सति यतःशब्दस्वारस्यभङ्गः। यतःशब्दस्य हि हेतुपरत्वं स्वरससिद्धम्, न तु यच्छब्दवत् प्रकृतार्थशरीरमात्रपरामर्शित्वम्। 'अन्यद् द्रव्यं तद्द्रव्यतां नैतीत्येतन्मिथ्येति यतः, तत ऐक्यं परमार्थः' इत्यन्वये इतिशब्दद्वयाध्याहारप्रसङ्गः। स चानध्याहारेण निर्वाहे सति नोपपद्यते। यद्युच्येत—'पूर्वं पृथग्भूतयोः परमात्मात्मनोरैक्यं परमार्थ इतीष्यत इति चेत् मिथ्यैतत्; अन्यद् द्रव्यं हि तद्द्रव्यतां नैतीति यतस्तस्मात्पूर्वमपि परमात्मात्मनोर्भेदो नास्ति' इति—नैवम्, 'पूर्वं भ्रान्त्या पृथग्भूतयोः' इत्यस्याश्रुतत्वेनाध्याहारप्रसङ्गात्। स चानध्याहारेण निर्वाहे संभवति नोपपद्यते। किंच 'तस्मात्पूर्वमपि भेदो नास्ति' इत्यश्रुतवाक्यान्तराध्याहारेण वाक्यस्य पूरणीयत्वं स्यात्। तच्च तन्निरपेक्षनिर्वाहे संभवति नोपपद्यते। 'तस्मात्प्रागपि भेदो नास्ति' इति वाक्यं नाध्याहर्तव्यम्, पूर्वं भिन्नयोः परमात्मात्मनोः पश्चादभेद इति पक्षनिराकरणमात्र-परत्वाद् ग्रन्थस्येति चेत्—किं तेन प्रयोजनम्? पूर्वमप्यैक्यसिद्धिरिति चेत्—न; पूर्वं पृथग्भूतयोः पश्चादैक्यायोगेऽभिहिते सति पश्चादपि भेदसिद्धेः। अतः स्वरससिद्ध एवार्थः स्वीकार्यः। अथ "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवाक्यनिर्वाहं बहुश्रुत्यन्तराविरोधेन वक्ष्यन्मुक्तस्य साम्यापत्तिमाह—**मुक्तस्येति**। तत्रैक्यश्रुतेः प्रतिकूलार्थसाम्यश्रुतिर्दर्शयिष्यत इति मत्वा व्याख्येयतया प्रकृतस्योपबृंहणवचनस्य सजातीयं पराभिमतार्थप्रतिकूलार्थं स्मृति-वचनं दर्शयति—**इदमिति**। मुक्तपरत्ववैशद्यायोपादानम्—**सर्गेऽपीति**। न केवलं

शास्त्रान्तरे; अत्रापि मुक्तस्य भेदप्रतिपत्तिरस्तीत्याह—**इहापीति** । **इह**; योगप्रकरणे संक्षेपकथनारम्भ इत्यर्थः । "संक्षेपविस्तराभ्यां तु किमन्यत्क्रियतां तव" इति ह्युक्तम् । आत्मनः शक्त्या विकार्यमवस्थान्तरं नेयं ध्यायिनमेनं तद्ब्रह्म आत्मभावं नयति, आत्मनः शक्त्या विकार्यं लोहमाकर्षको यथेत्यन्वयः । **आकर्षकः**, वह्निः, दीपमाकर्षतीति व्युत्पत्त्या ।

> "यथाग्निरुद्धतशिखः कक्षं दहति सानिलः ।
> तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥"

इति ह्युत्तरत्र वक्ष्यते । श्रीविष्णुधर्मे च—"यथाग्निसङ्गात्कनकमपदोषं प्रजायते" इति । सोऽग्निः आत्मभावम् आत्मनः स्वभावं निर्दोषत्वं लोहं नयति तथेत्यर्थः । अयं सम्यगर्थः । यद्वा आत्मशब्दः स्ववाची सन् अन्ययोगव्यवच्छेदकपरः । यथाग्निर्लोहमात्मभावं स्वभावं स्वतः सिद्धं रूपं नयति तद्वदित्यर्थः । यद्वा आकर्षकोऽयस्कान्तो लोहमात्मभावं नयति स्वव्यापारं लोहं कारयति स्वमनुकारयति "स्थितः स्थितामुच्चलितः प्रयाताम्" इतिवदयस्कान्तस्तिष्ठति चेत् लोहस्तिष्ठति, धावति चेत्तमनुधावति, एवं "कामान्नी कामरूप्यनुसंचरन्" "सर्वेषु लोकेषु कामचारो भवति" इत्यादिश्रुत्यनुगुणं परमात्मा उपासकं स्वचेष्टामनुकारयति समानचेष्टितं करोतीत्यर्थः । यद्वा आत्मशब्दः स्ववाची निष्कृष्टस्वरूपपरः; उपासकं परमात्मा आत्मभावं नयति, प्रकृतिसंबन्धराहित्येन शुद्धतां नयति, केवलतां नयति; यथा अयस्कान्तो दारुनिमग्नं लोहं तस्माद्दारुण उद्धृत्य केवलतां नयति तद्वदित्यर्थः । यद्वा "भू प्राप्तावात्मनेपदी" इति वचनात् भावशब्दः प्राप्तिवचनः; आत्मप्राप्तिं नयति; यथा लोहमयस्कान्तः स्वप्राप्तिं नयतीत्यर्थः । 'प्राप्तिं नयति' इति निर्देशः 'ओदनपाकं पचति' इतिवत् । जीवस्य परमात्मशक्त्या विकार्यत्वं युक्तम्, जीवस्य बन्धमोक्षयोर्ज्ञानसंकोचविकासरूपविकारार्हत्वात् । अत्र श्लोके तादात्म्यप्रतिपत्त्यभावं दर्शयति—**न हीति** । आकर्षकस्वरूपापत्तिराकृष्यमाणस्येति निर्देश उक्तसर्वार्थसाधारणः; अग्निसुवर्णदृष्टान्तविवक्षायामाकृष्यमाणशब्दो विकार्यपरः । **समानो ज्योतिषेति**; ज्योतिः; परं ब्रह्म, "परं ज्योतिरुपसंपद्य" "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति श्रुतेः । **द्रमिडेति; अशरीरः**; मुक्तः; कर्मकृतशरीराभावात् । **सिद्धिः**; अनुभवः । मुक्तौ जीवपरयोर्भेदश्रुतीर्दर्शयति—**श्रुतयश्चेति** । **आप्नोति**; परमनुभवतीत्यर्थः । एतद्विवरणरूपं वाक्यं दर्शयति—**सोऽश्नुत इति** । **अनुसंचरन्नि**त्यनेन भेदो दर्शितः । **रसो वै स** इत्यनेन

साम्यमानन्दित्वाकारेणेत्युक्तं भवति। परमसाम्योपयोगिनीं वैधर्म्यनिवृत्तिं दर्शयति—**यथा नद्य इति।** नदीनां नदीत्वाकारप्रहाणेन समुद्रसंसर्गात् वैधर्म्यप्रहाणेन संसर्गो दृष्टान्ते उपजीव्यः। प्राकृतनामरूपप्रहाणपूर्विका हि परमात्मप्राप्तिः। न च तावता भेदनिवृत्तिः, "पुरुषमुपैति" इति कर्मकर्तृभावावगमात्। साम्यापत्तिं दर्शयति—**तथेति।**

ननु—"परमं साम्यमुपैति" इत्यैक्यापत्तिरुच्यते, समशब्दस्य समानशब्दपर्यायत्वात्, समानशब्दवदैक्ये प्रयोगाच्च; समशब्दस्यैक्ये प्रयोगो दृश्यते 'समकालवर्ती' इत्यादिषु; तथा समशब्दपर्यायतयावगतसमानशब्दोऽप्यैक्ये प्रयुज्यते—"समानं वृक्षं परिषस्वजाते" इति "एकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्" इति च। ऐकाधिकरण्यं हि सामानाधिकरण्यम्, एकस्मिन्नर्थ इत्युक्तेः। तत्पर्यायश्च समशब्दः। यद्यपि सादृश्यस्यापि समशब्दो वाचकः, तथापि मुक्तिवाक्यस्थसाम्यशब्द ऐक्यपरः, "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुत्यन्तरैकार्थ्यात्, लयसायुज्यशब्दश्रवणात्, नदीसमुद्रघटाकाशमहाकाशादिदृष्टान्तश्रवणाच्च। "साधर्म्यमागताः" इति स्मृतिस्तु सगुणप्राप्तिविषया, अन्यथा प्रत्यक्षश्रुतिविरोधे स्वरूपैक्यविषयबहुस्मृतिविरोधे च तद्दौर्बल्यात्। अत ऐक्यापत्तिरेवानेन वाक्येन प्रतिपादिता। ऐक्यस्य च पारम्यं नाम पुनर्भेदभ्रमप्ररोहविरहितत्वमिति।

अत्रोच्यते—अत्र साम्यशब्दः सादृश्यमेवाभिधत्ते, न त्वैक्यम्; ऐक्यस्य मुख्यार्थत्वेऽभ्युपगतेऽपि स्वारस्याभावात्। सादृश्य एव हि समशब्दस्य प्रसिद्धिप्राचुर्यम्। तस्य चापवादाभावे सत्यस्वरसार्थस्वीकारोऽनुपपन्नः। अपवादहेतवश्च त्वदुक्ता अनन्तरमेव परिह्रियन्ते। न च समादिशब्दानामैक्यं मुख्यार्थः। एकत्वविवक्षायाम् 'एको घटः' इत्यादौ 'समो घटः' इत्यादिप्रयोगाभावात्। मुख्यत्वे ह्येकशब्दस्येव प्रतियोगिनिरपेक्षप्रयोगः प्राप्नोति। यस्तु 'सामानाधिकरण्यं, समकालवर्ती' इत्यादिषु समादिशब्दप्रयोगः, स तु साधारण्यार्थः; न त्वैक्यार्थः। साधारण्येऽपि प्रयोगो न मुख्यः, प्रयोगेऽन्यथासिद्धे शक्तिकल्पनानुपपत्तेः। तथाहि—अनेकप्रतियोगिकैकरूपसंबन्धवत्त्वं साधारण्यम्। यथा धनं देवदत्तयज्ञदत्तौ प्रति शेषत्वेन संबन्धितया साधारणम्, तयोश्च धनं प्रति शेषितयास्ते सादृश्यम्, ताभ्यां संबन्धि धनम्; तथा नीलत्वोत्पलत्वे अपेक्ष्याधारतया संबन्धि द्रव्यं साधारणम्, तयोश्च द्रव्यं प्रत्याधेयतयास्ते सादृश्यम्, ताभ्यां संबन्धि द्रव्यम्; तथा द्वाभ्यां संयोगित्वेनावच्छेद्यावच्छेदकभावेन वा संबन्धी कालस्तयोः साधारणः, तत्कालसंबन्धित्वाकारेण तयोरपि

सादृश्यमस्ति, ताभ्यां संबन्धी कालः । अतो मिथः सदृशपदार्थसंबन्धितया द्रव्यकालादिषु समसमानादिशब्दा लक्षणया वर्तन्त इति न मुख्याः । अत ऐक्ये प्रयोगाभावात् समशब्द-स्यैक्यं न मुख्यार्थः । मुख्यार्थे संभवति लाक्षणिकार्थस्वीकारो नोपपद्यते । अतः साम्यशब्दः सादृश्यमेवाभिधत्ते । मुक्तात्मगोचरसामानाधिकरण्योपपत्तिश्चानन्तरमेव भाष्ये वक्ष्यते । यदुक्तं सायुज्यशब्देन मुक्तावभेद इति, तदयुक्तम्; सायुज्यशब्दस्य समानगुणयोगवाचि-त्वात् । युज्यत इति युक्शब्दो गुणपरः । धर्मिणि हि गुणः संबन्ध्यते । समानगुणकः सयुक्; तस्य भावः सायुज्यमिति हि व्युत्पत्तिः । प्रयोगविरोधाच्च नैक्यं सायुज्यम्—"एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोति" इति बह्वीभिर्देवताभि-रेकस्य सायुज्यापत्तिः श्रूयते । न ह्येकस्य निरवयवस्याच्छेद्यस्यात्मनो बह्वीभिर्देवताभिरैक्यं संभवति । क्रमभावित्वादविरोध इति चेत्—तर्हि अग्निनैकीभूतस्य वरुणसायुज्यापत्तावग्नित्वो-पाधेः प्रहाणादग्नेर्देवताया अभावः स्यात् । अग्नित्वोपाधौ स्थिते वरुणैक्यापत्त्यनुपपत्तिः । औपाधिकभेदप्रहाणं ह्यैक्यापत्तिः; न तु पूर्वमविद्यमानमैक्यमुत्पद्यते; अग्नौ स्थित एव ततः पृथग्भूतस्य वरुणसायुज्यमिति चेत्, एकीभूतस्य पृथग्भावो ह्युपाधितः स्यात् । उपाधिश्च देहान्तःकरणादिः । तत्संबन्धस्याहेतुकत्वेऽतिप्रसङ्गाद्धेतुर्वाच्यः । कर्मैव हेतुरिति चेत्, अग्नि-सायुज्यापत्तिदशायां तत्कर्म नष्टं, न वा? नष्टं चेत्पुनरुपाध्यनुदयेनाग्नितः पृथग्भावायोगा-दग्नित्वोपाधेश्चाप्रहाणात् पूर्वोपाधिप्रहाणरूपवरुणसायुज्यापत्तिः क्रमेणापि नोपपद्यते । अनष्टं चेत्तत्कृतोपाधेरनष्टत्वान्नाग्निनैक्यापत्तिसंभवः, औपाधिकभेदस्य तत्प्रहाणरूपैक्यापत्तिविरोधि-त्वात् । अनष्टमपि तत्कर्माग्निसायुज्यापत्तिदशायां ततो भेदकमुपाधिं न जनयति, कर्मणां कार्यकारित्वस्य कालविशेषनियतत्वादिति चेत्, तथापि व्यवस्थितकर्मविशेषपरिष्वक्तस्य जीवस्य तत्कर्मापरिष्वक्तादग्नितस्तदेव कर्म भेदकमिति नाग्निनैक्यापत्तिरुपपन्ना । किंच पृथिव्यैकीभूतपृथग्भूतघटस्येवाग्निनैकीभूतपृथग्भूतजीवस्याजत्वनित्यत्वानुपपत्तिश्च । अतो भेदे स्थित एवाग्न्यादिसायुज्यम् । समानलोकतासाहचर्याच्च नैक्यं सायुज्यम् । न ह्येकस्य स्वेन समानलोकत्वसंभवः । अतः समानलोकत्ववद्भेदे सिद्ध एव सायुज्यं भवति । समान-लोकताप्राप्त्यनन्तरं सायुज्यापत्तिः; न तु युगपदेव; अतस्तयोरविरोध इति चेत्—न; "सायुज्यं सार्ष्टितां समानलोकताम्" इति सायुज्यस्य पूर्वश्रुतत्वात् । अर्थक्रमेण पाठक्रम-बाध इति चेत्—न, अवयवशक्त्युपस्थापितार्थस्य पाठक्रमानुगुणत्वात् अर्थान्तरकल्पनस्या-

हेतुकत्वाच्च । यदि पाठक्रमबाधार्थं सायुज्यशब्दे ऐक्यापत्तिलक्षणार्थविषया रूढिशक्तिः कल्प्यते, तदान्योन्याश्रयः स्यात्—सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चये पाठक्रमबाधः, पाठक्रमबाधे सति सायुज्यस्यैक्यापत्तिलक्षणत्वनिश्चय इति । "एतेषामेव सलोकतां सायुज्यमश्नुते" इति वाक्यात् पूर्वोदाहृतवाक्यस्थक्रमबाध इति चेत्—न; विरुद्धार्थविषयाया रूढिशक्तेरक्लृप्ततया विरोधास्फुरणात् । किंच "अग्नेर्वा एतानि नामधेयानि । अग्नेरेव सायुज्यं सलोकतामाप्नोति । वायोरेव, इन्द्रस्यैव, बृहस्पतेरेव, प्रजापतेरेव, ब्रह्मण एव सायुज्यं सलोकतामाप्नोति" इति भूयसां वाक्यानां बलीयस्त्वात्त्वदुक्तक्रम एव बाधः । किंच "एतेषामेव सलोकतां सायुज्यमश्नुते" "अग्नेरेव सायुज्यं सलोकतामाप्नोति" इत्यादिवाक्यानि कर्मविधिशेषार्थवादरूपाणि । कर्मफलत्वाच्चाग्न्यादित्यादिदेवतासायुज्यमनित्यम् । अतः कर्मफलावसानेऽग्न्यादिभ्यस्तत्सायुज्यं प्राप्तानां पृथग्भावस्यावर्जनीयत्वादा मोक्षाज्जीवभेदस्थितेर्भवतामपीष्टत्वादग्न्यादिसायुज्यदशायामपि भेदस्थितिरवर्जनीया । अग्न्यादिसायुज्यगतानां ततः पृथग्भावः पुनरप्युपाधित इति चेत्, दत्तमुत्तरम् । न चाग्न्यादिसायुज्योक्तिरर्थवादत्वादनादरणीयेति वाच्यम्, वेदान्तिभिरर्थवादानां प्रतीयमानार्थे प्रामाण्याभ्युपगमात् । अतो न सायुज्यमैक्यम्; अपितु समानगुणयोग एव। लयोऽपि न स्वरूपैक्यम्, लयशब्दस्य तदर्थत्वाभावात्; प्रयोगानुगुणं शब्दार्थव्यवस्थापनं कार्यमिति । नित्यनैमित्तिकमहाप्रलयेष्वपि लयशब्दः प्रयुज्यते । न तत्र स्वरूपैक्यापत्तिः । न तावन्नित्यप्रलये, स्वर्गनरकादिगमनागमनशास्त्रात् । नापि नैमित्तिके, पूर्वकल्पप्रलीनानां नारदादीनां प्राग्जन्मप्रत्यभिज्ञानवतामेव पुनरुत्पत्त्यवगमात्; नारदेन पूर्वकल्पे स्वजन्मवृत्तादिकमिह कल्पेऽभिहितमिति पुराणेष्ववगम्यते । नापि महाप्रलये, वैषम्यनैर्घृण्यपरिहाराय जीवनित्यत्वबहुत्वकर्मवासनानां तदानीं विद्यमानतयाभ्युपगन्तव्यत्वात् । तथा—

"प्रकृतिर्या मयाख्याता व्यक्ताव्यक्तस्वरूपिणी ।
पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥"

इति वदता भगवता पराशरेणैव,

"हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥"

"प्रधानकारणीभूता यतो वै सृज्यशक्तयः ।"

" तेषां ये यानि कर्माणि प्राक् सृष्ट्याः प्रतिपेदिरे ॥"

इत्यादिभिस्तदानीं सवासनकर्मान्वितजीवबहुत्वं च दर्शितम्। अत एव भेदप्रहाणं च न लयशब्दार्थः । न च प्राकृतप्रतिसंचरमोक्षविषयप्रलयशब्दयोरर्थवैरूप्यं वक्तुमुचितम् । शक्तिभेदकल्पनाऽमुख्यत्वयोरन्यतरप्रसङ्गात्। न च तत्रापि महाप्रलयादिषु लयशब्दस्यामुख्यत्वं वाच्यम्, बहुष्वर्थेष्वमुख्यत्वाश्रयणादपि मुक्तिमात्रविषयप्रलयशब्दस्यैवामुख्यत्वाश्रयणोपपत्तेः। अतः सर्वप्रयोगानुगुणोऽर्थः स्वीकार्यः । अतो विसदृशावस्थाप्रहाणेन कारणत्वधर्मिणा द्रव्येण विभागस्यापादानभूतेन संश्लेषो लयः। तस्मादैक्यं न लयशब्दार्थः । घटाकाशादिदृष्टान्तोपन्यासश्चौपाधिकवैषम्याभावनिबन्धनः । आकाशादितत्त्वानामपि सांशत्वात्तेषां पञ्चीकरणवचनेन प्रदेशभेदवत्ता हि वेदान्तिभिरभ्युपेत्या। अतो मोक्षविषयासु श्रुतिषु स्वरूपैक्यं कचिदपि हि नावगम्यते । निर्गुणप्राप्तिविषया श्रुतिः काचिदपि नास्तीत्ययमर्थोऽनन्तरमेवोपपाद्यते । अतः 'साधर्म्यस्मरणस्य सगुणप्राप्तिविषयत्वान्न परममोक्षविषयत्वम्; अन्यथा निर्गुणप्राप्तिविषयश्रुतिविरोधे स्मृतेर्दौर्बल्यप्रसङ्गात्' इत्यपि दुरुक्तम् । तस्मात् " यदा पश्यः" इति वाक्ये साम्यशब्दः सादृश्यपरः । येनाकारेण साम्यं, तस्याकारस्य निरवधिकत्वं परमशब्दाभिप्रेतम् । अत इदं वाक्यं परब्रह्मप्राप्तिरूपं परममोक्षं तत्साम्यापत्तिलक्षणमेव प्रतिपादयति ।

**भावप्रकाशिका**

**निराकरणपरत्वाच्च प्रकरणस्येति ;**

" धर्माय त्यज्यते किंनु परमार्थो धनं यदि ।
व्ययश्च क्रियते कस्मात् कामप्राप्त्युपलक्षणः ॥
पुत्रश्चेत्परमार्थः स्यात् सोऽप्यन्यस्य नरेश्वर ।
परार्थभूतः सोऽन्यस्य परमार्थो हि तत्पिता ॥
एवं न परमार्थोऽस्ति जगत्यत्र नराधिप ।
परमार्थो हि कार्याणि कारणानामशेषतः ॥
राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि ।
परमार्था भवन्त्यत्र न भवन्ति च वै ततः ॥
ऋग्यजुःसामनिष्पाद्यं यज्ञकर्म मतं तव ।
परार्थभूतं तत्रापि श्रूयतां गदतो मम ॥

यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया ।
तत्कारणानुगमनाज्जायते नृप मृन्मयम् ॥
एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः ।
निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥
अनाशी परमार्थस्तु प्राज्ञैरभ्युपगम्यते ।
तत्तु नाशि न संदेहो नाशिद्रव्योपपादितम् ॥
तदेवाफलदं कर्म परमार्थो मतस्तव ।
मुक्तिसाधनभूतत्वात् परमार्थो न साधनम् ॥
ध्यानं नैवात्मनो भूप परमार्थार्थशब्दितम् ।
भेदकारिपरेभ्यस्तत्परमार्थो न भेदवान् ॥
परमात्मात्मनोर्योगः परमार्थ इतीष्यते ।
मिथ्यैतदन्यद् द्रव्यं हि नैति तद्द्रव्यतां यतः ॥
तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः ।
परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥
एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः ।''

इति प्रकरणस्येत्यर्थः । **संक्षेपविस्तराभ्यां त्विति ;**

"इत्युक्तस्ते मया योगः खाण्डिक्य परिपृच्छतः ।
संक्षेपविस्तराभ्यां तु किमन्यक्रियतां तव ॥''

इति श्लोकः । **अयं सम्यगर्थ इति ;** "यथाग्निसङ्गात्कनकम्'' इति स्मृत्यानुगुण्यादिति भावः । "आत्मभावं नयत्येनम्'' इत्यत्रात्मशब्दस्य ध्येयब्रह्मपरत्वमाकर्षकपरत्वं चेति प्रथमव्याख्या; आत्मशब्दस्य ध्यातृपरत्वमिति द्वितीया । पक्षद्वयेऽप्याकर्षकशब्दो यौगिकव्युत्पत्त्याग्निपरः । उत्तरेषु त्रिष्वपि पक्षेष्वयस्कान्तपरः । आत्मशब्दस्य ध्येयपरत्वमेव, भावशब्दश्चेष्टापर इति तृतीया व्याख्या । आत्मशब्दो लोहध्यात्रोर्दृष्टान्तदार्ष्टान्तिकयोर्निष्कृष्टस्वरूपपर इति चतुर्थी । आत्मशब्दो ध्येयाकर्षकपरः; भावशब्दश्च प्रातिवचन इति पञ्चमीति निष्कर्षो द्रष्टव्यः । **अनुसंचरन्नित्यनेन भेदो दर्शित इति ;** अनुशब्देन मुक्तसंचारस्य परमात्मसंचारपाश्चात्यकथनादिति भावः । **समानशब्दोऽप्यैक्ये प्रयुज्यत इति ;** ननु

वाक्शब्दपर्यायगोशब्दस्य किरणे प्रयोगो न वाक्शब्दस्य किरणार्थत्वसाधकः, अप्रयोजकत्वात्; अतः परिहारग्रन्थे सामानाधिकरण्यशब्दविचारोऽपि न युक्त इति चेत्—न; समशब्दाधिकार्थस्य समानशब्देऽव्याप्यसिद्ध्या तथोक्त्युपपत्तेः। **मुख्यार्थत्वेऽभ्युपगतेऽपीति**; हरिशब्दस्य भेकादिष्विवेति भावः। **स तु साधारण्यार्थ इति**; सादृश्यवाचिना शब्देन लक्षणया साधारण्यं प्रतीयत इत्यर्थः। लक्षणया तत्सिद्धिप्रकारमुपपादयति—**तथाहीति**। साधारण्यस्यानेकनिरूप्यत्वादनेकप्रतियोगिकेत्युक्तम्। पुत्रं प्रति मातुः श्वशुरं प्रति स्नुषाया एकस्या एव पुत्रश्वशुरौ प्रति साधारण्याभावात् **एकरूपेत्युक्तम्**। **ताभ्यां संबन्धि धनमिति**; ततश्च समशब्दार्थीभूतसदृशसंबन्धित्वं साधारण्यस्यास्तीति लक्षणाबीजभूतमुख्यार्थसंबन्धित्वात् लक्षणोपपद्यत इति भावः। सादृश्यस्य साधारणधर्मायत्तत्वात् सादृश्यवाचिशब्दः सादृश्यनिर्वाहके साधारणे वर्तत इति निष्कर्षः। एवं दृष्टान्ते समानाधिकरणसमकालादिस्थलेऽप्यमुमर्थं शिक्षयति—**तथा नीलत्वोत्पलत्वे इति**। **द्वाभ्यां संयोगित्वेनेति**; ययोः समकालत्वमुच्यते ताभ्यां द्वाभ्यामित्यर्थः। **द्रव्यकालादिषु समसमानादिशब्दा इति**; यद्यपि सामानाधिकरण्यं 'समकालवर्ती' इत्युदाहरणानुसारेण काले समशब्दस्य द्रव्ये समानशब्दस्य चोपपाद्यतया द्रव्यकालादिषु समानसमशब्दा इत्येव वक्तुमुचितम्, तथाप्यल्पाच्तरत्वात् क्रमाविवक्षणाद्वा नानुपपत्तिरिति द्रष्टव्यम्। **युज्यत इति युगिति**; अत्र केचित्—संबन्धार्थस्य 'युजिर् योगे' इत्यस्य रौधादिकस्य कर्तरि युज्यत इति रूपस्याभावात् समाध्यर्थस्य च युजेः कर्तर्येतद्रूपसंभवेऽपि तस्यार्थस्य प्रकृतासंगतेः "युजिर् योगे" इत्यस्यैव कर्मण्येतद्रूपमिति वक्तव्यम्; तत्र च "ऋत्विग्दधृक्"इत्यादिसूत्रेण क्विनो वा "सत्सूद्विष" इत्यादिना "क्विप् च" इत्यनेन वा क्विपो वा कर्तरि विहितत्वेन कर्मण्यसंभवात् युज्यतेऽनेनेति कर्तर्येव क्विन्, पच्यते अनेनेति पाचक इतिवत्। तस्य सहशब्देन सदृशवाचिना बहुव्रीहिः। अस्ति च सहशब्दः सदृशपर्यायः; यथा—सदृशः सख्या ससखीति। तस्यास्वपदविग्रहोऽयं बहुव्रीहिः। समानं युक् गुणजातमस्येत्यर्थः। तत्र च "उपसर्जनस्य" इति सहस्य सभावः। **अग्नित्वोपाधेः प्रहाणादिति**; अपृथग्भूतस्याप्यग्नित्वप्रहाणे अग्नेर्देवताया एवाभावप्रसङ्ग इत्यर्थः। ननु वाक्यद्वयेन विरुद्धक्रमद्वये प्रतीयमाने कथमविरोध इत्यस्वरसादाह— **किंचाग्नेर्वा एतानीति**। **दत्तमुत्तरमिति**; "उपाधिश्च देहान्तःकरणादिः" इत्युक्तमित्यर्थः।

श्रुतप्रदीपिका

परोक्तान्यथासिद्धिमाशङ्क्याह—**नापीति**; न हि कारागतस्ततो निर्गतः स्वनिग्राहकानुग्राहकनृपतेरनन्य इत्यर्थः । असंभवविषयमेतत्प्रबन्धस्थं ग्रन्थमाह—**यथेति**। " ब्रह्म वेद " इत्यादिभिरैक्यमाशङ्क्याह—**मुक्तस्य त्विति**। सोपबृंहणश्रुत्यन्तराविरोधं दर्शयितुमुपात्तम्—**इदं ज्ञानमिति**। मुक्तविषयत्वं स्फुटयति—**सर्गेऽपीति**। **इहापीति**; योगप्रकरणोपक्रमे । **आकर्षकः**; वह्निः, दोषाकर्षणात् । " यथाग्निसङ्गात् कनकमपदोषं प्रजायते " इति हि शौनकः । अत्र च " यथाग्निरुद्धतशिखः कक्षं दहति सानिलः" इति वक्ष्यते । अत्र भेदसिद्धिं दर्शयति—**न हीति**; इदमर्थान्तरेष्वपि तुल्यम् । सौत्रमाह—**वक्ष्यति चेति**। वृत्तौ **ज्योतिः** परमात्मा । द्रमिडभाष्ये—**अशरीरः** मुक्तः; **सिद्धिः** अनुभवः। **श्रुतयश्चेति**; **तेषामिति** मुक्तबहुत्वम् । **आप्नोतीति** जीवपरयोर्भेदः । साम्यं केनाकारेणेत्यत्राह—**रस इति**। कर्मकृतनामरूपहानिपूर्वकसाम्यं दर्शयति—**यथेति**; **तथेति च**।

नयप्रकाशिका

न च विद्यया निर्मुक्ताविद्यस्य ब्रह्मैक्यमिति वाच्यम्, अन्यस्यान्यत्वानुपपत्तेः । अत एव हि " परमात्मात्मनोर्योगः" इत्यत्र तथोक्तिः, "इदं ज्ञानमुपाश्रित्य" इत्यादौ ब्रह्मसाम्यापत्तेरेव मोक्षत्वाभिधानाच्च; " आत्मभावम् " इत्यत्र तथा प्रतीतेश्च; विकार्यं लोहमाकर्षकोऽग्निर्दोषापकर्षणेन स्वस्वभावमापादयतीति दृष्टान्तात् तथैवावगतेः; " जगद्व्यापारवर्जम् " इत्यादौ सूत्रकारैर्वृत्तिकारद्रमिडभाष्यकारादिभिश्च तथैवोक्तत्वाच्च । " निरञ्जनः परमं साम्यमुपैति " इत्यादिश्रुतिभिश्च तद्धीः ।

श्रीभाष्यम्

परविद्यासु सर्वासु सगुणमेव ब्रह्मोपास्यम्; फलं चैकरूपमेव; अतो विद्याविकल्प इति सूत्रकारेणैव "आनन्दादयः प्रधानस्य" "विकल्पोऽविशिष्टफलत्वात्" इत्यादिषूक्तम् । वाक्यकारेण च सगुणस्यैवोपास्यत्वं विद्याविकल्पश्चोक्तः—"युक्तं तद्गुणकोपासनात्" इति । भाष्यकृता व्याख्यातं च—"यद्यपि सच्चित्तः" इत्यादिना । " ब्रह्म वेद ब्रह्मैव भवति " इत्यत्रापि " नामरूपाद्विमुक्तः परात्परं

पुरुषमुपैति दिव्यम्" "निरञ्जनः परमं साम्यमुपैति" "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिभिरैकार्थ्यात् प्राकृतनामरूपाभ्यां विनिर्मुक्तस्य निरस्ततत्कृतभेदस्य ज्ञानैकाकारतया ब्रह्मप्रकारतोच्यते। प्रकारैक्ये च तत्त्वव्यवहारो मुख्य एव; यथा—'सोऽयं गौः' इति।

### श्रुतप्रकाशिका

अथ सगुणोपासकस्य सगुणब्रह्मप्राप्तिं वदन्त्येताः श्रुतयः, न तु परब्रह्मविदः परब्रह्मप्राप्तिमिति शङ्कायामाह—**परविद्यास्विति**, ब्रह्मविद्यास्वित्यर्थः। **सर्वासु**; परेण सगुणविषयत्वेन निर्गुणविषयत्वेन चोक्तासु दहरविद्यासद्विद्याक्षरविद्यादिष्वित्यर्थः। "अदृश्यत्वादिगुणकः" इति परविद्यावाक्यविषयसूत्रस्वारस्यात्तस्याः सगुणविषयत्वं प्रतीयते। "आनन्दादयः प्रधानस्य" इति सूत्रमुपास्यस्य सगुणत्वायोदाहृतम्। "विकल्पोऽविशिष्टफलत्वात्" इति सूत्रं प्राप्यस्य सगुणत्वायोपात्तम्। अयमर्थः—परेण निर्गुणविषयत्वेनाभिमतानां "सत्यं ज्ञानम्" "आनन्दो ब्रह्म" इत्यादिवाक्यानामानन्दादिगुणविशिष्टविषयत्वं तेषां च गुणानां सर्वविद्यानुयायित्वं चोक्त्वा तास्वेकैकैव विद्या फलायालमिति विद्याविकल्पश्चोक्तः। अतः परेण निर्गुणसगुणविषयत्वेनाभिमतासु सद्विद्यादहरविद्यादिषूपास्यं फलं च सगुणमिति सगुणप्राप्त्यतिरेकेण निर्गुणप्राप्तिः प्रमाणशून्या। अतो मुक्तौ भेदपराणां श्रुतीनामन्यथासिद्धिर्नोपपद्यते, प्राप्यवैषम्याभावादिति। सूत्रकाराभिप्रायविदामुक्तिं दर्शयति—**वाक्येति। युक्तं तद्गुणकोपासनादिति**; युक्तम्; गुणयुक्तमेव प्राप्यम्; कुतः? तद्गुणकोपासनादित्यर्थः। विद्याविकल्पश्च तत्रैव द्रष्टव्यः। **सच्चित्तः**; सद्विद्यानिष्ठः। तर्हि मुक्तावभेदश्रुतेः कोऽर्थ इत्यत्राह—**ब्रह्मेति**। "स यो ह वै तत्परं ब्रह्म वेद ब्रह्मैव भवति" इति प्रकृतस्य वेदितुर्ब्रह्मपर्यन्तस्वरूपाविर्भावपरमिदं वाक्यमिति यथा सेत्स्यति तथा वक्ष्यते। इह त्वर्थान्तरमुच्यते। प्राकृतनामरूपप्रहाणज्ञापनाय "नामरूपाद्विमुक्तः" इति श्रुतिरुदाहृता। साम्यप्रतिपत्त्यर्थं "निरञ्जनः" इति वाक्यमुपात्तम्। तस्यैव साम्यस्य स्वाभाविकत्वज्ञापकं "परं ज्योतिः" इति वाक्यम्। तर्ह्यमुख्यत्वं स्यादित्यत्राह—**प्रकारैक्ये चेति**। 'सोऽयं व्रीहिः' इत्यादेरुपलक्षणमिदमुदाहरणम्।

" यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥"

इत्यादिप्रयोगो भारतादिषु द्रष्टव्यः । दृष्टान्ते प्रकारैक्येऽपि तत्ताव्यवहारो मुख्योऽप्यस्वरसः । पूर्वदृष्टे गवि व्यक्त्यंशप्रहाणादस्वारस्यम् । जात्यंशस्य सौसादृश्यलक्षणैक्यान्मुख्यत्वम् । दार्ष्टान्तिके तु " गङ्गायां घोषः " इति गङ्गापदवत् कार्त्स्न्येन प्रवृत्तिनिमित्तप्रहाणाभावात्परमात्मनीव प्रवृत्तिनिमित्तपौष्कल्याभावाच्च प्रवृत्तिनिमित्तैकदेशान्वयिनि मुक्तात्मनि मुख्यकोटिरित्यभिप्रायेण **मुख्य एवे**त्युक्तम्; लाक्षणिकगङ्गापदवन्नात्यन्तामुख्य इत्यर्थः । न हि मुक्तस्यापरिच्छिन्नज्ञानानन्दत्वेऽपि जगत्कारणत्वानुगुणगुणबृहत्त्वं स्वरूपबृहत्त्वं वास्ति । आकारैक्येऽपि तत्ताव्यवहारस्यात्यन्तामुख्यत्वाभावे **सोऽयं गौरिति** दृष्टान्तः ।

भावप्रकाशिका

**प्राप्यस्य सगुणत्वायेति**; न च " विकल्पोऽविशिष्टफलत्वात् " इति सूत्रं निर्गुणविद्याव्यतिरिक्तविषयं किं न स्यात्? येन सर्वविद्याप्राप्यस्यैकरूपतया सर्वत्र सगुणत्वमेव सिध्येदिति वाच्यम्; संकोचे प्रमाणाभावादिति भावः । **विद्याविकल्पश्च तत्रैव द्रष्टव्य इति**; गुणयुक्तमेव प्राप्यमिति प्राप्यस्यैकरूप्यकथनेनाविशिष्टफलत्वाविष्करणाद्विकल्पोऽपि तस्मिन्वाक्य उक्तप्राय इति द्रष्टव्यमित्यर्थः । भाष्ये—**यद्यपि सच्चित्त इत्यादिनेति**; " यद्यपि सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्, तथाप्यन्तर्गुणामेव देवतां भजते; तत्रापि सगुणैव देवता प्राप्यते " इति व्याख्यातमित्यर्थः । अस्य चायमर्थः—सच्चित्तो न निर्भुग्नदैवतं गुणगणं मनसानुधावेत्; अपहतपाप्मत्वादिगुणं दैवताद्विभक्तं यद्यपि दहरविद्यानिष्ठ इव सच्चित्तो न स्मरेत्, तथाप्यन्तर्गुणामेव देवतां भजते तत्रापि सगुणैव देवता प्राप्यत इति; स्वरूपानुबन्धित्वात्सकलकल्याणगुणगणस्य केनचित्परदेवताऽसाधारणेन निखिलजगत्कारणत्वादिनोपास्यमानापि देवता वस्तुस्वरूपानुबन्धिसर्वकल्याणगुणविशिष्टैवोपास्यते; अतः सगुणमेव ब्रह्म तत्रापि प्राप्यमिति सद्विद्यादहरविद्ययोर्विकल्प इत्यर्थ इति । 'सोऽयं गौः'इत्यत्र विप्रतिपन्नं प्रत्याह—**सोऽयं व्रीहिरित्यादेरुपलक्षणमिति । मुख्योऽप्यस्वरस इति**; जात्यंशे मुख्यत्वं व्यक्त्यंशेऽमुख्यत्वमित्यर्थः; अत्यन्तामुख्यो न भवतीत्यर्थः । **व्यक्त्यंशप्रहाणादस्वारस्यमिति**; जातेर्जात्या सौसादृश्यवत् व्यक्त्यन्तरे भेदकाकारोपलम्भेन सौसादृश्याभावादित्यर्थः । मुख्य इत्यस्यात्यन्तामुख्यो न भवतीति

व्याख्याने बीजमाह—**न हि मुक्तस्येति** । "स्वरूपतो गुणतश्च यन्निरवधिकातिशयं सोऽस्य मुख्योऽर्थः" इति पूर्वं भाषितत्वादिति भावः ।

### श्रुतप्रदीपिका

उक्तवाक्यानि सगुणविषयाणीत्यत्राह—**परेति** । **सर्वासु** ; त्वया निर्गुणविषयतयोक्तसद्विद्यादिष्विति भावः । उपासनप्राप्त्योः सगुणविषयतैकरूप्यज्ञापनाय सूत्रद्वयम् । फलवैषम्ये सति हि विकल्पोऽनुपपन्न इति भावः । **वाक्येति** ; गुणयुक्तं प्राप्यं, तथोपासनादित्यर्थः । विकल्पोऽपि द्रष्टव्यः । **सच्चित्तः** ; सद्विद्यानिष्ठः । तर्हि "ब्रह्मैव भवति" इत्यस्य कोऽर्थ इत्यत्राह—**ब्रह्मेति** । तर्हि अमुख्यत्वमित्यत्राह—**प्राकारैक्ये चेति** । "यथर्तुष्वृतुलिङ्गानि" इतिवत् द्रष्टव्यम् । न च सगुणविद्यापरत्वात् तच्छ्रुतीनां क्रममुक्तिपरतेति वाच्यम्; सर्वविद्यानां सगुणनिष्ठत्वात्, मोक्षभेदतत्क्रमे च प्रमाणाभावाच्च । "आनन्दादयः प्रधानस्य" इत्यत्र सूत्रकारैरेव सर्वविद्यास्वानन्दादिगुणोपसंहारस्य प्रसाधितत्वात् तासां गुणनिष्ठत्वम्; "विकल्पोऽविशिष्टफलत्वात्" इति परविद्यानामविशिष्टफलत्वेन विकल्पस्य प्रसाधितत्वाच्च; न हि मुक्तिभेदे विकल्पोक्त्युपपत्तिः; तथात्वे विद्यानां व्यवस्थैव स्यात्, न विकल्पः । न च सगुणविद्यानामेव विकल्पपरत्वं तत्सूत्रस्येति वाच्यम्, तत्र विशेषाप्रतीतेः । तच्च तत्रैव साधितम् । न च "ब्रह्म वेद ब्रह्मैव भवति" इति ब्रह्मवेदनेन ब्रह्मभावश्रवणात् ब्रह्मभेदो नाङ्गीकार्य इति वाच्यम्, अन्यस्यान्यभावत्वं नेत्युक्तत्वात् । अतः सर्ववेदान्तप्रत्ययन्यायेन तच्छ्रुतेरपि ब्रह्मसाम्यापत्तिपरत्वमेव । न च साम्यापत्तिपरत्वे "ब्रह्म भवति" इत्यस्य मुख्यत्वहानिरिति वाच्यम्, एकजातियोगे गोव्यक्त्यन्तरे 'सोऽयं गौः' इत्यादौ प्रकारैक्यप्रयोगस्य मुख्यत्वदर्शनात्; 'सोऽयं देवदत्तः' इत्यादौ देहस्य सततविकारित्वेन व्यक्त्यन्यत्वसिद्धावपि जात्याकारैक्यमुख्यतादर्शनाच्च । 'सोऽयं देवदत्तः' इत्यत्र सामानाधिकरण्यस्य मुख्यत्वं वक्ष्यते ।

### न्यायसुदर्शनम्

"ब्रह्म वेद ब्रह्मैव भवति" इत्यत्र ज्ञानगुणद्वारा सर्वव्यापितया ब्रह्मत्वं ब्रह्मसाम्यं ब्रह्मशरीरत्वेन ब्रह्मत्वं च प्रतिपाद्यत इत्यर्थः । एवशब्दः साम्यवाची च क्वचिद्भवति, "साम्ये वद्वैवमेव" इति नैघण्टुकप्रसिद्धेः ; "वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति" इत्यादिश्रुतिप्रयोगदर्शनाच्च । "विष्णुरेव" इति 'विष्णुरिव'

इत्यर्थे । न ह्यत्र विष्णुतैव विवक्षिता, स्पर्धमानस्य शुग्योयेन तदयोगात् । ऐहिकफलं शत्रुजयः । "निरञ्जनः परमं साम्यमुपैति" "यथोदके शुद्धे शुद्धमासिक्तं तादृशं भवति, एवं मुनेर्विजानत आत्मा भवति गौतम" इति मुक्तस्य ब्रह्मसाम्यं श्रुतिप्रसिद्धम् ।

श्रीभाष्यम्

अत्रापि

" विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥"

इति परब्रह्मध्यानादात्मा परब्रह्मवत् प्रक्षीणाशेषभावनः कर्मभावनाब्रह्मभावनोभयभावनेतिभावनात्रयरहितः प्रापणीय इत्यभिधाय,

" क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज ।
निष्पाद्य मुक्तिकार्यं हि कृतकृत्यं निवर्तयेत् ।"

इति करणस्य परब्रह्मध्यानरूपस्य प्रक्षीणाशेषभावनात्मस्वरूपप्राप्त्या कृतकृत्यत्वेन निवृत्तिवचनाद्यावत्सिद्ध्यनुष्ठेयमित्युक्त्वा,

" तद्भावभावमापन्नस्तदासौ परमात्मना ।
भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥"

इति मुक्तस्य स्वरूपमाह । तद्भावः ; ब्रह्मणो भावः स्वभावः; न तु स्वरूपैक्यम् , " तद्भावभावमापन्नः " इति द्वितीयभावशब्दानन्वयात् ; पूर्वोक्तार्थविरोधाच्च । यद्ब्रह्मणः प्रक्षीणाशेषभावनत्वं तदापत्तिस्तद्भावभावापत्तिः । यदैवमापन्नस्तदासौ परमात्मना अभेदी भवति, भेदरहितो भवति । ज्ञानैकाकारतया परमात्मनैकप्रकारस्यास्य तस्माद्भेदो देवादिरूपस्तदन्वयोऽस्य कर्मरूपाज्ञानमूलः, न स्वरूपकृतः । स तु देवादिभेदः परब्रह्मध्यानेन मूलभूताज्ञानरूपे कर्मणि विनष्टे हेत्वभावान्निवर्तेत इत्यभेदी भवति । यथोक्तम्—

" एकस्वरूपभेदस्तु बाह्यकर्मवृतिप्रजः ।
देवादिभेदेऽपध्वस्ते नास्त्यनावरणो हि सः ॥"

इति । एतदेव विवृणोति—

" विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

इति । विभेदः; विविधो भेदः देवतिर्यङ्मनुष्यस्थावरात्मकः । यथोक्तं शौनकेनापि—" चतुर्विधोऽपि भेदोऽयं मिथ्याज्ञाननिबन्धनः " इति । आत्मनि ज्ञानरूपे देवादिरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मध्यानेनात्यन्तिकनाशं गते सति हेत्वभावादसन्तं परस्माद् ब्रह्मण आत्मनो देवादिरूपभेदं कः करिष्यतीत्यर्थः । " अविद्या कर्मसंज्ञान्या " इति ह्यत्रैवोक्तम् ।

श्रुतप्रकाशिका

न केवलं योगसंग्रहारम्भे; विस्तरेऽप्यव्यवहितेषु पूर्वश्लोकेषु भेदप्रतिपत्तिरस्तीत्याह—**अत्रापीति** । न केवलं मुक्तिविषयप्रकरणान्तरेषु; अस्मिन्प्रकरणेऽपीति वार्थः । अस्मिन् श्लोके **तथैवेति** ब्रह्मसाधर्म्योपदेश उपयुज्यते । **तथैवे**त्येतद्व्याख्यानं **परब्रह्मवदि**त्यादि । प्रक्षीणाशेषभावनशब्दं व्याचष्टे—**कर्मभावनेति** । 'परब्रह्मवत्प्रक्षीणाशेषकर्मभावनः' इति पाठे कर्मशब्दो योगादिक्रियोपासनसाधारणानुष्ठेयमात्रपरः । तदा कर्मशब्देन " त्रिविधा भावभावना " इत्यत्र भावशब्दो व्याख्यातो भवति । अत्रायमर्थः—प्राप्यपरब्रह्मविषयज्ञानस्य प्रापकत्वात् शुद्धस्वस्वरूपमपि प्राप्यमिति तदनुसंधेयमिति । अयं च " व्यतिरेकस्तद्भावभावित्वात् " इत्यधिकरणार्थः । तत्र बद्धस्वरूपं चिन्त्यमिति पूर्वपक्षीकृत्य मुक्तस्वरूपं चिन्त्यमिति हि सिद्धान्तितम् । अस्य श्लोकस्यैकप्रकरणत्वज्ञापनायानन्तरश्लोकोऽपि व्याख्यायते—**क्षेत्रज्ञ इति** । यावत्क्षेत्रज्ञावस्थस्तावत्करणी उपासकः, तस्य करणं ज्ञानम्; करणभूतं ज्ञानं मुक्तिकार्यं निष्पाद्य निवर्तयेत्; न तु मुक्तेः पूर्वमेव निवर्तयेदित्यर्थः । न हि मुक्तस्योपासननिवृत्तिर्विधेया । अतो यावन्मोक्षमनुष्ठेयत्वमुक्तमिति भावः । तद्भावभावशब्देन

ब्रह्मसाम्यापत्तिज्ञापनार्थं " विभेदजनकेऽज्ञाने " इत्यत्र ज्ञाने इति पदच्छेदशङ्काव्युदासार्थं च "तद्भावभावम्" इति श्लोको व्याख्यायते—**तद्भावेति**। श्लोके 'तद्भाव' इत्युपमानबहुव्रीहिः। 'तद्भाव' इति पदान्तर्गतौ तच्छब्दभावशब्दौ व्याख्यातुमाह—**तद्भाव इति**। भाष्यस्थ-तद्भावशब्दो न बहुव्रीहिः; किंतु तत्पुरुषः। समासे व्याचिख्यासिते सति हि बहुव्रीहि-विशिष्टरूपेण **पदो**पादानम्। तच्छब्दभावशब्दमात्रस्य व्याचिख्यासितत्वात् बहुव्रीहिविशिष्टरूपेण पदस्यानुपादानम्। तच्छब्देन ब्रह्मोच्यते। प्रथमभावशब्देन स्वभाव उच्यत इत्यर्थः।

" भावो लीलाक्रियाचेष्टाभूत्यभिप्रायजन्तुषु।
पदार्थमात्रे सत्तायामात्मयोनिस्वभावयोः॥"

इति नैघण्टुकाः। यद्वा, भाष्यस्थस्तद्भावशब्दोऽपि बहुव्रीहिविशिष्टः। **तद्भावो ब्रह्मणो भावः स्वभाव इति;** तद्भावेति पदे तच्छब्दवाच्यब्रह्मसंबन्धितया प्रतिपन्नो भावः स्वभाव इत्यर्थः। अथवा श्लोकेऽपि तद्भावशब्दस्तत्पुरुषः; द्वितीयभावशब्दः सत्तावाची। व्यावर्त्य-माह—**न त्विति**। कुत इत्यत्राह—**तद्भावेति**। हेत्वन्तरमाह—**पूर्वोक्तार्थविरोधा-च्चेति**। हेयप्रत्यनीकत्वहेयार्हत्वादिविरोधोऽर्थविरोधः। एवं शब्दपर्यालोचनयार्थपर्यालो-चनया च भावशब्दस्य स्वभाववाचित्वमुपपादितम्। स्वभावशब्दवाच्यं च पूर्वश्लोकोक्तं प्रक्षीणाशेषभावनत्वमित्याह—**यदिति**। तच्छब्दसामर्थ्यात् यद्वृत्तमाक्षिप्य व्याचष्टे—**यदेव-मिति**। "अभेदी" **इत्यत्र** भेदशब्दव्याख्यानार्थं भेदशब्दं नञ्प्रत्ययाभ्यां विभज्य निर्दिशति—**भेदरहितो भवतीति**। यद्वा **भेदरहितो** भवति; न तादात्म्यवानिति भावः। अन्यथा भेदश्च तस्याज्ञानकृतः" इत्यनन्तरनिर्देशो न घटते। देवादिभेदाभावः कथमिति शङ्कायां "भेदश्च तस्य" इत्यादि व्याचष्टे—**ज्ञानैकाकारतयेति**। "परमात्मना भवत्यभेदी" इति परमात्मनः प्रस्तुतत्वात् "आत्मनो ब्रह्मणः" इत्यत्रापि पञ्चमीविवक्षया च **तस्माद्भेद** इत्युक्तम्। **ब्रह्मणो** मुक्तात्मनश्चाकारान्तरेण भेदस्य प्रमाणसिद्धत्वान्निरसनीयभेदविशेषस्य वचनान्तर-सिद्धत्वाच्च **भेदो देवादिरूप** इत्युक्तम्। **कर्मरूप**शब्देनाज्ञानशब्दो व्याख्यातः। 'ज्ञान-विरोधि' इति व्युत्पत्तिरित्यर्थः। "अविद्यया मृत्युं तीर्त्वा" इति हि श्रुतिः। अत्रापि "**अविद्या कर्मसंज्ञान्या**" इति हि पठ्यते। ततः किं भेदराहित्यस्येति शङ्कायां "भेदश्च **तस्याज्ञानकृतो** भवेत्" इत्यनेनार्थसिद्धमभिप्रेतं कारणाभावं विशदयन् कार्याभावमुपपादयति—**स त्विति**। भेदस्य देवादिरूपत्वे अज्ञानशब्दस्य च कर्मपरत्वे प्रमाणमाह—**यथोक्त-**

**मिति।** आदिभरतचरितेऽयं श्लोकः। तत्र पूर्वं देहेन्द्रियादिबाह्यभेदरहितत्वमात्मन उक्तम्—"सितनीलादि" इत्यादिना। अस्मिन् श्लोके बुद्धिसुखदुःखेच्छाद्यान्तरभेदोऽपि नास्तीत्युच्यते। **एकस्वरूपेति;** कर्मैव वृतिः कर्मवृतिः। बाह्यमान्तरं च कर्म। द्विविधम्। आन्तरमात्मप्रावण्यहेतुः कर्म। बाह्यं बहिर्विषयप्रावण्यहेतुः कर्म। यद्वा बाह्यमस्त्राभाविकं कर्म। तदेव वृतिः। तया प्रकर्षेण जात एकस्वरूपभेदः। बाह्यकर्म शरीरद्वारकमेकस्वरूपस्यात्मन आन्तरं भेदं करोतीत्यर्थः। द्वारभूतदेवादिशरीरभेदे नष्टे सति आन्तरो भेदो नास्ति। कथं वा देवादिभेदे नष्टे कर्मवृतिहेतुकान्तरभेदनाशः? इत्यत्राह—**अनावरणो हि स इति। सः,** निवृत्तदेवादिभेद आत्मा कर्मावरणरहितो हीत्यर्थः। यद्वा कर्मवृतिः कर्मजन्या वृतिः देवादिशरीरं, तत्संबन्धज आन्तरभेदः। देवादिभेदेऽपध्वस्ते स नास्ति। कथं कर्मजन्यवृतिहेतुकान्तरभेदो देवादिभेदापध्वंसे नास्तीत्यत्राह—**अनावरणो हि स इति।** कर्मजन्यवृतिर्देवादिशरीरभेदरूपेत्यर्थः। एतदेव "भेदश्च तस्याज्ञानकृतो भवेत्" इत्युक्तमेवार्थं विवृणोतीत्यर्थः। "विभेदजनके"इत्यादि श्लोकेन "अनावृत्तिः शब्दात्" इत्यधिकरणार्थ उच्यते। परस्माद् ब्रह्मण आत्मनो देवादिभेदस्य प्रनष्टस्य पुनरावृत्तिं कः करिष्यतीत्युच्यते। विभेदशब्दं व्याचष्टे—**विभेदो विविधो भेद इति।** भेदस्य देवादिरूपत्वे प्रमाणान्तरमाह—**यथोक्तमिति। मिथ्याज्ञाननिबन्धनः;** मिथ्याज्ञानमात्मविषयभ्रान्तिज्ञानम्; तत्कर्मद्वारोत्तरोत्तरदेवादिभेदहेतुरित्यर्थः। अस्योत्तरार्धम्—"देवतिर्यङ्मनुष्याख्यस्तथैव नृप नारकः" इति। व्याख्येयश्लोकस्य वाक्यार्थमाह—**आत्मनीति। ब्रह्मण इति** पदस्य पञ्चम्यन्तत्वसूचनाय **परस्मादित्युक्तम्।** उभयोरपि पदयोर्वैयधिकरण्येन षष्ठ्यन्तत्वमयुक्तम्, चशब्दाभावात्; अनन्तरपूर्वश्लोके "परमात्मना भवत्यभेदी" इति परमात्मनः प्रतियोगितया निर्देशाच्च। अत एव समानाधिकरणषष्ठ्यन्तत्वमप्ययुक्तम्, पूर्वप्रपञ्चितादर्थविरोधाच्च। पञ्चम्यन्तत्वं षष्ठ्यन्तत्वं च विपर्ययेण स्यादिति चेत्— न; परब्रह्मणोऽपि हेयार्हतापत्तेः स्वाभाविकत्वप्रसङ्गात्। अतः **परस्माद् ब्रह्मण** इत्युक्तम्। **असन्तम्;** सच्छब्दः परमार्थपर्यायः। "अनाशी परमार्थश्च" इत्यत्रैवं ह्युक्तम्; अनित्यमित्यर्थः। तेन स्वाभाविकनित्यभेदव्यावृत्तिः। अनित्यत्वं कादाचित्कत्वम्। अनित्यत्वाद्धेत्वपेक्षो देवादिभेदः। तं कः करिष्यति? न कश्चिदपि; हेत्वभावात्, कर्मरूपहेत्वभावादित्यर्थः। न केवलमेकार्थविषये "बाह्यकर्मवृतिप्रजः" "अज्ञान-

कृतो भवेत्'' इत्यज्ञानकर्मशब्दयोः प्रयोगादज्ञानशब्दस्य कर्मार्थत्वम्; अस्मिन् प्रकरणे च कण्ठोक्तमित्याह— **अविद्या कर्मसंज्ञान्येति ह्यत्रैवोक्तमिति** । आत्मन औपाधिकभेद उपाध्यपगमे नश्यतीति श्लोकार्थः । उपाध्यभावादविद्यमानं भेदं क उत्पादयेदिति वार्थः । अयं श्लोको मृषावादिनामत्यन्तास्वरसः । तथाहि—''विभेदजनके''इत्यत्र जनकशब्द उत्पादके स्वरसः, न त्वध्यासहेतौ । अज्ञानशब्दस्यानिर्वचनीयपरत्वं लोकतः शास्त्रतश्च न व्युत्पन्नम् । कर्मवाचित्वव्युत्पत्तिरस्मिन् प्रबन्ध एव दर्शिता । नाशशब्दस्य बाधवाचित्वमयुख्यम् । ''असन्तम्''इति पदं च व्यवच्छेद्याभावादफलम्, सतो भेदस्यानभ्युपगमात् । तदभ्युपगमे हि तत्साफल्यम् । ''करिष्यति'' इति पदमप्यस्वरसम्, अध्यासवाचित्वाभावात् ।

**भावप्रकाशिका**

श्लोके प्रकृतोपयुक्तं पदं दर्शयति—**अस्मिन् श्लोके तथैवेति** । **एकप्रकरणत्वज्ञापनायेति;**

> ''विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव ।
> प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥
> क्षेत्रज्ञः करणी ज्ञानं करणं तस्य वै द्विज ।
> निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तयेत् ॥
> तद्भावभावमापन्नस्तथासौ परमात्मना ।
> भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥
> विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते ।
> आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥''

इति हि श्लोकक्रमः । **श्लोके तद्भावेत्युपमानबहुव्रीहिरिति;** तद्भाव इव भावो यस्य स तद्भावः, तत्समानस्वभावः; तस्य भावस्तद्भावभाव इति व्याख्याने द्वितीयभावशब्दस्य प्रयोजनवत्तरत्वमिति भावः । भाष्यस्थतद्भावशब्दस्य श्लोकवैरूप्येण तत्पुरुषत्वमनुपपन्नमित्यत आह— **समासे व्याचिख्यासिते सति हीति** । श्लोकभाष्ययोर्वैरूप्यपरिहारार्थमाह— **यद्वा भाष्यस्थतद्भावशब्दोऽपीति** । ननु भाष्यस्थतद्भावशब्दस्य बहुव्रीहित्वे ''तद्भावो ब्रह्मणो भावः'' इति भाष्यमयुक्तमित्याशङ्क्यानेकशब्दाध्याहारपूर्वकं व्याचष्टे—

**तद्भावेति पदे तच्छब्दवाच्यब्रह्मसंबन्धितया प्रतिपन्न इति। द्वितीयभावशब्दः सत्तावाचीति;** यद्यप्यस्मिन्पक्षे द्वितीयभावशब्दस्य परपक्ष इव वैयर्थ्यमस्ति, तथाप्यभेदस्य बाधितत्वात् पराभिमतार्थो न संभवतीत्यत्र तात्पर्यम्। अर्थान्तरप्रतीतिनिवारणार्थत्वेन साफल्यसंभवे स्वरूपव्याक्रियामात्रपरत्वमनर्थकमित्यभिप्रेत्याह—**यद्वा भेदरहितो भवतीति। अनन्तरनिर्देशो न घटत इति;** भेदस्य कल्पितत्वेन कृतत्वासंभवादिति भावः। सिद्धान्ते—**भेदश्च तस्याज्ञानकृतो भवेत्;** देवादिभेदश्चात्मन्यारोपितः, तस्य मुक्तस्याज्ञानकृतो भवेत्, कर्मकृतो भवेत्; कर्मकृतत्वेन ज्ञातो भवेदित्यर्थः। अथवा 'कुतः' इत्यध्याहृत्य कुतो भवेदित्यर्थः। अथवा 'अभवेत्' इत्यकारप्रश्लेषः, 'अपचसि त्वं जाल्म' इतिवत् "नञो नलोपस्तिङि क्षेपे" इति नलोपो द्रष्टव्यः। **प्रकर्षेण जात एकस्वरूपभेद** इति छेदः। **हेयार्हतापत्तेः स्वाभाविकत्वप्रसङ्गादिति;** "ब्रह्मणः" इत्यस्य षष्ठ्यन्तत्वपक्षे देवादिभेदस्य तन्मूलकर्माविद्यादिदोषस्य च ब्रह्मगतत्वेनैवाभ्युपगन्तव्यत्वात् ब्रह्मावारकस्य चाज्ञानस्य—

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥"

इति न्यायेन निवर्तकान्तराभावात् स्वाभाविकत्वप्रसङ्ग इत्यर्थः। **उपाध्यपगमे नश्यतीति श्लोकार्थ इति;** "कः करिष्यति" इत्यस्य कः परिपालयिष्यतीत्यर्थ इति भावः। "असन्तम्" इत्यस्यानित्यवाचिन उपयोगमान्द्यादाह—**उपाध्यभावादिति।** अस्मिन्पक्षे "करिष्यति" इत्यत्र कृञ्धातोरुत्पादने स्वारस्यमस्तीत्यपि द्रष्टव्यम्। **व्यवच्छेद्याभावादफलमिति;** ननु नैतद्व्यवच्छेदकतयोपात्तम्; अपितु कल्पकेऽज्ञाने नष्टे कल्पितत्वरूपमसत्त्वं पुनर्भेदानुपपत्तौ हेतुतयोक्तमिति चेत्—न; पूर्वोक्तदोष एव तात्पर्यात्।

**श्रुतप्रदीपिका**

न परमुपक्रमे; अव्यवहितपूर्वश्लोकेषु च भेदं दर्शयति—**अत्रापीति।** "तथैव" इत्यादेर्व्याख्यानं **परब्रह्मवदि**त्यादि। "कर्मभावनः" इति पाठे कर्मशब्दः कर्मज्ञानभक्तिरूपानुष्ठेयसाधारणः। शुद्धस्वरूपस्यापि प्राप्यन्तर्भावात् तथा स्वयं च ध्येय इत्यर्थः। अव्यवहितत्वज्ञापनायानन्तरग्रन्थं व्याचष्टे—**क्षेत्रज्ञ इति। यावदिति;** न हि मुक्तस्योपायनिवृत्तिर्विधेयेति भावः। साम्यसंप्रतिपत्त्यर्थमनन्तरश्लोकं व्याचष्टे—**तद्भावेति। ब्रह्मण**

**इति** ; " परमात्मना " इति प्रकृतब्रह्मपरस्तच्छब्द इति भावः । पूर्वोक्तार्थविरोध उभयलिङ्गत्वादिस्वभावश्च पूर्वश्लोकोक्त इत्याह— **यदिति** । तद्भूतवशाद्यद्वृत्तमाक्षिप्य व्याचष्टे— **यदैवमिति** । भेदशब्दं पृथग्व्याख्यातुं विविच्य निर्दिशति— **भेदरहित इति** । तत्स्वभावापत्तौ कथं भेदविरह इति शङ्कायां "भेदश्च" इत्यादि वाक्यं व्याचष्टे— **तदन्वय इति** । **तेन** फलितमुत्तरश्लोके कण्ठोक्तमर्थमाह— **स त्विति** । अज्ञानभेदयोः कर्मदेवादिरूपत्वं कथमित्यत्राह— **यथेति** । एकस्वरूपस्यान्तरबुद्धिसुखादिभेदः संसारहेतुकर्मरूपवृतिजन्यः; स देवादिभेदे नष्टे नास्ति । कथं कर्मरूपवृतिजन्यसुखादिभेदो देवादिभेदे ध्वस्ते न स्यादित्यत्राह— **अनावरणो हि स इति** । सः अपध्वस्तदेवादिभेद आत्मा कर्मरूपवृतिहीनो हीत्यर्थः । कर्मजन्यवृतिरित्यस्ति देवादिभेद आवरण इत्यर्थः । " भेदश्च तस्य " इत्याद्यंशविवरणमुत्तरश्लोक इत्याह— **एतदिति** । " देवतिर्यङ्मनुष्याख्यस्तथैव नृप नारकः " इति शौनकग्रन्थोत्तरार्धम् । अस्य वाक्यार्थं योजयति— **आत्मनीति** । पञ्चमीं स्फुटयति— **परस्मादिति** । उभयोः षष्ठ्यन्तत्वे चशब्दोऽपेक्षितः । षष्ठीपञ्चम्यन्तत्वविपर्यये ब्रह्मण उभयलिङ्गत्वमौपाधिकं स्यात् । अतो 'ब्रह्मणः' इति पञ्चमीति भावः । अज्ञानशब्दस्य कर्मपरत्वं न परं " भेदश्च तस्याज्ञानकृतो भवेत् " " बाह्यकर्मवृतिप्रजः " इति प्रयोगान्निरणायि; कण्ठोक्त्या चेत्याह— **अविद्येति** ।

**नयप्रकाशिका**

एतत्प्रकरण एव " विज्ञानं प्रापकम् " इत्यादौ जीवपरयोर्भेदप्रतीतेः साधर्म्यापत्तेरेव मोक्षत्वप्रतीतेश्च साम्यापत्तिरेवार्थः । तत्कथमिति चेत् " प्राप्ये परे ब्रह्मणि, प्रापणीयस्तथैवात्मा " इति पृथङ् निर्देशात्, " तद्भावभावमापन्नः " इति साम्यापत्तेरभिधानाच्चेति ब्रूमः । स्वरूपैक्ये तु द्वितीयभावशब्दानर्थक्यम् । **तद्भावभावम्;** ब्रह्मणः स्वभाववत् स्वभावमित्येवमर्थस्वीकारे तु न काचिद्धानिः । एवं तत्स्वभावापत्तेः प्रकारैक्यादभेद इति निर्देशोऽपि मुख्यः । तस्य देवादिभेदस्य कर्मरूपाज्ञानमूलत्वेन " भेदश्चाज्ञानकृतो भवेत्" इत्युक्तेरपि न विरोधः । अथात्राज्ञानशब्दस्य कर्मपरत्वं कथमिति चेत् " एकस्वरूपभेदश्च बाह्यकर्मवृतिप्रजः" इत्यादिभिरिति ब्रूमः । परमात्मध्यानात् देवादिविविधभेदकारणकर्मणोऽत्यन्तनाशे तत्कार्यविविधभेदनाशादाविर्भूतपरमात्मसाम्यस्य जीवात्मनो ब्रह्मणश्चात्यन्तसादृश्यात् भेदकधर्मो नास्तीत्येवमेव तस्य श्लोकस्यार्थो युक्तः । अन्यथा अनेकश्रुतिविरोधः पूर्वापरविरोधश्च ।

श्रीभाष्यम्

"क्षेत्रज्ञं चापि मां विद्धि" इत्यादिनान्तर्यामिरूपेण सर्वस्यात्मतयैक्याभिधानम्। अन्यथा "क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते। उत्तमः पुरुषस्त्वन्यः" इत्यादिभिर्विरोधः। अन्तर्यामिरूपेण सर्वेषामात्मत्वं तत्रैव भगवताभिहितम्—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति "सर्वस्य चाहं हृदि संनिविष्टः" इति च। "अहमात्मा गुडाकेश सर्वभूताशयस्थितः" इति च तदेवोच्यते। भूतशब्दो ह्यात्मपर्यन्तदेहवचनः। यतः सर्वेषामयमात्मा तत एव सर्वेषां तच्छरीरतया पृथगवस्थानं प्रतिषिध्यते—"न तदस्ति विना यत्स्यात्" इति। भगवद्विभूत्युपसंहारश्चायमिति तथैवाभ्युपगन्तव्यम्। तत इदमुच्यते—

"यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥"

"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।"

इति। अतः शास्त्रेषु न निर्विशेषवस्तुप्रतिपादनमस्ति; नाप्यर्थजातस्य भ्रान्तत्वप्रतिपादनम्; नापि चिदचिदीश्वराणां स्वरूपभेदनिषेधः।

श्रुतप्रकाशिका

अथाद्वैतपरत्वेन परोक्तं गीतावचनं व्याचष्टे—**क्षेत्रज्ञं चापीति**। पराभिमतार्थस्य पूर्वापरविरोधं दर्शयति—**अन्यथेति**। न केवलम् "उत्तमः पुरुषस्त्वन्यः" इति भेदप्रतिपादनात्तद्विरोधेन स्वरूपैक्यपरत्वाभावः; सामानाधिकरण्योपपादकमन्तर्यामित्वं कण्ठोक्तमपीत्याह—**अन्तर्यामीति**। "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इत्यत्र भूतशब्दस्यात्मपर्यन्तदेहपरत्वं "भ्रामयन् सर्वभूतानि" इत्यस्योत्तरार्धेनावगम्यते; "न हिंस्यात् सर्वा भूतानि" इत्यादिप्रयोगाच्च। "सर्वस्य चाहं हृदि संनिविष्टः" इत्यत्रापि सर्वशब्दस्यात्मपर्यन्तत्वं "मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यनेनावगम्यते। हृद्देशे; हृद्देशस्थ आत्मनीत्यर्थः। "सर्वस्य चाहं हृदि" इत्यपि तथा। तथा

"अहमात्मा गुडाकेश" इत्यत्राप्यन्तर्यामित्वपरतामाह—**अहमिति** । कुत इत्यत्राह—**भूतशब्दो हीति ;** पूर्वदर्शितसर्वशब्दैकार्थ्याच्चेति भावः । अन्वयरूपेणोक्तस्य सर्वेषां भगवदात्मकत्वस्य शेषभूतोऽयं "न तदस्ति" इति व्यतिरेकनिर्देशस्तदनुगुण एवेत्यभिप्रायेणाह—**यतः सर्वेषामिति** । अविनाभावशब्दस्य संबन्धनियमवाचित्वादिति भावः । हेत्वन्तरं चाह—**भगवदिति** । "एतां विभूतिं योगं च"इति प्रक्रमाद्विभूतिपरत्वमवगम्यते । अत उपक्रमानुगुण एवोपसंहार इत्यर्थः । न हि विभूतित्वं विधाय तदेव निषेद्धुं शक्यमिति भावः। प्रकरणस्य विभूतिपरत्वं दर्शयति—**यद्यदिति** । **विभूतिमत् ;** नियाम्यवत् । **श्रीमत् ;** भोग्यसमृद्धिमत् । **ऊर्जितम् ;** बलवत्, कल्याणगुणारम्भेषूद्युक्तम् । **तेजः ;** पराभिभवनसामर्थ्यं, प्रशासनम् । **तेजोंऽशसंभवम् ;** नियमनशक्तमदाज्ञालवाधीनमित्यर्थः । शास्त्रस्य परोक्तार्थपरत्वाभावमुपसंहरति—**अत इति** । **अतः ;** श्रुतियोजनाप्रभृति प्रतिपादितैर्न्यायैरित्यर्थः । **भ्रान्तत्वम् ;** भ्रान्तिसिद्धत्वम् । जगद्ब्रह्मणोरेकद्रव्यत्वपक्षे ब्रह्मणः सविशेषत्वं जगत्सत्यत्वं चोपपन्नमिति शङ्कायां तद्व्युदासार्थमाह—**नापीति** । चेतनेष्वचिद्धर्मबुद्धिः परतन्त्रेषु स्वतन्त्रबुद्धिश्च भ्रमः । न तु स्वरूपभेदधीरित्यभिप्रायेण **न स्वरूपभेदनिषेध** इत्युक्तम् । अथवा मृषावादिनमेवोद्दिश्य जीवपरयोः स्वरूपभेदनिषेधाभावमाह—**नापीति** । अचिदुपादानं दृष्टान्ततया ।

### भावप्रकाशिका

**हृद्देशस्थ आत्मनीत्यर्थ इति ;** तद्भ्रामणार्थं तदन्तः प्रवेशस्यावश्यकत्वात्, "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "योऽन्तरो यमयति" इत्यादिप्रमाणादिति भावः । केचित्तु सर्वभूतशब्दस्यैव चेतनपर्यन्तत्वात् हृद्देशशब्देन जीवानामन्तः प्रवेश एव विवक्षित इति वदन्ति । **नापि चिदचिदीश्वराणामिति** भाष्यस्य मृषावाद्यभिमतैक्यनिषेधपरत्वमयुक्तम्, अचिदीश्वरयोस्तैरैक्यानभ्युपगमादित्यभिप्रेत्य भास्कराद्यभिमतैक्यनिषेधपरतया व्याचष्टे—**जगद्ब्रह्मणोरिति** । मृषावादिमतनिरासोपसंहारे इतरमतनिरासो न युक्त इत्यभिप्रेत्य तन्मतनिरासपरतयावतारयति—**अथवा मृषावादिनमेवेति** ।

### श्रुतप्रदीपिका

अथ "क्षेत्रज्ञं च" इत्यादेरर्थमाह—**क्षेत्रज्ञमिति** । विपक्षे बाधमाह—**अन्यथेति** । न केवलं भेदोक्तेः स्वरूपैक्यपरत्वाभावः, सामानाधिकरण्योपपादकान्तर्यामित्व-

कण्ठोक्त्या चेत्याह—**अन्तर्यामीति**। सर्वभूतशब्दयोश्चेतनपर्यन्तत्वं तदुत्तरार्धेन सिद्धम्; "न हिंस्यात् सर्वा भूतानि" इति प्रयोगाच्च। "अहमात्मा" इत्यादेरुक्तार्थपरत्वमाह—**अहमिति**; पूर्वग्रन्थैकार्थ्यादिति भावः। "न तदस्ति" इत्यादेरर्थमाह—**यत इति**। निषेधस्य विहिततादात्म्यशेषत्वादिति भावः। उक्तार्थपरत्वे हेतुमाह—**भगवदिति**। विहितं विभूतित्वं न निषेध्यमिति भावः। अन्यथा "एतां विभूतिं योगं च" इत्युपक्रमविरोधश्चेति भावः। उपसंहारपरत्वं दर्शयति—**तत इति**। शास्त्रस्य निर्विशेषपरत्वाभावं निगमयति—**अत इति**। **अतः**; सद्विद्यायोजनप्रभृत्युक्तन्यायैः। जगन्मिथ्यात्वपरत्वाभावमाह—**नापीति**। **नापि चिदचिदि**त्यचिदुपादानं दृष्टान्ततया। चेतने त्वचिद्धर्मधीः परतन्त्रे स्वतन्त्रधीश्च भ्रम इति स एव निषिद्धः, न स्वरूपमिति **स्वरूप**शब्दभावः।

### नयप्रकाशिका

"क्षेत्रज्ञम्" इत्यादिरपि जीवात्मनः परमात्मान्तरात्मकत्वात् तत्सामानाधिकरण्यनिर्देशस्य शरीरशरीरिभावनिबन्धनत्वात् तादृगर्थप्रतिपादनपरः। अन्यथा "क्षरः सर्वाणि भूतानि" इत्यादिभिर्विरोधः। "अहमात्मा" इत्यादिरपि साचेतनसर्वजीवान्तरात्मत्वप्रतिपादनपरः, "अन्तः प्रविष्टः शास्ता" इत्यादिश्रुत्यैकार्थ्यात्। अत्र भूतशब्दश्चेतनपर्यन्तः। अतः शास्त्रैर्न निर्विशेषवस्तुसिद्धिः; नापि भ्रान्तत्वसिद्धिः।

ब्रह्मणः श्रुत्यादिभिर्नाविद्याश्रयत्वसिद्धिरित्युत्तरत्र वक्ष्यते। पुराणादिभिश्च न तत्सिद्धिरिति पुराणनिर्णयप्रकरणैक्यादत्रोच्यते। न च "ज्योतींषि विष्णुः" इत्यादिश्लोकेषु ब्रह्मण एव सत्यत्वं तदितरस्य तदज्ञानविजृम्भितत्वं प्रतीयत इति वाच्यम्, तत्र तत्प्रतीत्यभावात्। तत्र हि तेषां स्वरूपमाख्यातम्। "संक्षेपात् श्रूयतां मम" इति भुवनकोशस्याभिहितविस्तीर्णस्वरूपसंक्षेपरूपत्वात् न स्वरूपान्तरस्य वाच्यत्वमत्र प्रतिज्ञातम्। पूर्वापरपर्यालोचनया चेतनाचेतनयोर्निर्विकारत्वसविकारत्वाभ्यामस्तिनास्तिशब्दवाच्यत्वप्रसाधनपुरःसरं परमात्मशरीरत्वप्रसाधनपरत्वमेव ह्यत्र प्रतीयते। ननु परमात्मनः पृथिव्यादेश्च शरीरशरीरिभावः कुत्र प्रतीयत इति चेत् "यदम्बु वैष्णवः कायस्ततो विप्र वसुंधरा" इत्यादिश्लोकेष्विति ब्रूमः। अतोऽत्र तादात्म्यं शरीरशरीरिभावनिबन्धनमेव। सामानाधिकरण्यमपि तन्निबन्धनम्। तत्र प्रथमश्लोके सत्यात्मकनास्त्यात्मकयोर्ब्रह्मणा सह शरीरशरीरिभावसंबन्धात् विष्ण्वात्मकत्वमुक्तम्; अन्यथा ब्रह्मणो विकारादिदोषोऽजत्वादिदोषो वा स्यात्। ततश्च

"अविकाराय" "यः सर्वज्ञः" इत्यादिभिर्विरोधः। प्रथमश्लोकोक्तास्तिनास्तिशब्दार्थयोः स्वरूपतच्छब्दाभिधेयत्वे च हेतुरुच्यते—

"ज्ञानस्वरूपो भगवान् यतोऽसा-
वशेषमूर्तिर्न तु वस्तुभूतः।
तथाहि शैलाब्धिधरादिभेदान्
जानीहि विज्ञानविजृम्भितानि ॥"

इति। 'असौ ज्ञानस्वरूपो भगवान्' इत्यत्र ज्ञानस्वरूपशब्दो जीवान्तरात्मपरमात्मपरः, जीवस्य ज्ञानमेवासाधारणस्वरूपमिति ज्ञानशब्दस्य जीवपरत्वेन तदन्तरात्मत्वात् परमात्मनः। न तु वस्तुभूतः; न तु देवमनुष्यादिस्वरूपः। तत एवापरिणामिनो जीवस्याचिद्रूपदेवमनुष्यादि-शैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः; विज्ञानरूपस्य सतो देवाद्याकारानुसंधानकर्ममूलाः। एष एवार्थः, "बाह्यकर्मवृतिप्रजः" इत्यादिनैकार्थ्यात्। परमात्मशरीरक्षेत्रज्ञानामेतदेव स्वरूपं, न तु देवमनुष्यादिरिति तात्पर्यार्थः। एवमपरिणामिनो जीवस्यास्तिशब्दाभिधेयता कर्ममूलपरिणामिनोऽचितो नास्तिशब्दाभिधेयता चार्थादुक्ता। एवम् "अशेषमूर्तिः" इत्यस्य मुख्यार्थता। अन्यथा तु लक्षणा, वस्तुविशेषस्याभावात्। "भगवान्" इत्यस्यापि लक्षणा; ज्ञानशक्त्यादेरपि लक्षणा, ज्ञानशक्त्यादेरपि मिथ्यात्वात्। अतोऽस्मिन् श्लोके ब्रह्मणोऽविद्याश्रयता वा जगतोऽविद्याकल्पितत्वं वा न साध्यते, तद्वाचकशब्दाप्रतीतेः।

"यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥"

इति श्लोके "ज्ञानस्वरूपः" इति श्लोकार्थो विव्रियते। यदा तु कर्मक्षये ज्ञानमपास्तदोषं तदाहि शुद्धं निजरूपीत्यन्वयः। सर्वकर्मक्षये; देवादिवैविध्यानुसंधानमूलकर्मक्षये। ज्ञानम्; आत्मवस्तु। अपास्तदोषम्; निरस्तप्राकृतबन्धम्। शुद्धं निजरूपीति स्वभावाख्यानमात्रम्, "अपास्तदोषम्" इत्यनेनैव रागादिनिरासस्यापि सिद्धत्वेन व्यावर्त्याभावात्; शुद्धा-विर्भूतस्वरूपमित्यर्थः। वस्तुषु संकल्पतरोः फलानि वस्तुभेदा नो भवन्तीत्यन्वयः। वस्तुषु; देवादिदेहविशिष्टात्मवस्तुषु। संकल्पतरोः फलानि; देहात्मभ्रमसंकल्पमूलकर्मफलभोग्यदेवादि-भेदा न भवन्ति, कर्माख्यकारणविनाशे तत्कार्यदेवादिदेहादेर्दुःखादिफलाय भोग्यत्वानुप-पत्तेः। चिदचितोरपरिणामित्वपरिणामित्वयोः प्रसाधनात् अस्तिनास्तिशब्दाभिधेयता फलिता।

अथाचिद्वस्तुनः परिणामित्वे कथं नास्तिशब्दाभिधेयत्वमिति चेत्, सततपरिणामित्वेनावस्थानां विनाशादिति ब्रूमः। बाधदर्शनाभावेऽपि कथं काल्पनिकत्वमित्यस्य परिहारपरत्वे बाधाभावेऽपि काल्पनिकत्वमेवेत्युक्तं स्यात्। न तु कालान्तरे बाधितत्वं मिथ्यात्वप्रयोजकं, प्रतिपन्नोपाधावेव बाधितत्वं हि मिथ्यात्वप्रयोजनकम्। न ह्यस्मिन् श्लोके प्रतिपन्नोपाधावेव मिथ्यात्वाभिधानप्रतीतिः; किंतु "कर्मक्षये" इति वचनात् कालान्तर एव।

"वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्॥"

इत्यनेन परिणामिनो नास्तिता स्थिरीक्रियते। वस्त्वस्ति किम्? अचिद्वस्तु आद्यादिरहितं सततैकरूपं कुत्रापि किमस्ति? किमाक्षेपे; नित्यैकरूपाचिद्वस्तु किमपि नास्तीत्यर्थः। यच्च वस्तु प्रतिक्षणमन्यथात्वं याति, तद्वस्तुनः पूर्वपूर्वावस्थाप्रहाणेनावस्थान्तरापन्नत्वेन। भूयो न तत्तथा; तत्र प्रत्यभिज्ञाविषय इत्यर्थः। तत्र; एवं स्थिते। कुतो हि तत्त्वम्?; अनारोपितविषयत्वं कुत इत्याक्षेपे। अतस्तन्नास्तिशब्दाभिधेयमित्यर्थः। यो हि पदार्थ आद्यादिरहितः सततैकरूपः स एव ह्यस्तिशब्दाभिधेयः। अतोऽस्य श्लोकस्य जगतो न यौक्तिकबाधप्रतिपादनद्वारा मिथ्यात्वप्रतिपादनपरत्वम्, बाधितत्वस्यानभिधानात्। सततपरिणामित्वमेव ह्यभिहितं, न तु मिथ्यात्वम्। अथ सर्वस्य दृश्यस्य मिथ्यात्वं जन्मादिमत्त्वात् साध्यत इति चेत्—जन्मादिमत्त्वहेतोरमिथ्यात्वस्यापि साधकत्वेन प्रकरणसमत्वात्। अथ शुक्तिरजतस्य जन्मादिमतो मिथ्यात्वदर्शनात् जगतो मिथ्यात्वं साध्यत इति चेत्—न; शुक्तिकायां रजतस्यापूर्वस्य जन्माद्यभावात्। अतो न यौक्तिकपरत्वमस्य।

"मही घटत्वं घटतः कपालिका कपालिकाचूर्णरजस्ततोऽणुः।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥"

इत्यनेन प्रत्यक्षोपलम्भप्रदर्शनेन पूर्वश्लोकोक्तार्थो दृढीक्रियते। स्वकर्मस्तिमितात्मनिश्चयैर्मही घटत्वमित्याद्यन्वयः। स्वकर्मणा देवमनुष्यादिशरीरद्वारा स्तिमितात्मनिश्चयैः प्रतिबद्धात्मस्वरूपज्ञानैर्जनैः मही मृत्पिण्डः मृत्पिण्डत्वावस्थाप्रहाणेन घटावस्थोऽनुभूयत इत्यर्थः। घटतः कपालिका; घटः कपालो लक्ष्यते। कपालिका चूर्णरजो लक्ष्यते। चूर्णरजः सूक्ष्मरूपधूलिर्लक्ष्यते। अथवा मही घटत्वं यातीति पूर्वश्लोकात् यातीत्यस्यानुषङ्गः। तदा कपालिकात्वमिति विभक्तिविपरिणामः कार्यः। अथवा 'मही घटो जायते, घटतः कपालिका

जायते' इत्यध्याहृत्य योजना। तत्त्वं जनैरालक्ष्यत इति योजनीयम्। अतः किमत्र वस्तु? अचिद्वस्तुनोऽस्तिशब्दवाच्यत्वं किमस्ति? नास्तीत्यर्थः। न ह्येतच्छ्लोकेऽप्यपारमार्थ्यप्रतिपादकशब्दोपलब्धिः। अनेकरूपस्य मिथ्यात्वं कुत इत्यस्योत्तरत्वे शुक्तिकारजतवत् बाधितत्वादित्युक्तिः स्यात्। न ह्यनेकरूपत्वस्य शुक्तिकारजतादिवत् बाधितत्वदर्शनम्। न शुक्तिकारजतस्य रजतकार्याक्षमत्ववत् घटादेर्जलाहरणादिकार्याक्षमत्वं दृश्यते। परिणामपरंपरामात्रं हि तत्र दृश्यते; न ततो मिथ्यात्वसिद्धिः। "तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित्कदाचिद् द्विज वस्तुजातम्" इत्यर्धेन नास्तिशब्दोपसंहारः क्रियते। तस्मात्; अचिद्वस्तु विकारास्पदमिति यस्मात्, तस्मान्न विज्ञानमृते जीववस्तुव्यतिरेकेण क्वचित् कदाचित् न वस्तुजातमस्तिशब्दाभिधेयं न भवतीत्यर्थः। न ह्येतदर्थेऽपि मह्याद्यवस्थाप्रकाशकविज्ञानमेकं मुक्त्वा न किंचिद्वस्त्वस्ति, सर्वं विज्ञाने कल्पितमित्येवंविधार्थप्रतिपादकशब्दो दृश्यते। किंच प्रकाश्यघटाद्यभावे प्रकाशकज्ञानस्यापि न सद्भावः। न च रज्जुसर्पादिविषयस्यायाथार्थ्येऽपि ज्ञानस्य सत्यतावदयथार्थेऽपि विषये ज्ञानसत्यतोपपन्नेति वाच्यम्, तज्ज्ञानस्यापि मिथ्यात्वाभिधानात्; रज्जुसर्पज्ञानस्यापि यथार्थविषयत्वाच्च। तच्चोत्तरत्र वक्ष्यते। "विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम्" इत्यर्धेन च ज्ञानैकाकारस्यात्मनो देवादिभेदानुसंधानं नात्मस्वरूपप्रयुक्तमित्युच्यते। विज्ञानम्; ज्ञानैकाकारमात्मवस्तु। तत् एकम्; देवादिभेदप्रत्यनीकस्वरूपम्। "बहुधाभ्युपेतम्" इत्यत्रापि "विज्ञानमेकम्" इत्यन्वीयते। निजकर्मभेदविभिन्नचित्तैः स्वकृतकर्मभेदकृतशरीरसंबन्धात् तद्रूपात्मबुद्धिभिर्बहुधोपेतं देवादिदेहभेदानुसंहितम्; नात्मज्ञानिभिः। आत्मवस्तु विशुद्धम्; कर्मरहितम्। अतो विमलम्; प्रकृतिस्पर्शरहितम्। ततश्च विशोकम्। अशेषलोभादिनिरस्तसङ्गम्; अशेषाः सर्वे, त एव लोभादयः, तेषां निरस्तसङ्गं; निरस्तः सङ्गो यस्य तत् निरस्तसङ्गम्; तदशेषलोभादिनिरस्तसङ्गम्। एकम्; विकाररहिततया एकप्रकारम्। तत एवैकरूपं परमात्मेति परमः सर्वोत्कृष्ट इत्यर्थः। परेशः; परेषामीशः। प्रकृतिप्राकृतपदार्थानां भोक्तृत्वात् क्षेत्रज्ञानां परत्वं, तेषां क्षेत्रज्ञानामीशो नियन्ता। वासुदेवः; वासुदेवशरीरम्। परमात्मशरीरत्वाज्जीवात्मनो वासुदेवनिर्देशः, न तु स्वरूपतो वासुदेवत्वात्। न यतोऽन्यदस्ति; अवासुदेवात्मकं वस्तु नास्तीति यतः, अतः स जीवो वासुदेवशरीरमित्यर्थः। न हि क्षणिकस्य ज्ञानस्य भ्रमाधिष्ठानानुपपत्तिनिरसनद्वारा ज्ञप्तेर्भ्रमाधिष्ठानप्रतिपादनप्रतीतिः, ज्ञानेतरस्य मृषात्वप्रतीतिर्वा; तथात्वे

'परः'इत्यादिपदानर्थक्यात् । वस्त्वन्तराभावे तु कथं परत्वम् ? कथं वा परेशत्वम् ? न चाविद्यानियमनात्परत्वोपपत्तिरिति वाच्यम्, मिथ्यावादिपक्षे ब्रह्मणोऽविद्यापरवशत्वान्नियमनानुपपत्तेः । "सद्भाव एवं भवतो मयोक्तं ज्ञानं यथा सत्यमसत्यमन्यत् " इत्यर्धेन च प्रक्रान्तं चिदचितोरस्तिनास्तिशब्दाभिधेयत्वं परमात्मशरीरत्वाभिधानं चोपसंह्रियते । सद्भावः; सम्यग्भावः । पूर्वोक्तप्रक्रियया ज्ञानं चिद्वस्तु सत्यमस्तिशब्दाभिधेयं सदैकरूपत्वेन चिद्वस्त्वस्तिशब्दाभिधेयं परमात्मशरीरमिति सम्यगुक्तमित्यर्थः, एवंशब्दस्य प्रकृतपरत्वेनानुवादत्वाद्यथाप्राप्तानुवादस्य युक्तत्वात् केवलसत्यासत्योपादनस्य परमात्मशरीरप्रदर्शनपरत्वेनाप्युपपन्नत्वाच्च । असत्यमन्यत्; अचिद्वस्तु सततपरिणामित्वेनासत्यशब्दवाच्यं परमात्मशरीरमिति चोक्तमित्यर्थः । नन्वत्र सत्यासत्यशब्दयोरस्तिनास्त्यर्थत्वं कथमिति चेत्, उपक्रमानुरोधेनोपसंहारस्याश्वप्रतिग्रहेष्टिन्यायेन वर्णनीयत्वादिति ब्रूमः । तन्नयश्चोत्तरत्र प्रदर्शितः । "एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते " इत्यर्धेन च ज्ञानैकाकारतया देवादिशब्दागोचरस्यापि कर्मनिमित्ताचित्संबन्धात् देवमनुष्यशैलादिरूपेण स्थितिरिति यदुक्तं तदुपसंह्रियते । एतद्भुवनाश्रितं संव्यवहारभूतं यदित्यन्वयः । एतत्; पूर्वोक्तस्वरूपमात्मवस्तु । संव्यवहारभूतम्; प्राप्तसम्यग्भेदं सत्; सम्यग्भेदस्य हि व्यवहारार्हता नान्यस्य । यत्; वर्तते इत्यध्याहारः । तत्रापि चोक्तम्; तत्रापि कर्मैव हेतुरित्यध्याहृत्योक्तमिति योजना । भुवनाश्रितम्; देवमनुष्यादिशैलरूपम् । अस्यार्धस्य भुवनस्य व्यावहारिकसत्यत्वपरत्वे तत्रापीत्यादेरनन्वयः, संव्यवहारेत्यादिशब्दानामसामञ्जस्यं च ।

" यज्ञः पशुर्वह्निरशेषऋत्विक् सोमः सुराः स्वर्गमयश्च कामः ।
इत्यादि कर्मश्रुतिमार्गदृष्टं भूरादिभोगाश्च फलानि तेषाम् ॥"

इत्यनेन चात्मनो देवादिभेदस्य कर्महेतुत्वमेव विवृणोति । यज्ञः; देवतोद्देशेन द्रव्यत्यागात्मकः । उपलक्षणमेतद्धोमादेरपि । पशुः; यज्ञसाधनद्रव्यविशेषः । वह्निः; होमाधाराहवनीयादिः । अशेषऋत्विक्; अध्वर्य्वादिः । सोमः; लताविशेषः । सुराः; इन्द्रादयो देवाः । स्वर्गमयश्च कामः; स्वर्गादिकामना । तच्च कर्तृविशेषणम् । कामनायाः प्रवृत्तिहेतुत्वेन साधनादिद्रव्यैः सहोपादानम् । इत्यादि; यज्ञप्रभृति । आदिशब्देन दक्षिणादयो गृह्यन्ते । कर्मश्रुतिमार्गदृष्टम्; कर्मविषयश्रुतिमार्गेऽनुष्ठेयतया दृष्टम् । भूरादिभोगाश्च फलानि तेषाम्; यज्ञादिकर्मणां भूरादयो देवमनुष्यादयश्च भोगाः, भोग्याः फलानि ।

भूरादीनां भोगा इति षष्ठीसमासो वास्तु । तत्र पुण्यकर्मोपादानं पापस्याप्युपलक्षणम् । अतो ज्ञानैकाकारस्यापि कर्मनिमित्ताचित्संबन्धात् देवादिरूपेण व्यवहारहेतुत्वं सत्यमेवेति तात्पर्यम् ।

" यच्चैतद्भुवनगतं मया तवोक्तं
सर्वत्र व्रजति हि तत्र कर्मवश्यः ।
ज्ञात्वैवं ध्रुवमचलं सदैकरूपं
तत्कुर्याद् व्रजति हि येन वासुदेवम् ॥"

इत्यनेन नास्तिशब्दवाच्यजगद्याथार्थ्यज्ञानस्य मोक्षोपाययत्नः प्रयोजनमित्युच्यते । अत्र भुवनशब्देन संगतिरुच्यते । भुवनगतत्वेन यदुक्तं स्थानादि, तत्र कर्मवश्यः कर्मानुरूपं व्रजति । अतोऽन्तवद् दुःखरूपमिति ज्ञात्वेत्यध्याहारः । अचलं ध्रुवमित्यादि जीवविशिष्टपरमात्मपरम्; कर्मनिमित्तचलनाभावादचलम्; अत एव ध्रुवं विकाराद्यभावात् सदैकरूपम् । एवंरूपजीवान्तरात्मानं वासुदेवं येनोपायेन व्रजति तत्करोति । अचितोऽस्थिरत्वज्ञाने जीवस्य स्थिरत्वज्ञाने च मोक्षोपाये प्रवर्तेत इति तात्पर्यम् । अथवा चिदादिस्वरूपं विमृश्य मोक्षे यत्नं कुर्यादिति विधिः । अतोऽत्र न ब्रह्माज्ञानादिप्रतीतिः, चिदचितोरस्तिनास्तिशब्दाभिधेयत्वादेरेव प्रसाधितत्वात् । " यत्तु कालान्तरेणापि " इत्यादिनापि तत्स्पष्टम् । मैत्रेयेण " विष्णवाधारम् " इत्यादिनास्माभिरुक्तार्थस्यैवानूदितत्वाच्च । अतोऽस्मदीय एव मार्गोऽभिप्रेतो भगवतः पराशरस्य । " विष्णवाधारम् " इत्यनेनात्मशरीरभावोऽनूदितः । ज्ञानप्राधान्यानुभाषणात् चिदचितोरपरिणामित्वपरिणामित्वे । तयोरपरिणामपरिणामाभ्यां हि प्राधान्याप्राधान्ये । ज्ञानस्य प्राधान्योक्तौ तदितरस्य चाप्राधान्यमर्थसिद्धम् । अतो नाविद्यादोषवशात् मिथ्यार्थदर्शित्वप्रतीतिः पुराणादिषु । (न च बन्धस्य ज्ञानबाध्यतान्यथानुपपत्त्या मिथ्यात्वमिति वाच्यम्, तस्य ज्ञानबाध्यत्वाभावात्) । तच्च वाक्यार्थज्ञानसद्भावेऽपि बन्धनिवृत्त्यदर्शनादिति पूर्वमेवोक्तम् । पुण्यादिनिमित्तदेहित्वसुखित्वादिरेव हि बन्धः । न हि तस्य मिथ्यात्वप्रतीतिर्वा ज्ञानबाध्यत्वधीर्वा । अतो बन्धः परमार्थ एव । अथ तन्निवृत्तिः केनेति चेत्, उपासनात्मकज्ञानप्रीतपरमात्मप्रसादादिति ब्रूमः । " अमृतस्यैष सेतुः " " तेषामहं समुद्धर्ता " इत्यादिश्रुतिस्मृतिशतैः परमात्मप्रसादादेव बन्धनिवृत्तिरिति सिद्धम् । " फलमत उपपत्तेः " इत्यत्र सूत्रकारैरपि सर्वफलसिद्धिस्तत एवेत्युक्तम् । न च ब्रह्मात्मैकत्वविज्ञानस्य विद्यात्वं, तादृशज्ञान-

स्यायथार्थविषयत्वेनाविद्यात्वात्; जीवस्य ब्रह्मणश्च पृथक्त्वेनैक्यानुपपत्तेः। "न ह्यन्यदन्यद् भवति" इति ह्युक्तम्। न च ब्रह्मण एवाविद्यया जीवत्वेन स्थितत्वात् तयोरैक्यमिति वाच्यम्, ब्रह्मणोऽविद्यासंबन्धाभावेन जीवत्वाभावात्। "पृथगात्मानं प्रेरितारं च मत्वा" इत्यादौ "द्वाविमौ पुरुषौ लोके" इत्यादौ च पृथक्त्वेन यथावस्थितपरमात्मज्ञानादेव मोक्षप्रतीतिः। तयोरेतद्विपरीतस्वरूपैक्यज्ञानं तु बन्धायैव। "अथ योऽन्यां देवतामुपास्ते" इत्यादयस्तु जीवस्य परमात्मशरीरतया परमात्मशरीरत्वेनोपासनप्रतिपादनपराः, न तु जीवपरयोरणुत्वकर्मपरवशत्वाज्ञत्वसर्वज्ञत्वविभुत्वसर्वनियन्तृत्वादिधर्मत्वेन श्रुत्यैव विविक्तस्वभावतयाभिहितयोरेकीकृत्यानुसंधानप्रतिपादनपराः। जीवस्याणुत्वादिश्च "एषोऽणुरात्मा" इत्यादिश्रुतिभिः। न हि विरुद्धस्वभावयोरैक्योपपत्तिः। अविरुद्धस्वभावयोरपि पृथक्त्वेन सिद्धयोर्नैक्यमिति लोकसिद्धम्; किमुत विरुद्धस्वभावयोः। विरुद्धस्वभावता च "ज्ञाज्ञौ" इत्यादिश्रुतेः। अत एव "तत्त्वमसि" इत्यादिरपि सामानाधिकरण्येन तदात्मकत्वोपदेशपरः। "आत्मेति तु" इत्यत्रापि परमात्मशरीरभूतजीवस्यात्मत्वेनैवोपास्यः परमात्मेत्युच्यत इति तत्रैव साधितम्। "न पुनर्मृत्यवे तदेकम्" इत्यादयोऽपि सर्वस्य ब्रह्मशरीरत्वानुसंधानफलपराः। "मृत्योः स मृत्युमाप्नोति" इत्यादिनानात्वनिषेधश्रुतयस्त्वब्रह्मात्मकनानात्वनिन्दापराः, न तु श्रुत्यादिप्रमाणसिद्धब्रह्मात्मकजीवादिनानात्वनिषेधपराः। अत्र मृत्युशब्दश्च कर्मपर इत्युक्तम्। एवमादिश्रुतिनिर्वाहो भाष्ये स्पष्टः।)

(किंच भेदावलम्बिप्रत्यक्षादिविरोधाच्च श्रुतेर्न निर्विशेषवस्तुपरत्वम्। न च प्रत्यक्षस्य दोषमूलत्वेनान्यथासिद्धत्वात् शास्त्रबाध्यत्वमिति वाच्यम्, तस्य दोषमूलत्वाभावात्। न चानादिभेदवासनामूलत्वात् प्रत्यक्षस्य तद्वासनाया एव दोषत्वमिति वाच्यम्, तद्वासनाया दोषत्वे प्रमाणाभावात्। न हि तस्यास्तिमिरादिवत् विपरीतज्ञानहेतुत्वसिद्धिः। अथ निखिलभेदनिषेधशास्त्रेण प्रत्यक्षस्य विरोधात् बाध्यत्वे दोषमूलत्वकल्पनायां वासनैव दोष इति ज्ञास्यत इति चेत्—न; शास्त्रस्य निखिलभेदनिरसनपरत्वनिश्चये तद्वासनाया दोषत्वनिश्चयः; एवं निश्चये तन्निश्चय इतीतरेतराश्रयदोषाच्छास्त्रस्य निखिलभेदनिरसनपरत्वानिश्चयः। किंच तद्वासनाया दोषत्वेन प्रत्यक्षस्यायथार्थविषयत्वं यदि स्यात्, तर्हि शास्त्रस्यापि तन्मूलत्वात्तथात्वम्। तथात्वे च प्रत्यक्षस्य न बाध्यत्वम्, अविशेषात्। न च शास्त्रस्य दोषमूलत्वेऽपि प्रत्यक्षाद्यवगम्यमानभेदज्ञानबाधकत्वेन परत्वाद् बाधकत्वमिति वाच्यम्, दोषमूलत्वावगतौ परत्व-

स्याकिंचित्करत्वेन बाधकज्ञानानुत्पादकत्वात् । न च शास्त्रस्यार्थावगतेः प्राक् दोषमूलत्वं न ज्ञातमिति बाधकत्वं युक्तमिति वाच्यम्, श्रवणवेलायामेव दोषमूलत्वप्रतीतेः । श्रवणमनन-निदिध्यासनाद्धि वाक्याद्भेदबाधकज्ञानोत्पत्त्यङ्गीकारः। श्रवणवेलायां मिथ्यात्वानवगतौ शास्त्रस्य सत्यत्वावगतेर्न ब्रह्मव्यतिरिक्तस्य मिथ्यात्वावगतिरिति न ब्रह्मयाथात्म्यज्ञानम् । किंच शास्त्र-प्रत्यक्षयोरदोषमूलत्वे दोषमूलत्वे च किं स्वप्रकाशानुभूतिरेव प्रमाणम्, उत प्रत्यक्षम्, अथ प्रमाणान्तराणीति वाच्यम्; न तावदाद्यः; तस्या निर्विषयत्वात् । अथ तस्या विषयसद्भावोऽ-ङ्गीकृत इति चेत्, तर्हि शास्त्रप्रत्यक्षयोरविशेषेण निर्दोषत्वेन प्रामाण्यं सदोषत्वेनाप्रामाण्यं वा; तस्याः पक्षपातविरहात् । नापि द्वितीयः; योग्ययोगिप्रत्यक्षस्य दोषमूलत्वेनाभीष्टार्था-साधकत्वात् । नापि तृतीयः; अनुमानादेर्व्याप्तिग्रहणादौ दोषमूलप्रत्यक्षसापेक्षत्वेन दोष-मूलत्वाविशेषात् । अतो निर्दोषवास्तवप्रमाणानङ्गीकारे न कस्याप्यर्थस्य सिद्धिः । ननु नाभि-मतार्थासिद्धिः, प्रमाणप्रमेययोर्व्यावहारिकसत्यत्वाभ्युपगमादिति चेत्— न; तादृशप्रामाण्यस्य निरूप्यमाणार्थपरिच्छेदकत्वाशक्तेः । व्यावहारिकत्वं नामापातप्रतीयमानस्य युक्तितो निरूप-णाद् बाध्यत्वम् । कथं तादृशस्य कार्यकरत्वम्? न च शास्त्रप्रत्यक्षयोर्दोषमूलत्वाविशेषेऽपि प्रत्यक्षविषयभेदादेः शास्त्रबाध्यत्वदर्शनात् शास्त्रविषयनिर्विशेषब्रह्मणः पाश्चात्यबाधादर्शनाद् ब्रह्मणः पारमार्थिकत्वमिति वाच्यम्, बाधकप्रत्ययादर्शनेऽपि दोषमूलत्वेन शास्त्रीयज्ञानस्य विषयेण सह मिथ्यात्वापातात् । दोषमूलत्वं हि मिथ्यात्वे प्रयोजकम्, न तु केवलबाधक-प्रत्ययदर्शनम् । दोषस्य चायथार्थज्ञानहेतुत्वात् विषयस्यापि मिथ्यात्वं सिद्धम् । द्विचन्द्रा-दिवत् दोषमूलप्रत्यक्षविषयत्वाद्धि प्रपञ्चस्य मिथ्यात्वाङ्गीकारो भवताम् । न हि बाधो दृश्यते प्रपञ्चस्य । अतो दोषमूलशास्त्रविषयब्रह्मणोऽपि मिथ्यात्वापत्तिर्दुर्वारा । किं च मिथ्यावादि-पक्षे ब्रह्मणो 'विवादाध्यासितं ब्रह्म मिथ्या' इत्यदिभाष्योक्तानुमानैश्च मिथ्यात्वम् । न च प्रमाणस्य मिथ्यात्वेऽपि न प्रमेयस्य मिथ्यात्वम्, स्वप्नज्ञानस्य मिथ्यात्वेऽपि परमार्थ-शुभादिप्रतीतिहेतुत्वदर्शनादिति वाच्यम्; स्वाप्नप्रतीतेर्मिथ्यात्वाभावात्; तच्च बाधाया अदर्शनात् । तज्ज्ञानविषयाणामेव हि बाधितत्वम् । न हि स्वप्नज्ञानस्यानुभूतस्य बाधितत्व-प्रतीतिः । अबाधितत्वबाधितत्वाभ्यां हि सत्यत्वासत्यत्वनिश्चयः । ऐन्द्रजालिकमन्त्रादिजनित-मिथ्यार्थसर्पादिविषयज्ञानमपि सत्यभयादिहेतुः सत्यमेव, तज्ज्ञानस्याप्यबाधितत्वात् । रज्जु-सर्पादिबुद्धेरपि सत्यत्वम् ; एषां ज्ञानानामुत्पत्तिमत्त्वात् भयाद्यर्थक्रियाकारित्वाच्च सत्यता,

घटादिवत्। न च विषयाभावे कथं ज्ञानस्य सत्यत्वमिति वाच्यम्, ज्ञानविषयालम्बनत्वदर्शनात्। न च खपुष्पादिवदसतां कथं भासमानत्वमिति वाच्यम्, अर्थस्य भासमानत्वेन दर्शनात्। न हि दृष्टेऽनुपपत्तिर्नाम। न च तर्हि सर्वत्र प्रतिभासप्रसङ्ग इति वाच्यम्, दोषाख्यहेतोर्विद्यमानत्वात्। न च प्रतिभासमानत्वे घटादिवत् सत्यत्वमिति वाच्यम्, बाधादेवासत्यत्वाध्यवसायात्। बुद्धेस्त्वबाधितत्वात् सत्यत्वमेव।

अकारादिवर्णप्रतीतिहेतोः रेखाया अपि सत्यत्वेन नासत्यात् सत्यवर्णबुद्धिः। अथ वर्णात्मकतया प्रतिपन्नरेखाया एव वर्णबुद्ध्युत्पत्तिहेतुत्वात् अत्र वर्णत्वस्यासत्यत्वादसत्यात् सत्योत्पत्तिरिति चेत्—न, असतो ज्ञानविषयस्य हेतुत्वाभावात्; तच्चादर्शनात्; असतो हेतुत्वे कार्यपूर्वक्षणवर्तित्वायोगाच्च। तस्य कारणत्वे सर्वोत्पत्तिश्च। रेखागताविद्यमानवर्णस्य वर्णबुद्धिकारणत्वे सर्ववर्णाभावस्यैकरेखायामेव सद्भावादेकरेखात एव सर्ववर्णप्रतीतिप्रसङ्गश्च। अथ रेखाविशेषस्य वर्णविशेषसंकेतवशात् वर्णविशेषप्रतीतिहेतुत्वमिति चेत्, न तर्ह्यसत्यात् सत्यधीः, रेखासंकेतयोः सत्यत्वात्। ननु रेखागतान्न वर्णप्रतीतिः; किंतु तद्बुद्धेरिति चेत्, तर्हि तद्बुद्धेः सत्यत्वात् नासत्यात् सत्यधीः। कार्यकारणयोर्वर्णबुद्धित्वाविशेषात् साध्यसाधनयोरैक्यप्रसङ्गश्च। न च चित्रादौ रेखास्वविद्यमानगवयात् सत्यगवयप्रतीतिर्जायत इति वाच्यम्, तद्रेखागतगवयसादृश्यस्य सत्यत्वेन सत्यादेव गवयप्रतीतेः। ननु शब्दार्थयोरैक्येऽपि तादात्म्याभिव्यञ्जकभेदारोपितैर्भेदैरविद्यमानैः सत्यघटादिप्रतीतिर्दृश्यत इति चेत्—न; अभिव्यञ्जकानां तद्भेदानां च सत्यत्वात्, शब्दस्य तदभिव्यङ्ग्यत्वाकारेणार्थप्रतीतिहेतुत्वात्।

स्फोटवादिमतेऽपि नासत्यात् सत्यधीरित्युक्तम्। वस्तुतस्तु न तस्य शब्दत्वम्, गकारादेरेव श्रोत्रग्राह्यत्वेनार्थबोधकत्वेन च शब्दत्वात्। न च श्रोत्रग्राह्यस्य शब्दत्वे सत्त्वशब्दत्वयोरतिव्याप्तिः, तयोरपि श्रोत्रग्राह्यत्वादिति वाच्यम्; सत्ताख्यसामान्यशब्दसामान्ययोरभावात्; तच्च तत्र प्रमाणाभावात्। अनुवृत्तिबुद्धिर्हि सामान्यसद्भावे प्रमाणम्। न हि द्रव्यगुणादिष्वनुवृत्तबुद्धिः। द्रव्यादिषु सदादिशब्दप्रयोगः प्रमाणग्राह्यत्वोपाधितः। तथाच न गकारादिष्वेकाकारधीः। ननु न वर्णानामर्थप्रत्यायकत्वम्, अनुपपत्तेः; तथाहि—किं वर्णानामर्थप्रत्यायकत्वं प्रत्येकम्? उत समुदितानाम्? न तावदाद्यः, अदर्शनात्। नापि द्वितीयः, उपलब्धानामेव वर्णानामर्थप्रत्यायकत्वात् उपलब्धेश्चोच्चारणक्रमानुविधायित्वात्

युगपत् सर्ववर्णोपलब्ध्यनुपपत्तेः । वर्णानामेव बोधकत्वे तु नदीदीनेत्यादिष्वविशेषेणैकार्थ-प्रतीतिः स्यात् । तथा वक्तृभेदेऽपि; कश्चित् 'न' इति वदति, अन्यो 'दी' इति वदति; अत्राप्यर्थप्रतीतिः स्यात् । न चैतद् दृश्यते । न च संस्कारसचिवानां प्रत्यायकत्वमिति वाच्यम्, संस्कारस्यापि यथानुभवं जायमानत्वाद्वर्णोक्तदोषापत्तेः । तज्जन्यस्मृतीनामपि तथा । अतो वर्णानां प्रत्यायकत्वानुपपत्तेस्तदतिरिक्तस्फोटाख्योऽर्थप्रत्यायकः शब्दशब्दाभिधेयो-ऽङ्गीकार्यः । किंच 'एकोऽयं गोशब्दः' इति प्रतीतेः प्रत्यक्षत्वात् प्रत्यक्षेणापि स्फोटसिद्धिः । न हि वर्णेष्वेकप्रतीत्युपपत्तिः, तेषामनेकत्वात् । तत्र चैकप्रतीतिर्भ्रान्तिः । ततः स्फोटोऽङ्गी-कार्यः प्रत्यायकत्वेनेति चेत्—मैवम्; वर्णानामेवार्थप्रत्यायकत्वेन शब्दत्वात्, अर्थबुद्धेस्त-दन्वयव्यतिरेकानुविधायित्वात् । न च वर्णानामर्थप्रत्यायकस्फोटाभिव्यञ्जकत्वादर्थप्रत्ययान्वय-व्यतिरेकयोः कारणकारणतयान्यथासिद्धिरिति वाच्यम्, स्फोटसिद्धौ प्रमाणाभावात् । न चार्थप्रतीत्यन्यथानुपपत्तिः प्रमाणमिति वाच्यम्, वर्णेभ्य एवार्थप्रतीत्युपपत्तेः क्षीणत्वादर्था-पत्तेः । न च वर्णानामर्थप्रत्यायकत्वानुपपत्तिरुक्तेति वाच्यम्, अनुपपत्त्यभावात्; एकैकवर्णजनितसंस्काराणां संभूयानेकवर्णविषयैकस्मृतिजनकत्वकल्पनामात्रेण सर्वानुप-पत्तेः शान्तत्वात् । तथा सर्ववर्णानां युगपत् स्मृतिस्थत्वे प्रत्यायकं चोक्तम् । अस्मिन् पक्षे लोकसिद्धधर्ममात्रकल्पना । पक्षान्तरे त्वप्रसिद्धधर्मिकल्पनागौरवम् । उभयपक्षेऽप्यर्थबुद्ध्याख्यकार्यमेव कल्पकम् । दीनेति व्युत्क्रमोच्चारितेष्वेकार्थधीकार्यादर्शना-त्तद्धीहेतुसंस्काराभावः । अन्यार्थधीदर्शनात् तद्धेतुसंस्कार एव कल्प्यः, कार्यकल्प्यत्वात् कारणस्य । तथा पुरुषान्तरोच्चारितवर्णेष्वपि कार्यादर्शनादेव कारणाभावः । किंच अर्थप्रत्याय-कत्वे वर्णपक्षे यद्दूषणमुक्तं तत्स्फोटपक्षेऽपि समम् । किमेकैकवर्णेन स्फोटाभिव्यक्तिः? उत मिलितैः? उभयपक्षोऽपि न संभवति । एकेनैव वर्णेन स्फोटस्याभिव्यक्तत्वात् तस्य चैकत्वात् सर्वार्थप्रत्यायकत्वापत्तेः । निर्भागत्वाच्च भागशो नाभिव्यक्तिः स्फोटस्य । न च स्फोटे वर्णा-ध्यासस्याविद्यकत्वात् तस्याश्च दुर्घटत्वमेव स्वरूपमिति न दोष इति वाच्यम्; शून्यवादिना 'शून्यमेव तत्त्वम्; सत्यप्रतीतिस्त्वविद्यया' इत्युक्ते स्फोटवादिना 'कथमत्यन्तासतः प्रतीतिः?' इति शून्यवादपक्षे दोषेऽभिहिते 'दुर्घटत्वमविद्याया भूषणम्' इति शून्यवादिनोक्ते तस्यैव विज-यित्वेन स्फोटवादिनो निरुत्तरत्वापत्तेः । स्फोटवादिपक्षेऽपि मिथ्यावादिपक्षवत् स्फोटव्यतिरिक्त-स्य सर्वस्याविद्यकत्वात् दूषणस्यैव भूषणत्वात् स्वपक्षसाधनादिश्च व्यर्थः । अतो मिथ्यावादि-

पक्षवदयमपि पक्षो दुष्ट एव । न च 'गौः' इत्यादिष्वेकत्वप्रतीतेः प्रत्यक्षत्वात् प्रत्यक्षेणापि स्फोटप्रतीतिरिति वाच्यम्, तदैक्यप्रत्ययस्यैकार्थोपाधित्वात् । न हि प्रत्यक्षेण स्फोटः श्रूयते । गकारादिवर्णा एव श्रूयन्ते । न हि तदतिरिक्तार्थप्रतीतिः । अतः श्रोत्रग्राह्यवर्णानामेव शब्दत्वम् ।

प्रासङ्गिकस्तु स्फोटनिरासः । प्रकृतमनुसरामः । अतो नासत्यात् शास्त्रात् सत्यब्रह्मधीः । तथात्वे ब्रह्मणोऽप्यसत्यता । अथाद्वैतज्ञानात् प्राक् शास्त्रस्य सद्बुद्धिविषयत्वात् नासत्यत्वम्; अतोऽद्वैतज्ञानोत्पाददशायां शास्त्रस्य सत्यत्वात् सत्यादेव ब्रह्मज्ञानोत्पत्तिः ; अद्वितीयज्ञानोत्पत्तौ शास्त्रस्यासत्यत्वेऽपि न विरोधः, तदानीं तस्यानुपायत्वादिति चेत्— न; शास्त्रस्य वस्तुतोऽसत्यत्वे तत्र 'अस्ति' इति बुद्धेर्मिथ्यात्वात् । न च शास्त्रास्तित्वधीमिथ्यात्वे ब्रह्ममिथ्यात्वमापादयतस्ते किमायातमिति वाच्यम्, वस्तुतोऽसतः सद्बुद्ध्या ग्रहणेऽपि स्वाभीष्टार्थासाधकत्वात् । तथात्वे लिङ्गाभासानामाभासत्वाप्रतीतावर्थसाधकता स्यात् । न हि शीतालोर्बाष्पधूमबुद्ध्यानुमितस्याग्नेः सिद्धिः । किंच शास्त्रवेद्यब्रह्मणः पाश्चात्यबाधदर्शनाभाव इति कृत्वा दूषणान्युक्तानि । तस्य पाश्चात्यबाधादर्शनमसिद्धमेव, 'शून्यमेव तत्त्वम्' इति वाक्येन ब्रह्मणोऽपि बाधदर्शनात् । न च तद्वाक्यस्य भ्रान्तिमूलत्वादबाधकत्वमिति वाच्यम्, शास्त्रस्यापि भ्रान्तिमूलत्वस्य त्वयैवोक्तत्वात् । अतः पाश्चात्यबाधाभावः शून्यतत्त्वस्यैव । अतः प्रत्यक्षादीनामविशेषेण प्रामाण्यमप्रामाण्यं वा स्यात् । न तु प्रत्यक्षबाधः शास्त्रेण ।

(न चापच्छेदन्यायादद्वैतशास्त्रेण सगुणशास्त्रस्य बाधः, अद्वैतश्रुतेः सगुणश्रुतेश्च विषयविभागस्योक्तत्वेन विरोधाभावात् अपच्छेदन्यायाविषयत्वात् । विरोधे हि स न्यायः । अबाधेनोपपत्तौ बाधोऽपि न न्याय्यः । एकवाक्य एव हेयगुणनिषेधात् कल्याणगुणविधानाच्च ब्रह्मण उभयलिङ्गत्वमित्युक्तम् । ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य स्वरूपनिषेधोऽपि नोपपन्नः, क्वचित् कस्यचिदेव निषेध इति स्वेनैवोक्तत्वात् । श्रुतेः प्रत्यक्षविरोधे तु "यजमानः प्रस्तरः" "आदित्यो यूपः" इत्यादिवाक्यवदन्यथार्थवर्णनमेव श्रुतिवाक्यस्य; न तु प्रत्यक्षस्य बाधः । सिद्धार्थव्युत्पत्त्यार्थवादानामप्यर्थस्वीकारोऽङ्गीकृतः । तथाच प्रत्यक्षसिद्धप्रस्तरोद्देशेन यजमानत्वविधानात् तद्विधानस्य च प्रत्यक्षविधानापेक्षया परत्वात् मुख्यार्थस्वीकारेण प्रत्यक्षस्य बाधापत्तिर्दुर्वारा । सगुणनिर्गुणश्रुत्योर्न विरोध इत्युक्तम् । विरोधसद्भावेऽप्यपच्छेदन्यायाविषयो-

ऽयम् । स न्यायो हि प्रयोगविषयविरोधनिबन्धनः; न तु शास्त्रयोः स्वरूपविरोधनिबन्धनः । न ह्यपच्छेदन्यायेन पूर्वापच्छेदशास्त्रस्य स्वरूपबाधः ; तथात्वे केवलोद्गात्रपच्छेदे न क्वचिदपि प्रायश्चित्तं स्यात्, तत्प्रायश्चित्तशास्त्रस्य बाधितत्वात्, औदुम्बरीस्पर्शनश्रुत्या सर्ववेष्टनस्मृतेरिव । तथा प्रतिहर्त्रपच्छेदस्य पूर्वत्वे उद्गात्रपच्छेदस्य परत्वेऽपि । अत एकैकापच्छेदैर्व्यत्यासेनापच्छेदैश्च पूर्वशास्त्रस्य सावकाशत्वान्न स्वरूपनिषेधः । अत्र तु सगुणशास्त्रस्य स्वरूपतो बाध एव, तत्फलगुणवत्तानङ्गीकारात् । अतः स्वरूपावधिकविरोधे प्रत्यक्षादेः सगुणशास्त्रस्य च प्राबल्यम्, विरोधाधिकरणन्यायात् । तन्न्यायश्चोक्तः । तत्र प्रत्यक्षश्रुत्यानुमेयश्रुतिमूलस्मृतिविषयस्यापहृतत्वात् अग्नेरनुष्णत्वानुमानस्य प्रत्यक्षबाधितत्ववत् स्मृतेर्बाधितत्वमेवेत्युक्तम् । न च विरुद्धश्रुतिस्मृत्योर्व्रीहियवशास्त्रयोरिव विकल्पानुष्ठानाद्विरोधपरिहारः, प्रत्यक्षाप्रत्यक्षयोरतुल्यबलत्वेन युगपदनुपस्थानात् । अतो विरोधे बाधप्राप्तावद्वैतश्रुतेरेव बाधापत्तिः । ननु समबलयोः सगुणनिर्गुणश्रुत्योः कथं विरोधाधिकरणन्यायाद् बाध्यबाधकभाव इति चेत्—न ; निर्गुणश्रुतेः सगुणश्रुतिसापेक्षत्वेन प्राबल्यदौर्बल्यभावस्य त्वयैवोक्तत्वात् । यदि समबलत्वाङ्गीकारः, तर्हि न बाधः, षोडशिग्रहणाग्रहणवद्विकल्पः स्यात् । अथ तत्त्वस्वरूपे विकल्पानुपपत्तेरन्यतरश्रुतेर्बाध्यत्वे निषेधश्रुतेर्निषेध्यसापेक्षत्वात् निषेधश्रुतेर्बाधकत्वमिति न विकल्प इति चेत्—तर्हि ग्रहणनिषेधस्य ग्रहणविधिसापेक्षत्वात् प्राबल्ये षोडशिग्रहणाग्रहणयोरपि न विकल्पः । अथ "षोडशिनं गृह्णाति " इति ग्रहणमेव विधीयते, न हि तन्निषिध्यते, विहितत्वाद्विकल्पस्तयोः; तर्हि सर्वज्ञत्वादेरपि विहितत्वान्न निषेध इति विकल्पापत्तिः । अथ ब्रह्मणो भ्रान्त्यवस्थया सगुणत्वमन्यावस्थया निर्गुणत्वमिति निषेधावस्थया विकल्प एव स्वीक्रियत इति चेत्—न ; एवंविधविषयविभागकल्पकहेत्वभावात् । अवस्थया निर्गुणत्वमन्यथा सगुणत्वमिति वैपरीत्यं च किमिति न स्यात्? ब्रह्मणो भ्रान्त्यनुपपत्तेरुक्तत्वात् वक्ष्यमाणत्वाच्च । उभयश्रुत्योरप्यविशेषेण ब्रह्मविषयत्वप्रतीतेश्च विकल्पापत्तिर्दुर्वारा । तत्त्वस्य द्वैरूप्यानुपपत्तिस्तु लिङ्गमिति तस्य श्रुतिबाधितत्वमिति जगतो ब्रह्मस्वरूपेण तादात्म्यं वदतो मिथ्यावादिनो मौनमेव शरणं पूजितन्यायनिष्ठवैदिकपरिषत्सु । ब्रह्मणो गुणनिषेधस्य हेयगुणविषयत्वेन ऐक्यश्रुतेश्च जगद्ब्रह्मणोः शरीरशरीरिभावपरत्वेन चार्थं वदतामस्माकं तु सर्वत्र विजय एव । न च कस्यचित् श्रुत्यंशस्य बाधः । न च तत्त्वस्वरूपविरोधः । न च प्रतीतिविरोधः । न चानुष्ठानविरोधः । सर्वविरोधस्तु मिथ्यावादिपक्षे

एव । न च प्रत्यक्षादेर्घटपटादिभेदमात्रनियतत्वात् अद्वैतश्रुतेः सर्वविषयत्वेन विरोधाभावान्न बाध्यबाधकभाव इति वाच्यम्, सर्वाद्वैतश्रुत्यभावात्; तत्सद्भावे च घटपटविषयप्रत्यक्षादिविरोधाच्च । प्रत्यक्षादेश्च विशेषविषयत्वेन सर्वविषयतया सामान्याद्वैतश्रुत्यपेक्षया प्राबल्याद-द्वैतश्रुत्यर्थसंकोच एव, पदाहवनीयन्यायात् । न सर्वभेदविषयता कस्यापि प्रत्यक्षस्येत्युक्ति-रप्यसंगता, परमात्मनो मुक्तानां योगिनां च सर्वज्ञत्वेन प्रत्यक्षस्य सर्वविषयत्वात् । न च—अद्वैतश्रुतेः प्रत्यक्षप्रतीयमानघटपटादीनामैक्यप्रतिपादनपरत्वं प्रथमतो मास्तु; बाध्य-बाधकबुद्ध्योरद्वैतप्रतिपादने तु न कश्चिद्विरोध इति वाच्यम्; अग्नेरौष्ण्यप्रत्यक्षानुष्णत्वानुमा-नयोर्विषय एव विरोधात् स्वरूपैक्यापत्तेः । अथ तत्रैक्यप्रमाणाभावान्न तथात्वमिति चेत्, तर्हि बाध्यबाधकप्रत्यक्षादिबुद्ध्योरैक्यापादकप्रमाणाभावान्नैक्यम् । न हि प्रत्यक्षाद्वैतबुद्ध्योरैक्ये प्रमाणम् । किंच प्रत्यक्षबुद्धेरपि स्वयंप्रकाशत्वेन घटादिभेदे प्रामाण्यवत् स्वभेदेऽपि प्रमाण-त्वात् तत्राप्यैक्यप्रतिपादनविरोधः । प्रत्यक्षबुद्धिरनुमानादिबुद्धितः स्वयमेव भिन्ना प्रतीयते । अतः प्रथमत एव घटाद्यैक्यप्रतिपादननिवारणवत् स्वात्मनोऽप्यैक्यप्रतिपादनं निवारयति प्रत्यक्षादिबुद्धिः । न च प्रत्यक्षस्य स्वविषयभेदे प्रमाणत्वात् विषयात् स्वस्याभेद इति वाच्यम्, बुद्धिविषययोरैक्ये सर्वेषां घटादिबुद्ध्युत्पत्तिमात्रात् विषयाभावेऽपि जलाद्याहरणसिद्ध्यापत्तेः; क्षुरादिबुद्ध्युत्पत्तौ देहादिविदारणापत्तेश्च । अथ कथं विषयासंनिधाने तद्बुद्ध्युदय इति चेत् —तर्हि बुद्धेः पृथक्त्वेन विषयसद्भावोऽङ्गीकृतः, संनिधानापेक्षोक्तेः । किंच घटादिबुद्धेर्विषय-संनिधिनियमोऽपि नास्ति, नष्टघटादिविषयत्वेनापि बुद्ध्युत्पत्तिदर्शनात्तथा घटादिकार्यसिद्धिः स्यात् । 'इदमहमदर्शम्' इति प्रत्यक्षत एव बुद्धेः बोध्यस्य बोद्धुश्च भेदस्फूर्तेर्न भेदापलापः । न च ज्ञानस्य स्वयंप्रकाशत्वमात्रसाक्षित्वान्न भेदप्रकाशकत्वमिति वाच्यम्, स्वाभिमतस्वयंप्रकाश-प्रदीपादिषु भेदस्य तैरेव सिद्धत्वात् । न हि केवलं प्रदीपादेर्घटादिभेदप्रकाशकत्वम्, किंतु घटादेः प्रकाशकान्तरादित्यादेश्च भेदप्रकाशकत्वमपि । प्रकाशकप्रदीपादेः प्रकाश्यघटाद्यैक्ये चान्यतरसिद्धावन्यतरकार्यसिद्धिः स्यात् । अतः प्रत्यक्षस्य घटपटाद्यात्मकत्वेन व्यवस्थाप्यमान-त्वाभावात् भेद एव सिद्धः । प्रत्यक्षबुद्धेः प्रमाणत्वाभाव आपादित इत्युक्तिरप्यत एव व्यर्था । भेदस्याबाधितत्वाच्च तद्बुद्धेर्न प्रमात्वहानिः । न चाद्वैतश्रुत्या तस्याः संदिग्धत्व-मिति वाच्यम्, प्रत्यक्षेण तस्या अपि संदिग्धत्वापातात् । ततश्चाप्रामाण्यमेव श्रुतेः । मूलकर्तनादेव "सुदूरधावनश्रान्तः" इत्यादिनोक्तमपि निरस्तम् । किंचाद्वैतश्रुतेः स्वतः

प्रामाण्यात् सर्वाद्वैतसिद्धौ स्वतः प्रामाण्यादेव प्रत्यक्षादिभिरपि द्वैतसिद्धिः, तेषामपि स्वतः प्रमाणत्वात्। तच्चोत्तरत्र वक्ष्यते। पूर्वकाण्डे उक्तं च। खण्डनेऽनुमानादिभिरैक्यं साधितम्। तद्दूषणं चातिस्फुटत्वादुपेक्षितम्; ग्रन्थगौरवभयाच्च।

श्रीभाष्यम्

अविद्यायां सप्तविधा अनुपपत्तयः

यदप्युच्यते—निर्विशेषे स्वयंप्रकाशे वस्तुनि दोषपरिकल्पित-मीश्वरेशितव्याद्यनन्तविकल्पं सर्वं जगत्। दोषश्च स्वरूपतिरोधान-विविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या। सा चावश्या-भ्युपगमनीया; "अनृतेन हि प्रत्यूढाः" इत्यादिभिः श्रुतिभिः, ब्रह्मणस्त-त्त्वमस्यादिवाक्यसामानाधिकरण्यावगतजीवैक्यानुपपत्त्या च। सा तु न सती, भ्रान्तिबाधयोरयोगात्। नाप्यसती, ख्यातिबाधयोश्चायोगात्। अतः कोटिद्वयविनिर्मुक्तेयमविद्येति तत्त्वविद इति*। तदयुक्तम्—सा हि किमाश्रित्य भ्रमं जनयति? न तावज्जीवमाश्रित्य, अविद्यापरिकल्पितत्वाज्जीवभावस्य। नापि ब्रह्माश्रित्य, तस्य स्व-प्रकाशज्ञानस्वरूपत्वेनाविद्याविरोधित्वात्। सा हि ज्ञानबाध्याभिमता।

आश्रयानुपपत्तिः

"ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम्।
अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने॥
ज्ञानं ब्रह्मेति चेज्ज्ञानमज्ञानस्य निवर्तकम्।
ब्रह्मवत्तत्प्रकाशत्वात् तदपि ह्यनिवर्तकम्॥
ज्ञानं ब्रह्मेति विज्ञानमस्ति चेत् स्यात् प्रमेयता।
ब्रह्मणोऽननुभूतित्वं त्वदुक्त्यैव प्रसज्यते॥"

---

* ("सत्त्वे न भ्रान्तिबाधौ स्तां नासत्त्वे ख्यातिबाधकौ।
सदसद्भ्यामनिर्वाच्याविद्या वेद्यैः सह भ्रमाः॥"
इतीष्टसिद्धिकारिकात्रानुसंधेया।)

'ज्ञानस्वरूपं ब्रह्म' इति ज्ञानं तस्या अविद्याया बाधकं, न स्वरूपभूतं ज्ञानमिति चेत्—न; उभयोरपि ब्रह्मस्वरूपप्रकाशत्वे सत्यन्यतरस्याविद्याविरोधित्वमन्यतरस्य नेति विशेषानवगमात्। एतदुक्तं भवति—'ज्ञानस्वरूपं ब्रह्म' इत्यनेन ज्ञानेन ब्रह्मणि यः स्वभावोऽवगम्यते, स ब्रह्मणः स्वयंप्रकाशत्वेन स्वयमेव प्रकाशत इत्यविद्याविरोधित्वे न कश्चिद्विशेषः स्वरूपतद्विषयज्ञानयोरिति।

श्रुतप्रकाशिका

अथाविद्यां दूषयितुं तद्विषये परोक्तमर्थमनुवदति—**यद्पीति**। निर्विशेषस्य कथं भ्रमसंभव इत्यत्राह—**दोषेति**। ब्रह्मव्यतिरिक्तदोषोऽस्ति चेदद्वैतहानिरित्यत्राह—**दोषश्चेति**। अस्मिन्नर्थे परोक्तश्रुत्यर्थापत्ती दर्शयति—**अनृतेनेति**। सदसद्विलक्षणत्वमुपपादयति—**सा त्विति**। **भ्रान्तिबाधयोरयोगात्**; भ्रान्तिविषयत्वबाधविषयत्वयोरयोगात्; प्रतीतिभ्रान्तिबाधान्यथानुपपत्त्या सदसदनिर्वचनीयत्वमित्यर्थः। 'सद्भाव एवं भवतो मयोक्तः'इतिवत् न परमतमिति दर्शयितुं **तत्त्वविद** इत्युक्तम्। दूषयति—**तदयुक्तमिति**। आश्रयानुपपत्तितिरोधानानुपपत्तिस्वरूपानुपपत्त्यनिर्वचनीयत्वानुपपत्तिप्रमाणानुपपत्तिनिवर्तकानुपपत्तिनिवृत्त्यनुपपत्तिभिर्दूषयिष्यन् प्रथममाश्रयानुपपत्तिमाह—**सा हीति**। **किमाश्रित्य;** न किंचिदपीत्यर्थः। किं जीवमाश्रित्य, उत ब्रह्मेति विकल्पाभिप्रायेणाह—**न तावदिति**। जीवे सिद्धे अविद्यासिद्धिः, अविद्यासिद्धौ जीवसिद्धिरित्यन्योन्याश्रय इत्यर्थः। जीवाज्ञानवादनिरास उत्तरत्र विस्तरेण वक्ष्यत इत्यत्र संक्षेपः। अथ ब्रह्माश्रयपक्षं दूषयति—**नापीति**। विरोधित्वं कथमित्यत्राह—**सा हीति**। ब्रह्मविषयाज्ञानस्य तत्प्रकाशबाध्यत्वाद्विरोधः। अत्र नाथमुनिभिरुक्तान् श्लोकानाह—**ज्ञानरूपमिति;** स्वप्रकाशत्वं विवक्षितम्। ज्ञाननिवर्त्यत्वे हेतुमाह—**मृषात्मकमिति**। न हि स्वरूपज्ञानमज्ञानविरोधि, अपितु प्रमाणज्ञानमेवेति पक्षमनूद्य दूषयति—**ज्ञानमिति**। **ब्रह्मवत्—तत्प्रकाशत्वात्;** स्वरूपानतिरिक्तप्रकाशत्वादित्यर्थः। न हि शुक्लभास्वरद्रव्ये गृहीते आप्तवाक्यादिभिः 'शुक्लभास्वरं द्रव्यम्' इत्येतावति शतशः प्रतिपन्नेऽपि भ्रमनिवृत्तिः। दूषणान्तरं चाह—**ज्ञानमिति**। ततः किमित्यत्राह—**ब्रह्मण इति**। एषु श्लोकेषु

प्रथमश्लोकस्यार्थः पूर्वं 'ज्ञानबाध्याभिमता' इत्यन्तेन भाष्येणोक्तः । द्वितीयश्लोकं व्याचष्टे—**ज्ञानस्वरूपमिति । ब्रह्मस्वरूपप्रकाशत्वे सति;** स्वरूपविषयज्ञानत्वे सतीत्यर्थः । **विशेषानवगमात्** ; विषयवैषम्याभावादित्यर्थः । कथं विशेषानवगमः ? प्रमाणजन्यत्वं विशेषोऽस्तीति चेत्— किं तेन ? विषयवैषम्यं हि न विद्यते । किं स्वरूपभूतज्ञानान्निवर्तकज्ञानस्य विषयवैषम्यमस्ति ? न वा ? अस्ति चेत् सविशेषत्वम् । नो चेत् स्वरूपमेव निवर्तकं स्यात्; प्रमाणजन्यज्ञानमनिवर्तकं वा स्यात् पुरोऽवस्थितभास्वरवस्तुविषयज्ञानवत् । प्रमाणजन्यज्ञानत्वं न निवर्तकत्वे प्रयोजकम्, 'इदं शुक्लभास्वरद्रव्यम्' इति वाक्यजन्यज्ञानस्य निवर्तकत्वाभावात् । तस्मात् भ्रमसहाकारादतिरिक्ताकारविषयत्वं निवर्तकत्वे प्रयोजकम् । ननु—विषयवैषम्याभावेऽपि कस्यचिज्ज्ञानस्य भ्रमाविरोधित्वं, कस्यचिद् भ्रमविरोधित्वं च दृष्टमभिज्ञाप्रत्यभिज्ञयोः; 'अयमेको देवदत्तः'इत्यभिज्ञाया एकविषयत्वेऽपि 'पूर्वदृष्टादयमन्यः' इति पुरुषद्वित्वभ्रमो दृष्टः । प्रत्यभिज्ञायास्तु 'सोऽयमेको देवदत्तः' इति देवदत्तैक्यविषयत्वेऽपि द्वित्वविरोधित्वं दृष्टमिति विषयवैषम्याभावेऽपि प्रमाणज्ञानस्य भ्रमनिवर्तकत्वं युक्तमिति शङ्कायामाह—**एतदुक्तमिति** । सत्यत्वज्ञानत्वादिस्वभावोऽस्तीति चेत् स च स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्दः । अनेनाभिज्ञाप्रत्यभिज्ञयोरपि विषयवैषम्यमुक्तं भवति—अभिज्ञायामेकस्य धर्मिण एकदेशकालसंबन्धित्वं प्रतिपन्नम् ; न तु कालद्वयदेशद्वयसंबन्धित्वम् । तत्तु प्रत्यभिज्ञायां प्रतिपन्नम् । एकदेशकालसंबन्धित्वप्रतीतिर्न द्वित्वविरोधिनी । एकस्य धर्मिणः कालद्वयदेशद्वयसंबन्धित्वं ह्यैक्यम् । तत्तु द्वित्वविरोधीति तत्प्रतिपत्तिर्द्वित्वभ्रमं निवर्तयति । अतस्तत्रापि विषयवैषम्यमस्तीति फलितम् ।

### भावप्रकाशिका

**कथं भ्रमसंभव इति;** निर्विशेषे स्वयंप्रकाशे परिकल्पितमित्येतावन्मात्रकथने कथं निर्विशेषस्य परिकल्पितशब्दोक्तभ्रमसंभव इति शङ्का स्यात् । अतो दोषपदमिति भावः । "अनृतेन हि प्रत्यूढाः"; प्रत्यूढाः प्रतीपं नीताः, वैपरीत्यं प्रापिता इत्यर्थः । "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति छान्दोग्यम् । भाष्ये आदिशब्देन "नासदासीत्" इत्यादिश्रुतयो विवक्षिताः । भाष्ये **जीवैक्यानुपपत्त्येति ;** विरुद्धधर्माध्यस्तयोर्जीवपरयोरैक्यासंभवेन धर्माणां कल्पितत्वस्य वक्तव्यतया तत्कल्पिकाऽवि-

द्याभ्युपगन्तव्येत्यर्थः। सत्त्वेऽप्यात्मनो भ्रान्तिबाधाश्रयत्वयोर्दर्शनात् न भ्रान्तिबाधाभ्यां सद्विलक्षणत्वसिद्धिः; असिद्धिश्च हेतोः स्यात्, भ्रान्तिबाधयोरतन्निष्ठत्वादित्यत आह— **भ्रान्तिविषयत्वबाधविषयत्वेति**। भाष्ये **भ्रान्तिबाधयोरयोगादि**त्यत्र शुक्तिरूप्यस्येति शेषः पूरणीयः; उत्तरत्र तद्विवरणभाष्ये "प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयम्" इत्युपक्षिप्य "शुक्त्यादिषु रजतादिप्रतीतेः" इति दर्शनात्; परैरपि ख्यातिबाधानुपपत्तेः शुक्तिरूप्यविषये उपन्यासाच्च। न चाज्ञानस्य जगदुपादानत्वं सदसद्विलक्षणत्वं च प्रतिज्ञाय तद्धेतुतया शुक्तिरूप्ये प्रतीतिभ्रान्तिबाधोपपादनं कथं संगतं स्यादिति वाच्यम्, उपादानोपादेययोरभेदाभिप्रायेण तथोक्त्युपपत्तेः। स्वाभिन्नकार्यजनकत्वमुपादानत्वं विवर्तपरिणामोपादानलक्षणमिति कथयद्भिरुपादानोपादेयाभेदस्याभ्युपेततया शुक्तिरूप्ये ख्यातिबाधवर्णनस्य तत्समर्थनपर्यवसितत्वात्। ननु भामत्यामारम्भणाधिकरणे "न हि वयमभेदं ब्रूमः, किंतु भेदं व्यासेधामः" इत्युक्तेरभेद एवोपादानोपादेययोर्नास्तीति वाच्यम्, ब्रह्मसमसत्ताकाभेदप्रतिक्षेपमात्रपरत्वात् तदुक्तेः। यद्वा प्रतीतिबाधानुपपत्त्या शुक्तिरूप्यमिथ्यात्वसिद्धौ मिथ्याभूतस्य मिथ्याभूतमेवोपादानमन्वेषणीयमित्यज्ञानस्यापि सदसद्विलक्षणत्वं सिध्यतीत्यभिप्रायेण तथोक्त्युपपत्तिः। केचित्तु "अहमज्ञः" इत्यज्ञानप्रतीतेः "नेह नाना" इति श्रुत्या बाधदर्शनात् अत एव भ्रमत्वाच्च प्रतीतिभ्रान्तिबाधानामविद्याविषयत्वमेव; न शुक्तिरूप्यविषयत्वम्। उत्तरत्र शुक्तिरूप्यादिषु प्रतीतिभ्रान्तिबाधैर्मिथ्यात्वसमर्थनं युक्त्यन्तरमेव, नैतद्विवरणरूपम्। "अनिर्वचनीयत्वे परोक्तं हेतुं विस्तरेण दूषयति" इति तत्रत्यश्रुतप्रकाशिकावाक्यमपि कथंचिन्नेयमिति वदन्ति। 'ख्यातिबाधयोश्चायोगात्' इत्यस्य ख्यातिबाधयोश्चायोगप्रसङ्गादित्यमुमर्थं स्फोरयति—**प्रतीतिभ्रान्तिबाधान्यथानुपपत्त्येति**। प्रतीतिरसद्विलक्षणत्वसाधिका, भ्रान्तिस्तु सद्विलक्षणत्वसाधिका, बाधस्तूभयसाधारण इति विवेको द्रष्टव्यः। न च—सद्वादिनं प्रति भ्रान्तेर्हेतुत्वोपन्यासोऽयुक्तः, तन्मते भ्रान्तित्वस्यानभ्युपगतत्वात्; बाधेन भ्रान्तित्वसमर्थने च बाध एव हेतुरस्तु, किमनेन भ्रमत्वसमर्थनेनेति वाच्यम्, 'अहं रजततया अभ्राम्यम्' इत्यनुभवसिद्धतया भ्रमत्वस्य सद्वादिनाप्यप्रत्याख्येयतया हेतुत्वसंभवादिति भावः। **सद्भाव एवमिति**; परमतत्वाभावे दृष्टान्तः। **ब्रह्माश्रयपक्षं दूषयतीति**; ब्रह्मणश्चिन्मात्रत्वेन तस्याश्रयत्वे पूर्वोक्तान्योन्याश्रयदोषाप्रसङ्गः।

"आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः ।"

इत्युक्तेरिति भावः । ज्ञानत्वेऽपि नैयायिकादिरीत्या जडत्वाभ्युपगमे स्वस्य स्वयाथात्म्यज्ञानरूपत्वाभावेन स्वयाथात्म्याज्ञानविरोधित्वासंभवादाह— **स्वप्रकाशत्वं विवक्षितमिति** । विषयित्वलक्षणज्ञानत्वाभावात् स्वप्रकाशत्वं विवक्षितमिति केचिद्वदन्ति । ननु ब्रह्मस्वरूपतद्विषयकज्ञानयोः साधारणं स्वरूपप्रकाशत्वं किं स्वरूपाभिन्नप्रकाशत्वम् ? उत स्वरूपविषयप्रकाशत्वम् ? नाद्यः, तस्य प्रमाणज्ञानेऽभावात् । न द्वितीयः, अभेदे विषयविषयिभावाभावेन स्वरूपाव्यापनादित्याशङ्क्य तद्विषयव्यवहारानुगुण्यलक्षणं तद्विषयकत्वं प्रकृते विवक्षितमित्यभिप्रयन्नाह—**स्वरूपविषयज्ञानत्वे सतीत्यर्थ इति** । **विषयवैषम्याभावादित्यर्थ इति** ; विषयवैषम्याभावेन विशेषानवगमादित्यर्थ इत्यर्थः । न तु 'विशेषानवगमात्' इत्यस्य विषयवैषम्याभावोऽर्थः; तथा सति 'कथं विशेषानवगमः' इत्याक्षेपानुत्थितेरिति द्रष्टव्यम् । **अयमेको देवदत्त इति** ; एक इत्यस्याभेदोऽर्थः । स तु स्पाष्ट्यार्थः । 'अयं देवदत्तः' इत्येव विवक्षितम् । 'अयं देवदत्तः' इत्यभिज्ञायाः 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञाया इव पुरोवर्तिनि देवदत्ताभेदविषयत्वमविशिष्टम् ; न ह्यभेदे द्वैविध्यमस्ति, येन विषयवैषम्यं स्यात् ; तथापि प्रत्यभिज्ञाया एव भेदभ्रमनिवर्तकत्वं नाभिज्ञाया इति द्रष्टव्यम् । न च प्रत्यभिज्ञायामेकस्मिन्वस्तुनि कालद्वयसंबन्धो विषयः, नाभिज्ञायामिति वाच्यम्; ऐक्यस्य कालद्वयसंबन्धस्य चाभिज्ञाभ्यामेव सिद्धेः अभिज्ञाद्वयानवगतार्थविषयकत्वाभावेनाभिज्ञाद्वयानिवर्त्यभेदभ्रमनिवर्तकत्वं न स्यादिति भावः । **द्वित्वभ्रमः**; भेदभ्रम इत्यर्थः । 'सत्यत्वज्ञानत्वादिरस्ति चेत् स स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्दः' इति समीचीनः पाठः । 'सत्यत्वज्ञानत्वस्वभावोऽस्ति चेत्' इति पाठे स्वभावशब्दो धर्मपरः; सत्यत्वज्ञानत्वादिधर्मोऽस्ति चेत् स च स्वरूपानतिरिक्त इति दर्शयितुं स्वभावशब्द इत्यर्थः । **कालद्वयदेशद्वयसंबन्धित्वं ह्यैक्यमिति** ; न चैतदप्यभिज्ञाद्वयसिद्धमिति प्रागेवोक्तमिति वाच्यम्, अभिज्ञाद्वये सत्यप्येकस्मिन् कालद्वयसंबन्धो मया ज्ञात इत्यनुभवाभावात् ; सत्यां च प्रत्यभिज्ञायां तथानुभवदर्शनेनानुभवस्यैवात्र साक्षित्वात् ; अनुभवापलापे चोपेक्षणीयत्वप्रसङ्गादिति भावः । द्वित्वभ्रमशब्दः सर्वत्र भेदभ्रमपरः ।

श्रुतप्रदीपिका

अथाविद्याविषये परोक्तं दूषयितुमनुवदति—**यदपीति**। ब्रह्मणोऽन्यो दोषोऽस्ति चेत् अद्वैतहानिरित्यत्राह—**दोषश्चेति**। श्रुत्यर्थापत्ती दर्शयति—**अनृतेनेति**। अनिर्वाच्यत्वमुपपादयति—**सा त्विति**। परपक्षत्वव्युदासाय **तत्त्वविद इति**। दूषयति—**तदिति**। आश्रयतिरोधिस्वरूपानिर्वाच्यत्वमाननिवर्तकनिवृत्त्यनुपपत्तिभिर्दूषयिष्यन् आश्रयानुपपत्तिं तावदाह—**सा हीति**। **किमाश्रित्य**; न किंचिदिति भावः। जीवं वा ब्रह्म वेति विकल्पं मत्वा आद्ये अन्योन्याश्रयमाह—**न तावदिति**। द्वितीयं दूषयति—**नापीति**। कथं विरोध इत्यत्राह—**सा हीति**। अत्र प्राचां ग्रन्थानाह—**ज्ञानरूपमिति**। **ज्ञानरूपम्**; स्वसिद्धि। **मृषात्मकमिति** हेतुगर्भम्। स्वरूपधीर्न निवर्तिका, अपितु मानधीरित्येतदनूद्य व्युदस्यति—**ज्ञानमिति**। **तत्प्रकाशत्वात्**; स्वरूपानतिरिक्तप्रकाशत्वात्। न हि शुक्लभास्वरमात्रविषयधीशतैरपि रूप्यभ्रमनिवृत्तिरित्यर्थः। दूषणान्तरं तत्फलं चाह—**ज्ञानमिति**। प्रथमश्लोकार्थस्य पूर्वं "ज्ञानबाध्याभिमता" इत्यन्तेन भाष्येणोक्तत्वाद् द्वितीयं विवृणोति—**ज्ञानस्वरूपमिति**। **ब्रह्मस्वरूपप्रकाशत्वे सति**; स्वरूपविषयज्ञानत्वे सति। **विशेषानवगमात्**; विषयवैषम्याभावात्। मानधीत्वस्याप्रयोजकत्वं शुक्लभास्वरज्ञाने दृष्टमिति भावः। अभिज्ञाप्रत्यभिज्ञयोर्विषयानतिरेकेऽप्युत्तरस्यैव निवर्तकत्वं मानधिय इत्यत्राह—**एतदिति**। सत्यत्वादिकमपि स्वरूपानतिरिक्तमिति स्वभावशब्दस्य भावः। एवमेकस्य देशद्वयकालद्वयसंबन्धरूपविषयवैषम्यात् 'सोयम्' इति धीर्द्वित्वभ्रमविरोधिनी; तदभावात् 'अयम्' इति धीर्न विरोधिनीति फलितम्।

श्रीभाष्यम्

किंच अनुभवस्वरूपस्य ब्रह्मणोऽनुभवान्तराननुभाव्यत्वेन भवतो न तद्विषयज्ञानमस्ति। अतो ज्ञानमज्ञानविरोधि चेत् स्वयमेव विरोधि भवतीति नास्या ब्रह्माश्रयत्वसंभवः। शुक्त्यादयस्तु स्वयाथात्म्यप्रकाशे स्वयमसमर्थाः स्वाज्ञानाविरोधिनः; तन्निवर्तने च ज्ञानान्तरमपेक्षन्ते। ब्रह्म तु स्वानुभवसिद्धस्वयाथात्म्यमिति स्वाज्ञानविरोध्येव; तत एव निवर्तकान्तरं च नापेक्षते। अथोच्येत—ब्रह्मव्यतिरिक्तस्य

मिथ्यात्वज्ञानमज्ञानविरोधीति—न ; इदं ब्रह्मव्यतिरिक्तमिथ्यात्वज्ञानं किं ब्रह्मयाथात्म्याज्ञानविरोधि ? उत प्रपञ्चसत्यत्वरूपाज्ञानविरोधीति विवेचनीयम् । न तावद् ब्रह्मयाथात्म्याज्ञानविरोधि, अतद्विषयत्वात् । ज्ञानाज्ञानयोरेकविषयत्वेन हि विरोधः । प्रपञ्चमिथ्यात्वज्ञानं तत्सत्यत्वरूपाज्ञानेन विरुध्यते । तेन प्रपञ्चसत्यत्वरूपाज्ञानमेव बाधितमिति ब्रह्मस्वरूपाज्ञानं तिष्ठत्येव । ब्रह्मस्वरूपाज्ञानं नाम तस्य सद्वितीयत्वमेव; तत्तु तद्व्यतिरिक्तस्य मिथ्यात्वज्ञानेन निवृत्तम् ; स्वरूपं तु स्वानुभवसिद्धमिति चेत्—न ; ब्रह्मणोऽद्वितीयत्वं स्वरूपं स्वानुभवसिद्धमिति तद्विरोधि सद्वितीयत्वरूपाज्ञानं तद्बाधश्च न स्याताम् । अद्वितीयत्वं धर्म इति चेत्—न; अनुभवस्वरूपस्य ब्रह्मणोऽनुभाव्यधर्मविरहस्य भवतैव प्रतिपादितत्वात् । अतो ज्ञानस्वरूपस्य ब्रह्मणो विरोधादेव नाज्ञानाश्रयत्वम् ।

**श्रुतप्रकाशिका**

अथ तृतीयश्लोकार्थस्य विपर्यये पर्यवसानमाह—**किंचेति** । प्रमाणज्ञानत्वं निवर्तकत्वव्यापकम् ; अतोऽधिष्ठानभूतब्रह्मस्वरूपस्य प्रमाणज्ञानत्वाभावान्न भ्रमनिवर्तकत्वम् ; अधिष्ठानत्वाच्छुक्त्यादिवत् ब्रह्मस्वरूपं न भ्रमविरोधीति प्रमाणान्तरज्ञानमपेक्षत इति शङ्कायामाह—**शुक्त्यादयस्त्विति** । अधिष्ठानत्वस्य ज्ञानान्तरविषयत्वं व्यापकम् । अतो व्यापकनिवृत्त्याऽधिष्ठानत्वनिवृत्तिरिति । अधिष्ठानत्वादेव ब्रह्मस्वरूपस्फुरणेऽपि प्रमाणान्तरमपेक्ष्येत ; नैवम् । जडत्वादेव हि शुक्त्यादेः स्वरूपस्फुरणेऽपि प्रमाणान्तरापेक्षा; नाधिष्ठानत्वात् । अतोऽधिष्ठानत्वं सोपाधिकम् । अत्र त्वजडत्वात् स्वरूपस्फुरणे प्रमाणान्तरापेक्षा नास्तीति चेत्—तर्हि जडत्वादेव भ्रमनिवृत्तौ शुक्त्यादेर्ज्ञानान्तरापेक्षा, नाधिष्ठानत्वात् । अतस्तत्सोपाधिकम् । तस्मादजडे तु प्रमाणान्तरापेक्षा भ्रमनिवृत्तौ च न स्यादित्यभिप्रायः । **शुक्त्यादयस्त्वित्यत्र** तुशब्दो ब्रह्मणः शुक्त्यादिव्यावृत्तिपरः । द्वयी ह्यद्वैतिनां गतिः—ब्रह्मविषयप्रमाणज्ञानं भ्रमनिवर्तकं, प्रपञ्चमिथ्यात्वविषयज्ञानं भ्रमनिवर्तकमिति च । तत्र

प्रथमपक्षो दूषितः। अथ द्वितीयपक्षं दूषयितुं शङ्कते—**अथोच्येतेति**। दूषयति—**नेत्यादिना**। **इदमिति**; ननु—कथं प्रपञ्चसत्यत्वमज्ञानमित्युच्यते; अज्ञानं हि ज्ञान-प्रतिबन्धकम्; न हि प्रपञ्चसत्यत्वं कस्यचिज्ज्ञानं प्रतिबध्नाति—सत्यम्; आच्छादकाज्ञान-मेवंभूतम्। 'प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानम्' इति पराभ्युपगमादेवमुक्तम्। प्रथमं शिरो दूषयति—**अतदिति**। कथमतद्विषयत्वात् ब्रह्मस्वरूपाज्ञानाविरोधित्वमित्यत्राह—**ज्ञानाज्ञानयोरिति**; विरोधे हि निवृत्तिरित्यर्थः। द्वितीयं शिरो दूषयति—**प्रपञ्चेति**। प्रपञ्चमिथ्यात्वज्ञानेन ब्रह्मस्वरूपाज्ञाननिवृत्तेः फलितत्वमाशङ्कते—**ब्रह्मस्वरूपेति**। **सद्वितीयत्वम्**; सद्वितीयत्वज्ञानमित्यर्थः। न हि सत्तया सद्वितीयत्वं ब्रह्मस्वरूपाज्ञानं भवति, अपारमार्थ्यात्। सद्वितीयत्वविशिष्टब्रह्मगोचरज्ञाने निवृत्ते विशेष्यांशगोचरमपि ज्ञानं निवृत्तमिति स्वरूपसिद्धिः कथमित्यत्राह—**स्वरूपं त्विति**। दूषयति—**नेति**। अद्वि-तीयत्वं किं स्वरूपम्, उत धर्म इति विकल्पाभिप्रायेण प्रथमं स्वरूपपक्षं दूषयति—**नेति**। धर्मपक्षे अपसिद्धान्तत्वमाह—**अद्वितीयत्वमिति**। आश्रयानुपपत्तिं निगमयति—**अत इति**। **विरोधादेव**; पूर्वोक्तादेवेत्यर्थः। एवमाश्रयानुपपत्तिरुक्ता।

### भावप्रकाशिका

ननु न प्रमाणज्ञानत्वं निवर्तकत्वप्रयोजकम्, अपि तु भ्रमविरोधित्वमेव; तच्च ब्रह्मस्वरूपेऽपि संभवतीति शङ्कां व्युदस्यति—**अधिष्ठानत्वाच्छुक्त्यादिवदिति**। यद्वा अनिवर्तकत्वे हेत्वन्तरमप्याह—**अधिष्ठानत्वादिति**। अधिष्ठानस्य भ्रमविरोधित्वं प्रमाणा-न्तरसापेक्षं, शुक्त्यादौ तथा दर्शनादित्यभ्युपगम्यमाने शुक्त्यादिवदेवाधिष्ठानस्फुरणमपि प्रमाणान्तरसापेक्षं स्यादिति प्रतिबन्द्या दूषयति—**अधिष्ठानत्वस्य ज्ञानान्तरविषयत्व-मिति**। **अधिष्ठानत्वनिवृत्तिरिति**; अधिष्ठानत्वनिवृत्तिः प्रसज्येतेत्यर्थः। यदि शुक्त्या-दावधिष्ठानस्य भ्रमाविरोधित्वदर्शनात् ब्रह्मण्यपि भ्रमाविरोधित्वमापाद्यते, तर्हि तद्वदेवाध्यासा-धिष्ठानत्वार्थं ज्ञानान्तरवेद्यत्वप्रसङ्गः। यदि च तत्र ज्ञानान्तरवेद्यत्वं जडत्वप्रयुक्तं। तर्हि भ्रमाविरोधित्वमपि जडत्वप्रयुक्तमिति न ब्रह्मणि भ्रमाविरोधित्वमिति प्रघट्टार्थः। **प्रथमपक्षो दूषित इति**; स्वरूपज्ञानस्याज्ञानानिवर्तकत्वे साक्षिवेद्यसुखादावप्यज्ञानप्रसङ्गः। किंच स्वरूपचैतन्यस्याज्ञानाविरोधित्वे घटादिवत् जडत्वप्रसङ्गः। किंच विवरणे "अन्तःकरण-परिणामे ज्ञानत्वोपचारात्" इत्युक्तत्वेनौपचारिकज्ञानविरोधिनोऽज्ञानत्वायोगश्च। न च

यथा सौरप्रकाशान्धकारयोः परस्परविरोधे सत्यपि दिवाभीतादिकल्पितान्धकारस्य सौरप्रकाशाविरोधित्वम्, एवमज्ञानस्य कल्पिततया न स्वरूपज्ञानविरोधित्वमिति वाच्यम्; सौरप्रकाशविरुद्धतत्समसत्ताकतमोऽन्तरवत् चैतन्यप्रकाशविरुद्धतत्समसत्ताकाज्ञानान्तराभावेनातात्त्विकाज्ञानस्यैव ज्ञानेन विरोधस्य वक्तव्यतया अज्ञानासंभवात्। अहमर्थधर्मभूतवृत्तिज्ञानस्यैव विरोधित्वाभ्युपगमे ज्ञानाज्ञानयोः समानाश्रयत्वस्य वक्तव्यतया 'अहमज्ञः' इति प्रतीत्यनुसारेण जीवाश्रयत्वपक्ष एवाङ्गीकृतः स्यात्, न ब्रह्मशब्दितचिन्मात्राश्रयत्वपक्ष इत्यादि द्रष्टव्यम्। भाष्ये—**प्रपञ्चसत्यत्वरूपाज्ञानविरोधी**त्यस्य प्रपञ्चसत्यत्वतत्प्रतिभासरूपाज्ञानविरोधीत्यर्थः, "प्रपञ्चसत्यत्वं तत्प्रतिभासश्च विक्षेपरूपाज्ञानम्" इति टीकायामुक्तत्वादिति द्रष्टव्यम्। **अज्ञानं हि ज्ञानप्रतिबन्धकमिति**; न च ज्ञाननिवर्त्यस्याज्ञानस्य कथं ज्ञानप्रतिबन्धकत्वमिति वाच्यम्, चरमवृत्तिनिवर्त्यस्याज्ञानस्य निरतिशयानन्दस्वरूपात्मस्फुरणप्रतिबन्धकत्वस्य तैरभ्युपेतत्वादिति द्रष्टव्यम्। **पराभ्युपगमादेवमुक्तमिति**; अत एव "अनिर्वाच्याविद्याद्वितयसचिवस्य प्रभवतः" इति प्रबन्धादौ वाचस्पतिनोक्तम्। तत्र ह्येका अनादिर्भावरूपा अविद्या देवताधिकरणोक्ता; अन्या चाध्यासभाष्य एव प्रदर्शिता—आत्मन्यनात्माध्यासं प्रस्तुत्य "तमेतमेवंलक्षणमध्यासं पण्डिता अविद्येति मन्यन्ते" इति। तथा व्याख्याने हेतुमाह—**न हि सत्तयेति**। सत्ताया एवाभावेन सत्तया सद्वितीयत्वस्याज्ञानरूपत्वासंभवात् सद्वितीयत्वज्ञानमेवाज्ञानमिति भावः। **सद्वितीयत्वविशिष्टब्रह्मगोचरज्ञान इति**; सद्वितीयत्वज्ञानरूपे ब्रह्मज्ञाने निवृत्त इत्यर्थः। **स्वरूपं तु स्वानुभवसिद्धमिति** भाष्यं केचिदेवमवतारयन्ति—प्रपञ्चमिथ्यात्वं शास्त्रप्रतिपाद्यं चेत्तस्यैव शास्त्रप्रतिपाद्यतया ब्रह्मणः शास्त्रात्सिद्ध्यभावेनाप्रामाणिकत्वमेव स्यादित्यत्राह—**स्वरूपं तु स्वानुभवसिद्धमिति**।

### श्रुतप्रदीपिका

तृतीयश्लोकस्य विपर्यये पर्यवसानमाह—**किंचेति**। व्यापकमानधीत्वनिवृत्त्या निवर्तकत्वनिवृत्तिरिति नाधिष्ठानभूतं स्वरूपं निवर्तकम्; मानजा शुक्तिधीर्हि निवर्तिकेत्यत्राह—**शुक्त्यादयस्त्विति**। तर्हि तद्वदेवाधिष्ठानस्वरूपस्फुरणेऽपि मानान्तरमपेक्ष्येत; न चेत् व्यापकवेद्यत्वनिवृत्त्याधिष्ठानत्वमपि निवर्तेत। अपेक्षा नाधिष्ठानत्वप्रयुक्ता, किंतु जडत्वप्रयुक्तेति चेत्—तर्हि भ्रमनिवृत्तावपि मानान्तरापेक्षा जडत्वनिबन्धना, न त्वधिष्ठानत्वप्रयुक्तेति न

मानधीत्वनिवृत्त्या निवर्तकत्वनिवृत्तिः। अतः स्वयाथात्म्यभानरूपं स्वयमेव विरोधीति नाज्ञानाश्रयत्वमित्यर्थः। प्रक्रियान्तरं शङ्कते—**अथेति**। दूषयति—**नेति**। विकल्पशिरसोः प्रथमं दूषयति—**न तावदिति**। कथमतद्विषयत्वे तदविरोधित्वमित्यत्राह—**ज्ञानेति**। द्वितीयं दूषयति—**प्रपञ्चेति**। प्रपञ्चसत्यत्वधीनिवृत्त्या स्वरूपाज्ञाननिवृत्तिं शङ्कते—**ब्रह्मेति**। सद्वितीयत्वनिवृत्तौ स्वरूपसिद्धिः कथमित्यत्राह—**स्वरूपं त्विति**। दूषयति—**नेति**। कथमित्यपेक्षायामद्वितीयत्वं स्वरूपं वा धर्मो वेति विकल्पं मत्वा प्रथमं दूषयति—**ब्रह्मण इति**। धर्मपक्षमनुभाष्य दूषयति—**अद्वितीयत्वमिति**। आश्रयानुपपत्तिं निगमयति—**अत इति**।

### श्रीभाष्यम्

तिरोधानानुपपत्तिः-२

**किंच अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तः स्यात्। प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धः, विद्यमानस्य विनाशो वा। प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं प्रकाशनाश एव।**

### श्रुतप्रकाशिका

अथ तिरोधानानुपपत्तिमाह—**किंचेति**। ननु भवत्पक्षेऽपि क्षेत्रज्ञानां नित्यं स्फुरणमस्ति; तथापि तेषां स्वरूपतिरोधानेन विना न देहात्मभ्रम इति तुल्यानुपपत्तिः। सत्यम्—स्वरूपस्फुरणमस्त्येव; न तस्य तिरोधानमभ्युपगम्यते। न च स्वरूपस्फुरणं भ्रमविरोधि; किंतु नित्यत्वाणुत्वनिरवयवत्वादीन्येव भ्रमविरोधीनि। तान्यागमगम्यानि; तेषां तिरोधिः तद्विषयज्ञानप्रसराभावरूपः संकोचः। अतः स्वरूपातिरिक्ताकारान्तरतिरोधानाभ्युपगमान्नात्मनो नाशप्रसङ्गः। ज्ञानस्यात्मासाधारणाकारस्य स्फुरणाद् भ्रमानुपपत्तिरिति चेत्—न; तस्यासाधरणत्वास्फुरणात्। असाधारणतया स्फुरतो हि धर्मस्य भ्रमविरोधित्वं दृष्टम्, यथा शुक्तित्वादेः। शुक्तित्वं हि शुक्त्यसाधारणतया पूर्वं ज्ञातं पश्चाद् भ्रमं निवर्तयति। न तावज्ज्ञानं देहातिरिक्तात्मासाधारणधर्मत्वेन क्वचिद् दृष्टचरम्। अतो भ्रमः संभवति। आत्मासाधारणधर्मत्वादर्शनादध्यासः; अध्यासादसाधारणधर्मत्वाग्रहणमित्यन्योन्याश्रयोऽनादितया परिहृतः। धर्मभूतज्ञानस्य नित्यत्वं तिरोधानं च भवद्भिरभ्युपगम्यते; तदा ज्ञाननाशप्रसङ्ग इति चेत्—न; ज्ञानं हि द्रव्यम्; तस्य स्वरूपातिरेकेण संकोचविकासात्मकमव-

स्थाद्वयमभ्युपेतम् । अतस्तत्तिरोधानं कर्मणा तत्संकोचः । तन्निवृत्तिस्तु प्रसरः । स एव प्रकाशः । स चानित्यः । तस्यानित्यत्वेऽपि नित्यस्य ज्ञानद्रव्यस्य स्वप्रकाशत्ववादः स्वप्रकाशनरूपप्रसरणार्हत्वनिबन्धनः । अतोऽवस्थाद्वयस्यागमापायित्वाद् द्रव्यं नित्यमेव । अस्मदवस्थास्थानीयो हि भवतः प्रकाशः । स एव स्वरूपम् । तस्मात्तिरोधानं तन्निवृत्तिरेवेतीममर्थमभिप्रेत्य **प्रकाशैकस्वरूपं ब्रह्मेत्युक्तम् ।** अतः स्वरूपातिरेकिप्रकाशतिरोधानाख्यावस्थाद्वयानभ्युपगमात्स्वरूपनाश एव तिरोधानं स्यादित्यर्थः ।

भावप्रकाशिका

**तेषां तिरोधिरिति;** अत्र "उपसर्गे घोः किः" इत्यस्याप्रवृत्तावपि प्रयोगबाहुल्यात् "कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् समर्थनीयम् । **ज्ञानस्यात्मासाधारणाकारस्येति;** इदमुपलक्षणम्—प्रत्यक्त्वादेरित्यपि द्रष्टव्यम् । **तस्यासाधारणत्वास्फुरणादिति;** ननु-असाधारणधर्मत्वं साधारणधर्माद्व्यावृत्तिः; सा च नैल्यस्य शौक्ल्यव्यावृत्तिरिव प्रत्यक्त्वादिस्वरूपाभिन्नैव ; ततश्च प्रत्यक्त्वादिस्वरूपे भासमानेऽपि तदभिन्नायाः साधारणधर्मव्यावृत्तेरभासमानत्वकथनं परोक्ततिरोधानपर्यवसितमेवेति चेत्—न; प्रत्यक्त्वादौ साधारणधर्माभेदभ्रमदर्शनेन प्रत्यक्त्वादिगतायाः साधारणधर्मव्यावृत्तेः स्वरूपरूपत्वे प्रमाणाभावात्; नैल्यादौ तु शौक्ल्याभेदभ्रमस्य कदाप्यभावेन तत्र तद्व्यावृत्तेः स्वरूपरूपत्वात् ; तत्रापि शौक्ल्याभेदभ्रमसत्त्वे स्वरूपातिरिक्ततद्व्यावृत्तेरिष्टत्वादिति द्रष्टव्यम् । **अस्मदवस्थास्थानीय इति;** अस्मदभिमतस्वप्रकाशधर्मभूतज्ञानविकासावस्थानीय इत्यर्थः । सदा स्वप्रकाश इति यावत् । **स्वरूपनाश एव तिरोधानं स्यादित्यर्थ इति;** ननु—अस्तु प्रकाशाभाव एव तिरोधानम् ; न च प्रकाशाप्रकाशयोर्विरोधः, अप्रकाशस्यारोपिततयाऽविरुद्धत्वात् ; 'त्वदुक्तमर्थं न जानामि' इत्यादौ श्रुत एवार्थे अज्ञातत्वस्याप्यनुभूयमानत्वाच्चेति चेत्—न; अधिष्ठानयाथात्म्येऽवभासमाने अप्रकाशकल्पनाया अनुदयात्; वह्नावारोपितस्यावह्नित्वस्य कार्याप्रतिबन्धकत्वात् प्रकाशारोपितस्याप्रकाशस्य प्रकाशकार्याप्रतिबन्धकत्वाच्च । 'त्वदुक्तमर्थं न जानामि' इत्यादौ सत्तावधारणात्मकज्ञानाभावविषयत्वेन प्रकाशाप्रकाशविरोधसाधकत्वाभावात् ; अन्यथा 'घटः प्रकाशते, न प्रकाशते च' इत्यनुभवापातात् । एतेन 'नास्ति, न प्रकाशते' इति विपरीतव्यवहारयोग्यत्वमेवावरणमिति निरस्तम्, विपरीतव्यवहारलक्षणावरणकल्पनाया अपि भासमानेऽधिष्ठाने

असंभवात्; आनन्दस्वरूपस्य भासमानत्वेन तदंशे आवरणस्य वक्तुमशक्यत्वाच्च । न चानवच्छिन्नानन्दाप्रकाशादावरणमस्तीति वाच्यम्, आनन्दे भेदाभावेन तदस्फुरणस्य वक्तुमशक्यत्वात् । न च संसारदशायामानन्दे भासमानेऽप्यनवच्छेदो न भासत इति वाच्यम्, आनन्दस्य मोक्षकालीनस्य स्फुरणे सिद्धे अनवच्छेदांशस्यापुरुषार्थत्वात् तन्मते संसारमुक्त्योरविशेषप्रसङ्गात् । न च निरतिशयानन्दास्फुरणस्फुरणाभ्यां संसारमुक्त्योर्विशेष इति वाच्यम्, अद्वैतिमते वैषयिकानन्दस्य ब्रह्मानन्दातिरिक्तस्याभावेनोत्कर्षापकर्षायोगात् । अनन्दो भासते चेत् स एव मुक्तिकालीनानन्द इति संसारमोक्षयोरानन्दानुभवेन वैषम्यं न मृषावादिमते सुवचम् । न च—यथा त्वन्मते जीवस्वरूपानन्दस्य कैवल्यदशायामनुभूयमानस्य च स्वरूपरूपत्वेनाभेदेऽपि स आनन्द आवृत एव तस्येदानीमसत्त्वव्यवहारात् सातिशयानन्दो भवतीत्यभ्युपगम्यते एवमिहापि स्यादिति वाच्यम्; तत्रानन्दस्यैकत्वेऽपि तस्मिन्नानन्दे तीव्रत्वमन्दत्वादिभेदोऽस्ति, ततः संसारदशायामानन्दानुकूल्यं स्वरूपरूपज्ञानेन भासते, तद्गततीव्रानुकूल्यं तु कैवल्यदशायां धर्मभूतज्ञानेन भासत इति ह्यस्माकं प्रक्रिया; न तु तीव्रानुकूलत्वमपि स्वरूपरूपं स्वप्रकाशमित्यस्माभिरभ्युपगम्यते, येन दोषः स्यात् । तस्मात् तिरोधानं भासमानस्वरूपेऽनुपपन्नमिति भावः ।

### श्रुतप्रदीपिका

तिरोधिं दूषयति—**किंचेति** । नाशस्योक्तत्वमुपपादयति—**प्रकाशेति**; प्रागभावः प्रध्वंसो वेत्यर्थः । अस्मन्मते तु स्वरूपातिरिक्ताणुत्वनित्यत्वादितिरोध्यभ्युपगमान्न दूषणसाम्यमिति; तिरोधिश्च धीसंकोच इति तन्नित्यत्वाविरोधः; धीस्तु शुक्तित्ववद्देहादन्यस्यासाधारणतया न क्वचित् दृष्टेति न सा भ्रमविरोधिनी ।

### श्रीभाष्यम्

**अपिच निर्विषया निराश्रया स्वप्रकाशेयमनुभूतिः स्वाश्रयदोषवशादनन्ताश्रयमनन्तविषयमात्मानमनुभवतीत्यत्र किमयं स्वाश्रयदोषः परमार्थभूत उतापरमार्थभूत; इति विवेचनीयम् । न तावत्परमार्थः, अनभ्युपगमात् । नाप्यपरमार्थः, तथा सति हि द्रष्टृत्वेन वा दृश्यत्वेन वा दृशित्वेन वाभ्युपगमनीयः । न तावद्दृशिः, दृशिस्वरूपभेदानभ्यु-**

स्वरूपानुपपत्तिः—३

पगमात्; भ्रमाधिष्ठानभूतायास्तु साक्षाद्दृशेर्माध्यमिकपक्षप्रसङ्गेनापारमार्थ्यानभ्युपगमाच्च। द्रष्टृदृश्ययोस्तदवच्छिन्नाया दृशेश्च काल्पनिकत्वेन मूलदोषान्तरापेक्षयाऽनवस्था स्यात्। अथैतत्परिजिहीर्षया परमार्थसत्यनुभूतिरेव ब्रह्मरूपा दोष इति चेत्—ब्रह्मैव चेद्दोषः प्रपञ्चदर्शनस्यैव तन्मूलं स्यात्, किं प्रपञ्चतुल्याविद्यान्तरपरिकल्पनेन। ब्रह्मणो दोषत्वे सति तस्य नित्यत्वेनानिर्मोक्षश्च स्यात्। अतो यावद् ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युपगमः, न तावद् भ्रान्तिरुपपादिता भवति।

**श्रुतप्रकाशिका**

अथ स्वरूपानुपपत्तिमाह—**अपिचेति**। ज्ञातृत्वादीनामपरमार्थतया हि दोषान्तरापेक्षा; तद्वदिहापीति दृष्टान्ततया वक्ष्यमाणानवस्थोपयोगित्वेन **निर्विषयेत्यादिप**रिपाटीप्रकटनं कृतम्। यद्वा विषयाश्रयभेदानामसत्त्वप्रतिभासयोरुक्तिर्दोषकल्पनाकारणत्वेन कृता। **अनभ्युपगमापिति**; परमार्थत्वे ह्यद्वैतहानिप्रसङ्ग इति भावः। अपरमार्थपक्षं दूषयितुं कोटित्रयमेव संभावितमित्याह—**तथा सतीति**। अपरमार्थत्वान्मूलदोषान्तरापेक्षयाऽनवस्थेति दूषणं कोटित्रयस्यापि साधारणम्। दृशित्वपक्षेऽधिकं दूषणमस्तीति दर्शयति—**न तावदिति**। किमनवच्छिन्ना दृशिः? उतावच्छिन्ना? दृशेरनवच्छिन्नत्वेऽपि किं स्वरूपातिरिक्ता? उत स्वरूपमेव? इति विकल्पमभिप्रेत्यानवच्छिन्नपक्षे स्वरूपव्यतिरिक्तपक्षं दूषयति—**दृशिस्वरूपभेदानभ्युमगमादिति**। अनवच्छिन्नदृशिद्वयानभ्युपगमादित्यर्थः। अनवच्छिन्नपक्षे स्वरूपदृशिपक्षं दूषयति—**भ्रमेति**। अवच्छिन्नदृशिदूषणत्वेन वक्ष्यमाणानवस्था अनवच्छिन्नपक्षेऽपि समाना। अत्राधिकदूषणद्वयसद्भावात् सा नोक्ता। अवच्छिन्नदृशित्वेन द्रष्टृत्वेन दृश्यत्वेन चाभ्युपगमं दूषयति—**द्रष्टृदृश्ययोरिति**। **काल्पनिकत्वेन;** अपरमार्थत्वेनेत्यर्थः। दोषान्तरापेक्षाहेतुरिदं काल्पनिकत्वम्। अवच्छिन्नदृशिपक्षेऽपि स्वरूपतद्व्यतिरिक्तविकल्पे स्वरूपपक्षेऽपि तुल्यमनभ्युपगमरूपदूषणम्, ब्रह्मस्वरूपस्यावच्छिन्नत्वापारमार्थ्यानभ्युपगमात्। अतोऽवच्छिन्नपक्षे न विकल्पितम्। स्वरूपातिरिक्तपक्षेऽनवस्थोक्ता। **अथैतदिति;** अपरमार्थत्वेऽनवस्था, परमार्थत्वेऽद्वैतहानिरित्येतद्दोषपरिजिहीर्षयेत्यर्थः। अनुभूतेरेव दोषत्वान्नाद्वैतहानिः। तस्याः पारमार्थ्यान्नानवस्थेति च भावः।

एतद्दूषयति—**ब्रह्मैवेति**। अपारमार्थ्याद्दोषान्तरसापेक्षत्वसाम्यमभिप्रेत्य **प्रपञ्चतुल्यशब्द** उक्तः। **अतः**; प्रतिशिरोऽभिहितैर्दूषणैरित्यर्थः। अनिर्मोक्षप्रसङ्गपरिहाराय **ब्रह्मव्यतिरिक्तत्वम्**। अनवस्थापरिहाराय **पारमार्थिकत्वम्**। परैरनवस्था त्रिधा परिहृता--जीवाज्ञानवादिना बीजाङ्कुरन्यायात्प्रवाहानादित्वेन परिहृता; अविद्यया जीवः, जीवादविद्येति हि तन्मतम्। ब्रह्माज्ञानवादिना स्वरूपानादित्वेन परिहृता। उभाभ्यां च दुर्घटत्वेन परिहृता—दुर्घटत्वमविद्याया भूषणं न तु दूषणमिति। परमार्थस्य ह्युपपत्त्यपेक्षा। प्रासादनिगरणादिस्वल्पास्येन विपुलप्रासादनिगरणमनुपपन्नमिति युक्तिर्न प्रवर्तते। अत उपपत्तिनिरपेक्षत्वमपारमार्थ्यसाधकम्। दोषस्य स्वपरनिर्वाहकत्वेन दोषान्तरनैरपेक्ष्याच्च नानवस्थेति। अत्रोच्यते—प्रवाहानादित्वं ब्रह्माज्ञानवादिनैव दत्तोत्तरम्; जीवनित्यत्वश्रुतिभिरकृताभ्यागमकृतविप्रणाशादिरूपश्रुत्यर्थापत्त्या चामोक्षाज्जीवस्य स्थायित्वमिष्टं हीयेतेति। अपारमार्थ्ये स्वरूपानादित्वमपि नानवस्थापरिहारः, तथा सति माध्यमिकपक्षविजयप्रसङ्गात्; तत्राधिष्ठानस्य भ्रान्तिसिद्धत्वे तस्या भ्रान्तेरधिष्ठानान्तरापेक्षा स्यात्; तस्यापि भ्रान्तिसिद्धत्वेऽनवस्था स्यादित्यनवस्थया ह्यधिष्ठानपारमार्थ्यं साधितम्। माध्यमिकेनापरमार्थाधिष्ठानस्य स्वरूपानादित्वे स्वीकृतेऽनवस्था परिहृतेत्यधिष्ठानापारमार्थ्यमेव स्यात्। किंच स्वरूपानादित्वेऽपि मूलदोषापेक्षास्त्येव, जीवस्यानादित्वेऽप्यविद्यापरिकल्पितत्वस्य भवद्भिरङ्गीकृतत्वात्। दुर्घटत्वं चानुपपन्नम्—दुर्घटत्वं नामोपपत्तिनिरपेक्षत्वम्; तदपारमार्थ्यसाधकं चेदपरमार्थस्य प्रपञ्चस्य दुर्घटत्वेनोपपत्तिनिरपेक्षत्वान्मूलदोषापेक्षा च न स्यात्। निवर्तकज्ञाने सत्यपि सावतिष्ठेत। विरोधान्न तिष्ठतीति चेत् तर्ह्युपपत्त्यनुवर्तिन्यविद्या स्यादिति। परमार्थत्वप्रयुक्तोपपत्तिरपरमार्थत्वप्रयुक्तोपपत्तिरिति द्विविधोपपत्तिः; तत्र दुर्घटत्वं नाम परमार्थत्वप्रयुक्तोपपत्तिनिरपेक्षत्वम्; अपरमार्थत्वप्रयुक्तोपपत्तिर्हि दोषापेक्षा; अतः प्रपञ्चस्य मूलदोषपरिकल्पनं युक्तमिति चेत्—तर्ह्यपरमार्थत्वप्रयुक्तोपपत्तिरूपदोषापेक्षाऽपरमार्थभूतदोषस्यापि स्यात्। ततोऽनवस्था तदवस्थैव। दुर्घटत्वमनवस्थापरिहारश्चेत् अधिष्ठानापारमार्थ्येऽप्यनवस्था परिहृता स्यात्। तत्रापारमार्थ्यप्रयुक्तोपपत्तिरवर्जनीयेत्यधिष्ठानापेक्षा स्यादेवेत्यनवस्थितिरिति वक्तव्यम्। तदत्र दोषेऽपि तुल्यमित्यनवस्था दुष्परिहरा। प्रवाहानादित्वपक्षेऽप्यधिष्ठानापारमार्थ्येऽप्यनवस्था सुपरिहरा, पितृपुत्रादिपरम्परावदधिष्ठानपरम्परानादित्वाभ्युपगमात्। जीवाज्ञानवादिनं प्रति ब्रह्माज्ञानवादिना यद्दुर्घटत्वे दूषणमुक्तम्, तद् ब्रह्माज्ञानवादेऽपि तुल्यम्; यथा—अविद्याया दुर्घटत्वं चेत्,

मुक्तान् परब्रह्म चाश्रयेदविद्या । शुद्धस्वरूपं ब्रह्म अशुद्धरूपाऽविद्या विरोधान्नाश्रयतीति चेत्, तर्ह्युपपत्तिमत्यविद्या । तस्मादुक्तान्योन्याश्रयणादिदूषणान्यापतेयुरिति ह्युक्तम् । तत्त-वापि तुल्यम् । मोक्षेऽपि ब्रह्माश्रयेदविद्या । न हि बाधकज्ञाने सति अपरमार्थभूताऽ-विद्या तिष्ठतीति चेत्, बाधकसंनिधौ न बाध्यसिद्धिरित्येवंरूपोपपत्तिमत्येवाविद्येत्यस्मदुक्ता-न्यनवस्थादिदूषणान्यापतेयुरिति हि वक्तुं शक्यते । दोषस्य स्वपरनिर्वाहकत्वे अधिष्ठानमपि तथा स्यात् । परं प्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वमिति चेत्, परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वम् । तदेव नास्तीति तुल्यं स्यात् । अधिष्ठानारोप्ययोर्भेदो दृष्टः; तत्राधि-ष्ठानस्य स्वपरनिर्वाहकत्वे अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इति चेत्—दोषतत्कार्ययोरपि तिमिरचन्द्रद्वित्वयोर्भेदो दृष्टः; दोषस्य स्वपरनिर्वाहकत्वे दोषाध्यस्तयोरैक्यप्रसङ्ग इति तुल्यमिति । एतदभिप्रायेण **यावद् ब्रह्मव्यतिरिक्तपारमार्थिकदोषानभ्युमगमो न ताव-द् भ्रान्तिरुपपादिता भवतीत्युक्तम् । यथोक्तमाचार्यपादैः—**

"स्वरूपानादित्वस्वपरघटने दुर्घटनता
प्रवाहानादित्वं पुनरिति चतस्रो हि गतयः ।
असत्याविद्याया गदितुमनवस्थापरिहृतौ
मतास्त्वेतास्तुल्याः स्फुटमसदधिष्ठानसरणौ ॥"

इति ।

**भावप्रकाशिका**

**ज्ञातृत्वादीनां परमार्थतया हीति;** अनुभूतेर्निराश्रयत्वे ज्ञातुरभावादेव ज्ञातृत्वा-दिरप्यपरमार्थो भवतीत्यर्थः । ननु 'निर्विषया निराश्रया' इत्येतत्परमतानुवादरूपम्; न च पर एव स्वमतदूषणावकाशमभिलषन् विशेषणं प्रयच्छति, अपितु स्वोक्तार्थोपयोगित-यैव; प्रकृते च स्वाभिमतमिथ्यात्वोपयोगितया तस्य विशेषणस्य साफल्यमेव वक्तुमुचितम्; न तु परदूषणायेत्यस्वरसादाह—**यद्वा विषयाश्रयभेदानामिति । असत्त्वप्रतिभासयो-रुक्तिरिति;** 'निर्विषया निराश्रया' इत्यसत्त्वोक्तिः, 'अनुभूतिः' इति तत्प्रतिभासोक्तिरिति द्रष्टव्यम् । **किं स्वरूपव्यतिरिक्तेति;** अधिष्ठानब्रह्मस्वरूपव्यतिरिक्तेत्यर्थः । **अनवच्छिन्न दृशिद्वयानभ्युपगमादिति;** अनवच्छिन्नाधिष्ठानभूतदृशिस्वरूपापेक्षया अतिरिक्ताया दोषभूताया अपरमार्थभूताया अनवच्छिन्नदृशेरनभ्युपगमादित्यर्थः । **अनवच्छिन्नपक्षेऽपि**

**समानेति;** दृशेरवच्छिन्नानवच्छिन्नविकल्पस्य परमार्थशिरोऽन्तर्गततया अपरमार्थे सर्वत्र कल्पकान्तरापेक्षाया अविशेषादित्यर्थः । काल्पनिकशब्दस्य कल्पनप्रयोजनकत्वभ्रान्तिं व्युदस्यति—**अपरमार्थत्वेनेत्यर्थ इति ।** **अनुभूतेरेव दोषत्वादिति;** अविद्याकल्पकदोषत्वादित्यर्थः । **प्रवाहानादित्वेन परिहृतेति;** "तदधीनत्वादर्थवत्" इति सूत्रे वाचस्पतिना बीजाङ्कुरन्यायोपन्यासादिति भावः । इदं तु स्वरूपानादित्वस्याप्युपलक्षणम् । यथा निरंशेऽप्याकाशे घटस्तटस्थ एव तमुपलक्ष्य एकदेशं संपाद्य तेन संबध्यते, तद्वदविद्यापि तटस्थैव चिन्मात्रमुपलक्ष्य एकदेशरूपजीवं संपाद्य तत्रावतिष्ठत इति नेतरेतराश्रयत्वम् ।

"स्वेनैव कल्पिते देशे व्योम्नि यद्वद् घटादिकम् ।
तथा जीवाश्रयाविद्यां मन्यन्ते ज्ञानकोविदाः ॥

जीवाज्ञानयोरनादित्वे उत्पत्तिज्ञप्त्यप्रतिबन्धाच्चान्योन्याश्रयो न दोषः" इति जीवाश्रयाज्ञानवादिवाचस्पतिना स्वरूपानादित्वस्याप्युपपादितत्वादिति द्रष्टव्यम् । **दोषस्य स्वपरनिर्वाहकत्वेनेति;** नन्वेवं परिहारचातुर्विध्यात् परैरनवस्था त्रेधा परिहृतेति पूर्वोक्तिविरोध इति चेत्; अत्र केचित्—जीवाज्ञानवादिना प्रवाहानादित्वदुर्घटत्वस्वपरनिर्वाहकत्वानामेवोक्तत्वेन स्वरूपानादित्वस्यानुक्तत्वात्, ब्रह्माज्ञानवादिनापि प्रवाहानादित्वस्योक्तत्वाच्च त्रैविध्यमेवेति वदन्ति । **परमार्थत्वप्रयुक्तेति;** परमार्थे वस्तुनि या उपपत्तिरपेक्षिता सा परमार्थत्वप्रयुक्तोपपत्तिरित्यर्थः । **अपरमार्थत्वप्रयुक्तेति;** दोषोऽप्यपरमार्थवस्तुसामग्रीकोटयनुप्रविष्ट इत्यर्थः । अपारमार्थिकस्य वस्तुनः पारमार्थिकवस्तुसामग्रीनिरपेक्षत्वेऽप्यपारमार्थिकवस्तुसामग्रीसापेक्षत्वमस्त्येव । स्वल्पास्येन विपुलप्रासादनिगरणस्य पारमार्थिकप्रासादनिगरणहेतुनिरपेक्षत्वेऽप्यपारमार्थिकप्रासादनिगरणहेतुभूतैन्द्रजालिकमन्त्रौषधादिसापेक्षत्वदर्शनादिति भावः। **अधिष्ठानाध्यस्तयोरैक्यप्रसङ्ग इति;** स्वपरनिर्वाहकत्वपक्षे तस्मिन्नेवाधिष्ठाने तदेवाध्यस्तमित्यागतम् । ततश्चाधिष्ठानत्वाध्यस्तत्वयोः परस्परविरोधाभावात् सर्वमपि स्वस्वरूप एव कल्पितमिति वक्तुं शक्यतया अध्यस्ताद्भिन्नमधिष्ठानान्तरं नापेक्षणीयं स्यादिति भावः ।

### श्रुतप्रदीपिका

अथ स्वरूपानुपपत्तिमाह—**अपि चेति ।** वक्ष्यमाणानवस्थित्युपयोगितया तत्परिपाटीकथनम्; दोषवशादिति ह्युच्यते । प्रथमे शिरस्यद्वैतहानिप्रसङ्गादनभ्युपगम उक्तः । द्वितीयं दूषयति—**नापीति ।** दृशित्वपक्षे चानवच्छिन्नदृशिपक्षे स्वरूपातिरिक्तपक्षं दूषयति—

**दृशिस्वरूपेति;** न ह्यनवच्छिन्नदृग्द्वयमित्यर्थः । अनतिरिक्तपक्षं दूषयति—**भ्रमेति** । अवच्छिन्नद्रष्टृदृश्यपक्षं दूषयति—**द्रष्टृदृश्ययोरिति** । काल्पनिकत्वेनापरमार्थत्वेनानवस्था पूर्वोक्ते शिरस्यपि साधारणी । दूषणान्तरोक्त्यै विकल्पः । मुखान्तरं शङ्कते—**अथेति** । अनतिरेकात्वाद्वैतहानिः; नित्यत्वान्नानवस्थितिरित्यर्थः । दूषयति—**ब्रह्मैवेति** । मृषार्थत्वेन दोषसापेक्षत्वं प्रपञ्चतुल्यता वैयर्थ्यमुक्तम्; अनिर्मोक्षं चाह—**ब्रह्मण इति** । **अत** इत्यादि; अनिर्मोक्षानवस्थितिपरिहाराय **व्यतिरिक्तपारमार्थिक**शब्दौ । जीवाज्ञानवायुक्त-प्रवाहानादित्वेनानवस्थितिपरिहारोऽकृताभ्यागमकृतनाशादिहतः । स्वरूपानादित्वेऽपि जीव-वद्दोषान्तरापेक्षा स्यात् । उभयथाप्यधिष्ठानमिथ्यात्वं सुवचम् । दुर्घटत्वेऽपि तथा दुर्घटता स्यात् । दोषस्यैवाधिष्ठानस्याप्यनपेक्षा स्यात् । सत्यत्वप्रयुक्तदोषोपपत्तिरेव दौर्घट्यनिवार्या, अधिष्ठानापेक्षा त्वसत्यत्वप्रयुक्तेति तन्मिथ्यात्वेऽधिष्ठानान्तरापेक्षेत्यनवस्थिति-रिति चेत्, दोषापेक्षापि तत्प्रयुक्तेत्यनवस्थितिः; न चेत्, जगदपि दोषापेक्षं स्यात् । अतोऽसत्यत्वप्रयुक्ता तदपेक्षा चेत्, दोषेऽपि तथेत्यनवस्थितिः । स्वपरनिर्वाहकत्वं चाधिष्ठा-नेऽपि सुवचम् ।

### श्रीभाष्यम्

अनिर्वचनीयत्वानुपपत्तिः-४

**अनिर्वचनीयत्वं च किमभिप्रेतम्? सदसद्विलक्षणत्वमिति चेत्, तथाविधस्य वस्तुनः प्रमाणशून्यत्वेनानिर्वचनीयतैव स्यात् । एतदुक्तं भवति—सर्वं हि वस्तुजातं प्रतीतिव्यवस्थाप्यम् । सर्वा च प्रतीतिः सदसदाकारा । सदसदाकारायास्तु प्रतीतेः सदसद्विलक्षणं विषय इत्यभ्युपगम्यमाने सर्वं सर्वप्रतीतेर्विषयः स्यादिति ।**

### श्रुतप्रकाशिका

अथानिर्वचनीयत्वानुपपत्तिमाह—**अनिर्वचनीयत्वं चेति** । **अनिर्वचनीयता**; विद्वत्संनिधौ दुरुपपादत्वम् । कथं प्रमाणशून्यत्वमित्यत्राह—**एतदुक्तमिति** । **सर्वं सर्व-प्रतीतेर्विषयः स्यादिति**; सदसद्विलक्षणमिति या प्रतीतिस्तत्रापि सदसदेव विषयः स्यादित्यर्थः । प्रतीत्यनुगुणं हि नीलपीतादि व्यवस्थाप्यते । तस्मात् सदसदाकारायाः प्रतीतेः

सदसदाकार एव विषयः, न सदसद्विलक्षणः । यथा ख्यातिविवेके—" न ह्यन्यदवभास्यमन्यो विषयः, अवभासनव्यवस्थाप्यत्वाद्विषयस्य " इति । एकस्य विषयस्य सदसदाकारत्वमनुपपन्नं व्याप्तिविरोधादिति चेत्, सदसद्विलक्षणत्वं च व्याप्तिविरोधादनुपपन्नम् । सतोऽसद्विलक्षणत्वमसतः सद्विलक्षणत्वं च हि दृष्टम्; न त्वेकस्योभयवैलक्षण्यं दृष्टमिति व्याप्तिविरोधः । अयं विशेषः—सदसद्विलक्षणत्वं क्वचिदपि न दृष्टम्; सदसदात्मकत्वं तु दृष्टमिति । यथा संवित्सिद्धौ—

" नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत् ।
प्रतीतेरेव सत्किं न बाधान्नासत्कुतो जगत् ॥"

इति । अर्थस्थितौ सत्त्वमसत्त्वं वा स्यात्; न तद्विलक्षणत्वम् । सतो घटादेः सदसद्विलक्षणत्वं दृष्टमिति चेत्—न; तथा सति ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्गात् । अन्यतरत्वसहं सदसद्विलक्षणत्वमिष्टमेवेति चेत्, तुल्यम् । ईदृशं सदसद्वैलक्षण्यं वदता शब्दान्तरेण सत्त्वमेवाङ्गीकृतं भवति । अतस्त्वदभिमतं सदसद्विलक्षणत्वं विरोधादपास्तम् । अस्तीति प्रतिपन्नत्वं सत्त्वं, नास्तीति धीविषयत्वं बाधितत्वमित्येकस्यैव सत्त्वासत्त्वविरोधः सदसद्विलक्षणत्वकल्पकश्चेत्, सर्वत्र पूर्वपक्षसिद्धान्तप्रतीत्योः परस्परविरुद्धाकारविषयत्वादुभयाकारविलक्षण एवार्थः साध्य इति सिद्धान्तसमर्थनवैयर्थ्यं स्यात् । ततश्च भेदः सुनिरूप इति पूर्वपक्षीकृत्य दुर्निरूप इति त्वया सिद्धान्तिते प्रतीतिद्वयविरोधात्सुनिरूपदुर्निरूपविलक्षणः स्यात् । एवं संवित्सत्यत्वमिथ्यात्वजडत्वाजडत्वनित्यत्वानित्यत्वादिवादेषु पूर्वपक्षितसिद्धान्तिताकारविलक्षणत्वं संविदः स्यात् । तच्चानभिमतम् । अतः परस्परविरुद्धाकारप्रतीत्योः प्रतिपन्नाकारवैलक्षण्यकल्पकत्वं व्याप्तिविरुद्धमिति न सदसद्वैलक्षण्यसिद्धिः । तर्हि ख्यातिबाधान्यथानुपपत्तेः कः परिहार उक्त इति चेत्, अन्यथैवोपपत्तिरुक्ता भवति । सत्त्वे सत्यन्यथाख्यानादिभिस्तत्तद्वाद्यभिमतैरेव ख्यातिबाधोपपत्तेः । सतः कथं बाधः? अन्यत्र ख्यातत्वात् । नन्वन्यत्र सच्चेन्न बाधः, न सच्चेदसत्ख्यातिप्रसङ्ग इति चेत्—न; अन्यत्र सत्त्वात् । अन्यत्र सतोऽन्यत्र ख्यातत्वं ह्यन्यथाख्यातत्वम् । अन्यत्र सतोऽन्यत्र ख्यातिर्दोषवशात्; दोषस्यान्यत्र ख्यातिहेतुत्वं न दृष्टमिति चेत्—दोषस्यानिर्वचनीयावभासहेतुत्वं च न क्वचिद्विमतिपदादन्यत्र दृष्टमिति तुल्यम् । मिथो विरुद्धप्रतिपन्नाकारद्वयवैलक्षण्यमेकस्याविरुद्धमित्येतत्त्वाधिकम् । अख्यातिपक्षे सत्त्वे सति भेदाग्रहेण ख्यातिबाधोपपत्तिः । सत

एवागृहीतभेदतया ख्यातिः । भेदग्रहश्च बाधः । बाध्यत्वं च प्रवृत्तेः । यथार्थख्यातिपक्षे तु शुक्तिरजतस्वाप्नार्थादौ सत्त्वात् प्राचुर्याभावास्थिरत्वतदेकानुभाव्यत्वाग्रहाच्च ख्यातिबाधोपपत्तिः । पुरोवर्तिनि सत एव रजतस्य ख्यातिः । शुक्तिप्राचुर्यग्रहो बाधः । तेन प्रवृत्तिर्बाध्या । तद्बाधश्च प्रवृत्त्यनुत्पत्तिः । अलातचक्रादौ त्वख्यातिपक्ष इव तदुपपत्तिः । अतोऽन्यथैवोपपत्तिः सिद्धेत्यनिर्वचनीयत्वकल्पनमयुक्तम् ।

### भावप्रकाशिका

**व्याप्तिविरोधादिति चेदिति ;** सत्त्वस्यासत्त्वाभावव्याप्तत्वादिति भावः । **सदसदात्मकत्वं दृष्टमिति ;** भ्रान्तिबाधाभ्यां सदसदात्मकतया प्रतिपन्नत्वात् तदेव स्वीकर्तुमुचितमित्यर्थः । **अर्थस्थितौ सत्त्वमसत्त्वं वा स्यादिति ;** वस्तुस्थितौ पर्यालोच्यमानायां सत्त्वासत्त्वयोरन्यतरदेव स्यादित्यर्थः । **सदसद्विलक्षणत्वं दृष्टमिति चेदिति ;** सन्मात्ररूपत्वेऽप्युभयरूपत्वाभावादिति भावः । **अन्यथाख्यानादिभिरिति ;** आदिपदेनाख्यातियथार्थख्याती विवक्षिते । **सत्त्वे सतीति ;** सत्त्वे सत्येवेत्यर्थः । **भेदाग्रहेण ख्यातिबाधोपपत्तिरिति ।** न च भेदाग्रहस्य ख्यात्युपपादकत्वेऽपि कथं बाधोपपादकत्वमिति वाच्यम् , 'वर्षकृतं दुर्भिक्षम्' इतिवदुपपत्तेः । अथवा भेदाग्रहेणेत्युपलक्षणम्—भेदाग्रहेण भेदग्रहेण च ख्यातिबाधोपपत्तिरित्यर्थः । तमर्थमुपपादयति—**सत एवेत्यादिना ।** पुरोवर्तिन्यगृहीतासंसर्गभेदप्रतियोगितयानुपस्थितस्योपस्थितिः ख्यातिः ; तत्र गृहीतभेदप्रतियोगितया तस्य वस्तुनः प्रतीतिर्बाध इति वदन्ति ।

### श्रुतप्रदीपिका

अथानिर्वाच्यत्वं व्युदस्यति—**अनिर्वचनीयत्वमिति । अनिर्वचनीयता ;** विद्वत्संनिधाववाच्यता । कथं मानशून्यत्वमित्यत्राह—**एतदिति । सर्वं सर्वप्रतीतेरिति ;** सदसद्विलक्षणत्वबुद्धेः सदसदेव विषयः स्यात् । प्रतीतिद्वयविरोधो वैलक्षण्यस्य साधकश्चेत् सर्वत्र पूर्वपक्षितसिद्धान्तिताकारादन्यदेव सिध्येदिति भावः । उभयरूपत्वं विरुद्धं चेदुभयवैलक्षण्यमपि विरुद्धम् , तयोरेवान्यतरवैलक्षण्यस्यान्यतरात्मकत्वदर्शनात् । विरुद्धत्वे तुल्येऽपि सदसदात्मकत्वं तु दृष्टमिति भिदा । वस्तुतस्त्वन्यतरदेवास्तु ; अन्यतरेणैव ख्यातिबाधोपपत्तेर्न विलक्षणक्लृप्तिरिति भावः । तदुपपत्तिश्च सत्त्वे सति भेदाग्रहान्यथाभानादिभिः ।

न्यायसुदर्शनम्

( सर्वा च प्रतीतिः सदसदाकारेत्यत्र ख्यातिबाधान्यथानुपपत्त्या ह्यनिर्वचनीय-वस्तुकल्पना । सा चानुपपत्त्यन्तरं प्रसूते । सदसदाकारायाः प्रतीतेरुभयविलक्षणस्य विषयत्वायोगात्, घटपटाकारायाः प्रतीतेस्तदुभयविलक्षणकुड्यस्येव । न हि कस्यचिद-नुपपत्त्या तदुपपत्त्यर्थं कल्प्यमानं वस्तु अन्यस्यानुपपत्तिमावहत् कल्पयितुं युक्तम्, अनुप-पत्त्यन्तरपराहतत्वादित्यभिप्रायः । श्लोकश्चात्र भवति—

" यदर्थापत्तितः कल्प्यं तदन्यस्य विरोधिताम् ।
भजेत चेन्न तत्कल्प्यं विरोधस्याप्रशान्तितः ॥"

इति ।)

श्रीभाष्यम्

प्रमाणानु-पपत्तिः-५ अथ स्यात्—वस्तुस्वरूपतिरोधानकरमान्तरबाह्यरूपविविधा-ध्यासोपादानं सदसदनिर्वचनीयमविद्याऽज्ञानादिपदवाच्यं वस्तुयाथात्म्यज्ञा-ननिवर्त्यं ज्ञानप्रागभावातिरेकेण भावरूपमेव किंचिद्वस्तु प्रत्यक्षानु-मानाभ्यां प्रतीयते । तदुपहितब्रह्मोपादानश्चाविकारे स्वप्रकाशचिन्मात्रव-पुषि तेनैव तिरोहितस्वरूपे प्रत्यगात्मन्यहंकारज्ञानज्ञेयविभागरूपो-ऽध्यासः । तस्यैवावस्थाविशेषेणाध्यासरूपे जगति ज्ञानबाध्यसर्परजतादि-वस्तुतत्तज्ज्ञानरूपाध्यासोऽपि जायते । कृत्स्नस्य मिथ्यारूपस्य तदुपा-दानत्वं च मिथ्याभूतस्यार्थस्य मिथ्याभूतमेव कारणं भवितुमर्हतीति हेतुबलादवगम्यते । कारणाज्ञानविषयं प्रत्यक्षं तावत्—'अहमज्ञः, मामन्यं च न जानामि' इत्यपरोक्षावभासः । अयं तु न ज्ञानप्रागभाव-विषयः । स हि षष्ठप्रमाणगोचरः । अयं तु 'अहं सुखी' इतिवद-परोक्षः । अभावस्य प्रत्यक्षगोचरत्वाभ्युपगमेऽप्ययमनुभवो नात्मज्ञाना-भावविषयः, अनुभववेलायामपि ज्ञानस्य विद्यमानत्वात्; अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तेश्च । एतदुक्तं भवति—' अहमज्ञः ' इत्य-

स्मिन्ननुभवे अहमित्यात्मनोऽभावधर्मितया ज्ञानस्य च प्रतियोगितया-ऽवगतिरस्ति वा न वा ? अस्ति चेत् विरोधादेव न ज्ञानाभावानुभवसंभवः; नो चेत् धर्मिप्रतियोगिज्ञानसव्यपेक्षो ज्ञानाभावानुभवः सुतरां न संभवति । ज्ञानाभावस्यानुमेयत्वे अभावाख्यप्रमाणविषयत्वे चेयमनुप-पत्तिः समाना । अस्याज्ञानस्य भावरूपत्वे धर्मिप्रतियोगिज्ञानसद्भावे-ऽपि विरोधाभावादयमनुभवो भावरूपाज्ञानविषय एवाभ्युपगन्तव्य इति* ।

श्रुतप्रकाशिका

एवमाश्रयतिरोधानस्वरूपानिर्वचनीयत्वानुपपत्तय उक्ताः; अथ 'न हि दृष्टेऽनुपपन्नं नाम' इति न्यायात् प्रमाणसिद्धार्थस्य तर्केण बाधो न युक्त इत्यभिप्रायवता परेण प्रमाण-प्रतिज्ञा शङ्क्यते—**अथ स्यादिति** । पूर्वदूषिताकारान् साधयितुमाह—**वस्तुस्वरूपेति** ; अनेन तिरोधानमुक्तम् । **आन्तरबाह्येति** स्वरूपमुक्तम् । अध्यासोपादानत्वेन हि मिथ्यात्वं फलितम् । **सदसदित्यनिर्वचनीयत्वमुक्तम्** । शास्त्रेष्वेतत्प्रतिपादकशब्दप्रत्यभिज्ञानार्थम् **अविद्याज्ञानादिपदवाच्यमित्युक्तम्** । सिद्धान्तिना दूषयिष्यमाणमाकारान्तरमपि साध्यत्वे-नाह—**वस्तुयाथात्म्यज्ञानेति** । **तदुपहितेत्याश्रयश्च** । आन्तराध्यासः कः? बाह्यः कः? कथं चाविद्योपादानत्वे ब्रह्मण उपादानत्वम्? इत्यत्राह—**तदुपहितेत्यादिना** । निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिं सूचयति—**अविकारे स्वप्रकाशेत्यादिना** अविकारत्वात् स्वप्रकाश-त्वात् प्रत्यक्त्वाच्च विकारास्पदजडपराग्रूपपरिणामो नोपपद्यत इत्यर्थः । स्वप्रकाशस्य कथम-ध्याससंभव इत्यत्राह—**तिरोहितस्वरूप इति** । तिरोधायकं किमित्यत्राह—**तेनैवेति** । **तेनैव** ; अध्यासहेतुनैवेत्यर्थः । अहंकारोऽज्ञानं चान्तराध्यासः । ज्ञेयं बाह्याध्यासः । **अध्यासरूपे** ; अध्यस्तरूपे; कर्मणि घञ् । **तस्यैव** ; दोषस्यैव । **अवस्थाविशेषेण** ; कादाचित्कावस्थाविशेषेण रज्जुसर्पाद्यध्यासः । एवं निष्कृष्टब्रह्मण उपादानत्वानुपपत्तिरुक्ता । दोषस्योपादानत्वे उपपत्तिमाह—**कृत्स्नस्येति** । सुवर्णजातीयस्य भूषणस्य सुवर्णमेव

* अयं च पञ्चपादिकाविवरणग्रन्थस्यार्थतोऽनुवादः ।

ह्युपादानं दृष्टम्; तद्वदिति भावः। **हेतुबलात्**; कार्यकारणयोः सजातीयत्वदर्शनलक्षणात्। अथ प्रत्यक्षमाह—**कारणेति**। अहमज्ञः इत्यस्य विवरणं **मामन्यं च न जानामीति**। 'अहमज्ञः' इत्यज्ञानस्वरूपकीर्तनम्। तस्य 'मामन्यं न जानामि' इत्याच्छादनरूपकार्यकथनम्। कारणाज्ञानशब्देन कार्यरूपाज्ञानव्यावृत्तिः। तस्मात् सौषुप्तिकमज्ञानं विवक्षितम्। 'जागरिताद्यवस्थायां घटाद्यवच्छिन्नमज्ञानं प्रतीयते सविकल्पकप्रत्यक्षेण; सुषुप्तौ त्वनवच्छिन्नकारणाज्ञानप्रतीतिः' इति तत्त्वशुद्धिकारादिभिरुक्तम्। जागरितावस्थायामेवाज्ञानानुभवोऽयमिति संप्रदायः, 'अन्यं च न जानामि' इत्युक्तेः। न हि स्वापेऽन्यपरामर्शः। 'न जानामि' इत्याच्छादकतया प्रतीयमानस्याज्ञानस्य कारणत्वात् **कारणाज्ञानविषय**मित्युक्तम्। **अपरोक्षावभास इति** परोक्षरूपानुमानादिप्रमाणव्यावृत्त्यर्थमुक्तम्। ज्ञानप्रागभावविषयत्वमाशङ्क्य परिहरति—**अयं त्विति**। भवत्वयमपि षष्ठप्रमाणविषय इत्याशङ्क्याह—**अयं त्विति**। परोक्षप्रमाणानि प्रत्यक्षव्यतिरिक्तानि। तस्मात् परोक्षप्रमाणविषयः प्रागभावो नापरोक्षप्रमाणविषयभूतमज्ञानं भवितुमर्हतीत्यर्थः। भावग्राहकप्रमाणेनाभावस्य वेद्यत्वेऽपि दूषणमाह—**अभावस्येति**। हेतुमाह—**अनुभवेति**। अभावस्यानुभववेलायां ज्ञानं विद्यते, न वा? विद्यते चेत्, ग्राह्याभावान्नाभावप्रतीतिः। न चेत्, ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थः। भावाभावयोरेकविषयत्वे हि विरोधः; अत्र विरोधो नास्ति, अभावविषयकज्ञानस्य विद्यमानस्य ग्राहकत्वात्; इतरविषयज्ञानस्याभावप्रतियोगित्वेनाविद्यमानत्वादिति शङ्कां परिहरन् अनुभववेलायां ज्ञानस्य विद्यमानत्वम्, अविद्यमानत्वे ज्ञानाभावप्रतीत्यनुपपत्तिं, भावरूपत्वे विरोधाभावं च विवृणोति—**एतदुक्तं भवतीति**। ज्ञानप्रागभावस्य ग्राह्यत्वे अनिच्छयापि भावाभावयोरेकविषयत्वमापतितमित्यभिप्रायेणाह—**अहमिति**। **ज्ञानस्य चेति**; ज्ञानशब्द आत्मविषयघटादिविषयज्ञानसाधारणः। 'इह भूतले घटो नास्ति' इत्यादिष्वभावग्रहणे प्रतियोगिधर्मिणोर्ज्ञानापेक्षा दृष्टा। तस्मादत्राप्यभावधर्मितया आत्मनो ज्ञानमस्तीति वक्तव्यम्। अभावव्यतिरिक्तो ह्यात्मा। अतस्तद्विषयज्ञाने सत्यप्यभावव्यतिरिक्तविषयज्ञानमभावप्रतियोगीति वचनं व्याहतं स्यात्। अभावधर्मिप्रतियोगिरूपत्रितयव्यतिरिक्तविषयज्ञानमभावप्रतियोगीति चेत्, तदानीमभावप्रतियोगितया ज्ञानस्यापि प्रतीतिरस्तीति वक्तव्यम्। प्रतीयमानं ज्ञानं स्वविषयावच्छिन्नं प्रतीयत इति विषयाणामपि प्रतीतिरस्ति। एवमभावप्रतियोगिज्ञानावच्छेदकतया विषयेषु ज्ञायमानेषु तद्विषयज्ञानाभावोऽनुपपन्न इति

भावः । अभावस्य प्रमाणान्तरविषयत्वेऽप्युक्तदूषणमतिदिशति—**ज्ञानाभावस्येति ।** प्रमाणान्तराणां विद्यमानविषयत्वनियमाभावेऽपि विद्यमानतया दर्शयितुमशक्यमिति भावः । 'अहमज्ञः' इति वर्तमानतया ह्यज्ञानं प्रतीयते । अस्मिन्पक्षे अधिकं दूषणान्तरं पूर्वमुक्तम्; अपरोक्षस्य परोक्षरूपप्रमाणविषयत्वानुपपत्तिरूपमर्थसिद्धम् । भावरूपत्वे उक्तदूषणं नास्तीत्याह—**अस्येति ।** धर्मिप्रतियोगिविषयज्ञानं **धर्मिप्रतियोगिज्ञानम् ।** न तेन भावरूपाज्ञानस्य विरोधः । घटाच्छादकमज्ञानं घटज्ञाने न हि विरुध्यते; न तु घटज्ञानविषयज्ञानेन धर्मिज्ञानेन चेत्यर्थः ।

**भावप्रकाशिका**

तद्विवरणरूपतामेवोपपादयति—**अज्ञानस्वरूपकीर्तनमिति ।** विषयावरणरूपकार्यविनिर्मुक्ताज्ञानस्वरूपकीर्तनम्—**अज्ञ इति ।** मामन्यं चेत्यत्र तु विषयावरणकार्यविशिष्टाज्ञानकीर्तनमित्यर्थः । अत एव विवरणव्याख्याने तत्त्वदीपने—"अहमज्ञ इत्यज्ञानस्य साश्रयत्वम्; मामन्यं च न जानामीति सविषयत्वं प्रतीयते" इत्युक्तम् । 'अहमज्ञः' इति प्रतीत एवाज्ञानस्वरूपे सविषयत्वरूपधर्मान्तरवैशिष्ट्यावगाहित्वेन तद्विवरणरूपत्वमिति भावः । **कार्यरूपाज्ञानव्यावृत्तिरिति ;** "श्रूयतां चाप्यविद्यायाः स्वरूपं कुरुनन्दन । अनात्मन्यात्मबुद्धिर्या" इत्यादावनात्मन्यात्मबुद्धेरप्यविद्याऽज्ञानादिशब्दप्रयोगविषयतया तद्व्यावृत्तिरित्यर्थः । वक्ष्यति चानात्मन्यात्मबुद्धेरप्यज्ञानशब्दवाच्यत्वम् । **सौषुप्तिकमज्ञानमिति ;** सुषुप्त्यनुवृत्तमज्ञानमित्यर्थः । अहंबुद्धिरूपस्य कार्याज्ञानस्य सुषुप्त्यनुवृत्तत्वाभावात् तद्व्यावृत्तिरित्यर्थः । ननु 'मामन्यं च न जानामि' इत्यनुभवः सुषुप्त्यनुवृत्ताज्ञाने न प्रमाणीकर्तुं योग्यः, सुषुप्तावहमर्थस्य तदन्यस्य वा विषयस्योल्लेखासंभवादित्याशङ्क्याह—**जागरितावस्थायामिति ;** सविकल्पकप्रत्यक्षरूपसाक्षिणा अहमर्थतदन्यरूपविषयावच्छिन्नाज्ञानानुभवो जाग्रद्दशायाम्; तस्यैवाज्ञानस्य निर्विषयतयानुभवः सुषुप्तावित्यर्थः । ततश्च कारणाज्ञानस्य जाग्रद्दशायां तत्त्वशुद्धिकारमते सर्वात्मना* प्रतीतिरिति मन्तव्यम्, साक्षिभास्यस्याज्ञानस्याज्ञातत्वासंभवात् । न चाज्ञानस्य निर्विषयत्वावस्था न संभवति; निर्विषयत्वेनाज्ञानानुभवश्च न संभवतीति वाच्यम्—सुषुप्तौ प्रत्यगर्थमात्रविषयतयाऽज्ञानस्य भाने दोषाभावात् । ननु—जाग्रद्दशायां साक्षिणो 'घटं न जानामि' इति विषयोल्लेखित्ववत् सुषुप्तौ विषयोल्लेखित्वे को दोषः ? न हि

---

* **विषयावच्छिन्नतया आच्छादकतया चेत्यर्थः ।**

साक्ष्युल्लेखानुल्लेखयोर्जागरणाजागरणे उपयुज्येते; अत एव—"सर्वं वस्तु ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषय एव" इत्युक्तं विवरण इति चेत्,—सत्यम्; जाग्रद्दशायां 'घटं जानामि, पटं जानामि' इति विशिष्य विषयविशेषोल्लेखवत् सुषुप्तिदशायां विषयाणां विशिष्योल्लेखादर्शनेन तदनुरोधेन कस्यचिद्धेतोः कल्पनीयत्वात्। न केवलं तत्त्वशुद्धिकारादिभिराधुनिकैरुक्तम्; संप्रदायोऽपि तथैवेत्याह—**जागरितावस्थायामेवेति।** **अज्ञानानुभवोऽयमितीति;** 'अहमज्ञः; मामन्यं च न जानामि" इत्ययमज्ञानानुभव इत्यर्थः। ननु 'न जानामि'इत्यत्राज्ञानमात्रमनुभूयते, न तस्य कारणत्वमपि; तत्कथं कारणाज्ञानविषयं प्रत्यक्षमित्युच्यत इत्याशङ्क्याह—**न जानामीत्याच्छादकतयेति।** कार्याज्ञानस्याच्छादकत्वाभावादिति भावः। भाष्ये—**कारणाज्ञानविषयं प्रत्यक्षं तावदिति;** 'अहमज्ञः, मामन्यं च न जानामि' इत्यपरोक्षावभासः कारणाज्ञानविषयं प्रत्यक्षमिति योजना। ततश्च प्रत्यक्षमपरोक्षावभास इत्यनयोर्न पौनरुक्त्यमिति ध्येयम्। भाष्ये **स हि षष्ठप्रमाणगोचर इति;** षष्ठप्रमाणमात्रगोचर इत्यर्थः। मात्रपदेन प्रत्यक्षगोचरत्वं निषिध्यते; प्रत्यक्षागोचर इत्यर्थः। अत एवोत्तरत्र 'अभावस्य प्रत्यक्षगोचरत्वाभ्युपगमेऽपि' इत्युक्तम्। **भवत्त्वयमपि षष्ठप्रमाणविषय इति;** अत्र चोदयन्ति—"अयं तु 'अहं सुखी' इतिवदपरोक्षः" इत्यत्र भाष्ये 'अयम्' इत्यनेनानुभवः परामृश्यते, न तु विषयः; 'अहं सुखी' इतिवदितीतिकरणावमृष्टप्रत्यक्षानुभवस्य दृष्टान्तीकरणात्; न हि 'सुखादिवत्' इत्युक्तम्। किंचाभावः प्रत्यक्षायोग्यः। इदं तु ज्ञानं प्रत्यक्षरूपम्। अतो नानयोर्विषयविषयिभावः संभवतीत्यस्यार्थस्यैव प्रतिपादयितुमुचितत्वात् 'अयम्' इति ज्ञानपरामर्श एवोचितः, न विषयपरामर्शः। ततश्च 'भवत्त्वयमप्यनुभवः षष्ठप्रमाणजन्यः' इत्येवावतारिकया भवितव्यमिति—तन्न, उपायस्योपायान्तरादूषकत्वात्। **परोक्षप्रमाणविषयः प्रागभाव इति;** परोक्षैकविषय इत्यर्थः। ततश्च परोक्षप्रमाणविषयस्य वह्न्यादेरपरोक्षत्वस्यापि दर्शनात् नेदं युक्तमिति शङ्काया नावकाशः। **भावग्राहकप्रमाणेनेति;** प्रत्यक्षस्य संनिकृष्टार्थमात्रग्राहितया संयोगादिलक्षणस्य पञ्चविधस्य संनिकर्षस्य भावेष्वेव संभवेन भावग्रहणैकशीलस्यापि प्रत्यक्षस्य विशेषणतालक्षणसंनिकर्षान्तरपरिकल्पनेनाभावग्राहकत्वाभ्युपगमेऽपीति भावः। ततश्च भाष्ये 'प्रत्यक्षत्वाभ्युपगमेऽपि' इति स्पष्टमर्थे प्रतीयमाने 'भावग्राहकप्रमाणेनाभावस्य वेद्यत्वाभ्युपगमेऽपि' इत्यवतारिकायां न सामञ्जस्यम्; किं च भावग्राहिणां शब्दानुमानादीनामभावग्राहित्वस्य सर्वसिद्ध-

त्वाच्चेति चोद्यस्य नावकाशः । **ग्राहकाभावान्न तदभावप्रतीतिरित्यर्थ इति ;** ग्रहण-कारणीभूताधिकरणप्रतियोगिज्ञानाभावादभावज्ञानं नोत्पत्तुमर्हतीत्यर्थः; न तु ग्राहकस्याभाव-ज्ञानस्येत्यर्थः, उत्तरत्र 'एतदुक्तं भवति' इति भाष्ये तथैव विवरणदर्शनात् । न च ग्राहक-शब्दस्य ग्रहणजनकप्रतियोग्यधिकरणज्ञानपरत्वे अभावविषयकज्ञानस्य ग्राहकत्वादित्यव्य-वहितशङ्काया अनुत्थानमिति वाच्यम्, आशयानभिज्ञस्य तथा चोद्यसंभवात् । केचित्तु **ग्राहकाभावात् ;** अभावग्राहकस्य ज्ञानस्याभावात् । **न तदभावप्रतीतिः ;** न तदभावोल्लेख इत्यर्थः, 'एतदुक्तं भवति' इत्येतस्य कथंचिदुपपादकत्वमात्रत्वेनाप्युपपत्तेरिति वदन्ति । **ज्ञानप्रागभावस्य ग्राह्यत्व इति ;** अत्र प्रागित्येतदविवक्षितम्; ज्ञानाभावस्य ग्राह्यत्व इत्यर्थः । इतरथा प्रागभावस्य यावज्ज्ञानप्रतियोगिकस्यासंभवेन व्यक्तिविशेषप्रतियोगिक-स्यैव वक्तव्यतया तत्र विरोधाभावादिति द्रष्टव्यम् । **अभावधर्मितयात्मनो ज्ञानम-स्तीति वक्तव्यमिति ;** अभावधर्मित्वादात्मनस्तज्ज्ञानमस्तीति वक्तव्यमित्यर्थः; न तु धर्मित्वेन प्रकारेण ज्ञानमिति भ्रमितव्यम्, तेन रूपेण तज्ज्ञानस्याहेतुत्वात् । **धर्मितया प्रतियोगितयावगतिरस्ति वा न वेति** भाष्यस्याप्ययमेवार्थः । **अस्मिन्पक्ष इति ;** प्रत्यक्षागोचरत्वपक्षाभ्युपगम इत्यर्थः । ततश्चानुमेयत्वमात्रेण कथमपरोक्षत्वविरोधः, वह्न्यादा-वुभयदर्शनादिति शङ्का परास्ता वेदितव्या । **घटाच्छादकमज्ञानं घटज्ञाने न हि विरुध्यत इति ;** अयमर्थः—घटज्ञाने सति घटाच्छादकमज्ञानं न हि विरुध्यते ; घटाज्ञानविषयज्ञान-धर्मिज्ञानाभ्यां च न विरुध्यते, भावाभावरूपत्वाभावात्; उभयोरपि भावरूपत्वादित्यर्थः । भाष्यस्वारस्यात् "भावरूपाज्ञानप्रत्यक्षवादे तु सत्यप्याश्रयप्रतियोगिज्ञाने ज्ञानाभावस्येव भावान्तरस्यापि नानुपपत्तिर्नियन्तुं शक्या" इति पुरोवादिपञ्चपादिकाविवरणग्रन्थानुसाराच्चोक्त एवार्थः । यथाश्रुतार्थग्रहणे साक्षाद्घटविषयज्ञानस्यैव 'घटं न जानामि' इति ज्ञानविषयत्व-प्रसङ्गेनाज्ञानासिद्धिप्रसङ्गात् ।

## श्रुतप्रदीपिका

अथ मानसिद्धोऽर्थो न तर्कबाध्य इति तत्सिद्धिं शङ्कते—**अथ स्यादित्यादिना निरवद्यमित्यन्तेन ।** वस्त्वित्यादिना दूषिताकार उक्तः । **आन्तरेति** स्वरूपोक्तिः । अविद्योपादानं चेत् कथं ब्रह्म कारणमित्यत्राह—**तदुपहितेति ।** अनेनाश्रयोक्तिः । स्वसिद्धौ कथमध्यास इत्यत्राह—**तेनैवेति ।** निष्कृष्टस्य कारणत्वानुपपत्त्यर्थमविकारादि-

शब्दः । **तस्यैव ;** दोषस्यैव । **अध्यासरूपे ;** अध्यस्तरूपे । जगद्धि विकारात्मकं जडम् । हेतुमाह—**कृत्स्नस्येति** । प्रत्यक्षं दर्शयति—**कारणेति** । निर्विकल्पकसिद्धमिदं सौषुप्तिकमनवच्छिन्नमज्ञानमिति केचिदाचार्याः* । जागरादौ सिद्धमिति संप्रदायः, अन्यं चेत्युक्तेः । अज्ञानशब्दविवरणं **मामित्यादि** । मानान्तरव्युदासायापरोक्षशब्दः । प्रागभावविषयत्वमाशङ्क्याह—**अयं त्विति** । भावग्राहिमानवेद्यत्वमभावस्याशङ्क्याह—**अभावस्येति** । ज्ञानं विद्यते चेत् ग्राह्याभावः; न चेत् ग्राहकाभाव इत्यर्थः । अर्थान्तरधीरभावप्रतियोगिनी; अभावधीस्त्वस्तीति नानुपपत्तिरित्यत्राह—**एतदुक्तमिति** । नार्थान्तरज्ञानमभावप्रतियोगीति वाच्यम्, धर्मिप्रतियोगिसिद्ध्यभावे अभावस्य दुर्ग्रहत्वात् । तर्हि धर्मिप्रतियोगीतरधीरभावप्रतियोगिनी चेत्, अभावप्रतियोगिधीश्च स्वविषयावच्छिन्ना जातेति घटादिज्ञाने सति न तदभाव इति भावः । ग्राह्यस्य ज्ञानाभावस्याभावे समकालविषयत्वनियमवदैन्द्रियकप्रत्यक्षमात्रानुभाव्यत्वविरोधः । ग्राहकसामग्र्यन्तर्भूतधर्मिप्रतियोगिज्ञानाभावे सर्वैः प्रमाणैरनुभाव्यत्वविरोध इत्यभिप्रायेण **सुतरामित्युक्तम्** । उक्तदोषं मानान्तरवेद्यत्वेऽप्यतिदिशति—**ज्ञानाभावस्येति** । मानान्तरेणापि ज्ञानाभावस्य विद्यमानतया ज्ञापनमयुक्तमित्यर्थः । तथा हि प्रतीयते—"अहमज्ञः" इति । भावरूपत्वे सत्यविरोधमाह—**अस्येति** ।

**श्रीभाष्यम्**

ननु च भावरूपमप्यज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यते; मैवम्; साक्षिचैतन्यं न वस्तुयाथात्म्यविषयम्, अपि त्वज्ञानविषयम्; अन्यथा मिथ्यार्थावभासानुपपत्तेः । न ह्यज्ञानविषयेण ज्ञानेनाज्ञानं निवर्त्येत इति न विरोधः । ननु चेदं भावरूपमप्यज्ञानं विषयविशेषव्यावृत्तमेव साक्षिचैतन्यस्य विषयो भवति; स विषयः प्रमाणाधीनसिद्धिरिति कथमिव साक्षिचैतन्येनास्मदर्थव्यावृत्तमज्ञानं विषयीक्रियते? नैष दोषः; सर्वमेव वस्तुजातं ज्ञाततया अज्ञाततया वा साक्षिचैतन्यस्य विषयभूतम् । तत्र जडत्वेन ज्ञाततया सिध्यत

* तत्त्वशुद्धिकारा इत्यर्थः । "अज्ञानं पुनः निर्विकल्पकसाक्षिचैतन्येन सुषुप्तिकाले अनुभूतम्" इति तदीयो ग्रन्थः ।

एव प्रमाणव्यवधानापेक्षा । अजडस्य तु प्रत्यग्वस्तुनः स्वयं सिध्यतो न प्रमाणव्यवधानापेक्षेति सदैवाज्ञानस्य व्यावर्तकत्वेनावभासो युज्यते । तस्मान्न्यायोपबृंहितेन प्रत्यक्षेण भावरूपमेवाज्ञानं प्रतीयते । तदिदं भावरूपमज्ञानमनुमानेनापि सिध्यति—विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् , अप्रकाशितार्थप्रकाशकत्वात्; अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावदिति* । आलोकाभावमात्रं वा रूपदर्शनाभावमात्रं वा तमो न द्रव्यान्तरम्; तत्कथं भावरूपाज्ञानसाधने निदर्शनतयोपन्यस्यत इति चेत्, उच्यते—बहुलत्वविरलत्वाद्यवस्थायोगेन रूपवत्तया चोपलब्धेर्द्रव्यान्तरमेव तम इति निरवद्यमिति ।

श्रुतप्रकाशिका

वस्तुयाथात्म्यज्ञाननिवर्त्यमज्ञानं वस्तुयाथात्म्यावभासरूपेण साक्षिचैतन्येन विरुध्यत इति चोदयति—**ननु चेति** । परिहरति—**मैवमिति** । याथात्म्यशब्देन निष्कृष्टमद्वितीयत्वलक्षणं स्वरूपं विवक्षितम् । प्रपञ्चमिथ्यात्वसिद्धवत्कारेण हेतुमाह—**अन्यथेति** । **अन्यथा;** स्वसाक्षिस्वरूपप्रकाशमात्रस्यैव वस्तुयाथात्म्यविषयत्वे; अज्ञानविषयत्वाभावे वा । अज्ञानविषयत्वमस्तु; ततः किमित्यत्राह—**न हीति;** न हि रजतविषयज्ञानेन रजतं निवर्त्यमित्यर्थः । दृश्यविशेषणस्य रूपादेरपि दृश्यत्वं दृष्टम्; दृश्याज्ञानावच्छेदकस्यास्मदर्थस्य दृश्यत्वानभ्युपगमादस्मदर्थावच्छिन्नमज्ञानं न विषयीक्रियत इत्यभिप्रायेण पुनश्चोदयति—**ननु चेदमिति** । **विषयविशेषः;** अवच्छेदकविशेषः । **स इति** स एव परामृश्यते । परिहरति—**नैष दोष इति** । अस्मदर्थोऽपि सर्वशब्दवाच्यान्तर्भूतः । **ज्ञाततया अज्ञाततया वा;** ज्ञानान्तरसापेक्षं तन्निरपेक्षं वा । **साक्षिचैतन्यस्य विषयभूतम्;** साक्षिचैतन्येन प्रतिभातीत्यर्थः । अस्मदर्थस्य साक्षिचैतन्यविषयत्वमौपचारिकम्, स्वयंप्रकाशस्य तस्य विषयत्वायोगात् । जडस्य स्वयंप्रकाशत्वायोगात् प्रमाणाधीनसिद्धि सत् दृश्यविशेषणं भवति; अस्मदर्थस्तु स्वयंप्रकाशतया स्वयमेव सिध्यन् अज्ञानावच्छेदक इत्यर्थः । दृश्यावच्छेद-

* इदं चानुमानं पञ्चपादिकाकारेणोक्तमत्रानूदितम् ।

कत्वात् दृश्यमिति चोद्यम् । तज्जडत्वप्रयुक्तमिति सोपाधिकमिति परिहारः । **तस्मात् ;** अभावरूपत्वपक्षे उक्तविरोधात् भावरूपत्वपक्षे तदभावाच्चेत्यर्थः । **न्यायोपबृंहितेनेति ;** पक्षद्वयेऽपि विरोधतदभावरूपन्यायानुगृहीतेनेत्यर्थः । एवं प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं 'न जानामि' इत्यनेनात्माश्रयत्वं च सिद्धम् । शास्त्रेष्वज्ञानशब्दवाच्यतया पराभिमतकर्मव्यावृत्तिः प्रत्यक्षतया सिद्धा । अस्य च शास्त्रेष्वज्ञानादिशब्दवाच्यत्वं ज्ञानविरोधित्वात् 'अहमज्ञः' इति प्रतिपन्नतया च सिद्धम् । अथ स्वविषयावरणत्वस्वनिवर्त्यत्वाभ्यां सहोपपादिताकारविशिष्टं चाज्ञानमनुमानेनापि साध्यते—**विवादाध्यासितमित्यादिना ।** ज्ञानमित्युक्ते ब्रह्मस्वरूपस्य वस्त्वन्तरपूर्वकत्वासंभवात् तद्व्यावृत्त्यर्थं **प्रमाणज्ञानमित्युक्तम्** । तथापि धारावाहिकज्ञाने उत्तरोत्तरविज्ञानानां सिषाधयिषितवस्त्वन्तरपूर्वकत्वाभावात् तद्व्यावृत्त्यर्थं **विवादाध्यासित**मित्युक्तम् । तज्ज्ञानं किमित्यपेक्षायां व्यक्त्यर्थं **प्रमाणज्ञानमि**त्युक्तम् । अयं धर्मी दर्शितः । अथ साध्यधर्ममाह—**स्वप्रागभावेत्यादिना ।** वस्त्वन्तरपूर्वकमित्युक्ते घटादिस्वविषयपूर्वकत्वेन सिद्धसाधनं स्यादिति तद्व्यावृत्त्यर्थमाह—**स्वदेशगतेति ।** स्वाश्रयगतेत्युक्ते दृष्टान्तस्य साध्यवैकल्यं स्यात्; न हि तमो दीपगतम् ; अतः **स्वदेशगते**त्युक्तिः । धर्माधर्मव्यावृत्त्यर्थमाह—**स्वनिवर्त्येति ।** **नतु कथं** स्वनिवर्त्यशब्देन धर्माधर्मव्यावृत्तिः ? ज्ञानोत्पत्तिहेतुभूतमदृष्टं ज्ञानोत्पत्त्या हि **नश्यति ।** **नैवम्,** सर्वेषां धर्माधर्माणां ज्ञानफलकत्वाभावात्, ज्ञानोत्पादकव्यतिरिक्तधर्मादीनां **पूर्वक्षणे** स्वदेशे विद्यमानत्वाच्च । यद्वा स्वनिवर्त्यपदेन संस्कारव्यावृत्तिः; **न हि संस्कारो ज्ञानेन** निवर्त्यः । भयादिव्यावृत्त्यर्थमाह—**स्वप्रागभावव्यतिरिक्तेति ।** इयं प्रतिलोमव्यावृत्तिः । वस्त्वन्तरपूर्वकमित्युक्ते अभावस्यापि पदार्थत्वेन वस्तुशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थमाह—**स्वप्रागभावव्यतिरिक्तेति ।** घटादिस्वविषयव्यावृत्त्यर्थमाह—**स्वविषयावरणेति ।** कुड्यादिव्यावृत्त्यर्थमाह—**स्वनिवर्त्येति ।** वेद्यगतवित्त्यभिव्यक्तिप्रागभावव्यावृत्त्यर्थमाह—**स्वदेशगतेति ।** प्रमाणज्ञानेनाज्ञाने निरस्ते वेद्यगतचैतन्यमभिव्यक्तं भवतीति हि तत्परिपाटी । अभिव्यक्तिप्रागभावस्य विषयावरणत्वं प्रकाशविरोधित्वं, न तु तत्प्रतिबन्धकत्वमित्यनुलोमव्यावृत्तिः । हेतुमाह—**अप्रकाशितेति ।** साक्षाद्वा परंपरया वा अबाध्यव्यवहारानुगुण्यहेतुत्वं प्रकाशकत्वमिह विवक्षितम् । साक्षाद्वा परंपरया वेत्युक्ते हि दीपप्रभायां ज्ञाने च हेत्वनुगमसिद्धिः । 'इदं रजतम्' इति ज्ञानेऽतिव्याप्तिपरिहारायाबाध्यव्यवहारानुगुण्यहेतुत्व-

मित्युक्तम् । प्रकाशकत्वादित्युक्ते धारावाहिकज्ञाने उत्तरोत्तरज्ञानानां प्रकाशकत्वेऽपि सिषाधयिषितधर्माभावाद्धेतोरनैकान्तिकत्वं स्यादिति तद्व्यावृत्त्यर्थमाह—**अप्रकाशितार्थप्रकाशकत्वादिति** । इन्द्रियेष्वनैकान्तिकत्वव्यावृत्त्यर्थ भासमानत्वे सतीति हेतुर्विशेषित इति मन्तव्यम् । दृष्टान्तमाह—**अन्धकार इति** । प्रदीपप्रभावदित्युक्ते उत्तरोत्तरप्रभाणामप्रकाशितार्थप्रकाशकत्वाभावात् साधनविकलता स्यात्; स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्साध्यविकलता च स्यादिति तद्व्युदासार्थं **प्रथमोत्पन्नप्रदीपप्रभावदित्युक्तम्** । तथापि दिवा दीपप्रभायास्तथाविधत्वादर्शनात् तद्व्यावृत्त्यर्थम्—**अन्धकार** इत्युक्तम् । दृष्टान्तस्य साध्यविकलतामाशङ्क्य परिहरति—**आलोकेत्यादिना** । आलोके सत्युलूकादीनामन्धकारसंभवादनुयायिनमाकारमाह—**रूपदर्शनाभावमात्रं वेति** । यद्वा निमीलिताक्षस्य तमःप्रतिपत्तिनिर्वाहार्थमाह—**रूपदर्शनेति** । अत्र नैयायिकादिभिरुक्तं दूषणमनुसंधीयते—तत्र उत्पादकज्ञापकानुपपत्त्या द्रव्यान्तरत्वं दूषितम् । रूपवत्त्वेऽपि परमाणूनामेवानुत्पाद्यत्वम्; तमसस्तु रूपवत्त्वात् बृहत्त्वाच्चोत्पाद्यत्वं स्यात् । तत्र रूपवत्त्वात्तद्रहितानि वाय्वाकाशादीनि नोत्पादकानि भवन्ति । स्पर्शरसगन्धविरहान्नान्यान्यपि द्रव्याणि । कारणगुणप्रक्रमेण हि कार्ये वैशेषिकगुणारम्भः । इयमुत्पत्त्यनुपपत्तिः । आलोकाननुगृहीतत्वाच्चक्षुर्न ग्राहकम् । आलोकसंनिधावनवस्थानान्नास्य ग्राह्यत्वम् । रूपवत्त्वप्रतीतिस्तु भ्रान्तिरेव, निमीलने नीलप्रतिभानवदिति ज्ञप्त्यनुपपत्तिः । अत्र परिहारो वार्तिककारैरुक्तः—

> " तमः खलु चलं नीलं परापरविभागवत् ।
> प्रसिद्धद्रव्यवैधर्म्यान्नवभ्यो भेत्तुमर्हति ॥"

इति । स एवात्रोच्यते—**उच्यत इत्यादिना** । तत्र परापरशब्दार्थो **बहुलत्वविरलत्व**शब्देनोक्तः । आदिशब्देन चलत्वम् । **रूपवत्तयेति** नीलशब्दार्थ उक्तः । **द्रव्यान्तर**शब्देन दशमद्रव्यत्वमुक्तम् । नवद्रव्यस्वीकारो हि तेषां पृथिव्यादीनां द्रव्याणामन्योन्यवैधर्म्यात् स्वीक्रियते । अन्यथा पृथिव्येव द्रव्यं नान्यत् गन्धवत्त्वाभावादिति वक्तुं शक्यते । एवं द्वे द्रव्ये इत्यादि । तच्चानभिमतम्, द्रव्याणां परस्परवैधर्म्यात् । एवं नवद्रव्यवैधर्म्यात् दशममङ्गीकार्यमिति वार्तिकार्थः । निमीलने नीलप्रतिभानं बाधितविषयम् । इदं त्वबाधितत्वान्न तथा भवितुमर्हति । तथापि रूपोपलब्धिवेलायामनुपलब्धेर्निमीलनवदपि संभवतीति शङ्कितं प्रत्यक्षमिति चेत्—न, उलूकादीनामस्मदादिरूपोपलब्धिवेलायां रूपानुपलब्धौ

तद्रूपोपलब्धेरपि शङ्कितत्वापातात्; उलूकादिरूपोपलब्धिवेलायामस्मदादेः रूपानुपलब्ध्या अस्मदादिरूपोपलब्धेरपि शङ्कितत्वप्रसङ्गाच्च। आगमस्वारस्याच्च शङ्काया निरस्तत्वात् तमसो दशमद्रव्यत्वमवसीयते। "तमः ससर्ज भगवान्" "नाहो न रात्रिन नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत्" "यस्य तेजः शरीरं यस्य तमः शरीरम्" इति सृज्यत्वसंहार्यत्वशरीरत्वादीनि हि श्रूयन्ते। आलोकनैरपेक्ष्यं यथा ज्ञातृविशेषप्रयुक्तं दृश्यते तथा ज्ञेयविशेषप्रयुक्तमप्युपपद्यते। यथा लोके हि कार्यं प्रतीतं तथा कारणकल्पनायां प्रमाणम्, 'न पुनः स्फुटावधारितं कार्यं कारणनिरूपणायापह्नवमर्हति' इति न्यायात्। अबाधितप्रतीतिसिद्धस्य तमस उत्पादकं कल्प्यमिति नोत्पादकानुपपत्तिर्ज्ञापकानुपपत्तिर्वा। यथाहुः—

"तमो नाम द्रव्यं बहुलविरलं मेचकचलं
प्रतीतं केनापि क्वचिदपि न बाधश्च ददृशे।
अतः कल्प्यो हेतुः प्रमितिरपि शाब्दी विजयते
निरालोकं चक्षुः प्रथयति हि तद् दर्शनवशात्॥"

इति। तमो द्रव्यमित्येव भाष्यकारमतम्, सिद्धान्ते तस्यादूषितत्वात् सृज्यत्वसंहार्यत्वशरीरत्वश्रवणाच्च। स्वच्छद्रव्यत्वादाकाशकार्यं तमः। रूपवत्त्वं पञ्चीकरणादुपपद्यते। यद्वा तेजः कार्यं तमः, रूपवत्त्वात्; स्पर्शानुपलम्भः स्वच्छद्रव्यत्वादिति। **इति निरवद्यमिति;** प्रमाणसिद्धत्वेन तर्कबाधानुपपत्त्या निरवद्यमित्यर्थः।

### भावप्रकाशिका

**वस्तुयाथात्म्यज्ञाननिवर्त्यमिति;** अभयोर्भावरूपत्वेऽपि तेजस्तिमिरयोरिव विरोधः सिद्ध इति भावः। भाष्ये—**साक्षिचैतन्यं न वस्तुयाथात्म्यविषयमिति;** साक्षिचैतन्यं वस्तुयाथात्म्यविषयकप्रमाणज्ञानं न भवतीत्यर्थः; प्रमाणज्ञानस्यैवाज्ञाननिवर्तकत्वात्। **अन्यथे**त्यस्याज्ञानविषयमिति संनिहितविषयत्वसंभवे विप्रकृष्टवस्तुयाथात्म्यविषयत्वानभ्युपगमप्रतिपादकत्वमयुक्तमित्यस्वरसादाह—**अज्ञानविषयत्वाभावेति। न हि रजतविषयज्ञानेनेति;** साधकस्य बाधकत्वायोगादित्यर्थः। भाष्ये—**ननु चेदं भावरूपमप्यज्ञानमिति;** अत्र चोदयन्ति—नन्वज्ञानस्य व्यावर्तको विषयः कथं साक्षिचैतन्येनावभास्यते? प्रमाणायत्तत्वाद्विषयसिद्धेरिति; उच्यते—"सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिचैतन्यस्य विषय एव; तत्र ज्ञाततया विषयः प्रमाणव्यवधानमपेक्षते, अन्यस्तु

सामान्याकारेण विशेषाकारेण वा अज्ञानव्यावर्तकतया सदा भास्यते" इति पञ्चपादिका-विवरणग्रन्थानुवादरूपमिदं वाक्यम्। तस्य चायमर्थः—कथं 'मामन्यं च न जानामि; त्वदुक्तमर्थं संख्यां वा न जानामि' इति विषयावच्छिन्नमज्ञानं साक्षिभास्यं स्यात्? अज्ञाना-वच्छेदकस्य विषयस्य साक्षिणा भानासंभवात्; साक्षिणो बहिर्विषये नैयायिकमते मनस इव स्वातन्त्र्यासंभवात्; इतरथा प्रमाणान्तरवैयर्थ्यप्रसङ्गात्। ततश्चाज्ञानावच्छेदकस्य घटादेः प्रमाणत एव सिद्धिरेष्टव्या। प्रमाणज्ञानं चाज्ञानविरोधि; न तु साक्षिवदज्ञानसाधकम्, येनाज्ञानं न विरुन्ध्यात्। ततश्चाज्ञानानुभवो न संभवतीति शङ्काभिप्रायः। स्वतो मनोग्राह्य-त्वाभावेऽपि परमाणोः 'ज्ञातः परमाणुः' इति ज्ञाततया मनोवेद्यत्ववत् तत्तदाकारवृत्त्यनु-पहितेन केवलेन साक्षिणा स्वतो ग्रहणायोग्यमपि वस्तु ज्ञातत्वाज्ञातत्वान्यतराकारेण सदा भास्यत एव। इयांस्तु विशेषः—वस्तुनो ज्ञाततया भाने प्रमाणव्यवधानापेक्षा, ज्ञातताया: प्रमाणोत्पाद्यत्वात्। अज्ञाततायास्तु स्वतः सिद्धत्वादज्ञाततया भाने न प्रमाणव्यवधानापेक्षा। ततश्च सर्वमपि वस्तु प्रमाणाप्रसरणदशायामज्ञाततया भासत एवेति न विषयभानार्थं प्रमाणा-पेक्षा, येनाज्ञानस्य विरोधः स्यात्। साक्षिरूपं च घटादिविषयज्ञानं नाज्ञानविरोधि, साधकतया तस्य बाधकत्वाभावादिति प्रागेवोक्तत्वादिति परिहाराभिप्रायः। एवमेवहीदं वाक्यं व्याख्यातं तत्त्वदीपनकृता। इह तु कथं तद्विहायान्यथानूद्यत इति? तत्रायं परिहारः—सत्यं विवरणवाक्यं तत्त्वदीपनकृता तथा व्याख्यातम्; तथापि जडस्याज्ञानविषयत्वमभ्यु-पगच्छतो विवरणकारस्य मते प्रत्यगर्थावच्छिन्नाज्ञानमेवानुभूयत इत्येव वक्तव्यम्, न तु घटादिविषयम्। ततश्च शङ्कापरिहारौ प्रत्यगर्थविषयावेव वक्तव्यावित्यभिप्रेत्य भगवता भाष्यकृता तदनुसारेण शङ्कापरिहारग्रन्थौ योजनीयावित्यभिप्रेत्य तथानूदितमिति द्रष्टव्यम्। **उपपादिताकारविशिष्टमिति**; प्रत्यक्षेण न्यायानुगृहीतेनाज्ञानस्य भावरूपत्वं 'न जानामि' इत्यनेनात्माश्रयत्वं च सिद्धमिति पूर्वमुक्तत्वेन स्वप्रागभावव्यतिरिक्तत्वस्वदेशगतत्वयोः सिद्ध-त्वादिति भावः। **न हि तमो दीपगतमिति**; दीपस्यैव प्रभाश्रयत्वात् प्रभादेशस्य प्रभाश्रयत्वं नास्ति, 'प्रभादेशः' इतिवत् 'प्रभाश्रयः' इति व्यवहाराभावादिति भावः। **वेद्यगत-वित्त्यभिव्यक्तिप्रागभाव इति**; वेद्यगतवित्तिर्विषयाधिष्ठानचैतन्यम्, तन्निष्ठाभिव्यक्ति-प्रागभाव इत्यर्थः। 'वेद्यगतं चैतन्यमभिव्यक्तं भवति' इत्युत्तरग्रन्थानुसारादयमेवार्थः। **अनु-**

**लोमव्यावृत्तिरिति ;** अत्र स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगताम-ज्ञाततां च व्युदसितुं क्रमेण विशेषणानीत्यपि वदन्ति* ।

**इयमुत्पत्त्यनुपपत्तिरिति ;** दीपनिर्वापणसमयसौधोदरव्यापिसंतमसोत्पत्तिकारणं दुर्निरूपमित्यनुपपत्तिरनुसन्धेया । **निमीलने नीलप्रतिभासवदिति ;** अयं भावः—अस्ति तावन्निमीलितनेत्रस्य 'नीलं तमः' इति प्रतीतिः । सा तु न प्रमा, बाधितविषयत्वात्; तथाहि —किमत्र बाह्यं तमः प्रतीयते ? उतान्तरम् ? नाद्यः, बहलालोकवितते देशे बाह्यस्यान्धकारस्याभावात् । न द्वितीयः, बहिः प्रसरणशीलानां नायनरश्मीनामान्तरतमोग्राहकत्वाभावात् ; इतरथा नयनान्तःस्थाञ्जनग्रहणप्रसङ्गात् । तस्माद्भ्रान्तिरेवेति । **नीलप्रतिभानं बाधितविषय-मिति ;** यद्यपि विवरणादौ पिहितकर्णपुटस्यान्तरशब्दोपलम्भवत् निमीलितनेत्रस्यान्तर्मुखैर्लोचनरश्मिभिरान्तरं तमो गृह्यत इति 'नीलं तमः' इति प्रतीतेर्गोलकान्तर्वर्तितमोविषयतया प्रमात्वमेवोपपादितम् ; अतस्तथैवानुवादो युक्तः; तथापि तस्य लोकविरुद्धत्वात् भ्रमत्वमभ्युप-गम्येह परिहारान्तरमुपन्यस्तमिति द्रष्टव्यम् । **रूपोपलब्धिवेलायामिति ;** सजातीयघटादि-रूपोपलब्धिवेलायामित्यर्थः । **कारणनिरूपणायापह्नवमर्हतीति ;** प्रयोजनार्थे चतुर्थी । प्रयोजनं च निवर्त्यमानतया, 'मशकेभ्यो धूमः' इतिवत्; कारणनिरूपणाभावायापह्नवमर्ह-तीत्यर्थः । कारणनिरूपणं प्रसज्येतेति भयादित्यर्थः । **स्वच्छद्रव्यत्वादिति ;** प्रभावत् स्वच्छद्रव्यविशेषत्वात् स्पर्शानुपलम्भ इत्यर्थः ।

### श्रुतप्रदीपिका

विरोधं दर्शयंश्चोदयति—**नन्विति** । परिहरति—**मैवमिति** । दृश्यमिथ्यात्व-मुपजीव्याह—**अन्यथेति** । अज्ञानविषयत्वमस्तु ; ततः किमित्यत्राह—**न हीति ;** न हि

---

* ऋजुविवरणे त्वेवमुक्तम्—

"स्वाकारः प्रागभावश्च करणं संस्कृतिस्तथा ।
रजतं भ्रान्तिरूपा धीर्निरस्यास्त्वनुलोमतः ॥
पूर्वज्ञानं तथा शून्यं करणं बाह्यमान्तरम् ।
अधर्मः प्रागभावश्च निरस्याः प्रतिलोमतः ॥"

इति । तत्र स्वप्रागभावव्यतिरिक्तेत्यत्र स्वशब्दस्यापि व्यतिरिक्तेत्यत्रान्वय-मङ्गीकृत्य स्वाकारोऽपि निवर्त्य इत्युक्तम् । यथोक्तं तत्रैव—"ज्ञानमेव स्वाकारेण जनकं स्वसंवित्तिरूपेण जन्यफलमिति बौद्धाः सर्वे । तत्र सिद्धसाध्यतापरिहारार्थं स्वव्यतिरिक्तेति विशेषणम्" इति ।

रूप्यधिया रूप्यनिवृत्तिरित्यर्थः । दृश्यावच्छेदकं रूपं दृश्यम्; न तथास्मदर्थ इति कथं तदवच्छिन्नत्वमज्ञानस्येति चोदयति—**नन्विति** । **विषयविशेषः**; अवच्छेदकविशेषः । **स इति** स एवोक्तः । रूपादिदृश्यत्वं न दृश्यावच्छेदकत्वप्रयुक्तं, किं तु जडत्वप्रयुक्तमिति परिहरति—**नैष इत्यादिना** । प्रत्यक्षतः सिद्धिं निगमयति—**तस्मादिति** । **तस्मात्**; पक्षद्वयेऽपि विरोधाविरोधाभ्याम् । स्वनिवर्त्यत्वस्वविषयावरणाभ्यां सहाकारान्तरान्वितत्वं चानुमाय साधयति—**तदिदमिति** । धारावाहिकेषूत्तरज्ञानव्युदासाय **विवादेत्यादि** पदम् । **स्वप्रागभावेति** साध्यधर्मः । घटादिविषयधर्माधर्मभयप्रागभावाः प्रतिलोमव्यावर्त्याः । अनुलोमतस्तु प्रागभावघटादिविषयकुड्यादिव्यवधानवेद्यगतवित्त्यभिव्यक्तिप्रागभावाः । धारावाहिकद्वितीयादिज्ञानेष्वनैकान्त्यव्युदासाय **अप्रकाशितार्थ**शब्दः । दिवा दीपे द्वितीयादिप्रभासु च साध्यवैकल्यव्युदासायान्धकारप्रथमशब्दौ । साध्यवैकल्यमाशङ्कते—**आलोकेति** । उलूकादेर्दिवान्धकार इति तदनुगमायाह—**रूपेति** । परिहरति—**उच्यत इति** । आदिशब्दाच्चलत्वमबाधः । प्रकाशाद्वैषम्यं रूपानुपलब्धिवेलायां भानात् । बाध्यत्वशङ्का त्वागमस्वारस्यादपोदिता । सृष्टिप्रलयवपुष्ट्वोक्तेः कार्ये सिद्धे कारणं कल्प्यमिति नोत्पादकानुपपत्तिः, न ज्ञापकानुपपत्तिर्वा । द्रव्यत्वं सिद्धान्तेऽप्यनुमतम्, अदूषितत्वादागमाच्च ।

**श्रीभाष्यम्**

**अत्रोच्यते—'अहमज्ञः, मामन्यं च न जानामि' इत्यत्रोपपत्तिसहितेन केवलेन च प्रत्यक्षेण न भावरूपमज्ञानं प्रतीयते । यस्तु ज्ञानप्रागभावविषयत्वे विरोध उक्तः, स हि भावरूपाज्ञानेऽपि तुल्यः । विषयत्वेनाश्रयत्वेन चाज्ञानस्य व्यावर्तकतया प्रत्यगर्थः प्रतिपन्नो वा? अप्रतिपन्नो वा? प्रतिपन्नश्चेत् तत्स्वरूपज्ञाननिवर्त्यं तदज्ञानं तस्मिन् प्रतिपन्ने कथमिव तिष्ठति? अप्रतिपन्नश्चेत् व्यावर्तकाश्रयविषयज्ञानशून्यमज्ञानं कथमनुभूयेत? अथ विशदस्वरूपावभासोऽज्ञानविरोधी; अविशदस्वरूपं तु प्रतीयत इत्याश्रयविषयज्ञाने सत्यपि नाज्ञानानुभवविरोध इति—हन्त! तर्हि ज्ञानप्रागभावोऽपि विशदस्वरूपविषयः, आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयमिति न कश्चिद्विशेषोऽन्यत्रा-**

भिनिवेशात्। भावरूपस्याज्ञानस्यापि ह्यज्ञानमिति सिध्यतः प्रागभाव-सिद्धाविव सापेक्षत्वमस्त्येव। तथाहि—अज्ञानमिति ज्ञानाभावः, तदन्यत्, तद्विरोधि वा। त्रयाणामपि तत्स्वरूपज्ञानापेक्षाऽवश्याश्रयणीया। यद्यपि तमःस्वरूपप्रतिपत्तौ प्रकाशापेक्षा न विद्यते, तथापि प्रकाशविरोधीत्यनेनाकारेण प्रतिपत्तौ प्रकाशप्रतिपत्त्यपेक्षाऽस्त्येव। भवदभिमताज्ञानं न कदाचित् स्वरूपेण सिध्यति; अपितु अज्ञानमित्येव। तथा सति ज्ञानाभाववत् तदपेक्षत्वं समानम्। ज्ञानप्रागभावस्तु भवताप्यभ्युपगम्यते प्रतीयते चेत्युभयाभ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञः, मामन्यं च न जानामि' इत्यनुभूयत इत्यभ्युपगन्तव्यम्।

श्रुतप्रकाशिका

अथ सिद्धान्तं वक्तुमुपक्रमते—**अत्रोच्यत** इति। **केवलेन च प्रत्यक्षेणेति** दृष्टान्ततयोक्तम्। उपपत्तिदूषणे कृते केवलप्रत्यक्षं न साधकमित्यर्थः। उपपत्तिर्हि ज्ञान-प्रागभावविषयत्वे विरोधः; स भावरूपत्वेऽपि तुल्य इत्याह—**यस्त्विति**। तुल्यत्वमुपपादयति—**विषयत्वेनेति**। प्रतिपन्नशब्देन भासनमुच्यते। **तत्स्वरूपज्ञाननिवर्त्यमिति**; स्वरूपज्ञानं स्वरूपावभासः; स्वतो वा प्रमाणान्तरेण वा स्वरूपावभास-निवर्त्यमित्यर्थः। 'इदं रजतम्' इत्यत्र 'इदं शुक्लभास्वरम्' इत्येवंरूपप्रमाणज्ञानशते जातेऽपि भ्रमानिवृत्तिदर्शनात् प्रमाणज्ञानत्वमप्रयोजकमिति सिद्धवत्कारेण **तत्स्वरूपज्ञान-निवर्त्यमित्युक्तम्**। **व्यावर्तकाश्रयविषयज्ञानशून्यम्**; आश्रयतया विषयतया च व्यावर्तकः प्रत्यगर्थः; तदवभासशून्यम्। **विषयत्वेने**त्यादिना भाष्येण स्वात्मविषयाज्ञानप्रतिपत्तौ विरोधतुल्यत्वं दर्शितम्। घटादिविषयाज्ञानप्रतीतावप्यज्ञानस्य विषयत्वेन व्यावर्तकतया घटः प्रतिपन्नो न वा? प्रतिपन्नश्चेत् घटस्वरूपज्ञाननिवर्त्यं घटाज्ञानं तस्मिन् घटे प्रतिपन्ने कथमिव तिष्ठति? घटोऽप्रतिपन्नश्चेत् व्यावर्तकविषयज्ञानशून्यमज्ञानं कथमनुभूयेतेत्यर्थसिद्धो विरोधो द्रष्टव्यः।

एवं परेण भावाभावयोर्विरोधे दर्शिते तत्प्रतिबन्दीत्वेन निवर्त्यनिवर्तकविरोध उक्तः। अथ विशदाविशदविभागादविरोधं शङ्कते—**अथेति**। प्रत्यगर्थस्य प्रमाणज्ञानेनावभासो

विशदावभासः; स स्वपक्षेऽपि तुल्य इत्याह—**हन्त तर्हीति** । विशदस्वरूपमवच्छेदकं यस्य स विशदस्वरूपविषयः । विशदस्वरूपस्य प्रागभावावच्छेदकत्वं स्वविषयज्ञानद्वारा । ज्ञानप्रागभावोऽपि विशदस्वरूपज्ञानावच्छिन्न इत्यर्थः । ज्ञानस्य चाभावावच्छेदकत्वं प्रतियोगितया ; विशदस्वरूपज्ञानं प्रागभावप्रतियोगीति यावत् । अविरोधसिद्धये विद्यमानज्ञानस्य ततोऽर्थान्तरत्वमाह—**आश्रयेति** । आश्रयप्रतियोगिनोर्ज्ञानम् **आश्रयप्रतियोगिज्ञानम् । अविशदस्वरूपविषयमिति ;** आश्रयज्ञानस्याविशदस्वरूपविषयत्वमविशदप्रत्यगर्थविषयत्वम् । प्रतियोगिज्ञानस्याविशदस्वरूपविषयत्वमभावप्रतियोगिभूताविशदज्ञानविषयत्वम् । सविषयं निवर्तकज्ञानमभावप्रतियोगित्वेनेदानीं ज्ञानमवलम्बते । तत्र निवर्तकज्ञानविषयस्य प्रत्यगर्थस्येदानीमविशदत्वान्निवर्तकज्ञानस्येदानीमविद्यमानत्वाच्च प्रतियोगिनो ज्ञानस्याविशदत्वम् । विद्यमानं हि साश्रयं ज्ञानमपरोक्षावभासरूपम् । अतस्तस्याविशदत्वमविद्यमानतया भवति । एवमाश्रयतया भासमानं स्वरूपमविशदम् । प्रतियोगितया स्मर्यमाणं ज्ञानमिदानीमविशदविषयत्वादविद्यमानत्वाच्चाविशदमिति तदुभयविषयं ज्ञानमविशदस्वरूपविषयम् । तच्च विद्यते । विशदज्ञानं त्वविद्यमानमभावप्रतियोगीति न विरोध इत्यर्थः । अयमर्थः—अज्ञाननिवर्तकाभिमतप्रमाणज्ञानाभावस्तावत् त्वयाभ्युपगन्तव्यः, अन्यथा प्रमाणज्ञाननिवर्त्याज्ञानानुभवासंभवात् । ततश्च त्वदभ्युपगतः प्रमाणज्ञानाभाव एव 'अहमज्ञः' इति प्रतिपत्तेर्विषयो भवितुमर्हतीति नाभावग्रहणानुपपत्त्या भावरूपत्वं कल्प्यमिति । पूर्वपक्षोक्तविरोधः कथं परिहृतो भवतीति चेत्; इत्थम्—तत्र हि यदर्थावच्छिन्नं ज्ञानमभावप्रतियोगितयोच्यते, अभावप्रतियोगिज्ञानावच्छेदकतदर्थप्रतिपत्तौ सत्यां तज्ज्ञानाभावोऽनुपपन्न इति हि विरोधः । तत्रायं परिहारः—अभावप्रतियोगिज्ञानं स्मृत्यारूढं प्रतिषिध्यते; यथा 'घटसाक्षात्कारो नास्ति' इति निषेधे घटसाक्षात्कारः स्मर्यते । स्मर्यमाणस्य स्मृतिसमकालवर्तित्वनियमाभावान्निषेधवेलायां स्मर्यमाणस्य नाभावप्रतियोगित्वविरोधः । त्वया च स्मृत्यारूढस्य निवर्तकज्ञानस्य स्मृतिसमकालवर्तित्वाभावादज्ञानावच्छेदकतया प्रतिपत्तावपि स्मृत्यारूढनिवर्तकज्ञानं नाज्ञानविरोधीति वक्तव्यम् । तस्मादात्मविषयं घटादिविषयकं च प्रमाणज्ञानं स्वविषयेणात्मना घटादिभिश्च सह स्मृत्यारूढमविशदतया प्रतिपन्नमभावप्रतियोगि भवतीत्युपपन्नतरमिति । अनुभूतस्य हि स्मरणसंभवः । प्रमाणज्ञानं केनानुभूतमिति चेत्, भवतो वा निवर्तकज्ञानं केनानुभूतम्? आगमादिति चेत्, अस्माकमप्यात्मसाक्षात्कारस्तद्विधायक-

वाक्यावगतः । घटादिसाक्षात्कारस्तु प्रत्यक्षादिषु येन केनाप्यनुभूतः । मेरुसाक्षात्कारः कथं निषिध्यते ? स हि न केनापि मानेन पूर्वमनुभूतः । उच्यते—इह अदृष्टचत्वरद्विरदेन पुरुषेण कथम् 'इह चत्वरे गजो नास्ति ' इत्युच्यते ? संसर्गाननुभवेऽपि संसर्गिणोरनुभवमात्रेणान्यत्रान्यतरनिषेध उपपद्यत इति चेत्, एवं तर्हि सुमेरुसाक्षात्कारसंसर्गाननुभवेऽपि मेरुसाक्षात्कारयोः केनाप्यवगमात् तत्संसर्गनिषेध उपपद्यते । प्रमाणज्ञानानामभावप्रतियोगित्वादभावस्य तदानीं ग्राहकं नास्तीति यदुक्तं, तत् सर्वप्रमाणज्ञानाभावानां युगपदनुभवासंभवात् कतिपयमानज्ञानाभावस्य मानान्तरेण ग्रहणोपपत्तेश्च परिहृतम् । एवं भावरूपपक्षे विरोधपरिहारसाम्यं दर्शितम् । ननु विरोधसाम्यं वक्तुमशक्यम्; अज्ञानस्य नञर्थप्रतियोग्यवच्छिन्नतयैवावगन्तव्यत्वे सति हि नञर्थप्रतियोगिनस्तस्य ज्ञानस्य स्वविषयाश्रयभूतप्रत्यगर्थावच्छिन्नत्वेन भातत्वात् विषयाश्रयभूतप्रत्यगर्थज्ञाने सति तन्निवर्त्याज्ञानस्थितिविरोधः । न हि भावरूपस्याज्ञानस्य ज्ञानप्रतिपत्त्यपेक्षा, स्वरूपेणैव प्रतिपत्तिसंभवात् । न हि भावरूपस्य घटस्याश्रयप्रतियोगिज्ञानसापेक्षत्वं दृष्टमित्यत्राह— **भावरूपस्येति** । कथं सापेक्षत्वमित्यत्राह —**तथाहीति** । अभावस्य नञर्थत्वसंभवात् तदुक्तिः । प्रमाणज्ञानादन्यत् प्रमाणज्ञानविरोधीति वा तत्प्रतिपत्तिः । तदा तस्य ज्ञानस्य स्वविषयावच्छिन्नत्वेन प्रतिपन्नत्वात् प्रत्यगर्थस्य घटादेर्वा ज्ञाने सति तन्निवर्त्यमज्ञानं न गृह्येतेत्यर्थः । यथा प्रकाशविरोधित्वेऽपि तमसस्तत्प्रतिपत्तौ न प्रकाशापेक्षा तद्वदिहापीत्यत्राह—**यद्यपीति** । भावरूपमज्ञानमपि स्वरूपेण सिध्यतीत्यत्राह—**भवदभिमतेति** । 'मुग्धोऽस्मि; मूढोऽस्मि' इति स्वरूपेण सिद्धिरिति चेत्—न; कस्यचित्पुरुषस्य कस्मिंश्चिद्विषये हि मोहः । "स विमलमतिरेति नात्ममोहम्" " दिङ्मोहालातचक्रादिभ्रान्तयश्च कथं पुनः*" इत्यादिषु विषयाश्रयावच्छिन्नत्वेन हि मोह उपलभ्यते । 'मुग्धोऽस्मि' इत्यनेनाश्रयावच्छिन्नत्वं प्रतीयते । विषयोऽप्यर्थवशात्सिद्धः । इदं दूषणं "संवित्सिध्यति वा न वा" इत्यत्रोक्तया दिशा फलितम् । ततश्च स्वात्मविषयमज्ञानं विषयाश्रयभूतप्रत्यगर्थप्रतिपत्तिसद्भावहतम् , घटाद्यज्ञानं तु विषयभूतघटाद्यवगमविरुद्धम् । मायाशब्दादिभिरज्ञानप्रतिपत्तौ विषयाश्रयापेक्षा नेति चेत्—न ; मायादिशब्दानामपि व्युत्पत्तिनैरपेक्ष्येण बोधकत्वासंभवात् , अज्ञानादिपदपर्यायत्वेन च व्युत्पन्नत्वात् स्वरूपेण सिध्यतीत्युक्तम् । ननु स्वरूपावच्छिन्नाज्ञानप्रतीतौ नञर्थप्रतियोगि-

* प्रकरणपञ्चिकास्थमिदं वाक्यम् ।

ज्ञानावच्छिन्नतया सिद्धावपि न निवर्त्यनिवर्तकविरोधः, स्वरूपभूतज्ञानादन्यतया तत्सिद्धेः। स्वरूपज्ञानं हि नाविद्यानिवर्तकम्; किंतु प्रमाणज्ञानमेव; अतो न विरोध इति। नैवम्; 'मामन्यं च न जानामि' इति विषयाश्रयसंबन्धिज्ञानावच्छिन्नतया प्रतीतेः। न हि स्वरूपभूतज्ञानं साश्रयं सविषयं च तव मतम्। स्वरूपं किमाश्रयतयैवाज्ञानस्यावच्छेदकम्? उत विषयतयापि? आद्ये न त्वदभिमतसिद्धिः। तदानीं प्रत्यगर्थस्य स्वस्मादन्येन केनापि विशिष्टत्वमेव हि सिध्यति। विषयतयावच्छेदकत्वे प्रत्यगर्थस्याज्ञानमावरणं स्यात्। आवरणत्वं च तद्विषयकज्ञानप्रतिबन्धकत्वम्। अतस्तत्तद्विषयप्रमाणज्ञानप्रतीत्यवश्यंभावादुक्तविरोधोऽनतिवृत्तः। अतः स्वरूपभूतज्ञानावच्छिन्नप्रतीत्यभ्युपगमोऽनुपपन्नः। उभयत्र साधनदूषणयोस्तुल्यत्वात् भावरूपमज्ञानं परिगृह्यतामित्याशङ्क्य लाघवन्यायेन परिहरति—**ज्ञानप्रागभावस्त्विति। अभ्युपगम्यते;** 'अहमज्ञः' इति प्रतिपन्नस्याभावरूपत्वे हि विप्रतिपत्तिः; न त्वभावानभ्युपगमः, अन्यथा प्रमाणज्ञानस्य प्रागभावाभावादनादित्वेन तन्निरसनीयभावरूपाज्ञानानुदयप्रसङ्गात्। अतो ज्ञानाभावस्त्वयाभ्युपगत इत्यर्थः। प्रतीयते च, लोके तत्तज्ज्ञानाभावविवक्षया 'ज्ञानं नास्ति' इति व्यवहारदर्शनात्। अप्रतिपन्ने च विवक्षानुपपत्तेर्ज्ञानाभावप्रतीतिरस्त्येवेत्यर्थः। अतः संप्रतिपन्नेन ज्ञानाभावेनैव 'अहमज्ञः' इति प्रतीत्युपपत्तेरतिरिक्तकल्पने हेत्वभावाल्लाघवेन स एव 'अहमज्ञः' इति प्रतीतेर्विषयतयाभ्युपगन्तव्य इत्यर्थः। ननूभयाभ्युपगतोऽभावो नाम कश्चिन्नास्ति; भावान्तरमभावः स्वमते; परमते तु भावातिरिक्तः; तत्कथमुभयाभ्युपगतेन 'अहमज्ञः' इति प्रतीत्युपपत्तिः? उच्यते—न ह्युभयाभ्युपगत इत्युक्तम्; किंतु भवताभ्युपगम्यत इत्युक्तम्। अभावशब्दवाच्यत्वेन कश्चिदर्थ उभाभ्यामभ्युपगतः। स च भावरूपः, तदतिरिक्त इतीयदेव विमतम्। अत्र भावत्वेन यः स्वाभिमतः, यश्च तदतिरिक्तत्वेनाभावशब्दवाच्यतया पराभिमतस्तयोरन्यतरेण 'अहमज्ञः' इति प्रतीत्युपपत्तेस्तदुभयातिरिक्तार्थकल्पनमनुपपन्नमित्युक्तं भवतीति न विरोधः। ननु भावान्तरमभावमिच्छता त्वया ज्ञानप्रागभावशब्देन भावरूपाज्ञानमङ्गीकृतं स्यात्—नैवम्; सिद्धान्तद्वयानभिज्ञानकृतं हीदं चोद्यम्; स्वयंप्रकाशस्यैव ज्ञानस्य संकोचरूपमवस्थान्तरं प्रागभावशब्दवाच्यतयाऽस्मदभिमतम्। स्वप्रकाशज्ञानव्यतिरेकेण भावरूपमज्ञानं पराभिमतम्। अतस्तयोः कथमैक्यम्? तर्हि ज्ञानसंकोचरूपावस्थां परित्यज्याज्ञानशब्दवाच्यत्वेन परोक्तं भावरूपमज्ञानं स्वीक्रियताम्, भावरूपत्वाविशेषादिति चेत्—प्रामाणिकं

परित्यज्याप्रामाणिकं स्वीक्रियतामितीदमनुपपन्नम् , " न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते " " सर्वं ह पश्यः पश्यति " " तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन वर्तते ॥ " " अप्राणिमत्सु स्वल्पा सा " इत्यारभ्य " हिरण्यगर्भोऽतितरां पुंसः शक्त्युपलक्षितः" इति श्रुतिस्मृतिसिद्धत्वात् ज्ञाननित्यत्वं तत्संकोचादिकं च प्रामाणिकं कथं त्यज्येत ? भावरूपाज्ञानं तु कल्प्यम् ; कल्पकं चान्यथासिद्धमिति तदप्रामाणिकं कथं स्वीक्रियते ? कल्पनायां हि लाघवन्यायः प्रवर्तते, न तु प्रमाणप्रतिपन्नेऽर्थे । अतः ' अहमज्ञः' इति ज्ञानप्रागभाव एव प्रतीयते ।

भावप्रकाशिका

**प्रतिपन्नशब्देन भासनमुच्यत इति ;** न तु विषयपर्यन्तम् ; तथाहि सति प्रत्यगर्थस्य प्रतिपन्नत्वकथनं व्याहतं स्यादिति भावः । **अभावप्रतियोगिभूताविशदज्ञानविषयत्वमिति ;** अत्र चोदयन्ति—" आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयम् " इति भाष्यस्य ह्ययमर्थः—यद्यपि ' अहं मां न जानामि ' इत्यत्राश्रयज्ञानं प्रत्यगर्थविषयं, तथा प्रतियोगिज्ञानमपि ज्ञानविषयतया प्रत्यगर्थविषयकम् ; तथापि न तद्द्वयमपि विशदप्रत्यगर्थविषयकं, प्रत्यगर्थांशे तयोरविशदत्वात् । ततश्च ' मां न जानामि ; यथा विशदं भवति तथा न जानामि ' इत्यर्थः । मदर्थविषयकावधारणात्मकसाक्षात्काररूपज्ञानं नास्तीति पर्यवसितोऽर्थः । ततश्चाभावप्रतियोगिभूतज्ञानस्य वैशद्यं विद्यमानस्य प्रतियोगिविषयकज्ञानस्यावैशद्यं चाविरोधसिद्धये समर्थनीयम्; तद्विहाय तुरगारूढस्य तुरगविस्मरणन्यायेन प्रतियोगिभूतज्ञानस्यावैशद्यं कथं समर्थ्येत इति । अत्र ब्रूमः—सत्यं प्रतियोगिभूतज्ञानस्य वैशद्यमेव समर्थनीयम् ; तथापि भाष्ये " आश्रयप्रतियोगिज्ञानं त्वविशदस्वरूपविषयम् ' इत्युक्तेः साक्षाद्विषयप्रतियोगिभूतज्ञान एवाविशदत्वं समर्थनीयमित्यभिप्रेत्य तदुपपादनायायं संरम्भः कृतः । **स्वविषयं निवर्तकज्ञानमिति ;** स्वविषयं निवर्तकज्ञानं कर्म ; इदानीं ज्ञानं कर्तृ ; स्वशब्देन प्रतियोगिविषयकं ज्ञानमुच्यते ; निवर्तकज्ञानं प्रतियोगिभूतज्ञानमित्यर्थः । **विद्यमानं हि स्वाश्रयमिति;** स्ववृत्तिवर्तमानस्यापरोक्षत्वादित्यर्थः । वर्तमानमपि परकीयं न प्रत्यक्षम् । स्वीयमप्यतीतादिकं न प्रत्यक्षम् । स्ववृत्तिवर्तमानं च यज्ज्ञानं तदेव विशदमित्यर्थः । ततश्च स्वरूपतो विषयतश्चेदानीमभावप्रतियोगिभूतं ज्ञानमविशदमिति पर्यवसितोऽर्थः । **अन्यथा प्रमाणज्ञाननिवर्त्यज्ञानेति ;**

प्रमाणज्ञानाभावानभ्युपगमे प्रमाणज्ञानस्य सत्यत्वप्रसङ्गेन तन्निवर्त्यमज्ञानं कथमनुभूयेत? प्रमाणज्ञानस्य विरोधिनः सत्त्वादित्यर्थः। **तत्रायं परिहार इति ;** ननु "विशदतदर्थप्रतीतिर्नास्ति" इति भाष्य एवास्याः शङ्कायाः परिहृतत्वात् किमिति टीकायां परिहारान्तरमुपन्यस्यत इति चेत्—न; विशदतदर्थप्रतिपत्तिनिषेधे विशदप्रतिपत्तेः स्मरणावश्यंभावेन स्मृत्यारूढाया अपि विशदप्रतिपत्तेः सत्त्वमपेक्षितमिति हि शङ्काभिप्रायः; तत्र च यथाश्रुतभाष्येण परिहारासंभवात् परिहारान्तरं टीकायामारब्धमित्यदोषः। यद्यपि भानसत्त्वे भासमानसत्त्वमपेक्षितमिति शङ्का मन्दा, अथापि सा मन्दविषन्यायेन परिहर्तव्येति परिहार उपन्यस्त इति द्रष्टव्यम्। **मेरुसाक्षात्कारः कथं निषिध्यत इति;** यद्यपि स्वस्य मेरुसाक्षात्काराभावेऽपि परकीयमेरुसाक्षात्कारस्य पुराणादिनावगतस्य स्वात्मनि निषेधे नानुपपत्तिः, तथापि स्वीयमेरुसाक्षात्कारनिषेधस्थले स्वीयमेरुसाक्षात्कारस्याप्रसिद्धत्वादिति शङ्काभिप्रायो बोद्धव्यः। **इहादृष्टचत्वरद्विरदेनेति ;** चत्वरीयो द्विरदश्चत्वरद्विरदः। **नञर्थप्रतियोग्यवच्छिन्नतयैवेति ;** यद्यप्यभावस्येव भावरूपाज्ञानस्यापि विरोधितया नञर्थत्वमविशिष्टं, तथाप्यभावत्वपक्षे अभावस्य स्वप्रतियोग्यवच्छिन्नत्वेन भाननियमवत् भावत्वपक्षे ज्ञानविरोधित्वेनैव प्रतीतिनियमाभाव इति भावः। **अभावस्य नञर्थत्वसंभवात् तदुक्तिरिति।** 'भावरूपाज्ञानवादिना ज्ञानाभावत्वस्य सर्वात्मनाऽनभ्युपगमेऽपि' इति शेषः। **स्वरूपावच्छिन्नाज्ञानप्रतीताविति ;** प्रत्यगर्थाज्ञानप्रतीतावित्यर्थः। **स्वरूपभूतज्ञानादन्यतया तत्सिद्धेरिति ;** यद्यपि प्रमाणज्ञानादन्यतया तत्सिद्धावपि न निवर्त्यनिवर्तकविरोधः, अन्ततो गत्वा प्रमाणज्ञानविरुद्धतया तत्सिद्धावपि न निवर्त्यनिवर्तकविरोधः; न हि प्रमाणज्ञानविरुद्धमित्युल्लिख्यमानत्वमात्रेण विरोधिप्रमाणज्ञानमाविर्भूतमुपस्थितं स्यात्, येन विरोधो भवेत्; न हि 'तेजोविरुद्धोऽन्धकारः' इत्युल्लेखमात्रेणान्धकारस्य तेजसा निवृत्तिर्भवति। इयं च शङ्कापिशाची "स्मृतेः स्मर्यमाणसमकालवर्तित्वनियमाभावात्" इति पूर्वमेव प्रतिक्षिप्ता च। ततश्च किं वैषम्यमभिप्रेत्य 'स्वरूपज्ञानादन्यतया प्रतीतिरस्तु, न तु प्रमाणज्ञानविरोधितया' इत्युपन्यस्यते? इति चेत्; अत्र ब्रूमः—प्रमाणज्ञानस्य तदानीमसत्त्वे प्रमाणज्ञानविरुद्धतयाऽज्ञानस्योल्लेखः साक्षिणा न युक्तः, ज्ञातत्वाज्ञातत्वोपरागाभावे साक्षिणः स्वाध्यस्तत्वमात्रग्राहित्वात्। तथाच प्रमाणज्ञानस्य साक्षिणोल्लेखमभ्युपगच्छता प्रमाणज्ञानस्य सत्त्वमभ्युपगन्तव्यमिति। **न हि स्वरूपभूतं ज्ञानं साश्रयं सविषयं चेति ;** यद्यपि स्वरूपज्ञानस्याज्ञानादिभासकस्य सविषयत्वमस्ति,

तथापि साश्रयत्वाभावेन द्वित्वावच्छिन्नाभावमभ्युपेत्य तथोक्तमिति द्रष्टव्यम्। यद्वा 'मामहं न जानामि' इति प्रत्यगर्थकर्मकत्वस्य ज्ञाने प्रतीतेः स्वरूपज्ञानस्य स्ववृत्तित्वविरोधेन प्रत्यगर्थविषयत्वाभावमभिप्रेत्य स्वरूपज्ञानस्य सविषयत्वाभावकथनमिति द्रष्टव्यम्। ननु 'मामहं न जानामि' इत्यत्र न नञर्थप्रतियोगिनि ज्ञाने साश्रयत्वसविषयत्वप्रतीतिः, येनायं दोषः स्यात्; अपितु नञर्थ एवाज्ञान इत्याशङ्क्य तत्रापि प्रत्यगर्थविषयत्वं, तदावरणत्वं, तच्च तद्विषयकज्ञानप्रतिबन्धकत्वमिति घट्टकुटीप्रभातवृत्तान्त इत्याह—**स्वरूपं किमाश्रयतयेत्यादिना। स्वस्मादन्येन केनापीति;** स्वरूपभूतज्ञानान्यमात्रार्थकत्वस्य परेणोक्ततया तदन्येन येन केनाप्याश्रितत्वमात्रं सिध्येदिति भावः। **प्रमाणज्ञानप्रतीत्यवश्यंभावादिति;** तत्प्रतीतौ प्रत्येतव्यस्य प्रमाणज्ञानस्य सत्त्वमावश्यकमिति भावः पूर्वोक्तो द्रष्टव्यः। **प्रतीयते चेति** व्याख्येयं पदम्। **न ह्युभयाभ्युपगत इत्युक्तमिति;** न ह्युभयाभ्युपेत एक इत्युक्तमित्यर्थः। "उभयाभ्युपेतो ज्ञानप्रागभाव एव 'अहमज्ञो मामन्यं च न जानामि' इत्यनुभूयत इत्यभ्युपगन्तव्यम्" इति भाष्य उक्ततया न तदपलापश्चोदनीयः।

## श्रुतप्रदीपिका

परिहरति—**अत्रेति।** केवलोक्तिर्दृष्टान्ततया। कथमिति शङ्कायामविरोधं वक्तुं विरोधसाम्यमाह—**यस्त्विति।** कथं साम्यमित्यत्राह—**विषयत्वेनेति। स्वरूपज्ञाननिवर्त्यत्वं** स्वरूपावभासनिवर्त्यत्वम्। मानधीत्वमप्रयोजकं, विषयवैषम्याभावादिति हृदयम्। अविरोधं शङ्कते—**अथेति।** प्रमाणेन भानं विशदावभासः। अविरोधे साम्यमाह—**हन्तेति।** विशदस्वरूपं विषयः अवच्छेदकं यस्य सः। यत् त्वन्मते निवर्तकतयाऽभिमतं विशदस्वरूपविषयं मानज्ञानं तदभावः विशदस्वरूपविषयः। विशदस्वरूपस्य प्रागभावावच्छेदकत्वं स्वविषयधीद्वारेण। **आश्रयप्रतियोगिज्ञानमिति;** आश्रयज्ञानस्याविशदस्वरूपविषयत्वमविशदप्रत्यगर्थविषयत्वम्। प्रतियोगिज्ञानस्याविशदस्वरूपविषयत्वमभावप्रतियोगिभूताविद्यमानज्ञानविषयत्वम्। तद्धि स्मर्यते। यत् त्वन्मते निवर्तकतयाऽभिमतं विशदस्वरूपविषयं मानज्ञानं तदभावप्रतियोगि। विद्यमानं चाविशदं धर्मिप्रतियोगिज्ञानमित्यर्थः। 'घटज्ञानं न' इति वदता घटज्ञानं स्वविषयेण सह स्मर्यते। घटतज्ज्ञानविषयं स्मृतिरूपं विद्यते। प्रत्यक्षज्ञानं त्वभावप्रतियोगि। न च स्मर्यमाणस्य तस्य विद्यमानत्वनियम इत्युक्तं भवति। एवं निवर्त्यनिवर्तकविरोधः प्रतिबन्दीकृतः।

अथ नञर्थप्रतियोग्यवच्छिन्नतयैवाज्ञानसिद्धौ हि प्रतियोगिन्या धियः स्वाश्रयविषयाभानात्तन्नि-वर्त्याज्ञानस्थितिविरोधः परिहारसाम्यं च स्यात्; न च नञर्थोल्लेखेनैव सिद्धिः; स्वरूपेण सिद्धेरित्याशङ्क्याह—**भावरूपस्येति** । उक्तं विवृणोति—**तथाहीति** । न हि तमःप्रतिपत्तावालोकज्ञानापेक्षेत्यत्राह—**यद्यपीति** । अज्ञानमपि स्वरूपेण सिध्यतीत्यत्राह—**भवदिति** । 'मुग्धोऽस्मि' इत्यादेः 'कस्य कं प्रति' इति कर्तृकर्मप्रतीतिर्न परिहार्या । कस्यचित् दिगादौ मोहः । ततः किमित्यत्राह—**तथेति** । विरोधाविरोधौ समौ चेत्, मदुक्तं स्वीक्रियतामित्यत्राह—ज्ञानेति; लाघवादिति भावः ।

### न्यायसुदर्शनम्

(भावरूपाज्ञाननिराकरणे 'अहमज्ञो मामन्यं च न जानामि' इत्यादिषु घटादयः साक्षी चेति सिद्धा एव व्यवह्रियन्ते । न चेत्, 'शशविषाणं न पश्यामि, सप्तमरसं न जानामि' इत्यादिषु शशविषाणादीनामपि साक्षिसिद्धत्वं प्रसज्येत; तेषामपि व्यवहारदर्शनात् । शशविषा-णादीनामभावादेव तद्विषयज्ञानाभावानुभवः, पटादीनां तु भावेऽपि तद्विषयज्ञानानुत्पत्त्या ज्ञानाभावानुभव इति विशेषः । शशस्य विषाणस्य च साक्षिसिद्धत्वसंभवेऽपि तत्संसर्गस्या-भावरूपत्वात् 'शशविषाणसंसर्गं न पश्यामि' इत्यादिषु संसर्गस्य साक्षिसिद्धत्वप्रसङ्गः । अथ तेषामुक्तिमात्रमिति चेत् तर्हि घटादिज्ञानाभावानुभवेऽपि घटादीनामुक्तिमात्रमेव भवतीत्येवं दूषणसमुच्चयो द्रष्टव्यः ।)

**नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणोऽज्ञानानुभवश्च न संभवति, स्वानुभवस्वरूपत्वात् । स्वानुभवस्वरूपमपि तिरोहितस्वरूपम-ज्ञानमनुभवतीति चेत्, किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशितस्व-रूपत्वमिति चेत्, स्वानुभवस्वरूपस्य कथमप्रकाशितस्वरूपत्वम्? स्वानुभवस्वरूपस्याप्यन्यतोऽप्रकाशितस्वरूपत्वमुपपद्यत इति चेत्, एवं तर्हि प्रकाशाख्यधर्मानभ्युपगमेन प्रकाशस्यैव स्वरूपत्वादन्यतः स्वरूप-नाश एव स्यादिति पूर्वमेवोक्तम् ।**

### श्रुतप्रकाशिका

एवम् 'अहमज्ञः' इति प्रत्यक्षस्य भावरूपाज्ञानविषयत्वे भावरूपपक्षोपपत्त्यभावरूप-

पक्षानुपपत्तिरूपानुकूलतर्काभाव उक्तः। अथ प्रतिकूलतर्कपराहतिरुच्यते—**नित्येति**। **नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्येति** पदं हेतुगर्भम्। **नित्यमुक्तत्वम्**; परमार्थतो दोषासंस्पृष्टत्वम्। अतः परमार्थदोषो न संभवति। स्वानुभवस्वरूपत्वादपरमार्थपरानुभवो न संभवतीत्यर्थः। अन्यानुभवरूपप्रदेशभेदाभावाच्चेत्येकशब्दाभिप्रायः। एकशब्देन ज्ञेयत्वाभावश्च विवक्षितः। अभिप्रेतं हेतुगर्भत्वं विवृणोति—**स्वानुभवस्वरूपत्वादिति**। अविद्यानिवृत्तिदशायामनुवर्तमानमविद्यावभासप्रत्यनीकं स्वानुभवैकस्वभावत्वं हेतुतया विवक्षितम्; न तु भ्रमवेलायामपि विद्यमानं स्वयंप्रकाशत्वमात्रम्। अतः,* स्वानुभवैकस्वभावत्वस्य प्रागपि विद्यमानत्वादित्यर्थः। स्वानुभवस्वरूपस्यापि तिरोधानादज्ञानानुभवः संभवतीति शङ्कते—**स्वानुभवेति**। अभिप्रेतं विवरीतुं तिरोधानशब्दस्यार्थान्तरं नास्तीति ज्ञापनार्थं प्रश्नपूर्वकं तिरोधानशब्दार्थमाह—**किमिदं तिरोहितस्वरूपत्वम्? अप्रकाशितस्वरूपत्वमिति चेदिति**। स्वानुभवस्वरूपस्याप्रकाशितत्वं व्याहतमिति बुद्ध्या दूषयति—**स्वानुभवेति**। अन्यत इति परिहारं शङ्कते—**स्वानुभवेति**। अन्यतोऽप्रकाशितस्वरूपत्वे पूर्वोक्तदूषणमतिदिशति—**एवं तर्हीति**।

### भावप्रकाशिका

**न तु भ्रमवेलायामपि विद्यमानमिति**; यद्यपि स्वानुभवैकस्वभावत्वस्यापि भ्रमवेलायां विद्यमानत्वमस्त्येव, अन्यथा तेन हेतुना अज्ञानानुभवप्रतिक्षेपायोगात्; तथापि तादृशस्य स्वानुभवैकस्वभावत्वस्य भ्रमवेलायां विद्यमानत्वं न पराभ्युपगतम्, अज्ञानानुभवस्वभावत्वस्याभ्युपेतत्वादिति विशेषः।

### श्रुतप्रदीपिका

अनुकूलतर्काभाव उक्तः। प्रतिकूलतर्कमाह—**नित्येति**। हेतुमाह—**स्वेति**। हेतुं विवरीतुं शङ्कते—**स्वानुभवेति**। तिरोधानशब्दस्यार्थान्तरपरत्वव्युदासाय पृच्छति—**किमिदमिति**। उत्तरं शङ्कते—**अप्रकाशितेति**। स्वानुभवस्वरूपं चेत् स्वस्मै प्रकाशत एवेत्यप्रकाशितस्वरूपत्वं न घटत इत्याशयेनाह—**स्वानुभवेति**। अन्यत इति शङ्कते—**स्वानुभवेति**। दूषयति—**एवमिति**।

---

* स्वानुभवस्वरूपत्वादित्यत्र पञ्चम्यर्थं निष्कृष्य व्याचष्टे—अत इति।

श्रीभाष्यम्

किंच ब्रह्मस्वरूपतिरोधानहेतुभूतमेतदज्ञानं स्वयमनुभूतं सत् ब्रह्म तिरस्करोति, ब्रह्म तिरस्कृत्य स्वयं तदनुभवविषयो भवतीत्यन्योन्याश्रयणम् । अनुभूतमेव तिरस्करोतीति चेत्, यद्यतिरोहितस्वरूपमेव ब्रह्माज्ञानमनुभवति तदा तिरोधानकल्पना निष्प्रयोजना स्यात्, अज्ञानस्वरूपकल्पना च; ब्रह्मणोऽज्ञानदर्शनवत् अज्ञानकार्यतयाऽभिमतप्रपञ्चदर्शनस्यापि सद्भावात् । किंच ब्रह्मणोऽज्ञानानुभवः किं स्वतोऽन्यतो वा? स्वतश्चेदज्ञानानुभवस्य स्वरूपप्रयुक्तत्वेनानिर्मोक्षः स्यात्; अनुभूतिस्वरूपस्य ब्रह्मणोऽज्ञानानुभवस्वरूपत्वेन मिथ्यारजतबाधकज्ञानेन रजतानुभवस्यापि निवृत्तिवन्निवर्तकज्ञानेनाज्ञानानुभूतिरूपब्रह्मस्वरूपनिवृत्तिर्वा । अन्यतश्चेत् किं तदन्यत्? अज्ञानान्तरमिति चेत्, अनवस्था स्यात् । ब्रह्म तिरस्कृत्यैव स्वयमनुभवविषयो भवतीति चेत्, तथा सतीदमज्ञानं काचादिवत् स्वसत्तया ब्रह्म तिरस्करोतीति ज्ञानबाध्यत्वमज्ञानस्य न स्यात् । अथेदमज्ञानं स्वयमनादि ब्रह्मणः स्वसाक्षित्वं ब्रह्मस्वरूपतिरस्कृतिं च युगपदेव करोति; अतो नानवस्थादयो दोषा इति—नैतत्, स्वानुभवस्वरूपस्य ब्रह्मणः स्वरूपतिरस्कृतिमन्तरेण साक्षित्वापादनायोगात् । हेत्वन्तरेण तिरस्कृतमिति चेत् तर्ह्यस्यानादित्वमपास्तम् । अनवस्था च पूर्वोक्ता । अतिरस्कृतस्वरूपस्यैव साक्षित्वापादने ब्रह्मणः स्वानुभवैकतानता च न स्यात् ।

श्रुतप्रकाशिका

दूषणान्तरमाह—**किंचेति** । अपरमार्थत्वान्न सत्तया तिरस्कारकम्; अपितु प्रतीयमानतया तिरस्कारकमित्यनुभवपूर्वकस्तिरस्कारः, तिरस्कारपूर्वकोऽनुभवः, अतिरस्कृतस्य स्वानुभवस्वरूपस्य ब्रह्मणोऽज्ञानानुभवासंभवादित्यन्योन्याश्रयणमित्यर्थः । एतत्परिजिहीर्षयाऽनुभवपूर्वकं तिरस्कारं शङ्कते—**अनुभूतमेवेति** । तत्र दूषणमाह—**यदीति**; अतिरोहित-

स्याप्यज्ञानानुभवसद्भावात्तदर्थं तिरोधानकल्पना तदर्थमाच्छादकाविद्याकल्पना च निष्फले-त्यर्थः । तदुपपादयति—**ब्रह्मण इति**; यथाऽतिरोहितस्वरूपस्याप्यपरमार्थभूताज्ञानानुभव-संभवः, तथाऽपरमार्थभूतप्रपञ्चानुभवोऽप्यतिरोहितस्य संभवतीति तदर्था तिरोधानकल्पना तदर्था आच्छादकाविद्याकल्पना च निष्फलेत्यर्थः । अनुभवपूर्वकतिरस्कारपक्ष एव विकल्प-मुखेन दूषणमाह—**किंचेति** । स्वतःपक्षे दूषणद्वयम्—अनिर्मोक्षो ब्रह्मस्वरूपनिवृत्तिश्च । **रजतानुभवस्यापी**त्यपिशब्देन रजतस्य च निवृत्तिः सूचिता । अन्यतः पक्षे अनवस्था । तिरस्कारपूर्वकानुभवपक्षं शङ्कते—**अथेति** । तिरस्कृत्यानुभवविषय इत्युक्ते सत्तया तिरस्कार-कमित्युक्तं स्यात्, न तु प्रतीयमानतया । तदानीं काचादिवत्परमार्थत्वेन ज्ञाननिवर्त्यत्वं न सिध्यतीत्यर्थः । अथ तिरस्कारानुभवयोर्यौगपद्यं शङ्कते—**अथेदमिति** । **नैतदित्यादिना** दूषयति । **स्वानुभवस्वरूपस्येति** हेतुगर्भविशेषणम् । स्वानुभवस्वरूपत्वं स्वाभाविकमिति परानुभवो हेतुना विना नोपपद्यत इत्यर्थः । हेत्वन्तरेण तिरस्कृतिमाशङ्क्य दूषयति—**हेत्विति** । यौगपद्यपक्षे पूर्वोक्तपक्षद्वयदूषणमप्यापततीत्यभिप्रायेणाह—**अनवस्था च पूर्वोक्तेति** । ज्ञाननिवर्त्यत्वदूषणस्याप्युपलक्षणमियमनवस्था, अनन्तरपूर्वोक्तिः । स्वरूप-तिरस्कृतिमन्तरेण साक्षित्वापादनेऽनिष्टमाह—**अतिरस्कृतेति** ।

भावप्रकाशिका

**नैतदित्यादिना दूषयतीति**; ननु—सिद्धान्तेऽपि "पराभिध्यानात्तु तिरोहितम्" इत्यादि कथमुपपादनीयम्? अतिरोहितापहतपाप्मत्वाद्यवस्थस्य पुण्यापुण्यरूपपरमात्म-संकल्पेन तिरोधानं न संभवत्येव, प्रकृत्यात्मत्वस्वतन्त्रात्मत्वभ्रमशून्यावस्थायां कर्मणोऽप्रसक्तेः । अतस्तिरोधानानन्तरं पराभिध्यानस्य लब्धसत्ताकत्वं, तस्मिंश्च सति तिरोधानमित्यन्योन्याश्रय इति चेत्—न; कर्मतिरोधानयोर्बीजाङ्कुरन्यायेन प्रवाहानादितयाऽदोषात्; तन्मते अवि-द्याया एकत्वाभ्युपगमेन प्रवाहानादित्वानभ्युपगमादिति भावः । **यौगपद्यपक्ष इति**; यद्यपि हेत्वन्तरेण तिरस्कृतमिति पक्षो न यौगपद्यपक्षः, तस्य दूषितत्वात्; तथापि **अनवस्था** चेत्यत्र चशब्दः पूर्वोक्तयौगपद्यपक्षेऽनुभवपूर्वकस्तिरस्कारः, तिरस्कारपूर्वकोऽनुभव इति पक्ष-द्वयोक्तदूषणद्वयमपि सूचयतीति भावः । **ज्ञाननिवर्त्यत्वदूषणस्यापीति**; इदं च तिरस्कार-हेत्वन्तरस्याननुभूयमानस्यैव काचादिवत्तिरस्कारकत्वमित्यभिप्रेत्योक्तम् । यदा तु तदपि हेत्वन्तरतिरस्कृतेनानुभूतमेव तिरस्करोतीत्यभ्युपगम्यते तदानवस्थैवेति द्रष्टव्यम् ।

श्रुतप्रदीपिका

दूषणान्तरमाह—**किंचेत्यादिना** । मिथ्याभूतस्य सतया कार्यकरत्वाभावादनुभव-पूर्वकत्वम् ; स्वानुभवस्वरूपत्वादन्यानुभवस्य तिरस्कारपूर्वकत्वम् । अनुभवपूर्वकत्वं शङ्कते—**अनुभूतमिति** । दूषयति—**यदीति** ; तिरोधानकल्पना तदर्थमाच्छादकाविद्याकल्पना च निष्फलेत्यर्थः । तदुपपादयति—**ब्रह्मण इति** । मुखान्तरेण दूषयति—**किंचेति** । स्वतः-पक्षेऽनिर्मोक्षः स्वरूपनिवृत्तिश्च । अन्यतःपक्षे अनवस्था । तिरस्कारपूर्वकत्वं शङ्कते—**ब्रह्मेति** । दूषयति—**तथा सतीति** । यौगपद्यं शङ्कते—**अथेति** । दूषयति—**नैतदिति** । यौगपद्ये तिरोधेरनुभवं प्रति पूर्वभावाभावान्न हेतुत्वमिति परानुभवस्याहेतुकतया स्वरूपप्रयुक्तत्वे स्वानुभवस्वरूपत्वं च न स्यादिति साक्षित्वापादनानुपपत्तिः । शङ्कते—**हेत्वन्तरेणेति** । दूषयति—**तर्हीति** । तिरोधानपूर्वकानुभवात्पूर्वं स्वरूपेण सत्त्वाभावादनादित्वहानिः । अनवस्थोक्तिर्ज्ञानानिवर्त्यत्वस्याप्युपलक्षणम्, अनन्तरपूर्वोक्तेः । तिरस्कृतिं विनाऽविद्यासाक्षि-त्वोपपादनेऽनिष्टमाह—**अतिरस्कृतेति** ।

श्रीभाष्यम्

अपिच—अविद्यया ब्रह्मणि तिरोहिते तद् ब्रह्म न किंचिदपि प्रकाशते ? उत किंचित्प्रकाशते ? पूर्वस्मिन् कल्पे प्रकाशमात्रस्वरूपस्य ब्रह्मणोऽप्रकाशे तुच्छतापत्तिरसकृदुक्ता । उत्तरस्मिन् कल्पे सच्चि-दानन्दैकरसे ब्रह्मणि कोऽयमंशस्तिरस्क्रियते ? को वा प्रकाशते ? निरंशे निर्विशेषे प्रकाशमात्रे वस्तुन्याकारद्वयासंभवेन तिरस्कारः प्रकाशश्च युगपन्न संगच्छेते । अथ सच्चिदानन्दैकरसं ब्रह्माविद्यया तिरोहितस्वरूपमविशदमिव लक्ष्यत इति ; प्रकाशमात्रस्वरूपस्य विश-दता अविशदता वा किंरूपा ? एतदुक्तं भवति—यः सांशः सविशेषः प्रकाशविषयस्तस्य सकलावभासो विशदावभासः; कतिपयविशेषर-हितावभासश्चाविशदावभासः । तत्र य आकारोऽप्रतिपन्नस्तस्मिन्नंशे प्रकाशाभावादेव प्रकाशवैशद्यं न विद्यते । यश्चांशः प्रतिपन्नस्तस्मिन्नंशे

तद्विषयप्रकाशो विशद एव। अतः सर्वत्र प्रकाशांशेऽवैशद्यं न संभवति। विषयेऽपि स्वरूपे प्रतीयमाने तद्गतकतिपयविशेषाप्रतीतिरेवावैशद्यम्। तस्मादविषये निर्विशेषे प्रकाशमात्रे ब्रह्मणि स्वरूपे प्रकाशमाने तद्गतकतिपयविशेषाप्रतिपत्तिरूपावैशद्यं नामाज्ञानकार्यं न संभवति।

अपिचेदमविद्याकार्यमवैशद्यं तत्त्वज्ञानोदयान्निवर्तते, न वा? अनिवृत्तावपवर्गाभावः। निवृत्तौ च वस्तु किंरूपमिति विवेचनीयम्। विशदस्वरूपमिति चेत्, तद्विशदस्वरूपं प्रागस्ति, न वा? अस्ति चेदविद्याकार्यमवैशद्यं तन्निवृत्तिश्च न स्याताम्। नो चेन्मोक्षस्य कार्यतया अनित्यता स्यात्।

श्रुतप्रकाशिका

पूर्वं विशदाविशदावभासमभ्युपगम्य दूषणमुक्तम्; इदानीं तु तमेव दूषयितुमुपक्रमते—**अपिचेति**। विकल्पयति—अविद्येति। पूर्वोक्तं दूषणमतिदिशति—**पूर्वस्मिन्निति**। **उत्तरस्मिन्निति**; किंशब्दः क्षेपे, अनुपपन्नमित्यर्थः। सच्चिदानन्दादिशब्दानामपि स्वरूपमात्रपरत्वेनाभ्युपगमात् तिरस्कृतातिरस्कृतविभागोऽनुपपन्न इति भावः। **कोऽयमंशस्तिरस्क्रियते, को वा प्रकाशत इति**; को वा विशेषस्तिरस्क्रियते, को वा प्रकाशत इत्यस्याप्युपलक्षणार्थमिदम्, "निरंशे निर्विशेषे" इत्यनन्तरोक्तेः। **कोऽयमंश इति**; अंशभेदो वक्तुमशक्य इत्यभिप्रायः। तदुपपादयति—**निरंश इति**। **प्रकाशमात्रे**; मात्रचा अविषयत्वं विवक्षितम्; अविषयभूत इत्यर्थः। **युगपन्न संगच्छेते इति**; न हि त्वया कालभेदेन प्रकाशतिरस्कारावुच्येते; अपितु युगपदेव। तदानीमंशभेदाभावाच्च तौ न संगच्छेते इति भावः। एवं प्रकाशतिरस्कारयोर्यौगपद्यानुपपत्तौ सत्यामप्यविशदशब्देन प्रत्यवतिष्ठते—**अथेति**। अथशब्दोऽनुमतिप्रदाने वर्तते। दूषयति—**प्रकाशेति**। **किंरूपा**; अनुपपन्नेत्यर्थः। कथमनुपपत्तिरिति शङ्कायां वैशद्यावैशद्यस्वरूपं शिक्षयितुमत्र तदनुपपत्तिं च दर्शयितुमाह—**एतदुक्तमिति**। वैशद्यावैशद्यस्वरूपं शिक्षयति—**यः सांश इत्यादिना**। ज्ञाने तदनुपपत्तिमाह—**तत्रेति**। **प्रकाशाभावादेव प्रकाशावैशद्यं न विद्यत इति**; धर्म्यभावाद्धर्माभाव इत्यर्थः। ज्ञेयेऽपि ज्ञातांशस्य विशदत्वादज्ञातांशस्याज्ञातत्वाच्च

क्वचिदप्यवैशद्यं न संभवतीत्याह—**विषयेऽपीति ।** एकस्मिन् वस्तुनि कतिपयांशस्य कतिपयाकारस्य वाऽनवभासः समुदितरूपस्यावैशद्यम् ; न तु तत्रापि प्रकाशमानांशस्येत्यर्थः । **तस्मादिति ; स्वरूपे प्रकाशमाने** इत्यस्य न "ब्रह्मणि" इति पूर्वत्रान्वयः, अपितूत्तरत्र । स्वरूपे प्रकाशमाने कतिपयविशेषाप्रतिपत्तिरूपमवैशद्यं ब्रह्मणि **न** संभवतीत्यर्थः । कतिपयविशेषाप्रतिपत्तिशब्दः कतिपयांशाप्रतिपत्तेरप्युपलक्षणार्थः । मुखान्तरेण दूषणमाह—**अपिचेति । अविद्याकार्यं तन्निवृत्तिश्च न स्यातामिति ;** विशदस्वरूपस्याविद्याविरोधित्वादिति भावः । **मोक्षस्य कार्यतयेति ; मोक्षस्य ;** मुक्तस्वरूपस्य । भावरूपत्वे सति कार्यं ह्यनित्यम् । वैशद्यं च भावरूपम् । अतः परमते त्वयोक्तदूषणं तवैवापततीत्यर्थः । प्रागसतः पश्चादुत्पन्नस्य वैशद्यस्यानित्यत्वप्रसङ्गः कालात्ययापदिष्टः, शास्त्रेण तस्य नित्यतया प्रतिपादितत्वादिति चेत्, तदा ब्रह्मणः सविशेषत्वं स्यादित्यभिप्रायः ।

भावप्रकाशिका

**अनुमतिप्रदाने वर्तत इति ;** पक्षान्तरपरिग्रह इत्यर्थः । **यः सांशः सविशेषः** इत्यादेः **अज्ञानकार्यं न संभवतीत्यन्तस्य** भाष्यस्यायमर्थः—अविशदप्रकाशत्वं हि अविशदत्वविशिष्टं प्रकाशत्वम् । अविशदत्वं चाप्रकाशमानत्वम् । अप्रकाशमानत्वं च धर्मद्वारा धर्मिगतम् । प्रकाशमानत्वं च साक्षाद्धर्मिगतम् । ततश्चाप्रकाशमानधर्मकत्वे सति प्रकाशमानत्वमविशदप्रकाशत्वमित्येवावगन्तव्यम् ; न त्वविशदत्वप्रकाशमानत्वयोः साक्षादेकनिष्ठत्वम्, विरोधात् ; य आकारोऽविशदः, तत्र प्रकाशमानत्वस्याभावेनाविशदप्रकाशमानत्वाभावात् ; यश्च प्रकाशमानः, तत्राविशदत्वलक्षणाप्रकाशमानत्वाभावात् । ततश्चाविशदत्वलक्षणमप्रकाशमानत्वं धर्मद्वारकं, प्रकाशमानत्वमद्वारकमित्येवाभ्युपगन्तव्यम् । ततश्च "निर्धर्मके ब्रह्मण्यविशदप्रकाशमानत्वं न संभवति" इति टीकाग्रन्थस्याप्यत्रैव तात्पर्यम् । विशदस्वरूपं प्रागस्ति न वेति विकल्पे विशदस्वरूपस्य प्रागसत्त्वे विशदस्वरूपस्यागन्तुकत्वेनानित्यत्वप्रसङ्ग एवापादनीयः; न मोक्षस्य, व्यधिकरणत्वात् ; किंच मोक्षस्याविद्यानिवृत्तिरूपत्वेनाभावरूपतया कार्यत्वेऽपि नानित्यत्वापादनं युक्तमित्याशङ्क्य मोक्षस्येत्येतद्व्याचष्टे—**मुक्तस्वरूपस्येति । वैशद्यं च भावरूपमिति ;** विशदस्वरूपं च भावरूपमित्यर्थः ।

**श्रीभाष्यम्**

**अस्याज्ञानस्याश्रयानिरूपणादेवासंभवः पूर्वमेवोक्तः। अपि चा-परमार्थदोषमूलभ्रमवादिना निरधिष्ठानभ्रमासंभवोऽपि दुरुपपादः। भ्रम-हेतुभूतदोषदोषाश्रयत्ववत् अधिष्ठानापारमर्थ्येऽपि भ्रमोपपत्तेः। ततश्च सर्व-शून्यत्वमेव स्यात्।**

**श्रुतप्रकाशिका**

पूर्वोक्तामाश्रयानुपपत्तिं परोक्तप्रत्यक्षप्रमाणस्य प्रतिकूलतर्कत्वेनाह—**अस्येति**। स्वरूपानादित्वादिमुखेन परिहाराणां प्रतिबन्दीत्वं हृदि निधाय दूषणान्तरमाह—**अपिचेति**। यथा दोषदोषाश्रयत्वादेरपारमार्थ्येऽपि भ्रमसंभवः, तद्वदधिष्ठानापारमार्थ्येऽपि भ्रमः संभवति। अधिष्ठानापारमार्थ्ये तस्यापि प्रपञ्चवदपारमार्थ्येनाधिष्ठानान्तरापेक्षयाऽनवस्था स्यादिति चेत्, दोषस्यापि प्रपञ्चवदपारमर्थ्येन दोषान्तरापेक्षयाऽनवस्था स्यात्। दोषस्यापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति चेत्, तर्ह्यधिष्ठानापारमार्थ्येऽपि स्वरूपानादित्वान्नानवस्थेति। प्रवाहानादित्वेन दुर्घटत्वेन च परिहारोऽपि तुल्यः। दोषः प्रपञ्चदर्शनस्य स्वदर्शनस्य च स्वयमेव निर्वाहक इति न दोषान्तरापेक्षयाऽनवस्थेति चेत्—न; अपरमार्थस्य स्वपरनिर्वाहकत्वासंभवात्। न हि स्वप्ने द्विचन्द्रज्ञानहेतुभूतोऽङ्गुल्य-वष्टम्भः स्वकल्पने दोषनिरपेक्षः। अपरमार्थस्य स्वपरनिर्वाहकत्वं संभवतु, तथा सत्यधिष्ठानापारमार्थ्येऽपि स्वपरनिर्वाहकत्वादनवस्था न स्यात्। अपरमार्थस्य परं प्रत्यधिष्ठानत्वे सिद्धे हि स्वनिर्वाहकत्वसिद्धिरिति चेत्, अपरमार्थस्य परं प्रति दोषत्वे सिद्धे हि स्वनिर्वाहकत्वमिति तुल्यम्। मिथ्याभूतजगदवभासाद् दोषत्वं सिद्धमिति चेत्, तर्हि तत एवाधिष्ठानत्वमपि सिद्धमिति स्वपरनिर्वाहकत्वमधिष्ठानस्य सिध्यति। अधिष्ठाना-पारमार्थ्ये भ्रमो न दृष्ट इति चेत्, दोषदोषाश्रयत्वापारमार्थ्येऽपि भ्रमो न दृष्ट इति तुल्यश्चर्चे इत्यभिप्रायः। ततः किमित्यत्राह—**ततश्चेति**। एवम् 'अहमज्ञः, मामन्यं च न जानामि' इति प्रत्यक्षस्य प्रतिकूलतर्कपराहतिरुक्ता। अत्र केचिदाहुः*—सुप्तोत्थितस्य

---

**केचिदिति; तत्त्वशुद्धिकाराः। इत्थं हि तदीयो ग्रन्थः—"सुप्तोत्थितस्य तावत् अज्ञानपरामर्शोऽन्यथानुपपत्तिर्भावरूपाज्ञाने प्रमाणम्। तथाहि—सुप्तः पुरुषः समुत्थाय 'सुखमहमस्वाप्सम्, एतावन्तं कालं न किंचिदवेदिषम्' इति सुषुप्तिकालीनमज्ञानं परामृशति। स चायं परामर्शः सुषुप्तिकाले अज्ञानानुभवमन्तरेणानुपपन्नः, विशिष्टा-**

'तदन्यधीरतात्पर्यं पटुत्वविरहो धियः ।
दुःखादितीव्रमुन्मादोऽनभ्यासो दीर्घकालता ॥
एतैश्चादृष्टवैगुण्यं कल्प्यं संस्काररोधिषु ।
एतेष्वसत्स्वस्मरणाज्ज्ञानाभावोऽनुमीयते ॥'

पथि गच्छता स्पृष्टतृणादिकं पटुतरसंस्कारोदयविरोधिसद्भावान्न स्मर्यते । पथि गच्छन् हि गन्तव्यदेशकार्यचिन्तादिव्यासक्तो भवति ; तृणादावादरश्च नास्ति, प्रयोजनाभावात् । तदभावेऽपि गजादिदर्शनस्येव न पटुतरत्वं तृणादिज्ञानस्य, विषयवैपुल्यवैचित्र्याद्यभावात् । जन्मान्तरानुभवजसंस्कारस्तु प्रायणनरकप्रसूतिजन्यतीव्रदुःखाभिभवादनुद्बुद्धः । उन्मादश्च संस्कारोद्बोधविरोधी । अनभ्यासश्च तथा, तस्य विस्मरणहेतुत्वदर्शनात् । कालदैर्घ्यमपि तत्प्रमोषकं दृष्टम्, बाल्येऽनुभूतानां वृद्धावस्थायामस्मरणदर्शनात् । न चैते हेतवः सुषुप्तौ सन्ति । न च किमप्यदृष्टं संस्कारोद्बोधविरोधि कल्प्यम्, कल्पकाभावेन सौषुप्तिकज्ञानस्य तद्विषयार्थस्मरणविरोध्यदृष्टस्य च कल्पनायोगात् । यदि किंचित् कल्पकतयोत्प्रेक्ष्येत, तदाप्यक्लृप्त्या निर्वाहे संभवति न कल्पनमुपपद्यते । एवमन्यपरत्वादिसंस्कारनिरोधकहेतुविरहविशेषितास्मरणलिङ्गेन ज्ञानाभावानुमितिरूपमिदं 'न किंचिदवेदिषम्' इति ज्ञानम् । त्वयापि ज्ञानाभावः सुषुप्तावभ्युपगतः । स चोक्तलिङ्गानुमेय एवेत्यभ्युपगन्तव्यम् । तदस्माकमपि तुल्यम् । अतः स्मृतित्वानुपपत्तेरनुमितिरूपत्वोपपादनाच्च 'न किंचिदवेदिषम्' इति ज्ञानमन्यथैवोपपन्नमिति न ततो भावरूपाज्ञानसिद्धिरितीदृशदुर्वादानामनुपपन्नत्वं भावरूपाज्ञानविषयप्रत्यक्षप्रतिक्षेपतः सिद्धम् ।

### भावप्रकाशिका

**तदनवभासेऽज्ञानानुभवायोगादिति ;** प्रमाणज्ञानानवभासे तदन्यत्वेनाज्ञानानुभवायोगात् प्रमाणज्ञानस्यावभासोऽपेक्षितः; ततश्चावभास्यमानस्य प्रमाणज्ञानस्यापि पर्वोक्तरीत्या सत्त्वमपेक्षितमिति तदन्यरूपमज्ञानं कथमवभासेतेत्यर्थः । **निर्विकल्पकेन वा सविकल्पकेन वेति ;** नित्येन वा, अनित्येन वेत्यर्थः । निर्विकल्पकसविकल्पकशब्दयोर्निष्प्रकारकसप्रकारकपरत्वे परमतेऽज्ञानान्तःकरणतद्धर्मादिभासकसाक्षिचैतन्यस्वरूपस्य निष्प्रकारकत्वाभावात् अखण्डार्थवाक्यजन्यस्य वृत्तिरूपज्ञानस्य निष्प्रकारकत्वदर्शनेन वृत्तिज्ञानस्य सप्रकारकत्वनियमाभावाच्च निर्विकल्पकसविकल्पकशब्दाभ्यां साक्षिस्वरूपचैतन्यवृत्तिज्ञानपरि-

ग्रहं सिद्धवत्कृत्य दूषणानुपपत्तेः नित्यानित्यज्ञाने एव निर्विकल्पकसविकल्पकशब्दाभ्यां विवक्षिते इत्येव युक्तमिति द्रष्टव्यम् ।

श्रीभाष्यम्

यदुक्तमनुमानेनापि भावरूपमज्ञानं सिध्यतीति; तदयुक्तम्, अनुमानासंभवात् । ननूक्तमनुमानम्; सत्यमुक्तम्; दुरुक्तं तु तत्, अज्ञानेऽप्यनभिमताज्ञानान्तरसाधनेन विरुद्धत्वाद्धेतोः । तत्राज्ञानान्तरासाधने हेतोरनैकान्त्यम् । साधने च तदज्ञानमज्ञानसाक्षित्वं निवारयति । ततश्चाज्ञानकल्पना निष्फला स्यात् । दृष्टान्तश्च साधनविकलः, दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात् । सर्वत्र ज्ञानस्यैव हि प्रकाशकत्वम्, सत्यपि दीपे ज्ञानेन विना विषयप्रकाशाभावात् । इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव, न प्रकाशकत्वम् । प्रदीपप्रभायास्तु चक्षुरिन्द्रियस्य ज्ञानमुत्पादयतो विरोधितमोनिरसनद्वारेणोपकारकत्वमात्रमेव । प्रकाशकज्ञानोत्पत्तौ व्याप्रियमाणचक्षुरिन्द्रियोपकारकहेतुत्वमपेक्ष्य दीपस्य प्रकाशकत्वव्यवहारः । नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युपगमेन दीपप्रभा निदर्शिता; अपितु ज्ञानस्यैव स्वविषयावरणनिरसनपूर्वकप्रकाशकत्वमङ्गीकृत्येति चेत्—न; न हि विरोधिनिरसनमात्रं प्रकाशकत्वम्; अपित्वर्थपरिच्छेदः; व्यवहारयोग्यतापादनमिति यावत् । तच्च ज्ञानस्यैव । यद्युपकारकाणामप्यप्रकाशितार्थप्रकाशकत्वमङ्गीकृतं, तर्हीन्द्रियाणामप्युपकारकत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्; तथा सति तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावाद्धेतोरनैकान्त्यमित्यलमनेन ।

श्रुतप्रकाशिका

अथानुमानं दूषयति—**यदुक्तमित्यादिना** । **अनुमानासंभवादिति**; त्वदुक्तमनुमानाभास इति भावः । कथं दुरुक्तत्वमित्यत्राह—**अज्ञानेऽपीति** । कथमज्ञानान्तरसाधनमवश्यंभावि ? तस्य कथमनभिमतत्वम् ? इत्याशङ्कायां तदवश्यंभावमुपपादयति—

**तत्रेति** । अज्ञानस्यानभिमतत्वमुपपादयति—**साधने चेति** । ततः किमित्यत्राह—**ततश्चेति** । अस्य प्रमाणज्ञानस्याप्रकाशितार्थप्रकाशकत्वात् स्वविषयावरणाज्ञानान्तरसाधकत्वे सति तदज्ञानं ब्रह्मस्वरूपाच्छादकं सिषाधयिषितमज्ञानमावृणोति । तेनावृतत्वात्तदज्ञानं ब्रह्मणा न साक्षात्क्रियते । अपरमार्थस्याप्रतीयमानस्य कार्यकरत्वायोगादज्ञानकल्पना निष्फला । तिरोधानरूपकार्यार्थं हि तत्कल्पना । यद्यसाक्षात्कृतमेव कार्यकरं तदा सत्तया कार्यकरमिति काचादिवत् सत्यत्वात् ज्ञाननिवर्त्यं न स्यात् । एवमज्ञानस्य ज्ञाननिवर्त्यत्वनिष्फलत्वे, कारणतयानभिमताज्ञानान्तरसाधकत्वं, तदसाधने चानैकान्त्यमुक्तम् । ननूक्तहेतुजन्यं ज्ञानं सम्यङ् निश्चयरूपं चेत् तद्विरोधादेव न हेतोरनैकान्त्यम्; यदि न सम्यक् तथापि न हेत्वनैकान्त्यम्, अप्रकाशितार्थप्रकाशकत्वहेतोस्तत्र वृत्त्यभावात्; उच्यते—हेत्वनैकान्त्यपरिहारो बाधाविषयज्ञानस्य प्रमितिरूपत्वं प्रतिक्षिपति । ज्ञानसम्यक्त्वं तु हेत्वनैकान्त्यपरिहारं प्रतिक्षिपति । अतो ज्ञानस्य सम्यक्त्वे तस्योक्तहेतुजन्यत्वं व्याहतम्, हेतोरनैकान्त्यात् । न हि सम्यग्ज्ञानं दुष्टहेतुजन्यम् । उक्तहेतोरनैकान्त्यं न चेत् तस्यासम्यङ्निश्चयरूपज्ञानजनकत्वं व्याहतम्, अदुष्टहेतोरसम्यग्ज्ञानजनकत्वायोगात् । एवं हेत्वनैकान्त्यपरिहारज्ञानसौष्ठवयोः परस्परविरोधेन तयोरिह समुच्चित्यासिद्धेरन्यतराभावेऽपि साध्यसिध्द्यभावादनुमानमसमञ्जसमित्यभिप्राय इति । ननु—न हेत्वनैकान्त्यम्, साध्यविषयज्ञाने हेतोरवृत्तेः । न ह्यप्रकाशितमज्ञानमनेन प्रकाश्यते । किं तर्हि? साक्षिचैतन्यसिद्धस्यैवाज्ञानस्याभावाद्विवेचनमात्रं क्रियते । नैवम्, अहमर्थधर्मभूतप्रकाशोत्तीर्णेन स्वरूपचैतन्येनाज्ञानानुभवसिद्धावनुमानप्रामाण्यम्; तत्प्रामाण्येन भावरूपाज्ञानसिद्धिः; तत्सिद्धौ ज्ञातुरपि तत्कल्पितत्वात् तदुत्तीर्णसाक्षिचैतन्येनाज्ञानानुभवसिद्धिरिति चक्रकापत्तेर्दुस्तरत्वात् । दूषणान्तरमाह—**दृष्टान्तश्चेत्यादिना** । तत्र किं साक्षात्प्रकाशकत्वम्? उत परंपरया? उत साक्षाद्वा परंपरया वा प्रकाशकत्वमात्रम्? उत स्वविषयावरणनिरासकत्वं प्रकाशकत्वमिति चत्वारः कल्पाः । तत्र प्रथमे कल्पे दृष्टान्तः साधनविकलः । द्वितीये तु पक्षे असिद्धिः । तृतीये त्विन्द्रियेष्वनैकान्त्यम्, तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावात्, साक्षाद्वा परंपरया वा प्रकाशकयोरन्यतरत्वात्तेषाम् । इन्द्रियाण्यपि पक्षीकृत्य तेषामपि तथाविधवस्त्वन्तरपूर्वकत्वकल्पनमयुक्तम्, आहंकारिकाणामिन्द्रियाणामुत्पत्तेः स्वविषयावरणस्वदेशगतवस्त्वन्तरपूर्वकत्वाभावात् । आलोक एव हि तादृशः । चतुर्थपक्षे तु साध्याविशिष्टतेत्यभिप्रेत्य प्रथमे

कल्पे दूषणमाह—**दृष्टान्तश्च साधनविकल इति**। कथं ज्ञानस्यैव साक्षात्प्रकाशकत्वमिति शङ्कायां तदुपपादयति--**सत्यपीति**। ज्ञानस्यैव प्रकाशकत्वमित्यनेन द्वितीयकल्पे हेतोः पक्षेऽसिद्धिः फलिता। **इन्द्रियाणा**मित्यनेन तृतीयपक्षे इन्द्रियेष्वनैकान्त्यं विवक्षितम्। दीपप्रभायाः परंपरयापि प्रकाशकत्वं दूरत इत्याह—**प्रदीपेति**। प्रकाशकत्वव्यवहारः कथमित्यत्राह—**प्रकाशकेति**। चतुर्थपक्षं शङ्कते—**नास्माभिरिति**। **निरसनपूर्वकेति;** निरसनद्वारकेत्यर्थः। साध्याविशिष्टतामाह—**न हीति**। ज्ञानस्य विषयावरणनिरसन-रूपप्रकाशकत्वं न ह्यस्ति; तद्धि साध्यं, न संप्रतिपन्नमित्यर्थः। मात्रचार्थपरिच्छेद-व्युदासः। हिशब्देन विषयावरणनिरासकत्वस्य साध्यत्वं फलितम्। तत्र संप्रतिपन्नं प्रकाशकत्वमाह—**अपित्विति**। परिच्छेदशब्दस्य परिमितिपरत्वशङ्काव्यावृत्त्य-र्थमाह—**व्यवहारेति**। **व्यवहारयोग्यता;** व्यवहारप्रतिसंबन्धित्वम्। ननु न साध्याविशिष्टत्वं हेतोः; स्वप्रागभावनिरासकत्वं स्वविषयावरणनिरसनशब्देन विवक्षितम्; तेन भावरूपनिरसनीयपूर्वकत्वं साध्यमिति—न, स्वप्रागभावनिरासकत्वस्य हेतोरिन्द्रियसंप्रयोगे-ऽनैकान्तिकत्वात्। भासामानत्वे सति अप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेऽपि पूर्ववद्विकल्पः स्यात्। तत्र साक्षात्पक्षे दृष्टान्तः साधनविकलः; प्रणाड्येति पक्षे हेत्वसिद्धिः। तृतीये लिङ्गादौ व्यभिचारः। चतुर्थे साध्याविशिष्टता, भासमानत्वविशेषितस्य विषयावरण-निरासकत्वस्यासंप्रतिपत्तेः।

### भावप्रकाशिका

भाष्ये—**हेतोरनैकान्त्यमिति;** अप्रकाशितार्थप्रकाशत्वरूपलिङ्गजन्यायाः स्वप्राग-भावेत्यादिसाध्यविषयकानुमितेरप्यप्रकाशितार्थप्रकाशकत्वं स्वीकर्तव्यम्, इतरथा तस्याः प्रकाशितप्रकाशकत्वमप्रकाशकत्वं वा स्यात्; ततश्च तस्यामनुमितौ हेतुसत्त्वादनुमितिविषयी-भूताज्ञानावारकाज्ञानानभ्युपगमेन स्वविषयावरणपूर्वकत्वलक्षणसाध्याभावेन हेतोरनैकान्त्य-मित्यर्थः। यद्यपि परैः परोक्षस्थलमात्र एव वृत्तिनिर्गमाभावेनाज्ञानानिवर्तकत्वस्याभ्युपगमेन परोक्षवृत्तिमात्रे व्यभिचारः सुवचः, तथापि परोक्षस्थले विषयावच्छिन्नचैतन्यस्थाज्ञानानिवृत्ता-वपि प्रमातृगताज्ञाननिवृत्तेरभ्युपेतत्वात् परोक्षज्ञानमात्रे व्यभिचारो नोद्भावित इति वदन्ति। केचित्तु—इदमुपलक्षणं परोक्षज्ञानमात्रस्येति मन्यन्ते। अत्र जडविषयकज्ञानमात्रे व्यभिचारश्च बोध्यः; जडावारकाज्ञानाभावात्, जडस्याप्रसक्तप्रकाशकत्वेन परैरावरणानभ्युपगमात्।

न च जडावच्छिन्नचैतन्यावारकमज्ञानं संभवतीति वाच्यम्, घटविषयकज्ञानस्य घटावच्छिन्नचैतन्यावारकाज्ञाननिवर्तकत्वस्य भिन्नविषयत्वेनासंभवात्। न च "सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते"* इत्युक्तरीत्या घटादिज्ञानमपि तदवच्छिन्नचैतन्यविषयमिति वाच्यम्, "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इत्यादिश्रुतिविरोधात्। तथा हि सति 'घटोऽस्ति' इति ज्ञाने सद्रूपब्रह्मस्फुरणेन ब्रह्मसाक्षात्कारादविद्यानिवृत्तिप्रसङ्गः। न च तस्य ब्रह्ममात्रविषयकत्वाभावान्नाज्ञाननिवर्तकत्वमिति वाच्यम्, 'दण्डी देवदत्तः' इति विशिष्टज्ञानस्य विशेष्याज्ञाननिवर्तकत्वानापत्तेरित्यादि दूषणं द्रष्टव्यम्। **अस्य प्रमाणज्ञानस्याप्रकाशितार्थप्रकाशकत्वात्** इत्यस्यानन्तरं 'तस्य हेतोः' इति शेषः पूरणीयः। अतः **स्वविषयावरणाज्ञानान्तरसाधनत्वे सतीत्यस्य** नान्वयानुपपत्तिरिति द्रष्टव्यम्। **तद्विरोधादेव न हेतोरनैकान्त्यमिति;** न चासल्लिङ्गजन्याया अप्यनुमितेर्विषयाबाधेन प्रमात्वसंभवान्न विरोध इति वाच्यम्, असल्लिङ्गस्य प्रमायामसामर्थ्यात्; वह्निमत्पर्वते व्यभिचारिलिङ्गजन्यानुमितेरपर्वतीयवह्निविषयतया वा पर्वतस्थपाषाणादौ वह्नित्वविषयतया वा भ्रमत्वावश्यंभावात्, लिङ्गोपहितलैङ्गिकभानेन भ्रमत्वावश्यंभावाच्चेति भावः। **तत्र वृत्त्यभावादिति;** अप्रकाशितार्थप्रकाशकत्वस्याबाध्यव्यवहारानुगुण्यरूपप्रमात्वपर्यवसितस्य तत्रानुमितावभावादिति भावः। अज्ञानानुमितेः प्रमात्वे प्रमात्वस्याप्रकाशितार्थप्रकाशकत्वस्य व्यभिचारित्वावश्यंभावेन व्यभिचारिहेतोः प्रमाजनकत्वविरोधः, अप्रमात्वे प्रमात्वहेतोरव्यभिचारित्वेन सल्लिङ्गत्वावश्यंभावेन तस्याप्रमाजनकत्वविरोध इत्यभिप्रायेण परिहरति—**उच्यत इत्यादिना। अन्यतराभावेऽपि साध्यसिद्ध्यभावादिति;** ननु ज्ञानसौष्ठवमात्रेणापि साध्यं सिध्यतीति चेत्; सत्यम्; तदपि हेत्वनैकान्त्येन सिध्यतीत्यत्र तात्पर्यात्। **अभावाद्विवेचनमात्रं क्रियत इति;** न चाभावविवेकस्याप्रकाशितस्य प्रकाशकतया व्यभिचारस्तदवस्थ इति वाच्यम्, अभावविवेकावारकाज्ञानसत्त्वेन तन्निवर्तकत्वस्यानुमितौ संभवेन व्यभिचाराभावात्। **अहमर्थधर्मभूतेति;** धर्मभूतज्ञानभिन्नेनेत्यर्थः। **अज्ञानसिद्धावनुमानप्रामाण्यमिति;** उक्तरीत्या अस्याभावविवेचनानुमितित्वेन व्यभिचाराभावादिति भावः। **भावरूपाज्ञानसिद्धिरिति;** भावरूपतयाऽज्ञानसिद्धिरित्यर्थः। **ज्ञातुरपि तत्कल्पितत्वादिति;** ततश्चाज्ञान-

---

* "सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते। प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥" इति मण्डनमिश्रीयब्रह्मसिद्धिः। (४-३)

चैतन्यसिद्धौ भावरूपाज्ञानसिद्धिर्नापेक्षिता; साक्षिसिद्धेस्तदेकोपायत्वाभावात्, धारावाहिकज्ञान-सुखादिभासकत्वेनापि सिद्धिसंभवात्। किंच 'मामन्यं च न जानामि' इति साक्षिचैतन्येनाज्ञानसिद्धौ साक्षिणोऽहमर्थोत्तीर्णत्वसिद्धिरपि नोपजीव्या; न हि 'अयं घटः' इति ज्ञानेन घटसिद्धौ घटज्ञानस्य देहान्तःकरणात्मधर्मत्वादिविवेकोऽपेक्षित इति चेत्—सत्यम्; तस्याः प्रणाड्या अपि परैरुपन्यस्तत्वात्तद्रीतिमनुसृत्यान्योन्याश्रय उपन्यस्त इति द्रष्टव्यम्। भाष्ये—**सत्यपि दीप इति;** ज्ञानमनुत्पाद्य विषयप्रकाशकत्वायोगादित्यर्थः। ततश्च ज्ञानेन सहितस्य प्रकाशकत्वमस्तीति शङ्का निरस्ता। **असिद्धिः फलितेति;** ज्ञानस्यैव हि साक्षात् प्रकाशकत्वमिति तस्यार्थ इति भावः। **इन्द्रियाणामित्यनेन तृतीयपक्ष इति;** "तर्हीन्द्रियाणामप्युपकारकत्वेनाप्रकाशितार्थप्रकाशकत्वमङ्गीकरणीयम्" इति भाष्ये-णेत्यर्थः, न तु "इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमेव न प्रकाशकत्वम्" इति ग्रन्थेनेति भ्रमितव्यम्, एतस्य हेत्वभावसमर्थनाभिप्रायानुपपत्तेः; "नास्माभिर्ज्ञानतुल्यप्रकाशकत्वाभ्युप-गमेन" इत्येतत्पर्यन्तभाष्यग्रन्थस्य साक्षात्प्रकाशकत्वरूपपक्षव्युदासकत्वेन पक्षान्तराप्रतिक्षेप-कत्वात्। ननु यदि सर्वत्र ज्ञानस्यैव प्रकाशकत्वं तर्हीन्द्रियस्य प्रकाशकत्वं न स्यादित्या-शङ्क्येष्टापत्त्या परिहरति भाष्ये—**इन्द्रियाणामपि ज्ञानोत्पत्तिहेतुत्वमिति। मात्रचार्थपरिच्छेदव्युदास इति;** अत्र "प्रमाणे द्वयसज्दघ्नञ्मात्रचः" इति मात्रच्प्रत्ययः प्रमाणार्थकः;* विरोधिनिरसनपर्यन्तत्वरूपं प्रकाशकत्वं न संप्रतिपन्नमित्यर्थः। न तु 'क्षीरमात्रं पिब' इत्यत्रेवोत्तरपदत्वनियतं व्यवच्छेदार्थकं मात्रपदम्; तथाहि सति 'विरोधिनिरसनमात्रं न संप्रतिपन्नम्' इत्युक्ते 'इतरसहितं तु संप्रतिपन्नम्' इति प्रतीयेत। अतो यथोक्त एवार्थः। **तद्धि साध्यं न संप्रतिपन्नमिति;** ततश्च भाष्ये संप्रतिपन्नमिति शेषः पूरणीय इति भावः। नन्वप्रकाशितार्थे प्रकाशकत्वहेतौ विकल्पे दूषितेऽपि इन्द्रियादिव्यभिचारवारणार्थं भासमान-त्वविशेषिततया पूर्वमुपन्यस्तो हेतुर्न दूषित इत्याशङ्क्य विशेष्यदूषणादेव विशिष्टोऽपि दूषित इत्याह—**भासमानत्वे सत्यप्रकाशितार्थप्रकाशकत्वादिति हेतौ विशेषितेऽपीति।**

---

*** मात्रचः प्रमाणार्थत्वकथनं फलितार्थकथनपरतया नेयमिति २२७ पृष्ठे उपपादितं स्मर्तव्यम्।**

श्रुतप्रदीपिका

१'अथ वैशद्यावैशद्ये दूषयितुमुपक्रमते—**अपिचेति** । किंशब्दः क्षेपे । **प्रकाशमात्रेति;** मात्रचा विषयत्वव्यावृत्तिः । अवैशद्यं शङ्कते—**अथेति । किंरूपा;** दुर्निरूपा । वैशद्यावैशद्यं च किंरूपम्? कथं प्रकाशे तदनुपपत्तिरित्यत्राह—**एतदुक्तमिति** । तयोः स्वरूपं शिक्षयति—**य इति** । तदनुपपत्तिमाह—**तत्रेति । प्रकाशाभावादेवेति;** धर्म्यभावाद्धर्माभावः । उक्तरीत्या ज्ञेयेऽपि वैशद्यावैशद्यसंभव इत्याह—**विषयेऽपीति** । परपक्षे तदनुपपत्तिमाह—**तस्मादिति** । मुखान्तरेण दूषयति—**अपिचेति । न स्यातामिति;** विशदस्वरूपस्याविद्याविरोधित्वादिति भावः । **अनित्यता;** भावरूपकार्यत्वादिति भावः । सा मानबाधिता चेत् सविशेषता ।'

२'पूर्वोक्तामाश्रयानुपपत्तिं प्रतिकूलतर्कत्वेनाह—**अस्येति** । मुखान्तरेण दूषयति—**अपिचेति** । स्वरूपानादितया प्रवाहानादितया दुर्घटतया स्वपरनिर्वाहकतया वानवस्थापरिहारोऽधिष्ठानेऽपि तुल्यः । अधिष्ठानापारमार्थ्यं न दृष्टं चेत् दोषमृषात्वमपि न दृष्टमिति भावः । ततः किमित्यत्राह—**ततश्चेति** ।'

अथानुमानं दूषयति—**यदुक्तमित्यादिना** । कथं दुरुक्तत्वमित्यत्राह—**अज्ञानेऽपीति** । कथमज्ञानान्तरसाधनावश्यंभाव इत्यत्राह—**तत्रेति** । ज्ञानस्याप्रकाशितार्थविषयसम्यङ्निश्चयरूपत्वादनैकान्त्यम्; तत्परिहारे ज्ञानस्य न सम्यङ्निश्चयरूपत्वं, मिथः प्रतिपक्षत्वात् । अतो हेतुनैर्दोष्यं ज्ञानसम्यक्त्वं च न समुच्चित्य सिध्यतीत्यन्यतराभावेऽपि न साध्यसिद्धिरित्यर्थः । कथं तस्यानभिमतत्वमित्यत्राह—**साधने चेति** । स्वविषयावरणत्वादिति भावः । ततः किमित्यत्राह—**ततश्चेति** । मृषार्थो न सत्तया कार्यकृदिति तिरोधानरूपकार्यकरत्वाभावान्नैष्फल्यमित्यर्थः । अथ किं साक्षाद्भासकत्वं हेतुः, उत प्रणाड्या, उत साक्षात्प्रणाड्या वा, उत विषयावरणनिरासकत्वमिति हेतुं चतुर्धा विकल्प्य प्रथमं दूषयति—**दृष्टान्त इति** । उपपादयति—**सर्वत्रेति** । ज्ञानस्यैव साक्षाद् भासकत्वमित्यर्थः । कुत इत्यत्राह—**सत्यपीति** । ज्ञानस्यैव साक्षात्प्रकाशकत्वोक्त्या द्वितीयशिरस्यसिद्धिश्च फलिता । तृतीयं शिर इन्द्रियेष्वनैकान्त्येन दूषयति—**इन्द्रियाणामपीति** । प्रभाया

---

१. अयं ग्रन्थः १२०१ पृष्ठे भावप्रकाशिकाग्रन्थस्यानन्तरं पठनीयः ।

२. अयं ग्रन्थः १२०५ पृष्ठे भावप्रकाशिकाग्रन्थस्यानन्तरं पठनीयः ।

इन्द्रियेभ्योऽप्यतीव व्यवधिमाह—**प्रदीपेति**। प्रकाशकत्वव्यवहारः कथमित्यत्राह—**प्रकाश-केति**। चतुर्थं शङ्कते—**नास्माभिरिति**। साध्याविशिष्टत्वमाह—**न हीति**। विरोधिनिरासात्मकं प्रकाशकत्वं न ह्यस्ति; तद्धि साध्यमित्यर्थः। तत्र संप्रतिपन्नं प्रकाश-कत्वमाह—**अपित्विति**। परिच्छेदशब्दस्य परिमितपरत्वव्युदासायाह—**व्यवहारेति**।

**श्रीभाष्यम्**

**प्रतिप्रयोगाश्च—१. विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मा-श्रयम्, अज्ञानत्वात्, शुक्तिकाद्यज्ञानवत्; ज्ञात्राश्रयं हि तत्। २. विवादाध्यासितमज्ञानं न ज्ञानमात्रब्रह्मावरणम्, अज्ञानत्वात्, शुक्ति-काद्यज्ञानवत्; विषयावरणं हि तत्। ३. विवादाध्यासितमज्ञानं न ज्ञाननिवर्त्यम्, ज्ञानविषयानावरणत्वात्; यत् ज्ञाननिवर्त्यमज्ञानं तत् ज्ञानविषयावरणम्, यथा शुक्तिकाद्यज्ञानम्। ४. ब्रह्म नाज्ञानास्पदम्, ज्ञातृत्वविरहात्, घटादिवत्। ५. ब्रह्म नाज्ञानावरणम्, ज्ञानाविषय-त्वात्; यदज्ञानावरणं तत् ज्ञानविषयभूतम्, यथा शुक्तिकादि। ६. ब्रह्म न ज्ञाननिवर्त्याज्ञानम्, ज्ञानाविषयत्वात्; यत् ज्ञाननिवर्त्याज्ञानं तत् ज्ञानविषयभूतम्, यथा शुक्तिकादि। ७. विवादाध्यासितं प्रमाणज्ञानं स्वप्रागभावातिरिक्ताज्ञानपूर्वकं न भवति, प्रमाणज्ञानत्वात्, भवदभिमताज्ञानसाधनप्रमाणज्ञानवत्। ८. ज्ञानं न वस्तुनो विना-शकम्, शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वात्, यद्वस्तुनो विनाशकं तच्छक्तिविशेषोपबृंहितं ज्ञानमज्ञानं च दृष्टम्, यथे-श्वरयोगिप्रभृतिज्ञानं, यथा च मुद्गरादि। ९. भावरूपमज्ञानं न ज्ञानविनाश्यम्, भावरूपत्वात्, घटादिवदिति।**

**श्रुतप्रकाशिका**

अथास्यानुमानस्य प्रतिकूलतर्कपराहतिमाह—**प्रतिप्रयोगाश्चेति**। तर्कस्यापि व्याप्तिमूलत्वात् **प्रयोगा** इत्युक्तम्। स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां प्रतिकूलं

यथाक्रममनुमानत्रयमज्ञानं पक्षीकृत्योच्यते । **विवादाध्यासितम्**; ब्रह्माश्रयमतदाश्रयमिति विवादाध्यासितमित्यर्थः । ततश्च शुक्त्याद्यज्ञानव्यावृत्तिः; तद्धि जीवाश्रयम् । अप्रामाणिकमपि भावरूपमज्ञानं ज्ञानमात्रं ब्रह्म चाभ्युपगम्य प्रतिकूलतर्का उच्यन्ते । शुक्त्याद्यज्ञानस्य ज्ञानानाश्रयत्वं कथमित्यत्राह—**ज्ञात्राश्रयमिति** । एवं व्याप्तिर्दर्शिता । अज्ञानत्वे ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्तं भवति । प्रतिकूलतर्कान्तरमाह—**विवादेति** । व्याप्तिं दर्शयति—**विषयावरणमिति;** अज्ञानत्वे ज्ञानानावरणत्वप्रसङ्ग इत्यर्थः । तृतीयेऽपि प्रयोगे ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः । अथ ब्रह्म पक्षीकृत्य प्रतिकूलतर्कत्रयमुच्यते—**ब्रह्मेत्यादिना** । अज्ञानाश्रयत्वे ब्रह्मणो ज्ञातृत्वप्रसङ्ग इत्यर्थः । द्वितीयेऽपि प्रयोगे ब्रह्मणोऽज्ञानावरणत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । तृतीयेऽपि ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्वे ज्ञेयत्वप्रसङ्ग इत्यर्थः । अथ प्रमाणज्ञानं पक्षीकृत्य प्रागभावव्यतिरिक्तत्वस्य प्रतिकूलतर्कमाह—**विवादाध्यासितमिति;** प्रमाणज्ञानत्वे प्रागभावातिरिक्ताज्ञानपूर्वकत्वाभावप्रसङ्ग इत्यर्थः । यद्वा अनुमानमेवेदम्; धारावाहिकज्ञानेषु प्रथमस्य पक्षत्वमुत्तरोत्तरज्ञानानां सपक्षत्वमपि ह्युपपद्यते । **ज्ञानं न वस्तुनो विनाशकमित्यादिना** व्यतिरेक्यनुमानमुक्तम् । व्यतिरेकव्याप्तिं द्विधा दर्शयति—**यद्वस्तुन इति** । शक्तिविशेषोपबृंहणविरहे सति ज्ञानत्वादिति विशिष्टो हि हेतुः । तत्र शक्तिविशेषानुपबृंहितज्ञानव्यतिरिक्तत्वाविशेषात् शक्तिविशेषोपबृंहितं ज्ञानं शक्तिविशेषानुपबृंहितमज्ञानं च द्वयमपि व्यतिरेकव्याप्तिभूमिरित्युभयत्र व्याप्तिर्दर्शिता । भावरूपमज्ञानं पक्षीकृत्याह—**भावरूपमिति** । भावरूपत्वे ज्ञानमात्रनिवर्त्यत्वं न स्यादित्यर्थः ।

भावप्रकाशिका

अनुमानपक्षस्योभयसिद्धत्वस्यापेक्षितत्वान्नेदमनुमानरूपम्, अपितु प्रतिकूलतर्करूपमित्यभिप्रयन्नाह—**अथास्यानुमानस्येति** । प्रयोगशब्दस्यानुमान एव प्रयोगप्रसिद्धिमाशङ्क्याह—**तर्कस्यापि व्याप्तिमूलत्वादिति** । **यथाक्रममनुमानत्रयमिति;** प्रतिकूलतर्कत्रयमित्यर्थः । ननु कथमेषामेतदनुमानप्रतिरोधित्वम्? प्रत्युत स्वविषयावरणस्वदेशगतेतिविशेषणानुकूलत्वमेव; ताभ्यां हि विशेषणाभ्यां ज्ञानसमानाश्रयं ज्ञानसमानविषयं ह्यज्ञानं साध्यते; तत्कथं प्रकृतानुमानविरुद्धमिति चेत्—न, अर्थानवबोधात् । स्वदेशगतत्वस्वविषयावरणत्वस्वनिवर्त्यत्वानां साधनं चिन्मात्राश्रितत्वचिन्मात्रविषयत्वप्रतिकूलं यथाक्रममनुमानत्रयमज्ञानं पक्षीकृत्योच्यत इत्यर्थः । अज्ञानं न प्रमात्राश्रितं, नापि प्रमेयजडविषयकम्;

अपितु चिन्मात्राश्रितं चिन्मात्रविषयकं चेति वदतः स्वदेशगतस्वविषयावरणेत्यनुमानोक्ति-विरुद्धेति पर्यवसितोऽर्थः। **ज्ञानानाश्रयत्वप्रसङ्ग इत्युक्तमिति;** अज्ञानं चेत्, ज्ञानं नाश्रये-दित्यर्थः। **ब्रह्मणो ज्ञाननिवर्त्याज्ञानत्व इति;** ज्ञाननिवर्त्याज्ञानविषयत्व इत्यर्थः। **उत्तरोत्तरज्ञानानां सपक्षत्वमपि ह्युपपद्यत इति;** अपिशब्दो भिन्नक्रमः; अज्ञानानुमितिवत् उत्तरोत्तरज्ञानानामपीत्यर्थः। अतो भाष्योक्तस्याज्ञानसाधनप्रमाणज्ञानस्यापि दृष्टान्तत्वं न विरुध्यत इति द्रष्टव्यम्। यद्वा अज्ञानसाधकप्रमाणज्ञानस्योभयसंप्रतिपन्नत्वाभावात् उत्तरोत्तरज्ञानानां सपक्षत्वमुक्तमिति द्रष्टव्यम्। **न वस्तुनो विनाशकमिति;** प्रागभावस्याभावरूपस्यावस्तुत्वात् वस्तुत्वेऽपि ज्ञानस्य स्वप्रागभावविनाशरूपत्वेन विनाशकत्वाभावाद्वा न बाध इति भावः। **व्यतिरेकव्याप्तिं द्विधा दर्शयतीति;** ईश्वरयोगिज्ञानादौ शक्तिविशेषोपबृंहणविरहरूपविशेषणविरहेण मुद्गरादौ ज्ञानत्वरूपविशेष्य-विरहेणेति दर्शयतीत्यर्थः। भाष्ये—**अज्ञानं च दृष्टमिति;** ज्ञानमिदं च दृष्टमित्यर्थः।

श्रुतप्रदीपिका

प्रतिकूलतर्कानाह—**प्रतीति**। व्याप्तिमूलत्वात् प्रयोगा इत्युक्तम्। अज्ञानं पक्षीकृत्य प्रसङ्गत्रयमुच्यते—**विवादेति**। ब्रह्माश्रयमतदाश्रयमिति विवादः। अज्ञानत्वे ज्ञानानाश्रयत्वप्रसङ्गः, ज्ञानानावरणत्वप्रसङ्गश्च। ज्ञेयानावरणत्वे ज्ञानानिवर्त्यत्वप्रसङ्ग इत्यर्थः। ब्रह्म पक्षीकृत्य प्रसङ्गत्रयमाह—**ब्रह्मेति**। अज्ञानाश्रयत्वे ज्ञातृत्वप्रसङ्गः। अज्ञानावरणत्वे ज्ञेयत्वप्रसङ्गः। ज्ञाननिवर्त्याज्ञानत्वेऽपि ज्ञेयत्वप्रसङ्ग इत्यर्थः। मानज्ञानं पक्षीकृत्य प्रागभावातिरिक्तत्वस्य प्रतिकूलतर्कमाह—**विवादेति**। व्यतिरेकिणमाह—**ज्ञानमिति**। विशिष्टस्य हेतुत्वात् तदभाव उभयत्र दर्शितः। भावरूपमित्यादिना च प्रसङ्गः।

श्रीभाष्यम्

**अथोच्येत—बाधकज्ञानेन पूर्वज्ञानोत्पन्नानां भयादीनां विनाशो दृश्यत इति; नैवम्; न हि ज्ञानेन तेषां विनाशः, क्षणिकत्वेन तेषां स्वयमेव विनाशात्; कारणनिवृत्त्या च पश्चादनुत्पत्तेः। क्षणिकत्वं च तेषां ज्ञानवदुत्पत्तिकारणसंनिधान एवोपलब्धेरन्यथानुपलब्धेश्चावगम्यते। अक्षणिकत्वे च भयादीनां भयादिहेतुभूतज्ञानसंततावविशेषेण सर्वेषां ज्ञानानां भयाद्युत्पत्तिहेतुत्वेनानेकभयोपलब्धिप्रसङ्गाच्च।**

### श्रुतप्रकाशिका

भावरूपत्वज्ञानानिवर्त्यत्वयोर्न व्याप्तिः, भयादेर्भावरूपस्य ज्ञाननिवर्त्यत्वदर्शनादिति व्याप्तिभङ्गमाशङ्कते—**अथोच्येतेति।** **पूर्वज्ञानोत्पन्नानाम्;** पूर्वभ्रान्तिज्ञानोत्पन्नानामित्यर्थः। बाधकज्ञानोदयात् प्राग्भयानुवृत्तेस्तदुत्पत्तेः पश्चाद्भयादिनिवृत्तेश्चेति भावः। परिहरति—**नैवमिति।** फलविनाश्यानि हि स्वाश्रयविनाशाधीननश्वरव्यतिरिक्तक्षणिकानि। उक्तविशेषणेन ज्वालाव्यावृत्तिः। तथा भयाद्यपि कम्पादिकार्यं जनयित्वा स्वयं नश्यतीत्यर्थः। न भयादेः क्षणिकत्वं, चिरोपलब्धेरिति चेत्—न; कारणभूतभ्रान्तिज्ञानाद्यनुवृत्त्या भयादिसंतत्युत्पत्तेर्हि चिरोपलब्धिः। तर्हि सदा भयसंततिरुपलभ्येतेति चेत्, अत्राह—**कारणनिवृत्त्या च पश्चादनुत्पत्तेरिति;** कारणभूतभ्रान्तिज्ञानादिनिवृत्त्या कार्यभूतभयादिसंतत्यनुत्पत्तेर्न सदोपलब्धिरित्यर्थः। **पश्चादनुत्पत्तेरिति** पञ्चम्याः 'क्षणिकत्वेन' इति पूर्वत्रान्वयः। कारणनिवृत्त्या च पश्चादनुत्पत्तेः सिद्धेन क्षणिकत्वेन स्वयमेव विनाशादित्यर्थः। यद्वा न क्षणिकत्वमिति शङ्कायामुपपन्नं क्षणिकत्वमित्यर्थवशादाकृष्टेन वाक्येनान्वयः। एवं क्षणिकत्वानुबन्धिचोद्यपरिहारः कृतः। यद्वा "नैवम्" इति दूषणप्रतिज्ञामुपपादयितुं यावद्बाधं भयस्वरूपानुवृत्तेरसिद्धिमाह—**क्षणिकत्वेनेति।** बाधकज्ञानानन्तरनिवृत्तेरन्यथासिद्धिमाह—**कारणनिवृत्त्या चेति।** तत् क्षणिकत्वं कुतः सिद्धमिति शङ्कायां तदुपपादयति—**क्षणिकत्वं चेति।** स्थायिनो हि घटादयो दण्डचक्रादिकारणनिवृत्तावप्युपलभ्यन्ते; न तथा ज्ञानदीपज्वालादिः। तथा भयादेरपि कारणसंनिधानतन्निवृत्त्यनुविधायिसद्भावासद्भावतया क्षणिकत्वं निश्चितमित्यर्थः। विपक्षे बाधमाह—**अक्षणिकत्वे चेति।** स्थायिनो हि घटादयः प्रतिक्षणमुत्पाद्यमाना बहवो युगपदुपलभ्यन्ते; तथात्रापि प्रसज्जेदिति भावः। अतो न भयादिकं ज्ञाननिवर्त्यम्; स्वयमेव क्षणिकतया नश्यति। भयसंतत्युच्छेदो भ्रान्तिज्ञानपरंपरारूपकारणनिवृत्त्या। तन्निवृत्तिश्च दोषनिवृत्त्या। 'नायं सर्पो रज्जुरेषा' इति ज्ञानं स्वविषयव्यवहारहेतुः, न तु साक्षाद्भयादिनिवृत्तिहेतुः। रज्जुत्वं हि सर्पव्यावृत्तिः। अतः सर्पव्यावृत्तिरूपरज्जुत्वज्ञानाभावेन सर्पबुद्ध्यनुवृत्त्या पाश्चात्यभयानुवृत्तिः। सर्पव्यावृत्तिरूपरज्जुत्वज्ञानेन सर्पपारमार्थ्याभिमाननिवृत्त्या भयनिवृत्तिरिति सर्वाभ्युपगतप्रकारेण दूषणमुक्तम्। स्वपक्षे तु ज्ञानविशेष एव भयादिः क्षणिकतया स्वयं नश्यति। भयादिरूपज्ञानानुवृत्तिस्तु दोषात् सर्पादिभ्रमानुवृत्तिमूला। तन्निवृत्त्या च तत्संततिनिवृत्तिरिति परिहारः।

## भावप्रकाशिका

**पूर्वभ्रान्तिज्ञानोत्पन्नानामितीति ;** भ्रान्तित्वेन ज्ञायमानपूर्वज्ञानोत्पन्नानामित्यर्थः; बाध्यज्ञानोत्पन्नानामिति यावत्। न तु वस्तुसत् भ्रान्तित्वं विवक्षितम्, प्रमितिजन्यभयस्यापि भ्रमरूपबाधकज्ञानेन निवृत्तिदर्शनादिति द्रष्टव्यम्। **क्षणिकत्वेन स्वयमेव नश्यतीति** भाष्यमयुक्तम्; दीपज्वालादौ व्यभिचारात्, तस्य कारणनाशनाश्यत्वेन स्वयमेव नाशाभावात्; किंच नाशकाभावेऽपि नाशे अहेतुककार्योत्पत्तिप्रसङ्ग इत्याशङ्क्य 'क्षणिकत्वात् स्वयमेव नश्यति' इत्यस्य कारणनाशाद्यनाश्यं क्षणिकं फलविनाश्यमित्यर्थ इत्याह—**फलविनाश्यानि हीति। उक्तविशेषणेनेति ;** यत् क्षणिकं तत् फलविनाश्यमित्युक्ते ज्वालादौ व्यभिचारः स्यात्; समवायिकारणनाशाद्यनाश्यं क्षणिकं फलविनाश्यमित्युक्ते तु न व्यभिचार इति भावः। **तथा भयाद्यपीति ;** तथा च भयाद्यपीत्यर्थः। **तर्हि सदा भयसंततिरुपलभ्येतेति ;** नन्वयं दोषोऽक्षणिकत्ववादिनोऽपि समान एव, भयस्याक्षणिकत्वे सर्वदोपलब्धिप्रसङ्ग इत्यापादनसंभवादिति चेत्—सत्यम्; कस्यचित् तटस्थस्येदृशशङ्कासंभवात्। केचित्तु—बाधकज्ञानेन तेषामनाशे उत्पन्नबाधकज्ञानस्यापि पुंसो भयोपलम्भः किं न स्यादित्याशङ्क्य, किं पूर्वभयोपलम्भ आपाद्यते? उतोत्तरभयोपलम्भ इति विकल्प्य पूर्वस्य स्वत एव नष्टत्वात् उत्तरस्य च कारणाभावेनानुत्पत्तेर्न भयोपलम्भप्रसङ्ग इत्याह भाष्ये—**क्षणिकत्वेन तेषामित्यादिनेति** टीकातात्पर्यं वदन्ति। **अनन्तरनिवृत्तेरन्यथासिद्धिमाहेति ;** अत्र केचित्—"क्षणिकत्वेन तेषां स्वयमेव नाशात्" इति ग्रन्थेनैव यावद्बाधं भयस्वरूपानुवृत्तेरनन्तरनिवृत्तेश्च हेतोरन्यथासिद्धिः संभवति; किंच "कारणनिवृत्त्या पश्चादनुत्पत्तेः" इत्यनेनानन्तरनिवृत्तेरन्यथासिद्धिरपि दुर्वचा, तस्य ग्रन्थस्य तदन्यथासिद्ध्युपपादकत्वाभावादिति चोदयन्ति। ननु तन्निवृत्तिर्दोषनिवृत्त्या चेत् 'नायं सर्पो रज्जुरेषा' इति ज्ञानस्योपदेशो न स्यादित्याशङ्क्य रज्जुत्वज्ञानस्य रज्जुत्वरूपविशेषादर्शनरूपदोषनिवृत्तिद्वारा सर्पपारमार्थ्याभिमानरूपभ्रमोत्पत्तिप्रतिबन्धमुखेन भयानुत्पत्तिहेतुत्वमित्यभिप्रयन्नाह—**नायं सर्पो रज्जुरेषेति ज्ञानमिति। स्वविषयव्यवहारहेतुरिति** दृष्टान्तार्थम्। यथा साक्षात् स्वविषयव्यवहारहेतुर्नैवं भ्रमनिवृत्तौ साक्षाद्धेतुरिति भावः। न च विशेषादर्शनरूपदोषस्य तन्निवर्त्यत्वाभ्युपगमेऽपि ज्ञानस्य वस्तुनाशकत्वाभ्युपगमप्रसङ्ग इति वाच्यम्, भावस्यैव विनाश्यत्वानभ्युपगमेन विशेषादर्शनस्य विनाश्यत्वाभ्युपगमे दोषाभावात्। न च

सिद्धान्ते भावातिरिक्ताभावानभ्युपगमाद्विशेषादर्शनमपि भाव एवेति वाच्यम्, ज्ञानं स्वप्राग-भावव्यतिरिक्तविनाशकं नेत्यभ्युपगमे विरोधाभावादिति भावः।

श्रुतप्रदीपिका

व्यभिचारं शङ्कते—**अथेति**। परिहरति—**नैवमिति**। **स्वयमेव विनाशादिति;** आश्रयविनाशाधीनस्वनाशादीपादीतरक्षणिकानि फलनाश्यानीति भावः। भयादेश्चिरोपलम्भस्तु कारणानुवृत्त्या। भयादेः पश्चान्निवृत्तिः कथमित्यत्राह—**कारणेति**। क्षणिकत्वं कथमि-त्यत्राह—**क्षणिकत्वं चेति**। अन्यथानिष्टमाह—**अक्षणिकत्वे चेति**। स्थिरत्वे घट इव युगपत् बहूनि भयानि दृश्येरन्नित्यर्थः।

श्रीभाष्यम्

**स्वप्रागभावव्यतिरिक्तवस्त्वन्तरपूर्वकमिति व्यर्थविशेषणोपादानेन प्रयोगकुशलता चाविष्कृता। अतोऽनुमानेनापि न भावरूपाज्ञान-सिद्धिः। श्रुतितदर्थापत्तिभ्यामज्ञानासिद्धिरनन्तरमेव वक्ष्यते। मिथ्यार्थस्य हि मिथ्यैवोपादानं भवितुमर्हतीत्येतदपि "न विलक्षणत्वात्" इत्यधि-करणन्यायेन परिह्रियते। अतोऽनिर्वचनीयाज्ञानविषया न काचिदपि प्रतीतिरस्ति। प्रतीतिभ्रान्तिबाधैरपि न तथाभ्युपगमनीयम्; प्रतीयमान-मेव हि प्रतीतिभ्रान्तिबाधविषयः। आभिः प्रतीतिभिः प्रतीत्यन्तरेण चानुपलब्धमासां विषय इति न युज्यते कल्पयितुम्।**

श्रुतप्रकाशिका

एवमर्थदूषणमुक्तम्। अथ प्रयोगदूषणमाह—**स्वप्रागभावेति**। स्वशब्दः प्राक्-शब्दोऽभावव्यतिरिक्तशब्दोऽन्तरशब्दश्च निरर्थकाः। वस्तुशब्दो हि भाववाची। अनुमानेन भावरूपाज्ञानासिद्धिं निगमयति—**अत इति**। श्रुत्यर्थापत्तिभ्यां तत्सिद्धिमाशङ्क्याह—**श्रुतीति**। अनिर्वचनीयत्वे परोक्तहेतुं विस्तरेण दूषयति—**प्रतीतीति**। **प्रतीतिः;** भ्रान्त्य-भ्रान्तिसाधारणरूपा। **भ्रान्तिः;** विद्यमानभेदाग्रहणपूर्वकसाधारणाकारग्रहणजन्या स्वविषया-न्यथात्वविशेषिता प्रवृत्त्यादिहेतुभूता। **बाधः;** आरोपितविरुद्धाधिष्ठानाकारावगाहिनी बुद्धिः। **न तथाभ्युपगमनीयम्;** नानिर्वचनीयत्वेनाभ्युपगमनीयमित्यर्थः। प्रतीतिभ्रान्तिबाधानां

स्वविषयोल्लेखमात्रेण वा अन्यथानुपपत्त्या वा अनिर्वचनीयसिद्धिरिति विकल्पमभिप्रेत्य प्रथमं दूषयति—**प्रतीयमानमिति**। **प्रतीयमानम्**; प्रतीत्युल्लिख्यमानम्। न हि नीलोल्लेखः पीतोल्लेखतयाङ्गीकार्यः; तथा सति सर्वोपप्लवप्रसङ्गादिति भावः। द्वितीयं दूषयति—**आभिरिति**। **आभिः प्रतीतिभिः**; प्रतीतिभ्रान्तिबाधशब्दोपात्ताभिः प्रत्यक्षप्रतीतिभिः। **प्रतीत्यन्तरेण**; प्रमाणान्तरजन्येन। यद्वा **आभिः**; लौकिकप्रतीतिभिः। **प्रतीत्यन्तरेण**; आगमजन्येन। यद्वा **आभिः प्रतीतिभिः**; एकाधिष्ठाने सर्पभूदलनाम्बुधारादिबहुत्वाभिप्रायं बहुवचनम्। **प्रतीत्यन्तरेण**; बाधज्ञानेन।

### भावप्रकाशिका

**विद्यमानभेदाग्रहणेति**; विद्यमानस्य भेदस्याग्रहणमित्यर्थः। **स्वविषयान्यथात्वेति**; अन्यस्यान्यात्मनाऽवभास इत्यर्थः। अत्रान्यस्यान्यात्मनेत्येव भ्रान्तिस्वरूपम्; इतरांशेन तत्कार्यकारणयोः कीर्तनमिति द्रष्टव्यम्। **स्वविषयोल्लेखमात्रेणेति**; किमनिर्वचनीयोल्लेखित्वादासां प्रतीतीनां तत्र प्रामाण्यम्? उत सतो वाऽसतो वा प्रतीतिभ्रान्तिबाधविषयत्वासंभवादनिर्वचनीयत्वं कल्प्यत इत्यर्थः। उपपत्तिनिरपेक्षाणामेवैषां घटादिविषये 'अयं घटः' इति प्रत्यक्षस्येव तत्र प्रामाण्यम्? उतोपपत्तिभिर्निष्कृष्यमाणानामेवेति पर्यवसितोऽर्थः। **प्रतीत्युल्लिख्यमानमिति**; न च विषयत्वमपि ह्युल्लिख्यमानत्वमेवेति प्रतीत्युल्लिख्यमानमेव प्रतीतिभ्रान्तिबाधोल्लिख्यमानमित्युक्ते प्रयोज्यप्रयोजकाभेद इति वाच्यम्, उल्लिख्यमानमेवोल्लिख्यमानतयाऽभ्युपगन्तुं युक्तमित्यर्थकत्वेनादोषात्।

### श्रुतप्रदीपिका

शब्ददोषमाह—**स्वेत्यादि**। वस्तुशब्दो भावे प्रचुरप्रसिद्धिरिति भावः। अन्तरशब्दश्च व्यर्थः। अनुमानदूषणं निगमयति—**अत इति**। श्रुतीत्यादि स्फुटम्। अनीर्वाच्यासिद्धिं निगमयति—**अत इति**। ख्यातिबाधान्यथानुपपत्तिमाशङ्क्याह—**प्रतीतीति**। **प्रतीतिः** भ्रान्त्यभ्रान्तिसाधारणं रूपम्। उपपादयति—**प्रतीयमानमिति**। ततः किमित्यत्राह—**आभिरिति**; पूर्वज्ञानेन बाधकज्ञानेन चेत्यर्थः। पूर्वं सदित्युत्तरमसदिति हि गोचरयति।

### श्रीभाष्यम्

**शुक्त्यादिषु रजतादिप्रतीतेः प्रतीतिकालेऽपि तन्नास्तीति बाधेन चान्यस्यान्यथाभानायोगाच्च सदसदनिर्वचनीयमपूर्वमेवेदं रजतं दोष-**

वशात् प्रतीयत इति कल्पनीयमिति चेत्—न ; तत्कल्पनायामप्यन्यस्यान्यथाभानस्यावर्जनीयत्वात् । अन्यथाभानाभ्युपगमादेव ख्यातिप्रवृत्तिबाधभ्रमत्वानामुपपत्तेरत्यन्तापरिदृष्टाकारणकवस्तुकल्पनायोगात् । कल्प्यमानं हीदमनिर्वचनीयं न तावदनिर्वचनीयमिति प्रतीयते, अपितु परमार्थरजतमित्येव। अनिर्वचनीयमित्येव प्रतीतं चेत् भ्रान्तिबाधयोः प्रवृत्तेरप्यसंभवः। अतोऽन्यस्यान्यथाभानविरहे प्रतीतिप्रवृत्तिबाधभ्रमत्वानामनुपपत्तेः तस्यापरिहार्यत्वाच्च शुक्त्यादिरेव रजताद्याकारेणावभासत इति भावताभ्युपगतव्यम्।

श्रुतप्रकाशिका

संक्षिप्तस्य दूषणस्य विस्तरार्थं परमतमनुवदति—**शुक्त्यादिष्विति । अन्यस्यान्यथाभानायोगाच्चेति** ; ननु कथमन्यथाभानायोगः? उच्यते—न तावद्धर्मधर्मिणोर्मिथस्तादात्म्यभानमन्यथाभानम् । पुरोऽवस्थितशुक्लभास्वरशकलं न रजतत्वजातीयतया प्रतीयते । रजतत्वं च न भास्वरशकलतया प्रतीयते । शकलं च शकलत्वेन जातिश्च जातित्वेन प्रतीयते । तस्मान्नानयोरन्यतरस्य तदितरत्वभानमिति । नापि धर्म्यन्तरस्य धर्म्यन्तरतादात्म्यमन्यथात्वम् । तत्किं विषयगतम्? उत ज्ञानगतम्? विषये तदन्यथात्वमस्ति चेत् यथार्थैव प्रतीतिः । नास्ति चेत् असत्ख्यातिप्रसङ्गः। यदि ज्ञानगतं, विषयोऽन्यः ज्ञानमन्यदेवेति नोपपद्यते । न हि घटज्ञानस्य पटज्ञानत्वसंभवः । आत्मख्यातिप्रसङ्गश्च, ज्ञानाकारत्वात् । रजतादेः स्वस्मिन्नसताऽऽकारेण ख्यानमन्यथाख्यानमिति चेत्—न; असत्ख्यातिप्रसङ्गात् । अन्यत्र सतोऽन्यत्र ख्यानं ख्यानस्यान्यथात्वमिति चेत्—न, खण्डे दृष्टस्य गोत्वस्य मुण्डे दर्शनस्यापि भ्रमत्वापातात् । अन्यत्रैव सतोऽन्यत्र ख्यानमन्यथात्वमिति चेत्, अन्यत्रैव सत्त्वं कथं निश्चीयते? इह बाधादिति चेत्—न, भ्रान्तिज्ञानबाधितस्य सत्यरजतस्याप्यत्रासत्त्वनिश्चयप्रसङ्गात् । प्रवृत्तिबाधादन्यत्रैव सत्त्वनिश्चय इति चेत्—न; मन्त्रौषधादिप्रतिबद्धस्याग्नेरपि स्फोटजननादिप्रवृत्तिबाधेन मिथ्यात्वनिश्चयप्रसङ्गात् । दुष्टकारणजन्यज्ञानविषयत्वादिह बाध्यत इति चेत्—कथं दुष्टकारणजन्यत्वनिश्चयः? बाधकज्ञानोदयादिति चेत्, पूर्वज्ञानमेव बाधकं स्यात्; परत्वस्याकिंचित्करत्वं हि दर्शितम् ।

पूर्वज्ञानस्य दुष्टकारणजन्यत्वे निश्चिते पाश्चात्त्यज्ञानस्य बाधकत्वनिश्चयः; तस्य बाधकत्वे निश्चिते पूर्वस्य दुष्टकारणजन्यत्वनिश्चय इत्यन्योन्याश्रयश्च स्यात्। किंच यत्तावद्रजतं पुरोवर्तिनि भातं तस्यैवान्यत्र सत्त्वे किं प्रमाणम्? न तावत्पूर्वज्ञानम्, अत्र सत्त्वेन हि तदवगमयति। न बाधकज्ञानं च; तद्धि पुरोवर्तिन्यसत्त्वमवगमयति। नापि रजतग्राहक-प्रमाणम्; तत्खल्वापणे रजतसत्तामवगमयति; न तु तस्य पुरतः ख्यातस्य चैक्यम्। क्वचिदप्यसतः ख्यानायोगादन्यत्र सत एव ख्यातत्वं निश्चीयत इति चेत्—न, असतः ख्यानायोगस्य संबन्धे परित्यक्तत्वात्। न हि पुरोवर्तिनि रजतधर्मिसंबन्धो रजतत्व-जातिसंबन्धो वान्यत्र विद्यते। नन्वन्यत्र संबन्धमात्रमस्ति, तदिह प्रकाशत इत्यन्यत्र सत एवान्यत्र ख्यानमिति चेत्—न; संबन्धद्वयानवभासात्। अन्यत्र सतः संबन्धस्यान्यत्र ख्याने संबन्धिन इव संबन्धान्तरमपेक्षितम्। संबन्धान्तरावभासे चान्यत्र सतः ख्यानं न स्यात्, द्वितीयसंबन्धस्य क्वचिदप्यसत्त्वात्। संबन्धस्य संबन्धान्तरानपेक्ष-त्वात् संबन्धान्तराभावेऽपि पुरोवर्तिनि भानं युक्तमिति चेत्, एवं तर्हि संबन्ध्यन्तरसंबन्धः पुरोवर्ति च निरन्तरं भातमिति यथार्थख्यातिरेवोक्ता स्यात्; ख्यातांशस्य सत्त्वात्, असतः कस्यचित् ख्यातत्वाभावाच्च। किंच शुक्तिशकलस्यैव रजतज्ञानविषयत्वं, रजतोपायान्यत्वे सति रजतार्थप्रवृत्तिविषयत्वादिति साधयितुमप्ययुक्तम्; तथाहि—इदमर्थस्य रजतत्वजाति-विशिष्टताज्ञानविषयत्वं हि साध्यम्; तद्बाधितप्रवृत्तिविषयत्वप्रयुक्तमिति हेतोः सोपाधि-कत्वम्। शुक्तिर्न रजततया भाति, शुक्तित्वात् संप्रतिपन्नवदिति बाधः। एवमादिदूषणा-भिप्रायेण—**अन्यस्यान्यथाभानायोगाच्चे**त्युक्तम्। दूषयति—**नेति**। अन्यत्रैव सताऽऽकारेण पुरोवर्तिनो विशिष्टताज्ञानमन्यथाभानम्। प्रतिपन्नाकारस्य पुरोवर्तिन्यभाव-निश्चयश्च प्रवृत्तिबाधसचिवात् 'नास्ति' इति प्रत्ययात्। न हि प्रतिबद्धाग्नेरग्नित्वं नास्तीति प्रत्यय इति प्रसिद्धम्। कथं तत्कल्पनायामप्यन्यथाभानस्यावर्जनीयत्वमित्यपेक्षा-यामाह—**कल्प्यमानं हीति**। अनिर्वचनीयमित्येव प्रतीत्यभ्युपगमे प्रतीतेर्भ्रमरूपत्वं बाधः प्रवृत्तिश्च न स्युः। अनिर्वचनीयं निर्वचनीयत्वेन प्रतीतं चेदन्यस्यान्यथावभासोऽवर्जनीयः स्यादित्यर्थः। **तस्यापरिहार्यत्वाच्चेति; तस्य**; अन्यथाभानस्य। अयमभिप्रायः—नान्यस्यान्यथाभानं, विद्यमानस्यैव प्रतीतेः। अलौकिकं सत् लौकिकं सच्चेति द्विविधं सत्; अनिर्वचनीये चालौकिकं सत्त्वमस्ति; अत्र तदलौकिकं सद्रजतं प्रतीयत इति चेत्—किमलौ-

किंकं सत् अलौकिकसत्त्वेन प्रतीयते ? उत लौकिकसत्त्वेन ? प्रथमे भ्रमत्वबाधप्रवृत्त्य-संभवः । अलौकिकं लौकिकं सदिति प्रतीतं चेत् अन्यस्यान्यथाख्यानं स्यात् । अलौ-किकसतो लौकिकसता भेदाग्रहात् प्रवृत्त्यादिसंभव इति चेत्, तर्हि तत्रानिर्वचनीयं वस्तु कल्पयित्वा तत्र भेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादनादपि प्रथमत एव संप्रतिपन्नरजतात् शुक्तित्वरूपभेदाग्रहेण प्रवृत्तिबाधभ्रमत्वोपपादने कल्पनालाघवादनिर्वचनीयं वस्त्वनुपपन्नमित्या-दिपदकपरंपरामभिप्रेत्य **तस्यापरिहार्यत्वाच्चे**त्युक्तम् ।

### भावप्रकाशिका

**विस्तरार्थं परमतमनुवदतीति ;** ननु प्रतीतिभ्रान्तिबाधैरज्ञानस्यानिर्वचनीयत्वं प्रागुपन्यस्तम् ; अधुना शुक्तिरूप्ये प्रतीतिभ्रान्तिबाधा उपन्यस्यन्त इति वैरूप्यात् कथमेतस्य पूर्वोक्तविस्तररूपत्वमिति चेत्—न, पूर्ववाक्यस्यापि शुक्तिरूप्यविषयत्वेन विरोधाभावात् । नन्वेवमपि "शुक्त्यादिषु रजतादिप्रतीतेः" इत्यादिभाष्यस्य पूर्वोक्तार्थविस्तररूपत्वं न संभवति; पूर्वं हि शुक्तिरूप्यादेः प्रतीतिभ्रान्तिबाधविषयत्वं सिद्धवत्कृत्य तदन्यथानुपपत्त्याऽ-निर्वचनीयत्वं साधितम् ; इदानीम् "अन्यस्यान्यथाभानायोगाच्च" इत्यन्यथाख्यात्यसंभव एव प्रतिपाद्यते; कथमनयोः संकोचविस्तररूपत्वमिति चेत्—न; अन्यथाख्यातिरूपभ्रमा-संभवात् सद्भिन्नविषयत्वेन च भ्रमत्वस्योपपाद्यत्वात् तादृशभ्रमविषयत्वानुपपत्तिरेवेहापि प्रमा-णीक्रियत इति संक्षेपविस्तररूपत्वे नानुपपत्तिरिति द्रष्टव्यम् । **अस्ति चेद्यथार्थैव प्रतीति-रिति;** इदं च दूषणं धर्मधर्मिणोर्मिथस्तादात्म्यपक्षेऽपि समानम् । **ज्ञानगतमन्यथात्वमि**त्यत्र किं शुक्तिज्ञानस्य रजतज्ञानत्वमन्यथात्वमित्यर्थः? उत शुक्तिज्ञानस्य रजतरूपत्वमन्यथात्व-मिति विकल्प्याद्यं दूषयति—**विषयोऽन्यो ज्ञानमन्यदेवेति नोपपद्यत इति ;** अन्य-विषयकज्ञानेऽन्यविषयकज्ञानत्वं नास्तीत्यर्थः । ततश्चासतो ज्ञानान्तरतादात्म्यस्य ख्याने असत्ख्यातिप्रसङ्ग इति भावः । द्वितीयं दूषयति—**आत्मख्यातिप्रसङ्गश्चेति । न हि पुरोवर्तिनि रजत इति ;** न हि पुरोवर्तिनि रजताभेद इत्यर्थः । **अन्यत्र संबन्धमात्र-मिति ;** शुक्तिरजततादात्म्यस्य वा शुक्तिरजतवैशिष्ट्यस्य वा असत्त्वेऽपि रजतत्ववैशिष्ट्यस्य वा रजततादात्म्यस्य वा सत्यरजते प्रसिद्धत्वादिति भावः । **संबन्धद्वयानवभासादिति ;** अन्यत्र सतः संबन्धस्यान्यत्र भाने संबन्धसंबन्धो भासत इत्यर्थः स्यात् ; ततश्च संबन्धद्वय-भानप्रसङ्ग इत्यर्थः । शङ्कते—**संबन्धस्य संबन्धान्तरानपेक्षत्वादिति । निरन्तरं**

**भातमिति ;** अगृहीतासंसर्गतयैकप्रतीत्युपारूढमित्यर्थः । **न हि प्रतिबद्धेति ;** ततश्च प्रवृत्तिबाधमात्रस्य न प्रयोजकत्वम् ; अपितु प्रवृत्तिबाधसचिवस्य ' नास्ति ' इति प्रत्ययस्यापीति भावः ।

**श्रुतप्रदीपिका**

परमतं विस्तरेण शङ्कते—**शुक्त्यादिष्विति । अन्यथाभानायोगाच्चेति ;**

" परस्मिन् भासामाने तु न परं भासते यतः ।
तेनान्यस्यान्यथा भानं प्रतीत्यैव पराहतम् ॥ "

इत्यादिकमनुसंधेयम् । दूषयति—**नेति ।** कथमन्यथाभानावर्जनीयत्वमित्यत्राह—**कल्प्यमानमिति ।** अलौकिकसदुपगमेऽपि दोषस्तुल्यः ; तस्य लौकिकसता भेदाग्रहे संप्रतिपन्नस्यैव तदग्रहक्लृप्तिर्वरं, लाघवात् ।

**श्रीभाष्यम्**

**ख्यात्यन्तरवादिनां च सुदूरमपि गत्वाऽन्यथावभासोऽवश्याश्रयणीयः ; असत्ख्यातिपक्षे सदात्मना, आत्मख्यातिपक्षे चार्थात्मना, अख्यातिपक्षेऽप्यन्यविशेषणमन्यविशेषणत्वेन ज्ञानद्वयमेकत्वेन च, विषयासद्भावपक्षेऽपि विद्यमानत्वेन ।**

**श्रुतप्रकाशिका**

यथार्थख्यातिव्यतिरिक्तपक्षेष्वन्यथाख्यातिपक्षः प्रबल इत्यभिप्रायेणाह—**ख्यात्यन्तरेति । सुदूरमपि गत्वा ;** पदकपरंपरामुक्त्वापीत्यर्थः । तदुपपादयति—**असदिति ;** अयं माध्यमिकपक्षः । किमसदित्येव प्रतीयते ? उत सदिति ? असदितीति चेत् भ्रमत्वबाधप्रवृत्त्यसंभवः । सदितीति चेत् अन्यस्यान्यथाभानं स्यादित्यर्थः । **आत्मेति ;** अयं योगाचारपक्षः । आत्मशब्दो ज्ञानपरः । किं ज्ञानमित्येव प्रतीतम् ? उतार्थ इति ? प्रथमे प्रवृत्तिबाधभ्रमत्वासंभवः । द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः । **अख्यातिपक्ष इति ;** 'इदं रजतम्' इति किमेकज्ञानम् ? उत ज्ञानद्वयम् ? इति विकल्पमभिप्रेत्य एकज्ञानमिति पक्षे ज्ञेयेऽन्यथाख्यातिं प्रसञ्जयति—**अन्यविशेषणमन्यविशेषणत्वेनेति ;** 'इदं रजतम्' इत्येकत्वेन संप्रतिपन्नसम्यग्रजतवदारोप्यलिङ्गानुविधायिप्रयोगानुगुणसामानाधिकरण्येन प्रतीतत्वादन्यविशेषणमन्यविशेषणत्वेन प्रतीयत इत्यापादितम् ; न तु तत्पक्ष उपन्यस्तः । ज्ञानद्वयमिति पक्षे

ज्ञानेऽन्यथाख्यातिं प्रसञ्जयति—**ज्ञानेति** । ज्ञानद्वयं किं ज्ञानद्वयमित्येव प्रतीतम्? उतैक-मिति? इति विकल्पे पूर्ववद् दूषणम् । **विषयासद्भावेति**; किमविद्यमानत्वेन प्रतीयते? उत विद्यमानत्वेन? प्रथमे प्रवृत्त्याद्यसंभवः । द्वितीयेऽन्यस्यान्यथाभानमित्यर्थः ।

### भावप्रकाशिका

**आरोप्यलिङ्गानुविधायीति**; ग्रहणस्मरणात्मकत्वे 'इदं रजतम्' इत्यपि स्यादिति भावः । **न तु तत्पक्ष उपन्यस्त इति**; तन्मते ज्ञानैक्यानभ्युपगमादिति भावः । भाष्ये—**विषयासद्भावपक्ष इति**; माध्यमिकमते ज्ञानमपि नास्ति; योगाचारमते ज्ञाना-भिन्नतया विषयोऽप्यस्ति; एतन्मते तु ज्ञानमस्ति, विषयो नास्तीति विशेषः ।

### श्रुतप्रदीपिका

यथार्थख्यातिव्यतिरिक्तेष्वन्यथाख्यातेः प्राबल्यमभिप्रयन्नाह—**ख्यात्यन्तरेति** । उक्तं विवृणोति—**असदिति** । असदिति प्रतीतं चेत् । प्रवृत्तिबाधभ्रमत्वायोगः । सदिति चेदन्यथाभानम् । एवं सर्वत्र । आत्मशब्दो ज्ञानपरः । **अख्यातीति**; ज्ञानमेकं वा अनेकं वेति विकल्पं मत्वा प्रथमं दूषयति—**अन्यविशेषणमिति**; समानाधि-करणधीबलादापादितम्; न तु तदुपगतम् ।

### श्रीभाष्यम्

**किंच—अनिर्वचनीयमपूर्वरजतमत्र जातमिति वदता तस्य जन्मकारणं वक्तव्यम् । न तावत्प्रतीतिः, तस्यास्तद्विषयत्वेन तदुत्पत्तेः प्रागात्मलाभायोगात् । निर्विषया जाता तदुत्पाद्य तदेव विषयीकरोतीति महतामिदमुपपादनम् । अथेन्द्रियादिगतो दोषः; तन्न, तस्य पुरुषाश्रय-त्वेनार्थगतकार्यस्योत्पादकत्वायोगात् । नापीन्द्रियाणि, तेषां ज्ञानकार-णत्वात् । नापि दुष्टानीन्द्रियाणि, तेषामपि स्वकार्यभूते ज्ञान एव हि विशेषकरत्वम् । अनादिमिथ्याज्ञानोपादानत्वं तु पूर्वमेव निरस्तम् ।**

### श्रुतप्रकाशिका

अथाकारणत्वमुपपादयति—**किंचेति** । **तस्याः**; प्रत्यक्षप्रतीतेः । **तद्विषयत्वेन**; विद्यमानविषयकारणकत्वेन । कारणं हि नियतपूर्वभावीति भावः । **महतामिदमुपपादन-मिति**; तस्या वृत्तिज्ञानत्वेन विषयरहितावस्थास्वीकारेण कारणत्वाभ्युपगमेऽपसिद्धान्ता-

पातात्; निर्विषयख्यातिवादिनामिव तत्प्रभावेण प्रवृत्त्यादिसिद्धावनिर्वचनीयक्लृप्तिवैयर्थ्यात्, विषयरूपकारणेन विनोत्पत्तिवचनात् विरम्य व्यापारवचनाच्चात्यन्तमनुपपन्नमित्यर्थः। **अथेन्द्रियादीति**; आदिशब्देन विषयगतदोषः पुरुषस्यानवधानं वा गृह्यते। **तस्य पुरुषाश्रयत्वेनेति**; दूरत्वादिदोषस्य विषयगतत्वेऽपि पुरुषगतत्वस्यापि संभवादुभयत्र कार्यमुत्पाद्यम्; न विषयमात्रे, नियामकाभावात्। अतः पुरुष इव विषयेऽपि न संभवतीत्यभिप्रायः। ननु चक्षुषः पुरुषाश्रयत्वेऽपि चाक्षुषरश्मेः प्रसृतस्य विषयसंबन्धस्य तत्र कार्यकरत्वं दृष्टम्—न; तत्कार्यस्य ज्ञानस्य पुरुषाश्रितत्वात् दोषांशस्याकार्यकरत्वात्। ननु विषयमात्रगताः सादृश्यादयो दोषाः सन्ति; तेषां तत्रैव कार्यकरत्वमुपपद्यते—मैवम्; सादृश्यादेर्यावद्द्रव्यभाविनः सदोत्पादकत्वप्रसङ्गात्; आगन्तोरन्यस्य तत्रादृष्टेः; इन्द्रियसंयोगस्य पुरुषगतज्ञानातिरिक्तहेतुत्वासिद्धेः; दृष्टिविषादिन्यायस्यात्रासंभवात्; संभवेऽपि सर्वैरुपलम्भप्रसङ्गाच्च। नन्विन्द्रियाणि यथा पुरुषविशेषसंबन्धात्तत्रैव कार्यविशेषमुत्पादयन्ति, एवं विषयविशेषसंबन्धात् तत्रैव किंचिज्जनयन्तु; तत्राह—**नापीन्द्रियाणीति**। पुरुषगतज्ञानाख्यकार्यकरत्वमन्वयव्यतिरेकावस्थितम्। विषये त्विन्द्रियजन्यं कार्यान्तरं न दृष्टम्। तत्क्लृप्तिरन्यथैवोपपत्त्या निरस्तेति भावः। तथापि दुष्टपुरुषसंनिधानाद्यथा देशादिषु दोषाः प्रादुःष्युः, तथा दुष्टेन्द्रियसंनिधानाद्विषये कार्यविशेषः स्यादित्यत्राह—**नापि दुष्टानीति**। अन्वयव्यतिरेकादिकमतिलङ्घ्य दृष्टान्तमात्रेण न किंचित् साधयितुं शक्यमिति भावः। किमत्र हेत्वन्तरगवेषणया? अनादिभावरूपाज्ञानमेव विश्वोपादानभूतं शुक्तिरजताद्यपि विचित्रकार्यं जनयेदित्यत्राह—**अनादीति**। तस्य स्वरूपानादित्वात्तत्कार्यमपि प्रागेव स्यात्। सहकारित्वेन शङ्कनीयमिन्द्रियादिकं तु निरस्तम्। मिथ्याभूतस्य चार्थक्रियाकारित्वमयुक्तम्। आश्रयानुपपत्त्यादयश्च पूर्वमेवोक्ता इति भावः।

### भावप्रकाशिका

**विद्यमानविषयकारणकत्वेनेति**; विषयजन्यत्वेनेत्यर्थः। कारणत्वे विद्यमानत्वमपि सिध्यतीत्यभिप्रेत्य **विद्यमाने**त्युक्तम्। **तस्या वृत्तिज्ञानत्वेनेति**; अपरोक्षवृत्तिज्ञानत्वेनेत्यर्थः। ततश्च परोक्षवृत्तिज्ञाने विषयरहितावस्थासंभवेन न दोष इति ध्येयम्। **विरम्य व्यापारवचनाच्चेति**; निर्विषयमुत्पन्नं स्वविषयमुत्पाद्य पश्चाद्विषयीकरोतीति क्रमिकव्यापारद्वयाश्रयणात् विरम्य व्यापार इति द्रष्टव्यम्। **पुरुषगतत्वस्यापि संभवादिति**; यद्यपी-

न्द्रियापेक्षया प्रमात्रपेक्षया दूरत्वं विषयगतमेव, न पुरुषगतम्, अथापि सामान्यतो दूरत्वमात्रस्य दोषत्वमिति वदन्तं प्रतीदं दूषणमिति द्रष्टव्यम्। **उभयत्रेति ;** ननु विषय इव पुरुषेऽप्यविद्यावृत्तिरूपभ्रान्त्युत्पादनेनोभयत्र कार्यमुत्पाद्यत इति शक्यं वक्तुमिति चेत्—न ; उभयत्रैकरूपकार्योत्पत्तिप्रसङ्ग इत्यत्र तात्पर्यात्। **तत्र कार्यकरत्वं दृष्टमिति ;** विषयविषयकज्ञानोत्पत्तेरिति भावः। **दोषांशस्याकार्यकरत्वादिति ;** चाक्षुषरश्म्यादेर्यथा तथा वास्तु ; दोषांशस्य तु न क्वापि भिन्नाधिकरणे कार्यजनकत्वं दृष्टम् ; अतो न प्रमात्राश्रितदोषस्य विषयनिष्ठानिर्वचनीयरजतोत्पादकत्वमिति भावः। ननु दुष्टेन्द्रियसंप्रयोगस्यागन्तुकदोषस्य संभव इत्याशङ्क्याह—**इन्द्रियसंयोगस्येति। दृष्टिविषादिन्यायस्येति ;** दृष्टौ विषं येषां ते दृष्टिविषाः, केचन सर्पविशेषाश्चक्षुरिन्द्रियसंप्रयोगेण विषमुत्पाद्य पुरुषान् घ्नन्तीति प्रसिद्धिः; तद्वत् दुष्टेन्द्रियसंप्रयोगमात्रेण रजतमुत्पाद्यतामित्याक्षेपाभिप्रायः। **तत्रैव कार्यविशेषमिति ;** पुरुषविशेष एव ज्ञानादिकमुत्पादयति, न तु पुरुषान्तर इत्यर्थः। **यथा देशादिषु दोषाः प्रादुःष्युरिति ;** संभावनायां लिङ् ; प्रादुर्भावसंभव इत्यर्थः।

### श्रुतप्रदीपिका

अथ पूर्वोक्तमकारणकत्वं विवृणोति— **किंचेति। तस्या इति ;** नियतपूर्ववर्ति हि कारणमिति भावः। इन्द्रियदोषस्येन्द्रियस्य दुष्टेन्द्रियस्य चाकारणत्वमाह— **अथेन्यादिना। अनादीति ;** अनिर्वाच्यस्याप्रामाणिकत्वादित्यर्थः।

### श्रीभाष्यम्

किंच—अपूर्वमनिर्वचनीयमिदं वस्तुजातं रजतादिबुद्धिशब्दाभ्यां कथमिव विषयीक्रियते, न घटादिबुद्धिशब्दाभ्याम्? रजतादिसादृश्यादिति चेत्, तर्हि ‘तत्सदृशम्’ इत्येव प्रतीतिशब्दौ स्याताम्। रजतादिजातियोगादिति चेत्, सा किं परमार्थभूता? अपरमार्थभूता वा? न तावत्परमार्थभूता, तस्या अपरमार्थान्वयायोगात्। नाप्यपरमार्थभूता; परमार्थान्वयायोगात्, अपरमार्थे परमार्थबुद्धिशब्दयोर्निर्वाहकत्वायोगाच्चेत्यलमपरिणतकुतर्कनिरसनेन।

### श्रुतप्रकाशिका

एवमनिर्वचनीयस्य रजतादेरुत्पादकानुपपत्तिमुक्त्वा तदुत्पत्तावपि रजतादिबुद्धिशब्दान्वयनियमानुपपत्तिमाह—**किंचेति**। तद्व्यवस्थापकं शङ्कते—**रजतादीति**। प्रातिभासिकस्य रजतादेरर्थक्रियाकारिव्यावहारिकरजतादिसादृश्यादित्यर्थः। उक्तस्य व्यवस्थापकत्वाभावमभिप्रेत्य सादृश्यस्य यथादर्शनं साध्यान्तरमाह—**तर्हीति**। यदि तत्सदृशे तद्बुद्धिः, तदा गवये गोबुद्धिवदन्यथाख्यातिः स्यादित्येवकाराभिप्रायः। सादृश्यस्यानिर्वाहकत्वेऽपि तज्जातियोगस्य तद्बुद्धिनिर्वाहकत्वं दृष्टमिति शङ्कते—**रजतादीति**। **सा**; रजतादिजातिः। **अपरमार्थान्वयायोगात्**; अपरमार्थव्यक्त्यन्वयायोगादित्यर्थः। व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग इति भावः। जातिरपि हि बाध्यते; न हि 'व्यक्तिर्नास्ति, जातिस्त्वस्ति' इति प्रतीतिः; 'जातिरपि नास्ति' इत्येव हि प्रतिपत्तिः। न च प्राक् प्रतिपन्नाया अपि जातेः पश्चादप्रतीतिरभिव्यञ्जकव्यक्त्यभावात्, न तु जात्यभावादिति वाच्यम्; अभिव्यञ्जकवति पूर्वकाले प्रतिपन्नाया अपि जातेस्तत्कालसंबन्धितयैव नास्तितागोचरत्वाद्बाधकप्रत्ययस्य; प्रतिपन्नोपाधौ 'नास्ति' इति प्रत्ययो हि बाधः। अपरमार्थपक्षं दूषयति—**नापीति**। **परमार्थान्वयायोगात्**; आपणस्थरजतव्यक्त्यन्वयायोगादित्यर्थः। व्यक्त्यवस्थानेऽपि जातेः कदाचिद्बाधितत्वप्रसङ्ग इति भावः। न हि कदाचिदप्यापणस्थरजते रजतत्वं बाध्यते। परमार्थव्यक्त्यनन्वये बाधकमाह—**अपरमार्थ इति**। **परमार्थबुद्धिशब्दयोः**; परमार्थविषयबुद्धिशब्दयोः। परमार्थव्यक्तौ जातिरनन्विता चेत् तस्याः क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनात् भ्रान्तिस्थलेऽपि परमार्थबुद्धिशब्दनिर्वाहकत्वं न स्यादित्यर्थः। यद्वा जात्यपारमार्थ्य एव दूषणान्तरं बुद्धिशब्दान्वयानुपपत्तिमाह—**अपरमार्थ इति**; तदानीं **परमार्थबुद्धिशब्दयोः**; परमार्थभूतबुद्धिशब्दयोरित्यर्थः। असत्यात्सत्योत्पत्तिनिरासमुपजीव्येदं दूषणमुच्यते। व्यक्तेस्तन्निर्वाहकत्वायोगं दर्शयितुम्—**अपरमार्थ** इत्युक्तिः। अपरमार्थजातेः परमार्थभूतबुद्धिशब्दनिर्वाहकत्वायोगाज्जात्यपारमार्थ्यमयुक्तमित्यर्थः। बुद्धिशब्दयोश्च पारमार्थ्यं तद्बाधकादर्शनादेव सिद्धम्।

### भावप्रकाशिका

भाष्ये—**सा किं परमार्थभूता, अपरमार्थभूता वेति**; सत्यरजते शुक्तिरूप्यादौ च प्रतीयमानेत्यर्थः। न च सत्यरजते सत्या, मिथ्यारजते मिथ्येति किं न

स्यादिति वाच्यम्, तदा रजतत्वजातेः साधारणत्वाभावेनोभयत्राप्यैकरूप्यस्यावक्तव्यत्वादिति भावः। **व्यक्तिबाधेऽपि जातेरबाधितत्वप्रसङ्ग इति ;** न हि 'इदं रजतम्' इति प्रतीयमानयोर्जातिव्यक्त्याकारयोरेकस्य बाध्यत्वमपरस्य नेति दृष्टम्। **आपणस्थरजतव्यक्तीति ;** रजतत्वजातिमात्रस्यापारमार्थ्याभ्युपगमेनापणस्थरजतनिष्ठरजतत्वजातेरपि तथात्वावश्यंभावादिति भावः। **कदाचित् बाधितत्वप्रसङ्ग इति ;** व्यक्तिः सती, जातिरसतीति कदाचित् बुद्धिः स्यादित्यर्थः। **क्वचिदपि परमार्थबुद्धिशब्दहेतुत्वादर्शनादिति ;** यद्यपरमार्थभूतापि जातिः परमार्थव्यक्तौ क्वचिद्वर्तेत, तदा व्यक्तिगतपरमार्थत्वैकार्थसमवायात् जातिः परमार्थभूतेत्येवं परमार्थबुद्धिशब्दयोः कथंचिन्निर्वाहकत्वदर्शनात् अपरमार्थव्यक्तिस्थलेऽप्यपरमार्थजातौ परमार्थबुद्धिशब्दयोर्निर्वाहः संभवेत्। यदि च क्वापि परमार्थव्यक्तिसंबन्धो न स्यात्, तर्हि क्वापि परमार्थबुद्धिशब्दनिर्वाहकत्वादर्शनात् भ्रान्तिस्थलेऽपि तन्निर्वाहो न स्यादित्यर्थः।

श्रुतप्रदीपिका

बुद्धिशब्दान्वयानुपपत्तिमाह—**किंचेति। सा किमिति ;** परमार्थजातेरपरमार्थव्यक्तौ अपरमार्थजातेः परमार्थव्यक्तौ चान्वयो व्याप्तिविरुद्ध इत्यर्थः। अपरमार्थपक्षे दूषणान्तरमाह—**अपरमार्थ इति।** असत्यात् सत्योत्पत्तिनिरासमुपजीव्येदमुक्तम्।

श्रीभाष्यम्

**यथार्थं सर्वविज्ञानमिति वेदविदां मतम्।**
**श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः॥**
**बहु स्यामिति संकल्पपूर्वसृष्ट्याद्युपक्रमे।**
**तासां त्रिवृतमेकैकामिति श्रुत्यैव चोदितम्॥**
**त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते।**
**यदग्ने रोहितं रूपं तेजसस्तदपामपि॥**
**शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता।**
**श्रुत्यैव दर्शिता तस्मात् सर्वे सर्वत्र संगताः॥**
**पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे।**

"नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना ॥
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ।
समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ॥
महदाद्या विशेषान्ता ह्यण्ड"मित्यादिना ततः ।
सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथाऽवदत् ॥
"त्र्यात्मकत्वात्तु भूयस्त्वात्" इति तेनाभिधाभिदा ।
सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् ॥
सोमावयसद्भावादिति न्यायविदो विदुः ।
व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः ॥
तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् ।
शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः ॥
रूप्यशुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुकः ।
रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते ॥
अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः ।
कदाचिच्चक्षुरादेस्तु दोषाच्छुक्त्यंशवर्जितः ॥
रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते ।
दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते ॥
अतो यथार्थं रूप्यादिविज्ञानं शुक्तिकादिषु ।
बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते ॥
शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः ।
नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः ।
एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः ॥

## श्रुतप्रकाशिका

अथ वक्ष्यमाणाया यथार्थख्यातेः स्वसिद्धान्तत्वं* दर्शयति—**अथवेति** । तस्याः

---

* श्रीमन्निगमान्तमहादेशिकैस्तु न्यायपरिशुद्धावित्थं निर्णयः कृतः—

"आत्मख्यात्यादिवादेषु त्वन्यथात्वमवारितम् ।
भ्रमप्रवृत्तिबाधादेरन्यथा न हि संभवः ।
एवं सत्यन्यथाधीस्तत्सामग्री वापि लाघवात् ।
अयथाव्यवहारस्य हेतुरित्येव शिष्यते ॥
सर्वैरप्यन्यथाख्यातिर्दुस्त्यजत्वाल्लघीयसी ।
तद्वादिनाप्यवर्ज्यत्वात् ततोऽप्यख्यातिलाघवम् ।
स्वारस्यमन्यथाख्यातावख्यातौ लाघवं स्थितम् ।
इति दर्शयितुं भाष्ये द्वितयं तदनुष्ठितम् ।
यन्नाथमुनिमिश्राद्यैर्यथार्थख्यातिसाधनम् ।
तल्लोकबुध्यनारोहाद्वैभवं केचिदूचिरे ।
मानाद्रूप्यादिसत्त्वेऽपि तयोरन्यतरद् ध्रुवम् ।
कार्याक्षमत्वाग्रहणात् तत्क्षमत्वग्रहेण वा ॥
ततश्चात्रान्यथाधीर्वा तद्धेतुमतिरेव वा ।
भ्रान्तिर्वस्तुविरूपस्य व्यवहारस्य कारणम् ॥"

इति । अयमाशयः—लोके शुक्तौ रजतार्थिनो विसंवादिनी प्रवृत्तिर्दृश्यते । भ्रान्त्या प्रवृत्तोऽस्मीति पूर्वोत्पन्ने ज्ञाने भ्रमत्वव्यवहारोऽपि दृश्यते । तथा नेदं रजतमिति ज्ञानबाधोऽपि दृश्यते । तदेतत्सर्वं यथार्थरजतज्ञानापेक्षया शुक्तौ रजतज्ञानस्य वैलक्षण्याभावे न संगच्छते । तथाच शुक्तौ रजतज्ञाने विसंवादिप्रवृत्तिजनकतावच्छेदकतया बाध्यतावच्छेदकतया भ्रमपदप्रवृत्तिनिमित्ततया चाविद्यमानप्रकारावगाहित्वमवर्जनीयम् । तथाचान्यथाख्यातिपक्ष एव स्वारसिकः । परंतु अन्यथाख्यातिहेतुत्वेनारोप्यधर्मासंसर्गाग्रहरूपाया अख्यातेरवर्जनीयत्वात् 'तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेन' इति न्यायात् अख्यातिपक्षे लाघवम् । एवं सति भाष्ये "अथवा" इत्यारभ्य यत् यथार्थख्यातिप्रतिपादनं स वैभववादः । पञ्चीकरणप्रक्रियया शुक्तौ रजतावयवसत्त्वेऽपि यदि रजतज्ञानं तद्विषयं तदा 'नेदं रजतम्' इति ज्ञानस्य को विषयः? न तावद्रजताभावः, रजतावयवानां तत्र सत्त्वात् । नापि कटकादियोग्यरजताभावः, तत्र तद्योग्यत्वस्य पूर्वं ग्रहे अन्यथाख्यातिः । अग्रहे प्रतीत्यभावात् तन्निषेधो न स्यात् । कटकादिकार्ययोग्यत्वासंसर्गाग्रहान्निषेध इति निर्वाहे अख्यातिपक्षः शरणीकृतः स्यादिति अख्यात्यन्यथाख्यातिपक्षयोरन्यतरेणालमिति ।

सांप्रदायिकत्वं दर्शयंस्तां प्रतिजानीते—**यथार्थमिति। वेदविदाम्;** भगवद्बोधायन-नाथमुनिमिश्रादीनामित्यर्थः। कुत इत्यत्राह—**श्रुतिस्मृतिभ्य इति।** श्रुतिं दर्शयति—**बहु स्यामितीति।** आदिशब्देन नामरूपव्याकरणमुच्यते। यद्वा "सन्मूलाः" इत्यादिवाक्योक्तं स्थितिप्रलयादिकं गृह्यते। सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन् **सृष्ट्याद्युपक्रमे।** इदं श्लोकार्धं किमर्थमिति चेत्, उच्यते—पाठक्रमेणाण्डसृष्टेः पश्चात् त्रिवृत्करणमिति ज्ञायते। अण्डसृष्टेः प्रागपि त्रिवृत्करणमस्ति, अण्डसृष्ट्यर्थत्वात् त्रिवृत्करणस्य। त्रिवृत्करणमुपायः। अण्डसृष्टिः फलम्। उत्पत्तौ फलं पश्चाद्भवति; संकल्पे तु पूर्वभावि। उपायस्तूत्पत्तौ पूर्वभावी, संकल्पे पश्चाद्भावीति लोकसिद्धं 'किं, केन, कथम्' इत्यादौ। अतो "नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणि" इत्यस्मिन् व्यष्टिसृष्टिसंकल्पवाक्ये पश्चान्निर्दिष्टमण्डसृष्ट्युपायभूतं त्रिवृत्करणम्। "नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इत्युत्पत्तिवाक्ये पूर्वनिर्दिष्टस्यापि नामरूपव्याकरणस्य फलभूतत्वात् त्रिवृत्करणस्य फलरूपसृष्टेः पूर्वभावो निश्चीयते, अर्थक्रमेण पाठक्रमबाधस्य न्याय्यत्वात्—"अग्निहोत्रं जुहोति, यवागूं पचति" इतिवत्। अस्मिन्नर्थे निदर्शनमुपक्रमते—"बहु स्यां प्रजायेय" इति वाक्यम्। अत्र 'बहु स्याम्' इति फलसंकल्पः। 'प्रजायेय' इति तदुपायसंकल्पः। अनेन न केवलं 'किं, केन, कथम्' इत्यादिलोकप्रसिध्याऽत्र त्रिवृत्करणस्य फलभूतसृष्टेः पूर्वभावित्वनिश्चयः, उपक्रमभूतसंकल्पवाक्यानुगुण्याच्चेति ज्ञापितम्। एवं त्रिवृत्करणस्याण्डसृष्टेः प्राक् सद्भावं ज्ञापयितुमुपक्रमगतसंकल्पवाक्यस्य तदनुगुणत्वज्ञापनाय 'बहु स्याम्' इत्याद्यर्धमुपात्तम्। अण्डान्तर्वर्त्यग्न्यादिषु त्रिवृत्करणस्य प्रदर्शनादण्डसृष्टेः पश्चात् त्रिवृत्करणमिति शङ्कायां श्रुतेरर्थमाह—**एवं हि प्रत्यक्षेणोपलभ्यत इति।** अग्न्यादिषु कतिपयव्यक्तिषु त्रिरूपत्वप्रदर्शनं नेयत्ताबुध्या, अपित्वण्डान्तर्भूतस्यैव प्रत्यक्षयितुं योग्यत्वात् पूर्वोक्तत्रिवृत्करणसंभावनाप्रदर्शनार्थमिति भावः। अण्डसृष्टेः प्रागेव त्रिवृत्करणमस्तीति स्पष्टं ज्ञापयति—**पुराणे चेति।** अस्यामुपनिषदि भूतत्रयसृष्टेरुक्तत्वात् सृष्टतयोक्तानां मिश्रणमुक्तम्। इदं तत्त्वान्तरसृष्टिप्रतिपादनप्रकरणेषु तेषामपि मिश्रणस्य प्रदर्शनार्थमिति ज्ञापनाय पुराणवचनोदाहरणम्। **वैष्णवे** इत्यनेन सात्त्विकत्वात् प्रामाण्यं सूचितम्, "सात्त्विकेषु च सर्वेषु विष्णोर्माहात्म्यमिष्यते" इति वचनात्। संहतत्वं समागतत्वं चेत्यवस्थाद्वयमस्ति। संहतत्वं नाम पृथक्स्थित्यर्हसंयोग-

मात्रम् । समागतत्वं पृथक्स्थित्यनर्हसंश्लेषविशेषः । एतद्द्वयाभावात् स्रष्टुं नाशक्नुवन्नित्याह— **नानावीर्या इति** । एतदुभयप्राप्त्याऽसृजन्नित्याह— **समेत्येति** । एकैकस्मिन् भूते सर्वभूतानि सन्ति चेत् सर्वे शब्दाः सर्वत्र प्रयुज्येरन्नित्यत्राह— **परस्परसमाश्रया इति** । अन्येषां भूतानां समाश्रितानामेकं भूतं समाश्रयः । आश्रिताश्रयभावश्च न्यूनाधिकभावनिबन्धनः । तत्कृता शब्दव्यवस्थेति भावः । उपात्तवचनानन्तरं "संप्राप्यैक्यमशेषतः" इति कृत्स्नशः समागतत्वमुक्तम् । 'महदादयः' इति पाठे सत्यपि वृत्तभङ्गपरिहाराय स्वसंदर्भे "महदाद्याः" इत्युक्तं भाष्यकारैः । अयमेव श्रुत्यभिप्राय इति स्थापयितुं सूत्रकारोक्तिं दर्शयति— **सूत्रेति** । ततः सूत्रकारोऽप्यवददित्यन्वयः । **ततः**; अस्यार्थस्य श्रुतिस्मृतिसिद्धत्वादित्यर्थः । एवं प्रथमं भूते भूतान्तरसद्भाव उक्तः, वक्ष्यमाणस्य सदृशे सदृशान्तरसद्भावस्योपयोगित्वात् । **तेनाभिधाभिदा**; भूयस्त्वेनाभिधानव्यवस्थेत्यर्थः । सदृशे सदृशान्तरसद्भावमाह— **सोमेति** । **न्यायविदः**; परीक्षकाः । "सोमाभावे पूतीकानभिषुणुयात्" इत्ययं विधिर्नियमार्थः, सोमाभावे तत्सदृशद्रव्यान्तरेषु स्वतः प्रवृत्तेः । एतत्तुल्यन्यायसिद्धार्थमाह— **व्रीहीति** । **व्रीहिभावतः**; व्रीह्यवयवसद्भावतः । ततः कथं सदृशे सदृशान्तरसद्भाव इत्यत्राह— **तदेवेति** । अनेन शुक्त्यादौ रजताद्यवयवसद्भावः फलित इत्याह— **शुक्त्यादाविति** । **श्रुत्यैव बोधितः**; प्रतिनिधिश्रुत्यैवाभिमतत्वेन फलितः । यद्वा त्रिवृत्करणश्रुत्यैव बोधितत्वं फलितम् । तेजःप्रचुररूप्यांशः शुक्तौ त्रिवृत्करणात् सिध्यतीत्यर्थः । कथं शब्दव्यवस्थेत्यत्राह— **रूप्येति** । शुक्तिरूप्ययोः सादृश्ये सति हि शुक्तौ रूप्यसद्भावसिद्धिः, शब्दव्यवस्थाया भूयस्त्वहेतुकत्वसिद्धिश्चेत्यत्राह— **रूप्यादीति** । ततः किमित्यत्राह— **अत इति** । **प्रतीतेः**; रूप्यसदृशतया प्रतीतेः । शुक्त्यादौ रजताद्यवयवसद्भावश्चेत् सदा गृह्येत; प्रवृत्तिश्च सदा स्यात्; बाधश्च नोपपद्येतेत्यत्राह— **कदाचिदिति** । दोषः शुक्त्यंशाग्रहहेतुः । प्रचुरग्रहणाभिभूतत्वाभावात् अदृष्टवशाच्च रजतग्रहणम्; "अदृष्टवशाच्चाम्बुनो ग्रहणात्" इति हि वक्ष्यते । उदाहरणान्तरेष्वप्युपजीव्यत्वाय हि तत्र तदुक्तिः । **भूयस्त्वेन बाध्यबाधकभाव इति**; शुक्तिभूयस्त्वेन तज्ज्ञानस्य बाधकत्वम् । तत एव रजतालग्त्वं सिद्धम् । तेन रजतज्ञानस्य बाध्यत्वमित्यर्थः । भूयस्त्वेनेत्युक्ते भ्रान्तिज्ञानस्य रजतभूयस्त्वात्तेन शुक्तिज्ञानस्य बाध्यत्वशङ्काव्यावृत्त्यर्थं भूयस्त्वेन बाध्यबाधकत्वमुपपादयति— **शुक्तीति** । ननु साकल्ये सत्यपि वैकल्यं

गृहीतं चेदन्यथाख्यातिरिति; नैवम्—न हि वैकल्यस्य ग्रहो वैकल्यग्रहः; किंतु शुक्तिभूयस्त्व-वैकल्येन ग्रहः, तद्विरहेण ग्रहः, तदग्रह इति फलितम् । **भूयस्त्वसाकल्येन ग्रहः;** तत्सहिततया ग्रहः; तयोर्ग्रहयोः रूपात् स्वभावात्, तथाविधग्रहणात्मकत्वादित्यर्थः । बहु-व्रीहिर्वा; भावप्रधानो निर्देशः; पूर्वोत्तरज्ञानयोस्तथारूपत्वात् बाध्यबाधकभाव इत्यर्थः । ज्ञानस्य बाध्यत्वं न स्वरूपतः, न च विषयतः, किंतु बाध्यप्रवृत्तिकत्वम् । उत्तरज्ञानस्य च बाधकत्वं पूर्वज्ञानजन्यप्रवृत्तिनिवारकत्वम् । अन्यथाख्यातिवादेऽपि ज्ञानस्य स्वरूपेण बाध्यत्वम-नभिमतम्; किंतु विषयबाध्यत्वमेवाभिमतम् । अस्माकं तु ज्ञानफलभूतप्रवृत्तेर्बाध्यत्वमिति भिदा । प्रवृत्तेश्च बाधितत्वं प्रतिबद्धोत्पत्तिकत्वं विफलत्वं वा । **नात इति;** मिथ्यार्थसत्यार्थ-शब्दाभ्यां पराभिमतमिथ्यात्वसत्यत्वे विवक्षिते । **एवमिति;** सर्वस्य सर्वत्वेऽपि **व्यवहार-व्यवस्थितिः** हानोपादानादिनियमः **एवं** भूयस्त्वसाकल्यवैकल्याभ्यामित्यर्थः । साधारणा-कारग्रहणभेदाग्रहदोषादृष्टानि सर्ववादिभिरभ्युपेतव्यानि । तावता प्रवृत्त्यादिसद्भावेऽप्यधिक-कल्पनायामन्येषां गौरवं स्यात् । तत्रेष्टरूपरूपिनिरन्तरभानात् प्रवृत्तिः । द्विष्टरूपरूपि-निरन्तरभानान्निवृत्तिः । रूपरूपिणोर्धर्म्यन्तरनिष्ठत्वविरोधिधर्मान्तराश्रितत्वभानविरहेण भानं निरन्तरभानम् । अत एव भेदाग्रहात् प्रवृत्तिश्चेद्रज्जुसर्पभेदाग्रहे निवृत्तिर्न स्यादित्यादीनि चोद्यानि नावकाशं लभन्ते । यः परमते ख्यात्यन्तरहेतुरभ्युपेतः, स एवास्माकं प्रवृत्त्यादि-हेतुः । प्राभाकरैर्मन्त्रार्थवादानां स्वार्थे तात्पर्यानभ्युपगमात्केवलभेदाग्रहेणैव निर्वाहः कृतः; अत्र तु मन्त्रार्थवादयोः प्रतीयमानार्थे प्रामाण्याभ्युपगमादुपनिषद्भागावगतं त्रिवृत्करणं तत्प्रदर्शितपञ्चीकरणमीश्वरकर्तृकं सर्गविशेषं तथा प्रतिनिधिन्यायं भेदाग्रहमप्युपजीव्य निर्वाहः कृत इति वैषम्यम् । तत्र भूते भूतान्तरभ्रमस्य त्रिवृत्करणेन निर्वाहः स्फुटतरः । सदृशे सदृशान्तरभ्रमस्य तु प्रतिनिधिन्यायेनैव निर्वाहः, न तु त्रिवृत्करणेनोपयोग इति केचिदा-चार्याः । त्रिवृत्करणमपि विजातीयभूतारब्धे सदृशे विजातीयभूतारब्धसदृशान्तरभ्रमनिर्वा-हौपयिकमिति च संप्रदायः । "श्रुतिस्मृतिभ्यः सर्वस्य" इत्यादिग्रन्थानां स्वारस्यात् तथाव-गम्यते । अतस्त्रिवृत्करणश्रवणपञ्चीकरणस्मरणाभ्यां प्रतिनिधिन्यायाच्च सदृशे सदृशान्तर-बुद्धियाथार्थ्यं निरूप्यते । ननु कथं सदृशे सदृशान्तरभ्रमस्य त्रिवृत्करणेनोपयोगः ? न हि त्रिवृत्करणात् पूर्वं रजताद्यवयवाः सन्ति; तथा सति हि त्रिवृत्करणनिबन्धनं शुक्तौ रजतादि-संमिश्रणं स्यात्; न च तदस्ति, त्रिवृत्करणस्याण्डसृष्टेः पूर्वभावित्वात् । उच्यते—पाञ्च-

भौतिकेष्वपि पदार्थेषु किंचित् कार्यं केनचित् प्रचुरेण भूतेन परिणामविशेषवताऽऽरब्धम् । तत्र यादृशपरिणामयुक्तयद्भूतप्रचुरं यत् कार्यं तस्य तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात्तेषु तथाविधतद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते । यद्यप्यवान्तराकारविशेषस्त्रिवृत्करणदशायां नास्ति, तथापि त्रिवृत्करणेन कार्यानुप्रविष्टस्य तस्य भूतस्य कार्यान्तरावयवसमानपरिणामसंभवात् भौतिकान्तरे भौतिकान्तरबुद्धेर्याथार्थ्यं घटते । तथा त्रिवृत्करणेन शुक्त्यावन्तर्गतस्य तेजोंऽशस्य शुक्लभास्वररूपेण परिणामवतो रजतसौसादृश्याद्रजतावयवत्वमुपपन्नम् । तादृशाकारयुक्ततत्तद्भूतविशेषवन्त एव हि सम्यग्रजतादयो निरीक्ष्यन्ते । अतः शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यते । ननु कथं शुक्त्यादिषु प्रतीयमानानामवयवानां रजताद्यवयवत्वम्? न हि ते रजतादिभ्य आनीय निवेशिताः; उच्यते—संप्रतिपन्नरजताद्यवयवसुसदृशाकारत्वमेव तेषां रजताद्यवयवत्वम्, न तु रजतादिभ्य आनीय निवेशितत्वम्, यथा संप्रतिपन्नरजताद्यवयवानाम् । न ह्यापणस्थरजताद्यवयवाः कुतश्चिद्रजतान्तरादेरानीय निवेशिताः । एवमेव पूतीकादिषु प्रतीयमानानां सोमलताद्यवयवानामपि सोमाद्यवयवत्वं नाम संप्रतिपन्नसोमलताद्यवयवसुसदृशत्वमेव । तच्च स्फुटतरप्रतीतिसिद्धमबाधितं च । न हि शुक्तिशकलपूतीकादिषु रजतसोमलतादिसादृश्यं नास्तीति बाधकप्रत्यय उदेति । तेषामवयवानां विजातीयावयवप्राचुर्यादकार्यकरत्वं प्रचुरक्षीरनिविष्टाल्पसलिलस्येव प्रचुरकनकसंसृष्टाल्परजतस्येव च संभवति । नन्वेवं शुक्तितयाभिमतपुञ्जस्य शुक्तित्वमपुष्कलं स्यात्, विजातीयावयवसंसर्गात् पुरुषमृगे पुरुषत्ववत् । पुरुषमृगत्वं नाम पुरुषत्वमृगत्वविलक्षणं जात्यन्तरम्; न तु विकलं पुरुषत्वं मृगत्वं चेति चेत्; तर्हि शुक्तितयाभिमतपुञ्जस्यापि शुक्तित्वरजतत्वविलक्षणजात्यन्तरवत्त्वं स्यात् । ततश्च पुरुषमृगे पुरुषव्यवहारवत् शुक्तिव्यवहारो न मुख्यः स्यात्, विजातीयसंसृष्टाया भ्रमाधिष्ठानभूतायाः शुक्तेः पुरुषेण पुरुषमृगस्येव शुक्त्यन्तरेण सौसादृश्याभावात्; सौसादृश्ये सति हि तत्तद्व्यवहारस्य मुख्यत्वम्; तदभावाद्धि 'सिंहो देवदत्तः' इत्यस्यामुख्यत्वम् । शुक्त्यवयवप्राचुर्याच्छुक्तित्वं पुष्कलम्; तत एव तद्व्यवहारश्च मुख्य इति चेत्, तर्हि रजतांशस्याप्रचुरत्वादेव रजतत्वं नास्तीति रजतबुद्धेर्याथार्थ्यं न स्यात् । उच्यते—पुरुषत्ववत् शुक्तित्वस्यावयवसंघातविशेषवृत्तित्वाभावादणुमात्रेऽपि शुक्तित्वं पुष्कलम् । पुरुषत्वस्य तु संघातविशेषवृत्तितया संघातवैकल्यात्तदपौष्कल्यं जात्यन्तरं वा तत्र स्यात् । शुक्तित्वं तु न तथेत्युक्तम् । अतः शुक्त्यवयवेषु शुक्तित्वतद्व्यवहारावुपपन्नौ, तत्र विरुद्ध-

जात्यन्वयाभावात् । शुक्तितयाभिमतसंघाते तु शुक्त्यवयवप्राचुर्यादर्थक्रियाव्यवस्था शब्दव्यवस्था चोपपद्यते । प्रचुरशुक्त्यभिभूतत्वेन रजतांशस्याग्रहीतत्वात् गृहीतशुक्तिविवक्षया तद्विषयत्वेन प्रयुक्तः शब्दो मुख्य इत्युपपन्नम् । न च भ्रमाधिष्ठानभूतायाः शुक्तेर्विजातीयावयवयोगितया शुक्त्यन्तरसौसादृश्यहानिः, शुक्त्यन्तरस्याप्यल्परजतांशमिश्रत्वात् । रजतांशाभिभवेन शुक्त्यन्तरसौसादृश्यप्रतीतिरुपपद्यते । शुक्त्यवयवानां तु परस्परसौसादृश्यमुपपन्नतरम् । उक्तरीत्या रजतांशस्य च रजतत्वं मुख्यम्, तस्मिन्नंशे विरुद्धजात्यन्वयाभावात् । रजतान्तरावयवसौसादृश्यं च । भ्रमदशायां गृह्यमाणस्य तस्य प्रचुरशुक्तिग्रहणाभिभूतत्वाभावाद्रजतान्तरावयवसौसादृश्यप्रतीतिरुपपद्यते । अत एव रजतव्यवहारश्च मुख्यः । अतः शुक्त्यादौ रजतादिबुद्धेर्याथार्थ्यमुपपन्नम् । अल्पस्य रजतस्य प्रचुरतया ग्रहणे अन्यथाख्यातिप्रसङ्ग इति चेत्—न ; प्राचुर्यग्रहणाभावात् । अल्पत्वग्रहणमेव हि तत्र विद्यते । प्राचुर्यस्य प्रतियोग्यपेक्षत्वात्प्रतियोगिभूतशुक्त्यग्रहणात्तद्ग्रहणे प्रवृत्त्यसंभवाच्च शुक्त्यपेक्षया रजतांशस्य प्राचुर्यं न गृहीतमिति नान्यथाख्यातिः । नन्वल्पत्वाग्रहणं नाम प्रचुरत्वग्रहणं स्यात्; भवन्मते हि भावान्तरमभावः; अतोऽन्यथाख्यातत्वमिति चेत्—न ; अल्पत्वाग्रहणं नाम न प्राचुर्यग्रहणम् ; अपितु अल्पत्वविषयज्ञानसंकोच इत्यन्यथाग्रहाभावात् । 'नेदं रजतम्' इत्यत्र नञर्थः क इति चेत्, शुक्तित्वमेवेति ब्रूमः । यदाकारग्रहणेन पूर्वज्ञानोत्पन्नायाः प्रवृत्तेर्निवृत्तेर्वा निवारणं स एवाकारो नञर्थः । स चाकारः प्रतियोगिसापेक्षैः 'नेदं रजतम्' इत्यादिशब्दैस्तदनपेक्षैः शुक्त्यादिशब्दैश्च व्यवह्रियते ।

## भावप्रकाशिका

**पाठक्रमेणाण्डसृष्टेः पश्चादिति;** "नामरूपे व्याकरोत्; तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति पाठक्रमेणेत्यर्थः । **संकल्पे तु फलं पूर्वभावीति;** फलेच्छा पूर्वं भवति, उपायेच्छाया इष्टसाधनताज्ञानजन्यत्वादिति भावः । **किं केन कथमित्यादाविति ;** यद्यपीयं जिज्ञासारूपा शाब्दाकाङ्क्षा, न तु फलोपायेच्छारूपा ; अत एव हि 'करोति' इत्युक्ते 'किं करोति ? सर्वस्वापहारं करोति, शिरश्छेदं करोति' इति भाव्ये जिज्ञासा जायते ; अथापि फलोपायविषयकेच्छापि फलोपायजिज्ञासातुल्यशीलेति भावः । न च भाव्याकाङ्क्षायाः पूर्वभावित्वे समानपदोपात्तधात्वर्थस्यैव भाव्यत्वेनान्वयः स्यादिति वाच्यम् , समानपदोपात्तविध्यवरुद्धाया भावनायाः समीहितभाव्यापेक्षितया यागस्य भाव्यतया नान्वयः, अपितु

करणत्वेनेति स्वर्गकामाधिकरणे स्थितत्वादिति द्रष्टव्यम् । **अस्मिन्नर्थे निदर्शनमिति:** "बहु स्यां प्रजायेय" इत्यत्र 'प्रजायेय' इति निर्दिष्टप्रजननापेक्षया 'बहु स्याम्' इति पूर्वनिर्दिष्टस्य बहुभवनस्य कार्यत्वदर्शनात् तद्वदेव "नामरूपे व्याकरवाणि; तासां त्रिवृतं त्रिवृत-मेकैकां करवाणि" इत्यत्र संकल्पवाक्ये पूर्वनिर्दिष्टस्य नामरूपव्याकरणस्य कार्यत्वं निश्चीयते। ततश्च "नामरूपे व्याकरोत्; तासां त्रिवृतं त्रिवृतमेकैकामकरोत्" इति वाक्ये पाठक्रमो बाध्य इति भावः । ननु त्रिवृत्करणनामरूपव्याकरणयोः कार्यकारणभावे यस्य विप्रतिपत्तिः, तस्य बहुभवनप्रजननयोः कार्यकारणभावः कथं संप्रतिपन्नः स्यात्? न ह्ययमर्थस्ततोऽपि सुप्रसिद्धः; किंच कथमस्य श्लोकार्धस्येदृशार्थसूचकत्वमिति चेत्—न; बहुभवनप्रजननयोः कार्यकारण-भावस्य सुप्रसिद्धत्वात्; इतरथा भाष्यकृता निदर्शनतयोपादानासंभवात् । न च निदर्शन-तयोपादानमस्मिन् श्लोकेऽसिद्धमिति वाच्यम्, व्याख्यानतो विशेषप्रतिपत्तिसंभवात् । **अस्यामुपनिषदीति;** छान्दोग्ये तेजःप्रभृतिसृष्टेरेवोपात्तत्वात् आकाशवायुसृष्टेरनुक्तेः "तिस्रो देवताः; त्रिवृतं करवाणि" इत्युक्तिः; नैतावता पञ्चीकरणं नास्तीति मन्तव्यम्, त्रिवृत्करणस्य पञ्चीकरणोपलक्षणार्थत्वादिति भावः । **अवस्थाद्वयमस्तीति;** ततश्च 'संहतिं विना, असमागम्य' इति पदद्वयस्य न पौनरुक्त्यमिति भावः । "समेत्यान्यो-न्यसंयोगम्" इति संहतत्वावस्थाकथनेऽपि कृत्स्नशः समागतत्वरूपावस्थान्तरं नोक्तमिति शङ्कां व्युदस्यति—**उपात्तवचनानन्तरमिति।** पुराणे—

> "समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः ।
> एकसंघातलक्ष्याश्च संप्राप्यैक्यमशेषतः ॥"

इति पाठक्रमादिति भावः । **सोमाभावे च पूतीकग्रहणं श्रुतिचोदितम् । सोमावयव-सद्भावात्** इति भाष्यस्यायमर्थः—"यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इत्यनेन सोमाभावे निमित्ते नैमित्तिकतया फलचमसवत् पूतीका न विधीयन्ते, अपितु सोमावयवस्य सोमसदृशद्रव्येषु सत्त्वात् प्रतिनिधित्वेन पूतीकानां तदतिरिक्तद्रव्याणां च प्राप्तौ पूतीकानेव गृह्णीयादिति नियमार्थं पूतीकग्रहणं श्रुतिचोदितमिति । ततश्च "सोमावयवसद्भावात् पूतीक-ग्रहणं श्रुतिचोदितम्" इत्यस्य चोदनायां सोमावयवसद्भावो हेतुः, अतश्चोदनानुपपत्त्या सोमावयवसिद्धिरित्यर्थ इति न भ्रमितव्यम्, सोमावयवसद्भावे न्यायस्यैव ज्ञापकतया चोदनाया अज्ञापकत्वात् । भाष्ये—**व्रीह्यभावे च नीवारग्रहणं व्रीहिभावात** इति

नीवारग्रहणं न्याय्यमिति न्यायविदो विदुरिति योजना। षष्ठे प्रतिनिधिपेटिकायामस्य न्यायस्य व्युत्पादितत्वादिति भावः। एतत्सर्वमभिप्रेत्याह—**अयं विधिर्नियमार्थ इति।** प्रतिनिधिश्रुतेर्नियमविधित्वसंपादकन्यायेनेत्यर्थः। एवं हि स्थितिः—षष्ठे "ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात्" इत्यत्र सोमयागस्य "वसन्ते वसन्ते ज्योतिषा यजेत" इति वीप्सया वीप्सितवसन्तस्य निमित्तत्वावगमात् नित्यत्वं स्थापितम्। नित्ये च यथाशक्त्यङ्गोपसंहारेणाप्यधिकारोऽस्तीति सर्वशक्त्यधिकरणे स्थितम्। ततश्च सोमद्रव्यरूपाङ्गाभावेऽपि द्रव्यान्तरमादाय शक्याङ्गोपसंहारेण यागस्य कर्तव्यत्वं सिद्धम्। तत्र च सोमद्रव्यसदृशस्य वा तद्भिसदृशस्य वा यागनिर्वर्तकतया यागविध्याक्षेपबलादुपादानं कर्तव्यमिति "श्रुतिप्रमाणत्वाच्छिष्टाभावे नागमोऽन्यस्याशिष्टत्वात्" इत्यत्र स्थितम्। तत्र च सदृशद्रव्योपादाने तत्र सोमावयवानामपि सत्त्वात् सोमशास्त्रस्याप्यनुग्रहाय सोमसदृशद्रव्योपादानमेव युक्तमिति "सामान्यं तच्चिकीर्षा हि" इत्यत्र स्थापितम्। तत्र च बहुषु सोमसदृशद्रव्येषु सत्सु पूतीकविधिर्नियमार्थः—यः सोमलताया अभावेन सोमजातिपरिच्छिन्नान् सकलावयवानुपादातुमशक्तस्तत्सदृशान्विकलावयवानुपादित्सते स पूतीकानेवेति नियमार्थमिति निर्णीतं "नियमार्था पुनःश्रुतिः" इति तृतीयाध्यायाधिकरणे "वचनाच्चान्याय्यमभावे" इति षष्ठाध्यायाधिकरणे चेति। एवं च न्यायेनैव सदृशे तदवयवस्थितिर्निर्णेया; न तु श्रुत्या। अतो यथोक्त एवार्थः। अत एवास्वरसादाह—**यद्वा त्रिवृत्करणेति। उपजीव्यत्वाय तदुक्तिरिति**; "अदृष्टवशाच्चाम्बुनो ग्रहणम्" इत्युक्तेरुपलक्षणत्वादिति भावः। **पूर्वोत्तरज्ञानयोस्तथारूपत्वादिति**; विद्यमानशुक्त्यवयवभूयस्त्वाग्रहरूपस्य रजतज्ञानस्य बाध्यत्वं विद्यमानभूयस्त्वग्रहस्य शुक्तिज्ञानस्य बाधकत्वमिति भावः। न च विद्यमानभूयस्त्वप्रतियोगिभूतरजतावयवानां 'नेदं रजतं, किंतु शुक्तिः' इति ज्ञानकालेऽप्रतीतेः कथं तत्प्रतियोगिकं भूयस्त्वं भासेतेति वाच्यम्, वस्तुतो यदवयवा भूयांसः, तज्ज्ञानं बाधकम्; यदवयवा अल्पीयांसः, तज्ज्ञानं बाध्यम्। बाध्यत्वं च बाध्यप्रवृत्तिकत्वं, विफलप्रवृत्तिकत्वमिति यावत्। अत एव "प्रवृत्तेर्बाधितत्वं विफलत्वं वा" इति वक्ष्यति। अत एव—क्वापि शुक्तौ शुक्तित्वज्ञानस्य रजतज्ञानेन बाधो न स्यात्, रजतज्ञानस्य वस्तुतोऽल्पविषयत्वेन वास्तवभूयोऽवयवविषयत्वाभावादिति शङ्का परास्ता; शुक्तौ शुक्तिज्ञानस्य विफलप्रवृत्तित्वाभावेन बाध्यत्वाभावादिति द्रष्टव्यम्। **धर्म्यन्तरनिष्ठत्वेति**; रजतत्वादौ

रूपे धर्म्यन्तरनिष्ठत्वभानविरहः, रूपिणि शुक्त्यादौ रजतत्वविरोधिधर्मान्तराश्रितत्वभानविरहोऽप्यपेक्षित इत्यर्थः। **अत एव भेदाग्रहादिति ;** इष्टभेदाग्रहः प्रवर्तकः, अनिष्टभेदाग्रहो निवर्तक इत्यभ्युपगमेन भेदाग्रहमात्रस्य प्रवर्तकत्वानभ्युपगमादिति भावः। **अत्र त्विति:** सिद्धान्ते त्वित्यर्थः। **विजातीयभूतारब्ध इति ;** विजातीयभूतावयवप्रचुरारब्ध इत्यर्थः। ततश्च विजातीयपृथिव्यवयवप्रचुरारब्धे शुक्तिशकले तद्विजातीयतेजोऽवयवप्रचुरारब्धरजतभ्रमौपयिकमित्यर्थः। **अण्डसृष्टेः पूर्वभावित्वादिति ;** तदानीं रजतादेरप्रसक्तेः केन तन्मिश्रणं स्यादिति भावः। **पाञ्चभौतिकेष्वपीति ;** सत्यरजतस्थले रजतपरिणामविशेषयोग्यतेजोंऽशसत्त्वेन रजतावयवारम्भवत् शुक्त्यादावपि तादृशरजतपरिणामविशेषयोग्यतेजोंऽशसत्त्वात् तत्र रजतावयवारम्भसंभवात् याथार्थ्यमुपपद्यत इति भावः। **त्रिवृत्करणेन कार्यानुप्रविष्टस्येति ;** मरीचिकारूपकार्यानुप्रविष्टस्य जलरूपस्य भूतस्य समुद्रादिरूपकार्यान्तरावयवजलसमानपरिणामसंभवात् मरुमरीचिकारूपभौतिकान्तरे समुद्रादिलक्षणभौतिकान्तरबुद्धियाथार्थ्यं यथा घटते तथेत्यर्थः। अतः शुक्त्यादौ रजताद्यवयवसद्भाव उपपद्यत इति। ननु त्रिवृत्करणं शुक्तौ रजतसद्भावप्रयोजकं चेत् त्रिवृत्कृततेजोंऽशस्य सर्वत्र पार्थिवे सत्त्वात् सर्वत्र रजतसादृश्यं स्यात्; तेजोऽवयवेषु तारतम्यासंभवात् पार्थिवेषु सर्वेष्वष्टमांशस्य तेजसः सर्वत्र सत्त्वात् सर्वत्र तद्भ्रमः स्यादिति चेत्—न; अदृष्टाधीनपरिणामविशेषस्य कार्यानुरोधेन क्वचिदेव कल्प्यत्वेनादोषात्। **अणुमात्रेऽपि शुक्तित्वं पुष्कलमिति :** रजतत्वसुवर्णत्वपृथिवीत्वादिवच्छुक्तित्वादिजातिरवयवावयविनिष्ठा; न तु घटत्वपुरुषत्वादिवदवयविमात्रनिष्ठा, शुक्तिशकलेऽपि 'इयं शुक्तिः' इति व्यवहारात्। यदि चात्र विप्रतिपत्तिः, तर्हि शुक्तिपदं रजतभ्रमाधिष्ठानरङ्गादिपरम्, रङ्गत्वस्यावयवावयविनिष्ठत्वेऽविवादात्। ननु पुरुषत्वादेरवयविमात्रनिष्ठत्वे स्थाणौ पुरुषत्वभ्रमः कथं निर्वोढव्यः? पुरुषत्वस्य पाणिपादसंघातवृत्तितया पुरुषावयवेषु पुरुषत्वस्याभावेनान्यथाख्यात्यापत्तेः। किंच व्रीहित्वजातेरप्यवयवावयविनिष्ठत्वाभावात् व्रीहिभ्रमनिर्वाहानुपपत्तिश्च। नीवारादौ व्रीहित्वजातिसत्त्वेच मुख्यत्वमेव स्यात्, न प्रतिनिधित्वम्। अत एव मीमांसकैरपि "सामान्यं तच्चिकीर्षा हि" इत्यत्र व्रीहिसदृशनीवारद्रव्येषु न व्रीहित्वजातिः; नापि व्यक्तिः, नीवारत्वजातितद्व्यक्त्योः व्रीहित्वजातितद्व्यक्त्यपेक्षया भिन्नत्वात्; तथापि सदृशद्रव्योपादाने व्रीहिशास्त्रस्य कियानप्यनुग्रहोऽस्ति; तथाहि—"व्रीहिभिर्यजेत इति" व्रीहित्वजातेः साधनत्वं

बोध्यते । अमूर्तायाश्च जातेः स्वतो हेतुत्वासंभावात् व्यक्तिपरिच्छेदमुखेनेति वक्तव्यम्; व्यक्तेरपि पुरोडाशादिनिष्पत्तावववघातादिशास्त्रपर्यालोचनया च तदवयवद्वारा हेतुत्वं वक्तव्यम् । ततश्च व्रीहित्वजातेर्व्रीहितदवयवपरिच्छेदमुखेनाङ्गत्वात् व्रीहित्वजातेरिव व्यक्तितदवयवानामप्यङ्गत्वं सिद्धम् । ततश्च जातिव्यक्त्यवयवा व्रीहिशास्त्रार्थाः । तत्र सदृशोपादाने जातिव्यक्त्योः शास्त्रार्थयोरलाभेऽपि तदवयवरूपशास्त्रार्थलाभेन व्रीहिशास्त्रमपि किंचिदनुगृहीतं भवतीत्युक्तमिति चेत्—न ; यत्र जातिरवयवावयविवृत्तिस्तत्र तत्प्रतीतेर्याथार्थ्यमस्ति; इतरत्र तु प्राभाकरोक्तरीत्या अख्यातिः ; यथा पञ्चलोहारब्धे कार्ये सर्वापि लोहप्रतीतिर्यथार्थेत्यत्रैव भाष्यकृतः संरम्भः ।

**श्रुतप्रदीपिका**

स्वसिद्धान्तमाह—**अथवेति** । यथार्थख्यातिं प्रतिजानीते—**यथेति** । कुत इत्यत्राह—**श्रुतीति** । श्रुतिं दर्शयति—**बहु स्यामिति** । सृष्ट्यादीत्यादिशब्देन " सन्मूलाः " इत्याद्युक्तस्थितिप्रलयौ नामरूपव्याक्रिया च गृह्यन्ते । सृष्ट्यादिरुपक्रमो यस्य प्रकरणस्य तस्मिन् । उत्पत्तौ फलस्य पश्चाद्भावेऽपि संकल्पे पूर्वभावित्वज्ञापनाय **बहु स्यामि**-त्याद्युपात्तम् । उत्पन्नावस्था ह्यस्तित्वम् । उत्पद्यमानावस्था हि जायमानता । ते हि " स्यां, प्रजायेय " इत्युक्ते । तेन संकल्पे पश्चाद्भाविनस्त्रिवृत्करणस्य नामरूपव्याकरणात् प्राग्भावसिद्धिः । उत्पत्तौ त्रिवृत्करणपश्चाद्भावपाठोऽर्थक्रमबाध्य इति भावः । **यदग्ने रोहितं रूपं तेज-सस्तदि**त्यादिनाण्डान्तर्भूतेषु तत्प्रदर्शनात्नाण्डसृष्ट्यर्थत्वमित्यत्राह—**एवं हीति** । त्रिवृत्करणस्याण्डसृष्ट्यर्थत्वं तत्त्वान्तरमिश्रणप्रदर्शनार्थत्वं च ज्ञापयितुं नानावीर्यत्वमाह—**पुराण इति** । पृथग्विभागानर्हसंश्लेषः कृत्स्नशः समागमनम् । समित्येकीकारे, " संप्राप्यैक्यमशेषतः " इति विवृतत्वात् । आश्रयाश्रयिभावो न्यूनाधिकभावात् । ततश्च शब्दव्यवस्था च । सूत्रमाह—**सूत्रेति ; तेन;** भूयस्त्वेन । सदृशे सदृशान्तरैकदेशसद्भावं दर्शयति—**सोमेति** । तत्तुल्यन्यायत्वादाह—**व्रीहीति** । ततः किं सादृश्यस्येत्यत्राह—**तदेवेति** । ततः किमित्यत्राह—**शुक्त्यादाविति ; श्रुत्यैव** त्रिवृत्करणश्रुत्या प्रतिनिधिश्रुत्या वा । **बोधितः;** बोधः फलितः । शब्दव्यवस्थापकमाह—**रूप्येति** । शुक्त्यंशोऽस्ति चेत् सदा गृह्येतेति प्रवृत्तिबाधौ न स्याता-मित्यत्राह—**तदेवेति** । **कदाचिदिति;** शुक्तिभूयस्त्ववैकल्यग्रहो भ्रमः । तत्साकल्यग्रहो बाधः । **नात इति ;** मिथ्यार्थसत्यार्थशब्दौ पराभिमतमिथ्यात्वसत्यत्वपरौ ।

न्यायसुदर्शनम्

यथार्थख्यातिसमर्थने च त्रिवृत्करणन्यायात् न वेदान्तिभिः ख्यात्यन्तरोपपादनं युक्तम्, अर्थान्तरेष्वर्थान्तरसंभवो भूयस्त्वेनासाधारण्यव्यवहार इति च यथार्थख्यात्युपपादनप्रकारस्य "त्र्यात्मकत्वात्तु भूयस्त्वात्" इति न्यायेनात्राप्यङ्गीकृतत्वात्। मीमांसकानामपि "प्रतिनिधिश्च तद्वत्" "नियमार्थः क्वचिद्विधिः" "सामान्यं तच्चिकीर्षा हि" "प्रतिनिधौ चाविकारात्" इति चतुर्ष्वप्यधिकरणेषु सदृशद्रव्ये सदृशान्तरसद्भावस्य सूत्रितत्वात् न ख्यात्यन्तरोपपादनं युक्तम्। "प्रतिनिधिश्च तद्वत्" इत्यत्र व्रीहिष्वपचरत्सु नीवारोपादाने व्रीहिधर्माणामवघातादीनां नीवारेष्वसमानविधानतामाशङ्क्य न व्रीहीणां कार्ये द्रव्यान्तरतया नीवारोपादानं, किन्तु व्रीह्यवयवानां केषांचिन्नीवारेषु सद्भावात् तदुपादित्सया तदुपादानम्; तेन किंचिद्विकला व्रीहय एवोपादीयत इति तत्राप्युपदेशत एव धर्मप्राप्तिर्युक्ता। "नियमार्थः क्वचिद्विधिः" इत्यत्र "सोमाभावे पूतीकानभिषुणुयात्" इत्यादिवाक्ये श्रुतद्रव्याभावे द्रव्यान्तरविधानात् तत्र सोमधर्माणामभिषवादीनामसमानविधानतामाशङ्क्य, न तत्रापि द्रव्यान्तरतया तद्विधानं किंतु बहुषु सोमसदृशेषु सत्सु पूतीकगता ये सोमावयवास्त एव नियम्यन्त इति विधेर्नियममाश्रित्य तत्रापि समानविधित्वमेव स्थापितम्। "सामान्यं तच्चिकीर्षा हि" इत्यत्र श्रुतद्रव्याभावे द्रव्यान्तरत्वाविशेषात् यत्किंचिद् द्रव्यमुपादायानुष्ठेयमित्याशङ्क्य, सदृशमेवोपादेयं सदृशेषूपादीयमानेषु श्रुतद्रव्यावयवानां केषांचिल्लाभादित्युक्तम्। यथोक्तम्—

"चोदितावयवाः केचित् सन्त्येव सदृशेष्विति।
तेषां संग्रहसिद्ध्यर्थं द्रव्यप्रतिनिधिः स्मृतः॥"

इति। यदि सदृशमुपादीयते तर्हि श्रुतद्रव्यावयवानां कतिपया लभ्यन्ते; सुसदृशोपादाने बह्ववयवानुग्रहादिति। "प्रतिनिधौ चाविकारात्" इत्यत्र नीवारोपादानेऽपि तद्गतव्रीह्यवयवा एव साधनीभूता इति "व्रीहीणां मेध सुमनस्यमानः" इत्यादीनां मन्त्राणां न तत्रोहः कर्तव्य इत्युक्तम्। "उक्तं च तत्त्वमस्य" इति सूत्रेण नीवारस्य व्रीहित्वमुक्तमिति तत्रैव स्मारितम्। एवं बहुष्वधिकरणेष्वनुगतोऽयमर्थ इति। तथा—

अयज्ञिया वै माषा इत्ययज्ञार्हत्वमुच्यते।

माषाणां माषसदृशश्रुतद्रव्यांशवीप्सया ॥ ४८ ॥
माषग्रहो निषिद्धार्थसंसर्गात्तु निवारितः ।
नन्वेवं प्रतिषिद्धार्थसदृग् द्रव्यं यदीक्ष्यते ।
क्षीरादितद्ग्रहेऽप्येवं निषिद्धार्थसदृक्त्वयिजिः ॥ ४९ ॥

उच्यते—

पानादिप्रतिषेधो हि प्रवृत्तस्येति संमतम् ।
पुरुषस्य प्रवृत्तिर्हि रागद्वेषनिबन्धना ॥ ५० ॥
अर्थक्रियासमर्थे तु रागादिरुपजायते ।
अतो भूयांस एवार्था निषिद्धा नापरान्विताः ॥ ५१ ॥
अल्पा अर्थक्रियाहीनाः प्रवृत्त्यविषया इति ।
तत्स्पृशो हि निषिद्धार्थसंसर्गिण इति स्थितिः ॥ ५२ ॥
भूयस्त्वेन प्रसिद्धस्य पृथग्भूतस्य चाप्यणोः ।
पुनर्भूयोऽर्थसङ्गोऽपि स्यान्निषिद्धार्थसंसृतिः ॥ ५३ ॥
एवं सुसदृशाङ्गानां सुसदृक्त्वस्थिता मतिः ।
तद्धर्मगोचरत्वं च तेषामेव भवेदिति ॥ ५४ ॥

नन्ववयवा एव विद्यन्ते न जातिरिति चेत्, तज्जातीयत्वाभावे तदवयवा इति केन वावगम्यते? सादृश्यादिति चेत्, तर्हि भो व्यक्तिद्वयमप्यन्योन्यं सदृशमेव, नाधिकार्थम्। भूयोऽवयवसामान्यं सादृश्यम्; जातिस्त्वनुवृत्तिप्रत्ययवेद्येत्यधिकार्थता विद्यत इति चेत्, भूयस्तरावयवसामान्यमेव जातिः; भवतापि सामान्यसादृश्ययोरेकार्थताया अङ्गीकृतत्वाच्च। तदेवानुवृत्तिप्रत्ययवेद्यमपि, 'अयं नीलः अयमपि नीलः' इत्यादिष्विव। भूयस्त्वं चापेक्षितम्। शुक्तित्वतिरोधाने रजतांशा एव भूयांसो भवन्ति। तदा रजतबुद्धिरेव तत्र प्रवर्तते। अत एव संस्थानं जातिरित्युक्तम्, संस्थानं नाम स्वासाधारणं रूपमिति च। भवदभ्युपगताया नित्याया जातेः 'व्यक्तौ नष्टायां न तिष्ठति, नान्यत्र याति, न च विनश्यति' इत्याद्यनुपपन्नस्वभावाया वृत्तिविकल्पादिभिर्दूषितत्वादनुपयोगाच्च नास्माभिः संग्रहणीयता। तेन व्यक्तिद्वयेऽत्यन्तसौसादृश्येन गौर्गौरिति प्रत्ययो व्यवहारश्च; सदृशमात्रव्यक्तिद्वये

व्रीहिनीवारादौ सादृश्यतारतम्येनाल्पावयवसद्भाव इति विशेषः। तस्मादुक्तन्यायैः सदृशस्य सदृशान्तरकार्यकारित्वाङ्गीकारात् तत्प्रत्ययभागित्वमपि क्वचिद् युज्यत एवेत्यभिप्रायः।

श्रीभाष्यम्

स्वप्ने च प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानास्तथाभूताश्चार्थाः सृज्यन्ते। तथाहि श्रुतिः स्वप्नविषया—"न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते। न तत्रानन्दा मुदः प्रमुदो भवन्ति। अथानन्दान् मुदः प्रमुदः सृजते। न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति। अथ वेशान्तान् पुष्करिण्यः स्रवन्त्यः सृजते। स हि कर्ता" इति। यद्यपि सकलेतरपुरुषानुभाव्यतया तदानीं न भवन्ति, तथापि तत्तत्पुरुषमात्रानुभाव्यतया तथाविधानर्थानीश्वरः सृजति, स हि कर्ता। तस्य सत्यसंकल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं संभवतीत्यर्थः। "य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः। तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते। तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन।" इति च। सूत्रकारोऽपि—"सन्ध्ये सृष्टिराह हि। निर्मातारं चैके पुत्रादयश्च" इति सूत्रद्वयेन स्वाप्नेष्वर्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इत्यादिना न जीवस्य संकल्पमात्रेण स्रष्टृत्वमुपपद्यते, जीवस्य स्वाभाविकसत्यसंकल्पत्वादेः कृत्स्नस्य संसारदशायामनभिव्यक्तस्वरूपत्वात्; ईश्वरस्यैव तत्तत्पुरुषमात्रानुभाव्यतयाऽऽश्चर्यभूता सृष्टिरियम्; "तस्मिन् लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति परमात्मैव तत्र स्रष्टेत्यवगम्यत इति परिहरति। अपवरकादिषु शयानस्य स्वप्नदृशः स्वदेहेनैव देशान्तर-

**गमनराज्याभिषेकशिरश्छेदादयश्च पुण्यपापफलभूताः शयानदेहसरूपसंस्थानदेहान्तरसृष्ट्योपपद्यन्ते ।**

**श्रुतप्रकाशिका**

एवं भूते भूतान्तरसद्भावात् सदृशे सदृशान्तरसद्भावाच्च शुक्तिरूप्यादिबुद्धेर्याथार्थ्यमुपपादितम् । न हि स्वाप्नार्थानां सदृशे सदृशान्तरसद्भावो भूते भूतान्तरसद्भावो वा वक्तुं शक्यत इत्यत्राह—**स्वप्ने चेति** । कथं केचित्सुखरूपाः केचिद्दुःखरूपा इत्यत्राह—**पुण्यपापानुगुणमिति । भगवतैव**; जगत्स्रष्ट्रैव । तर्ह्यन्यैरप्युपलभ्येत, सदा चोपलभ्येतेत्यत्राह—**तत्तदिति** । कथं दृष्टविसजातीया इत्यत्राह—**तथा भूता इति** । श्रुतिं दर्शयति—**तथाहीति** । स्वप्नविषयत्वमस्य वाक्यस्य कथमिति शङ्कायाम् "स्वप्नं पश्यति" इति पूर्ववाक्यं स्मारयति—**स्वप्नविषयेति । रथयोगाः**; अश्वादयः । **न भवन्ति** ; दृष्टसजातीया न भवन्तीत्यर्थः । **आनन्दा मुदः प्रमुद इति**; साधारणभोग्यदर्शनजा प्रीतिर्मुत्; असाधारणभोग्यत्वज्ञानजा प्रीतिः प्रमुत्; विनियोगजा प्रीतिरानन्दः । यद्वा विलक्षणविषयदर्शनजा प्रीतिर्मुत्; तस्य स्वविनियोगार्हत्वज्ञानजन्या प्रीतिः प्रमुत्; विनियोगजा प्रीतिरानन्द इति । एतैः शब्दैर्विषया लक्ष्यन्ते, मुख्यार्थत्वे दृष्टविसजातीयत्वायोगात् । **वेशान्ताः**; गृहाः । यद्वा **वेशान्ताः**; पल्वनानीत्यर्थः । कथमुपपद्यत इत्यत्राह—**स हि कर्तेति**; सर्वशक्तिर्हि कर्ता; किमनुपपन्नमिति भावः । तच्छब्दो न प्रकृतजीवपरः; अपितु प्रसिद्धपरमात्मपरः । व्याघातपौनरुक्त्यशङ्कापरिहारार्थमस्याः श्रुतेरर्थमाह—**यद्यपि सकलेति** । **"सृजते"** इति पदविरोधपरिहाराय "न भवन्ति" इति निषेधस्य संकोचो ह्युत्सर्गापवादन्यायेन कृतः । अतः कालान्तरस्थायित्वपुरुषान्तरानुभाव्यत्वाकारविषयो निषेधः, न तु तत्कालतत्पुरुषमात्रानुभाव्यतया स्वरूपनिषेधः । अतो जाग्रदवस्थानुभूतवस्तुसजातीया अनेकपुरुषानुभाव्याः कालान्तरस्थायिनश्च न भवन्तीत्यर्थः । **स हि कर्तेत्येतत्** खण्डमुक्तार्थोपपादकत्वेन व्याचष्टे—**तस्येति** । स्वाप्नार्थद्रष्टेरीश्वरकर्तृकत्वस्फुटीकरणार्थं श्रुत्यन्तरमाह—**य एषु सुप्तेष्विति** । स्वाप्नार्थानां पारमार्थ्यं पूर्वपक्षीकृत्यापारमार्थ्यं सूत्रकारेण सिद्धान्तितमिति व्याख्यातृमतभेदेनास्याः श्रुतेर्नायमर्थ इति शङ्काव्युदासार्थमुक्तार्थस्य सूत्रकाराभिमतत्वमाह—**सूत्रेति** । सूत्रार्थमाह—**स्वाप्नेष्विति** । जीवस्यापि स्वप्नदशायांसत्यसंकल्पत्वाद्याविर्भावः कल्प्यत इत्यत्राह—**तस्मिन् लोका इति** । अनन्यथासिद्धस्यैव हि

कल्पकत्त्वम्; परमात्मलिङ्गश्रवणेन स्वाप्नार्थसृष्टेः परमात्मनैवोपपन्नत्वात्र जीवस्य स्वरूपाविर्भावः कल्प्य इत्यर्थः। कथमपवरके शयानस्य देशान्तरगमनादेः पारमार्थ्यमुपपद्यत इत्यत्राह —**अपवरकादिष्विति**। स्वयमेव स्वदुःखावहवस्तुसृष्ट्यनुपपत्तेश्च न तदा जीवस्य स्वरूपाविर्भावः कल्प्य इति चार्थसिद्धम्, शिरश्छेदादय इत्युक्तत्वात्। सरूपे देहान्तरे शयानदेहव्यवहारो भेदाग्रहकृतः, न त्वन्यथाख्यातिकृतः।

भावप्रकाशिका

**स्वप्नं पश्यतीति पूर्ववाक्यमिति;** यद्यपि "स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं निहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति; अत्रायं पुरुषः स्वयंज्योतिर्भवति; न तत्र रथाः" इत्येव श्रुत्याकारः, तथापीदं वाक्यं तत्समानार्थं लौकिकमुपात्तं द्रष्टव्यम्। **मुख्यार्थत्व इति;** स्वाप्नानां मुदादीनां जाग्रत्सुखादिवैलक्षण्यायोगात विषयाणामेव विलक्षणत्वादित्यर्थः। **व्याघातपौनरुक्त्येति;** "न भवन्ति, रथान् सृजते" इति व्याघातः "सृजते, स हि कर्ता" इत्यनयोः पौनरुक्त्यमिति भावः। **शिरश्छेदादय इत्युक्तत्वादिति** छेदः।

श्रुतप्रदीपिका

उक्तनिर्वाहद्वयागोचरः स्वाप्नार्थः कथं निरुह्यत इत्यत्राह—**स्वप्ने चेति**। सुखदुःखरूपत्वे हेतुमाह—**पुण्येति**। **तत्तदित्यादि;** सुखादिवदिति भावः। **स्वप्नविषया;** "स्वप्नं पश्यति" इति प्रकृतस्वप्नविषयैषा श्रुतिरिति भावः। **रथयोगाः;** अश्वादयः। स्वभोग्यमात्रदृष्टिस्वीयत्वधीविनियोगजाः प्रीतय आनन्दाद्याः। तैर्विषया लक्ष्यन्ते। व्याघातपुनरुक्तिपरिहारार्थमाह—**सकलेति**। **सृजते** इति श्रवणात् उत्सर्गापवादनयगोबलीवर्दनयक्रमः संचारितः। स्पष्टवाक्यान्तरमाह—**य एष्विति**। सौत्रतामाह—**सूत्रेति**। तदर्थमाह—**स्वाप्नेष्विति**। सृष्टिवचनान्यथासिद्धेर्न जीवगुणाविर्भावक्लृप्तिरिति भावः। कथं जीवतः शिरश्छेदादिसत्यतेत्यत्राह—**अपवरकेति**।

श्रीभाष्यम्

पीतशङ्खादौ तु नयनवर्तिपित्तद्रव्यसंभिन्ना नायनरश्मयः शङ्खादिभिः संयुज्यन्ते। तत्र पित्तद्रव्यगतपीतिमाभिभूतः शङ्खगतशुक्लिमा न गृह्यते। अतः सुवर्णानुलिप्तशङ्खवत् 'पीतः शङ्खः' इति प्रतीयते।

पित्तद्रव्यं तद्गतपीतिमा चातिसौक्ष्म्यात् पार्श्वस्थैर्न गृह्यते। पित्तोपहतेन तु स्वनयननिष्क्रान्ततयाऽतिसामीप्यात् सूक्ष्ममपि गृह्यते। तद्ग्रहण-जनितसंस्कारसचिवनायनरश्मिभिर्दूरस्थमपि गृह्यते।

### श्रुतप्रकाशिका

एवं स्वाप्नार्थेषु तत्तदेकपुरुषानुभाव्यत्वतत्तत्कालावसायित्वरूपभेदाग्रहात् प्रवृत्त्यादिर्भवति। पीतशङ्खादावीश्वरसृष्टत्वश्रुतिर्दर्शयितुं न शक्यत इत्यत्राह—**पीतेति**। पीतिमवत् शौक्ल्यमपि प्रतीयेतेत्यत्राह—**तत्रेति**। तर्हि पार्श्वस्थैरपि पित्तद्रव्यं ग्राह्यमित्यत्राह—**पित्तेति**। तर्हि सूक्ष्मत्वात्तेनापि न पित्तं ग्राह्यमित्यत्राह—**पित्तोपहतेन त्विति**। दूरस्थशङ्खस्यातिसामीप्याभावात् कथं तत्रस्थं पित्तद्रव्यं गृह्यत इत्यत्राह—**तद्ग्रहणेति**। यथा—अतिदूरमुत्पतितः पतगो न द्रष्टुं शक्यते, तथापि संनिकर्षोत्पतनकालादारभ्य निरन्तरमवेक्ष्यमाणस्तज्जनितसंस्कारवद्भ्यां चक्षुर्भ्यां दूरेऽपि गृह्यते, तद्वदित्यर्थः। प्राभाकरैः पित्तपीतिमा शङ्खद्रव्यं च निरन्तरं गृह्येते इत्युक्तम्; अत्र तु रूपिद्रव्ये चक्षुषः सामर्थ्यात् पित्तद्रव्यं गृह्यत इत्युक्तमिति विशेषः। सुवर्णानुलिप्तशङ्खवदिति दृष्टान्ते चायं भावः। ननु यदि पित्तद्रव्यशङ्खयोर्भेदाग्रहात्पीतशङ्खव्यवहारः, तर्हि पटे पीतव्यवहारः कथं न स्यात्? अन्यथाख्यातौ वा कथं पटे पीतव्यवहाराभावः? भ्रमे सति तन्मूलनिरूपणा कार्या; न तु सर्वत्र भ्रमेण भवितव्यमिति चेत्, तुल्यम्।

### भावप्रकाशिका

**दृष्टान्ते चायं भाव इति**; तत्र पीतिमविशिष्टसुवर्णद्रव्यस्यापि ग्रहणमस्तीति भावः।

### श्रुतप्रदीपिका

पीतशङ्खादौ नेश्वरसृष्टत्वश्रुतिरित्यत्राह—**पीतेति**। अन्यैरपि गृह्येतेत्यत्राह—**पित्तद्रव्यमिति**। स्वेनापि न गृह्येतेत्यत्राह—**पित्तोपहतेन त्विति**। दूरस्थशङ्खभ्रमो न स्यादित्यत्राह—**तद्ग्रहणेति**; यथा नेदिष्ठदशागृहीतस्य दविष्ठदशायामपि पूर्वग्रहणजसंस्कारसचिवचक्षुषा ग्रहणं तथात्रापीत्यर्थः। रूपिणि चक्षुःसामर्थ्यात् **पित्तद्रव्यमित्युक्तम्**। **इदं गुरुमताद्वैषम्यम्**।

### श्रीभाष्यम्

जपाकुसुमसमीपवर्तिस्फटिकमणिरपि तत्प्रभाभिभूततया रक्त इति गृह्यते। जपाकुसुमप्रभा वितताऽपि स्वच्छद्रव्यसंयुक्ततया स्फुटतरमुपलभ्यत इत्युपलब्धिव्यवस्थाप्यमिदम्। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरप्यम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणात् यथार्थत्वम्। अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तथा प्रतीतिरुपपद्यते। चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकतत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। क्वचिदन्तरालाभावादन्तरालाग्रहणं, क्वचित् शैघ्र्यादग्रहणमिति विशेषः। अतस्तदपि यथार्थम्। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो हि नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथा प्रतीतिः।

### श्रुतप्रकाशिका

जपाकुसुमस्फटिकादौ चाक्षुषदोषसंसर्गो दुर्वच इत्यत्राह—**जपेति**। जपाकुसुमस्फटिकमरीचिकाजलालातचक्रदिङ्मोहेषु द्रव्यान्तरेण संबन्धाद्यथार्था प्रतीतिरिति निर्वाहः। जपाकुसुमप्रभासंबन्धाद्रक्तप्रतीतिश्चेत् तत्संबन्धात्पाषाणादिष्वपि तथा स्यादित्यत्राह—**स्वच्छेति**। **मरीचिकेति**; अदृष्टस्य नियामकत्वं सर्वैरपि ख्यात्यन्तरवादिभिरभ्युपेत्यम्, अन्यथा सर्वेषां सर्वदा सर्वत्र सर्वविषय भ्रमप्रसङ्गात्, कदाचिदपि भ्रमाभावप्रसङ्गाच्च। **अलातेति**; **अन्तरालाग्रहणात्**; पूर्वोत्तरकालभाविनोस्तत्तत्प्रदेशविशेषालातसंयोगयोरन्तरालाग्रहणात्, क्रमाग्रहणादित्यर्थः। अन्तरालाग्रहणे सति कथं याथार्थ्यमित्यत्राह—**चक्रेति**। **चक्रप्रतीतिः**; सम्यक्चक्रप्रतीतिः। को विशेष इत्यत्राह—**क्वचिदिति**। **दर्पणादिष्विति**; सव्यदक्षिणविपर्यासः कथमिति चेदुच्यते—आपेक्षिको हि सव्यदक्षिणभावः। तत्र स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य मुखस्य चान्तरालाग्रहणमेव विपर्यासो दर्पणदेशगतः। तेनागृहीतान्तरालं मुखमिति अभिमुखस्य दर्पणस्य मुखस्य चान्तरालाग्रहणादाभिमुख्यप्रतीतेर्याथार्थ्यम्। एवं मलिनत्वाल्पत्वादि च।

भावप्रकाशिका

**चाक्षुषदोषसंसर्गो दुर्वच इति;** पित्तानुपहतनयनानामपि स्फटिके पीतत्वोपलब्धे-रित्यर्थः। **अदृष्टस्य नियामकत्वमिति;** ननु समीपस्थानां 'जलं नास्ति; एतावन्तं कालमिदं जलतयाऽभ्राम्यम्; असदेव जलत्वमभात्' दिपरीक्षितप्रत्यक्षाणां का गतिः? तेषामसंसर्गाग्रहरूपत्वाभ्युपगमे मरीचिकाजलप्रत्यक्षाणामल्पीयसामेव तद्रूपत्वं किं न स्यादिति चेत्—न; मरीचिकाजलप्रत्यक्षस्य त्रिवृत्करणशास्त्रानुगृहीतस्यासंसर्गाग्रहरूपत्वमनुचितमिति भाष्यकाराभिप्राय इति केचित् समादधते। **आपेक्षिको हि सव्यदक्षिणभाव इति;** स्वाभिमुखे दर्पणे स्वापेक्षा विपर्यस्तसव्यदक्षिणभावः सिध्यति, स्वाभिमुखवस्तुनः स्वविरुद्ध-सव्यदक्षिणभावस्य संप्रतिपन्नत्वात्। तद्ग्रहणपूर्वकस्वमुखग्रहणे मुखस्य दर्पणस्य चान्त-रालरूपविप्रकर्षस्याग्रहणात् दर्पणस्थत्वासंसर्गाग्रहो भवति। ततश्च दर्पणस्थत्वस्वाभिमुख-त्वविपर्यस्तसव्यदक्षिणभावप्रतीतीनां याथार्थ्यं सिध्यतीत्यर्थः। ननु सोपाधिकभ्रमे अन्त-रालाग्रहणमप्रयोजकम्, दर्पणबिम्बयोरन्तरालं पश्यतामपि पार्श्वस्थानां बिम्बे दर्पणस्थत्वभ्रान्ति-दर्शनादिति चेत्, सत्यम्— उपाधिनिवृत्तिसहितान्तरालग्रहणे भ्रमादर्शनादुपाधिनिवृत्ति-सहितान्तरालग्रहणस्याभावोऽपेक्षित इति तात्पर्यम्।

श्रुतप्रदीपिका

न चाक्षुषतेजःसंपर्कात् स्फटिकराग इत्यत्राह—**जपेति**। अश्ममात्रेऽपि स्यादित्यत्राह—**स्वच्छेति**। मरीचिकाजलधीयाथार्थ्यमाह—**मरीचिकेति**। अदृष्टस्य नियामकत्वं साधारणाकारग्रहोऽसाधारणाकाराग्रहश्च सर्वैरुपेत्यम्। मान्त्रिकार्थवादिकार्थस्वीकारो गुरु-मताद् भिदा। **अलातेति; अन्तरालाग्रहणात्;** अलातस्य तत्तत्प्रदेशेन पूर्वापरसंयोगयो-र्मध्यकालाग्रहणात्; क्रमाग्रहणादित्यर्थः। **दर्पणेति;** विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्य मुखस्य च निरन्तरभानात्तथा प्रतीतिः।

श्रीभाष्यम्

**दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वात् अदृष्टवशेनै-तदंशवियुक्तो दिगन्तरांशो गृह्यते। अतो दिगन्तरप्रतीतिर्यथार्थैव। द्विचन्द्रज्ञानादावप्यङ्गुल्यवष्टम्भतिमिरादिभिर्नायनतेजोगतिभेदेन सा-**

मग्रीभेदात् सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किंचिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च 'द्वौ चन्द्रौ' इति भवति प्रतीतिविशेषः । देशान्तरस्य तद्विशेषणत्वं देशान्तरस्याग्रहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति । तत्र सामग्रीद्वित्वं पारमार्थिकम् । तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम् । ग्रहणद्वित्वेन चन्द्रस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकम् । तत्र विशेषणद्वयविशिष्टचन्द्रग्रहणद्वयस्यैक एव चन्द्रो ग्राह्य इति ग्रहणे प्रत्यभिज्ञानवत् केवलचक्षुषः सामर्थ्याभावाच्चाक्षुषज्ञानं तथैवावतिष्ठते । द्वयोश्चक्षुषोरेकसामग्र्यन्तर्भावेऽपि तिमिरादिदोषभिन्नं चाक्षुषं तेजः सामग्रीद्वयं भवतीति कार्यकल्प्यम् । अपगते तु दोषे स्वदेशविशिष्टस्य चन्द्रस्यैकग्रहणवेद्यत्वात् 'एकश्चन्द्रः' इति भवति प्रत्ययः । दोषकृतं तु सामग्रीद्वित्वं तत्कृतं ग्रहणद्वित्वं तत्कृतं ग्राह्याकारद्वित्वं चेति निरवद्यम् ।

### श्रुतप्रकाशिका

**दिङ्मोहेऽपीति;** सर्वदिक्सद्भावेऽपि प्राच्यादिव्यवहारः प्रतियोग्यपेक्षया । तत्र दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानम् । अतो यथार्थविषयत्वमिति । दिशां बहुत्वं च "पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्यवगम्यते **द्विचन्द्रेति** । ततः किमित्यत्राह —**तत्रैकेति** । स्वतः ऋजुप्रसारिणोऽपि चाक्षुषतेजसो वक्रत्वं संभति, दर्पणादिना तद्दर्शनात् ; इहाप्यङ्गुल्यवष्टम्भादृष्टादिना तदुपपत्तिः । ततः किमित्यत्राह—**अत इति** । चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुश्चन्द्रैकत्वाग्रहणम् । देशान्तरगतस्य तद्विशेषणकत्वं कथमित्यत्राह—**देशेति** ; ततः किं प्रतीतेर्याथार्थ्यस्येत्यत्राह—**तत्र सामग्रीति** । **तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकमिति;** ग्रहणद्वयमतिशैघ्र्यादगृहीत-

क्रमम्, अत एवागृहीतपरस्परभेदं चेति भावः। विशेषणद्वयविशिष्टविषयग्रहणद्वयेऽपि विशेष्यैक्यं कथं न प्रतीयत इत्यत्राह—**तत्रेति**। न हि केवलं चक्षुरैक्यप्रतिपत्तिसमर्थं दृष्टं देवदत्तादिषु; अपितु संस्कारसंस्कृतमेव समर्थं दृष्टम्। संस्कारस्य विलम्बितभावित्वान्न तदानीमैक्यप्रतिपत्तिरित्यर्थः। **चाक्षुषज्ञानं तथैवावतिष्ठत इति**; अगृहीतैकत्वचन्द्रमात्रविषयमवतिष्ठत इत्यर्थः। **तस्यैवेति** पाठे चन्द्रमात्रस्यैव ग्राहकतया तिष्ठतीत्यर्थः। एकसामग्रीभूतयोश्चक्षुषोः कथं द्विसामग्रीत्वमित्यत्राह—**द्वयोश्चक्षुषोरिति**। स्वतो निर्दोषस्येन्द्रियस्य सदोषत्वं हि कार्यकल्प्यम्; तथा सामग्रीद्वित्वमपीति भावः। तर्हि सदैव चन्द्रद्वित्वं गृह्येतेत्यत्राह—**अपगते त्विति**। कथं दोषापगमे ऐक्यप्रतिपत्तिरिति शङ्कायां द्वित्वप्रतिपत्तेरौपाधिकत्वमाह—**दोषकृतमिति**। **ग्राह्याकारद्वित्वमिति**; स्वदेशविशिष्टत्वमेक आकारः। अगृहीतान्तरालं प्रदेशान्तरमेक आकारः। तस्याकारत्वं विशेषणत्वम्। न चानाकारस्याकारत्वेनान्यथाख्यानम्, अगृहीतान्तरालत्वे सति अप्रधानतया भातस्यैव विशेषणत्वात्। नेत्रवृत्तिर्वित्तिगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति प्राभाकराः। यथा संवित्सिद्धौ प्राभाकरमतोपन्यासे—

"नेत्रवृत्तिर्द्विधा भूता द्वे तु वित्ती वितन्वती।
द्वित्वं चन्द्रं च युगपन्निर्भासयति तत्र नः॥"

इति। देशगतद्वित्वं चन्द्रं चागृहीतभेदं गृह्णातीति ततोऽत्रवैषम्यम्। चाक्षुषतेजोगतिभेदरूपसामग्रीद्वयजन्यमतिशैघ्र्यादगृहीतक्रममगृहीतभेदं च ज्ञानद्वयम्, अगृहीतैकत्वं चन्द्रमगृहीतान्तरालं देशान्तरं च निरन्तरं गृह्णाति। ततो द्विचन्द्रव्यवहार इत्यर्थः। **इति निरवद्यम्**; यथार्थख्यातिसमर्थनमित्यर्थः।

### भावप्रकाशिका

**दिगन्तरप्रतियोगिनो दिगन्तरस्य चेति**; यस्मिन् प्रदेशे प्रत्यक्त्वभ्रमो जायते तत्र प्रत्यक्त्वमवध्यन्तरापेक्षयास्त्येव; स्वाश्रयदेशापेक्षया परं नास्ति; ततश्चान्यावधिके प्रत्यक्त्वे स्वाश्रयदेशावधिकत्वासंसर्गाग्रह इत्यर्थः। **चन्द्रदेशौ द्वाविति प्रतीत्यभावहेतुरिति**; एकस्य चन्द्रस्य द्वौ देशाविति प्रतीत्यभावहेतुरित्यर्थः। भाष्ये—**युगपद्देशद्वयेत्यत्र** यौगपद्योक्तिः शैघ्र्याभिप्राया, एकस्मिन् क्षणे ज्ञानद्वयासंभवात्। भाष्ये—**ग्रहणभेदेन ग्राह्याकारभेदादिति**; ग्रहणभेदेनोल्लिख्यमानदेशरूपग्राह्याकारभेदादित्यर्थः;

न तु ग्रहणभेदायत्तं ग्राह्याकारद्वित्वमिति मन्तव्यम्, ग्राह्यरूपदेशद्वित्वस्य ग्रहणभेदानधीनत्वात्। **ग्राह्याकारद्वित्वं च पारमार्थिकमिति** भाष्यस्याप्ययमेवार्थः। केचित्तु—तत्र सामग्रीद्वित्वग्रहणद्वित्वपारमार्थ्यसाधनसंरम्भात् ग्रहणद्वित्वेन ग्राह्याकारद्वित्वसमर्थनसंरम्भाच्च ग्रहणगतद्वित्वस्य चन्द्रस्य चासंसर्गाग्रह एव, न तु देशगतद्वित्वस्येति वदन्ति; तन्न; प्राभाकरमतप्रवेशापत्त्या प्राभाकरमतवैषम्यप्रदर्शकोत्तरटीकाग्रन्थविरोधप्रसङ्गेन च तस्योपेक्षणीयत्वात्। **नेत्रवृत्तिर्द्विधा भूतेति**; ननु श्लोके द्वित्वं चन्द्रं चेति द्वित्वमात्रं प्रतीयते; वित्तिगतद्वित्वमिति कुतोऽवसीयते? नेत्रवृत्तेर्वित्तिग्रहणसामर्थ्याभावेन वित्तिद्वित्वग्राहकत्वासंभवादिति चेत्—न; "द्वे तु वित्ती वितन्वती" इति वित्तिगतद्वित्वस्य प्रकृतत्वेन तस्यैव ग्रहणोपपत्तेः।

## श्रुतप्रदीपिका

**दिङ्मोहेति;** दिगन्तरोपाधेर्दिगन्तरस्य च नीरन्ध्रधीः। पीतशङ्खादिषु दिङ्मोहपर्यन्तेषु प्रतिबिम्बं विना द्रव्यान्तरसंसर्गान्निर्वाहः। **द्विचन्द्रेति;** अविशेषणस्य विशेषणत्वं मृषेत्यत्राह—**देशान्तरस्येति**। निरन्तरभातत्वमेव सर्वत्र विशेषणत्वमित्यर्थः। ततः किं याथार्थ्यस्येत्यत्राह—**तत्रेति**। **ग्राह्याकारद्वित्वम्;** निरन्तरभातदेशद्वित्वम्। एकत्वाग्रहः कथमित्यत्राह—**तत्रेति**। **सामर्थ्याभावात्;** अतिशैघ्र्याद्विलम्बितभाविसंस्कारादित्यर्थः। सामग्रीद्वित्वं कथमित्यत्राह—**द्वयोरिति**। कार्यकल्प्यम्; दोषवदिति भावः। सदा द्वित्वधीः स्यादित्यत्राह—**अपगते त्विति**। दोषापगमे कथमैक्यधीरित्यत्राह—**दोषेति**।

## न्यायसुदर्शनम्

ननु—**दिङ्मोहेऽपि दिगन्तरस्यास्यां दिशि विद्यमानत्वात्** इत्यादिना तत्रापि त्रिवृत्करणन्याय एवोक्त इति भाष्ये प्रतिभाति; तच्चायुक्तं, हिमवान् दक्षिणोत्तरस्थित इति कस्यचिन्मोहे सति तादृशोऽपि हिमवतः कस्यचिदङ्गीकारप्रसङ्गात्। नैतदेवम्—नह्यत्र त्रिवृत्करणन्यायोऽङ्गीकृतः, असम्भावात्। न हि पृथिव्यादिवत् व्यवस्थिताकृतिविशेषो दिक्पदार्थः। यस्य यो देशः प्राक् स एवान्यस्य प्रत्यक् भवति। तस्मादौपचारिको दिग्व्यवहारः। कंचनोपाधिविशेषं गृहीतवतः पुनर्विरूपोपाधिं गृह्णतः पूर्वोपाधिं विस्मरतः पुरुषस्य तद्रूपाधिकरण एव दिग्व्यवहारस्तत्रापि प्रवर्तते। अतोऽत्रान्यस्य-

कस्यचिदपि रजतादेरिवाभावात् उपाध्यायत्तत्वात् तदुपाध्यन्तरग्रहणे स उपाधिः स्मर्यमाणः स्वाधीनधीव्यवहारं प्रवर्तयेदिति न दोषाय स्यात्। **दिगन्तरस्यास्यां दिशि विद्यमानत्वादिति :** उपाधिविशेषेण सर्वत्र सर्वासां दिशां विद्यमानत्वादित्यर्थः। **दिगन्तरप्रतीतिर्यथार्थैव ;** यथार्थोपाधिक एव दिगन्तरव्यवहार इत्यर्थः। ग्रहणस्मरणयोरेवात्र विपरीतव्यवहारहेतुतया भ्रमरूपत्वं स्यादिति चेत्—नायं दोषः, साक्षात्प्राच्यादिव्यवहारस्यापि ग्रहणस्मरणायत्तत्वात्। आदित्यं कस्मिंश्चिद्देशे गृहीत्वा तस्मिन्नन्यत्र गतेऽपि तमेव स्मृत्वा हि सर्वत्र प्राच्यादिव्यवहारः। अतो ग्रहणस्मरणे एव दिग्व्यवहारहेतुभूते इति मन्तव्यम्।

श्रीभाष्यम्

**अतः सर्वं विज्ञानजातं यथार्थमिति सिद्धम्। ख्यात्यन्तराणां दूषणानि तैस्तैर्वादिभिरेव प्रपञ्चितानीति न तत्र यत्नः क्रियते। अथवा किमनेन बहुनोपपादनप्रकारेण। प्रत्यक्षानुमानागमाख्यं प्रमाणजातमागमगम्यं च निरस्तनिखिलदोषगन्धमनवधिकातिशयासंख्येयकल्याणगुणगणं सर्वज्ञं सत्यसंकल्पं परं ब्रह्माभ्युपगच्छतां किं न सेत्स्यति? किं नोपपद्यते? भगवता हि परेण ब्रह्मणा क्षेत्रज्ञपुण्यपापानुगुणं तद्भोग्यत्वायाखिलं जगत्सृजता सुखदुःखोपेक्षाफलानुभवानुभाव्याः पदार्थाः सर्वसाधारणानुभवविषयाः केचन तत्तत्पुरुषमात्रानुभवविषयास्तत्तत्कालावसानास्तथा तथाऽनुभाव्याः सृज्यन्ते। तत्र बाध्यबाधकभावः सर्वानुभवविषयतया तद्रहिततया चोपपद्यत इति सर्वं समञ्जसम्।**

श्रुतप्रकाशिका

ख्यात्यन्तरदूषणानामन्योन्यमुक्तानां स्वाभिमतत्वात् तत्र यत्नाभावमाह—**ख्यातीति**। **अथवा किमनेने**त्यादिपाठो बहुषु कोशेषु दृश्यते; व्याख्यातृभिर्व्याख्यातश्च। तत्र परागर्थविषयापरोक्षभ्रमेष्वेकेनैवोत्तरेण परिहारः कृतो भवति। **किं न सेत्स्यती**त्यनेन प्रमाणास्तित्वमुक्तम्। **किं नोपपद्यते** इत्यनेनोपपत्तिरुक्ता। किं प्रमाणम्? कथ-

मुपपत्तिरित्यत्राह—**भगवता हीति** । **अखिलं जगत्सृजतेत्यनेना**स्यार्थस्य श्रुतिमूलत्वं सूचितम् , कृत्स्नकार्यकारणत्वाद्ब्रह्मणः । "इदं सर्वमसृजत" इति हि श्रुतिः । प्रतीयमानत्वाविशेषादिदमपि तत्सृष्टमित्यर्थः । तर्हि बाध्यबाधकभावव्यवस्था कथमित्यत्राह—**तत्रेति** । न हि तत्तदेकपुरुषानुभाव्यानां तत्तत्कालावसायिनां च सुखादीनां मिथ्यात्वमिति भावः ।

### श्रुतप्रदीपिका

ख्यातीनां याथार्थ्यं निगमयति—**अत इति** । ख्यात्यन्तराणि किं न निराक्रियन्त इत्यत्राह—**ख्यात्यन्तरेति** । अथ सर्वत्रैकनिर्वाहेण परिहारमाह—**अथवेति** । **सेत्स्यति**; उपपद्यत इत्यर्थः । मानतर्कसिद्धिरुक्ता । उक्तं विवृणोति—**भगवता हीति** । **अखिलं जगत् सृजतेत्यनेन** "इदं सर्वमसृजत" इत्यादिश्रुतिः स्मारिता । उपपत्तिमाह—**सर्वेति** । बाध्यबाधकभावः कथमित्यत्राह—**तत्रेति** ।

### न्यायसुदर्शनम्

ख्यात्यन्तरदूषणे चायं गतिप्रकारः—

साकारत्वं धियो वा स्याद्भातो वान्यस्य सत्यता ।
अन्यस्य भानं स्याद्वैवमपि ख्यात्यन्तरार्थिनाम् ॥ ५५ ॥

अनिर्वचनीयख्यातिपक्षे च—

अनिर्वाच्यत्वधीः शुक्तिरूप्यज्ञाने न संगता ।
किंत्विदं सम्यगेवेति धीस्ततो हि प्रवर्तते ॥ ५६ ॥
अनिर्वाच्यत्वधीरेव जाता चेद्बाधतः पुनः ।
भ्रान्तित्वं निरणायीति बाधवैयर्थ्यमापतेत् ॥ ५७ ॥
सम्यक्त्वमर्थगं धीगं शून्यं वेति विकल्प्य च ।
अन्येषामिव तस्यापि वक्तव्या दोषवर्णना ॥ ५८ ॥
ज्ञानसत्यत्वमर्थेन नैरन्तर्येण भासते ।
तस्थिवच्चेत्तथा ख्यातिप्रसङ्गोऽनिष्ट एव नः ॥ ५९ ॥
न सम्यक्त्वं न चासम्यग्भावो वात्र प्रतीयते ।
रूप्यमात्रमिहाभाति बहिष्ठं यदि मन्यसे ॥ ६० ॥

तर्हि सम्यक्त्वविज्ञानं ज्ञानान्तरत एव हि ।
अधिकार्थग्रहीतृत्वं बाधकस्यापतेत्तदा ॥ ६१ ॥
असम्यग्रूप्यमेतद्धीत्येव नोदेति बाधधीः ।
उदेति चेत्तदा रूप्यं न बाध्यं स्यान्निषेधने ॥ ६२ ॥
सम्यक्त्वं नतरां बाध्यं प्राप्त्यभावोपपादनात् ।
अथ सामान्यतो दृष्ट्या तत्सम्यक्त्वं प्रतीयते ॥ ६३ ॥
इति चेद्बाधकापोह्यं तदा ज्ञानान्तरं भवेत् ।
रूप्यज्ञानं तदा सम्यग्ज्ञानं स्याद्बाधहानितः ॥ ६४ ॥
ज्ञानान्तरेऽपि पूर्वोक्तदोषाणामुद्भवस्तथा ।
रूप्यस्य रूप्यताभानादन्यत् सम्यक्त्वमेव किम् ॥ ६५ ॥
अर्थक्रियादिकारित्वमिति चेत्साधु भाषितम् ।
तर्हि नार्थक्रियाकारीत्येतावद्बालभाषितम् ॥ ६६ ॥
न बाधो रूप्यविज्ञप्तेर्बाधो हि व्यवहारगः ।
प्रतीतं रजतं तच्च बाह्य एवार्थ इष्यते ॥ ६७ ॥
स एव बाधकेऽपोह्य इति पक्षो न शोभनः ।
रूप्यमेवातदित्येवं तस्माद् ग्रहणतस्तदा ॥ ६८ ॥
बाधकप्रत्ययस्यैव विभ्रमत्वप्रसङ्गतः ।
बाधकप्रत्ययेनेह शुक्तिकात्वं न गृह्यते ॥ ६९ ॥
निवर्त्यते तदा रूप्यं तज्ज्ञानं चेति चेन्न तत् ।
ज्ञानं तु क्षणिकत्वेन स्वयमेव निवर्तते ॥ ७० ॥
भातोऽर्थो ग्राहकाभावाद् गृहीतो नावतिष्ठते ।
अर्थस्वरूपसद्भावग्राह्यमानानवग्रहात् ॥ ७१ ॥
भातस्यार्थस्य विज्ञानादभावो यदि संभवेत् ।
सोऽर्थः प्रध्वंस एवेति तन्मिथ्यात्वे तु का प्रमा ॥ ७२ ॥
व्यवहारनिवृत्तिश्चेदस्मत्पक्षे तु का रुषा ।
यत्कालयोगिनी व्यक्ती रूप्याकारतया व्यभात् ॥ ७३ ॥

तत्काल्योगिनी सैव शुक्तिकात्वेन गृह्यते ।
एतत्स्याद् द्व्याकृतित्वं च युगपन्नैव संभवेत् ॥७४ ॥
एकाकारो मृषाकारः स च भानादसन्न च ।
इति चेन्न द्विरूपत्वं भवतैवोक्तमित्यतः ॥ ७५ ॥
परमार्थाकृतिद्वैतं न हि संभवतीति चेत् ।
तर्हि पूर्वोक्तदोषाणां पौनःपुन्येन संभवः ॥ ७६ ॥
त्र्यात्मकेष्वमृषाभूतेष्वनेकाकृतयो मताः ।
भवतोऽप्यत्र भूयस्त्वाल्पत्वाभ्यां विरोधिता ॥ ७७ ॥
इति चेदत्र चाप्येवं तत्कृत्स्नं ज्ञानमर्थवत् ।
त्र्यात्मकेषु यथा तेजोऽबन्नेष्वल्पविभुत्वतः ।
अन्योन्याभाववादः स्यादेवं शुक्त्यादिकेष्वपि ॥ ७८ ॥

### श्रीभाष्यम्

यत्पुनः सदसदनिर्वचनीयमज्ञानं श्रुतिसिद्धमिति ; तदसत् । "अनृतेन हि प्रत्यूढाः" इत्यादिष्वनृतशब्दस्यानिर्वचनीयानभिधायित्वात् । ऋतेतरविषयो ह्यनृतशब्दः । ऋतमिति कर्मवाचि, "ऋतं पिबन्तौ" इति वचनात् । ऋतं कर्म फलाभिसन्धिरहितं परमपुरुषाराधनवेषं तत्प्राप्तिफलम् । अत्र तद्व्यतिरिक्तं सांसारिकफलं कर्मानृतं ब्रह्मप्राप्तिविरोधि , "एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति वचनात् ।

### श्रुतप्रकाशिका

अथ श्रुतिस्मृत्यर्थापत्तिभ्यामनिर्वचनीयसिद्धिं दूषयितुं प्रथमं श्रुतिवाक्यानि योजयति—**यत्पुनरिति** । "अनृतेन "इत्यादिश्रुतिं व्याचष्टे—**अनृतेनेति** । पूर्वनिरस्तप्रकारेणानिर्वचनीयस्याप्रामाणिकत्वात्तत्र व्युत्पत्तिर्नास्तीति भावः । अनृतशब्दं व्याचष्टे—**ऋतेतरविषयो ह्यनृतशब्द इति** । हिशब्देन ऋतेतरविषयत्वसंप्रतिपत्तिः सूचिता । ऋताभावस्य ऋतविरोधिनश्च ऋतभूतब्रह्माश्रयत्वानुपपत्त्या तदन्य एव नञर्थस्त्वयापि वक्तव्य

इति भावः । अनृतशब्दार्थं निष्कष्टुम् ऋतशब्दार्थमाह—**ऋतमितीति । कर्मवाचि ;** पुण्यकर्मवाचीत्यर्थः ; न तु सत्यवाचीति भावः । कुत इत्यत्राह—**ऋतं पिबन्ताविति ।** अस्मिन् वाक्ये "सुकृतस्य लोके" इति ह्युक्तमिति भावः । एवंविधवाक्यान्तरेषु प्रसिद्धिश्चाभिप्रेता । "यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इत्युक्त्वा "एवमनृतादात्मानं जुगुप्सेत्" इति पुण्यप्रतियोगिन्यनृत-शब्दः प्रयुक्तः । तस्मात् ऋतशब्दः पुण्यवाची । पुण्यमपि हि मोक्षविरोधि ; तत्कथमनृतशब्दोक्तपापमात्रप्रत्यूढत्वमिति शङ्कायां मोक्षप्रकरणोक्तं पुण्यं विविनक्ति—**ऋतं कर्मेति ।** मुमुक्षोः सुकृतं दुष्कृतमुभयं हि विरोधीत्यतस्तद्द्वयं पापम् ; अतो नञ्समासान्तर्गतऋतशब्दोऽनभिसंहितफलकर्मपर इत्यर्थः । **परमपुरुषाराधनवेषं तत्प्राप्तिफलम्** इत्यनेन "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इत्येतत्सूचितम् । अनृतशब्दस्य ब्रह्मप्राप्तिविरोधिपरत्वे सति ऋतशब्दस्य बन्धकेतरकर्मवाचित्वसिद्धिरिति तदर्थं तत्पूर्ववाक्येनोपपादयति—**एतमिति ।** ऋतानृतशब्दयोः "एवमनृतादात्मानं जुगुप्सेत्" इत्यादिषु श्रुतिषु पुण्यपापपरत्वेन प्रसिद्धत्वात् "न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते" "क्षीयन्ते चास्य कर्माणि" इत्यादिषु सुकृतदुष्कृतयोरुभयो-रपि मोक्षविरोधित्वश्रवणात् मोक्षप्रकरणेषु मुमुक्षोः संसाराख्यानिष्टफलप्रदत्वेनोभयोरपि पापशब्दाभिधेयत्वात् अस्यानृतशब्दस्यास्मिन् वाक्य एव ब्रह्मप्राप्तिविरोधिपरत्वश्रवणात् "तस्यान्तरायो मैत्रेय" इत्यादिषु पुण्यपापकर्मणोर्मोक्षविरोधिफलत्वश्रवणात् अनृतशब्द-स्यानिर्वचनीयवाचित्वेन व्युत्पत्त्यभावाच्चानृतशब्दः तदन्यव्युत्पत्त्या मोक्षविरोधिकर्मपर इत्यर्थः ।

### भावप्रकाशिका

**ऋताभावस्य ऋतविरोधिनश्चेति ;** न च घटस्य घटाभावाश्रयत्ववत् ऋतस्य ऋताभावाश्रयत्वे को दोष इति वाच्यम् , भावाभावयोः सामानाधिकरण्यासम्भववत् आधा-राधेयभावस्याप्यसंभवात् । न चैवं घटे घटाभावाभावे घटसत्त्वापत्तिरिति वाच्यम्, घटाभावे घटतदभावयोर्द्वयोरप्यभाववत् घटे घटतदभावयोर्द्वयोरप्यभावोपपत्तेः । अत एव प्रपञ्चाभावरूपस्य ब्रह्मणः प्रपञ्चाधिकरणत्वायोग्यतया ब्रह्माश्रितस्य प्रपञ्चस्य स्वाधिकरणत्वा-योग्याधिकरणत्वरूपं मिथ्यात्वमिति परे वदन्ति । अत एव रूपविरोधिनो रूपत्वस्य

रूपाश्रितत्वादित्यपि शङ्का परास्ता, अत्र विनाश्यविनाशकभावलक्षणविरोधित्वस्य विवक्षितत्वात् । तन्मते च ज्ञानरूपब्रह्मणोऽज्ञाननाशकत्वादिति भावः । शङ्कते— **पुण्यमपि हीति** ।

श्रुतप्रदीपिका

अथ श्रुतिभिरनिर्वचनीयाज्ञानोक्तिं व्युदस्यति— **यत्पुनरित्यादिना** । **अनभिधायित्वात्**; अप्रामाणिकत्वेन व्युत्पत्त्यभावादिति भावः । अनृतशब्दार्थमाह— **ऋतेति** । अभावविरोधिनोस्तदाश्रयत्वायोगादित्यर्थः । ऋतशब्दार्थमाह— **ऋतमिति** । **कर्मवाचि**; पुण्यकर्मवाचि । अनृतमिति तदन्यपापकर्मवाचि । हेतुमाह— **ऋतं पिबन्ताविति** । "सुकृतस्य लोके" इति ह्युच्यते । "एवं पुण्यस्य कर्मणः" इत्यत्र "एवमनृतात्" इति पुण्यप्रतियोगि पापं ह्यनृतशब्देनोक्तमिति द्रष्टव्यम् । पुण्यमपि हि मोक्षविरोधीत्यत्राह— **ऋतमिति** । इष्टानिष्टफलत्वयोः पुण्यपापशब्दप्रवृत्तिनिमित्तत्वात् मुमुक्षून् प्रति नरकादिवत् स्वर्गादेरपि मोक्षविरोधित्वेनानिष्टत्वादृतशब्देन मोक्षैकसाधनं "स्वकर्मणा तमभ्यर्च्य" इत्याद्युक्तं कर्माभिधीयते । अनृतशब्देन तद्व्यतिरिक्तसांसारिकफलदं सर्वकर्मोच्यत इत्यर्थः । अनृतशब्दस्य मोक्षविरोधिकर्मपरत्वं कुत इत्यत्राह— **एतमिति** ।

श्रीभाष्यम्

**"नासदासीन्नो सदासीत्" इत्यत्रापि सदसच्छब्दौ चिदचिद्व्यष्टिविषयौ, उत्पत्तिवेलायां सत्त्यच्छब्दाभिहितयोश्चिदचिद्व्यष्टिभूतयोर्वस्तुनोरप्ययकालेऽचित्समष्टिभूते तमःशब्दाभिधेये वस्तुनि प्रलयप्रतिपादनपरत्वादस्य वाक्यस्य । नात्र कस्यचित् सदसदनिर्वचनीयतोच्यते, सदसतोः कालविशेषेऽसद्भावमात्रवचनात् । अत्र तमःशब्दाभिहितस्याचित्समष्टित्वं श्रुत्यन्तरादवगम्यते— "अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते" इति । सत्यं तमःशब्देनाचित्समष्टिरूपायाः प्रकृतेः सूक्ष्मावस्थोच्यते; तस्यास्तु "मायां तु प्रकृतिं विद्यात्" इति मायाशब्देनाभिधानादनिर्वचनीयत्वमिति चेत्— नैतदेवम्; मायाशब्दस्यानिर्वचनीयवाचित्वं न दृष्टमिति । मायाशब्दस्य मिथ्यापर्यायत्वे-**

नानिर्वचनीयवाचित्वमिति चेत्—तदपि नास्ति ; न हि सर्वत्र मायाशब्दो मिथ्याविषयः, असुरराक्षसास्त्रादिषु सत्येष्वेव मायाशब्दप्रयोगात् । यथोक्तम्—

"तेन मायासहस्रं तच्छम्बरस्याशुगामिना ।
बालस्य रक्षता देहमैकैकश्येन सूदितम् ॥"

इति । अतो मायाशब्दो विचित्रार्थसर्गकराभिधायी । प्रकृतेश्च मायाशब्दाभिधानं विचित्रार्थसर्गकरत्वादेव । "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः" इति मायाशब्दवाच्यायाः प्रकृतेर्विचित्रार्थसर्गकरत्वं दर्शयति । परमपुरुषस्य च तद्वत्तामात्रेण मायित्वमुच्यते, नाज्ञत्वेन । जीवस्यैव हि मायया निरोधः श्रूयते—"तस्मिंश्चान्यो मायया संनिरुद्धः" इति "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" इति च । "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यत्रापि विचित्राः शक्तयोऽभिधीयन्ते । अत एव हि—"भूरि त्वष्टेव राजति" इत्युच्यते । न हि मिथ्याभिभूतः कश्चिद्विराजते । "मम माया दुरत्यया" इत्यत्रापि गुणमयीति वचनात्सैव त्रिगुणात्मिका प्रकृतिरुच्यत इति न श्रुतिभिः सदसदनिर्वचनीयाज्ञानप्रतिपादनम् ।

श्रुतप्रकाशिका

**नासदासीदित्यादि ;** अत्र "अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते" इति ब्रह्मशब्दवाच्यशुद्धात्मस्वरूपविषयः सदसच्छब्दप्रयोगः प्रतिबन्दीत्वेनानुसन्धेयः । सदसच्छब्दयोश्चिदचिद्व्यष्टिविषयत्वमुपपादयति—**उत्पत्तीति** । उत्पन्नस्य हि प्रलयः । उत्पत्तिश्च चिदचिद्व्यष्ट्योः श्रुतिसिद्धा । अतस्तयोरत्र प्रलय उच्यत इत्यर्थः । सत्त्यच्छब्दाभ्यां "सच्च त्यच्चाभवत्" इति वाक्यं स्मारितम् । कार्यावस्थचेतनस्य सच्छब्दोक्तत्वादिह सच्छब्देन तदन्यवाचकेनासच्छब्देन च कार्यावस्थचेतनाचेतननिषेधः कृतः, वाक्यान्तरैकार्थ्यादित्यर्थः । "तम

आसीत्तमसा गूढम्'' इति तदनन्तरवाक्याभिप्रायेण **अचित्समष्टिभूते तमःशब्दाभिधेये वस्तु**नीत्युक्तम् । हेत्वन्तरं चाह— **सदसतोरिति** ; न हि कालविशेषेऽनिर्वचनीयत्वमभ्युपगम्यते । अचित्समष्टेस्तमःशब्दवाच्यत्वमुपपादयति—**अत्रेति** । ''तम आसीत्'' ''मायां तु प्रकृतिं विद्यात्'' इत्यनयोर्वाक्ययोः पूर्वं क्रमेणोपादानविवक्षां चोद्यरूपेण दर्शयति **सत्यमिति** । प्रकृतिशब्दवाच्या मायेत्यभिप्रायः । परिहरति **नैतदेवमिति** । कुत इत्यत्राह —**मायेति** । इतिर्हेतौ । मायाशब्दवाच्या प्रकृतिरित्यभिप्रायः । ऐन्द्रजालिकादिषु मायावित्व-प्रयोगदर्शनात् मायामिथ्याशब्दयोः पर्यायत्वादनिर्वाच्यस्य च मिथ्यात्वाच्च मायाशब्दवाच्यत्व-मित्यभिप्रायेण शङ्कते—**मायेति** । परिहरति—**तदपि नास्तीति** । मायाशब्दस्य मिथ्या-पर्यायत्वमेव नास्ति ; तथाभ्युपगमेऽप्यन्यथाख्यातिभेदाग्रहयोरन्यतरेणैवोपपन्नत्वान्न तद्विषयत्वं युक्तमित्यनिर्वचनीयवाचित्वं नास्तीति भावः । तदुपपादयति—**न हीति** । मायाशब्द-प्रयोगविषयेषु सर्वेषु मिथ्यात्वाननुवृत्तेरित्यर्थः । सत्येषु मायाशब्दप्रयोगं दर्शयति—**यथोक्तमिति** । न हि ज्ञानबाध्यानामेकैकशः शस्त्रच्छेद्यत्वमस्ति । तस्मादेकैकशो मायानां छेद्यत्ववचनान्मायाशब्दस्य सत्यपरत्वमिति । अनुयायिन एव प्रवृत्तिनिमित्तत्वा-न्मायाशब्दप्रयोगविषयेषु सर्वेष्वनुगतमाश्चर्यत्वमेव मायाशब्दप्रवृत्तिनिमित्तमित्याह—**अत इति** । आश्चर्यत्वं विस्मयनीयत्वम् । तच्च विचित्रार्थसर्गकरत्वात् । विचित्रशब्दो नानाविधवाची । नानाविधकार्यकरत्वात्प्रकृतेर्विस्मयनीयत्वम् । मायाशब्दो ह्याश्चर्यवा-चीति वक्ष्यते । तस्मादाश्चर्यत्वमेव प्रवृत्तिनिमित्तम् । असत्येषु सत्येष्वपि मायाशब्दप्रयोग-विषयेष्वाश्चर्यत्वं विद्यते । प्रकृतेराश्चर्यत्वमेव मायाशब्दाभिधेयत्वनिबन्धनमित्याह— **प्रकृतेरिति** । तदुपपादयति—**अस्मादिति** । विचित्रकार्यकरत्वात्प्रकृतेराश्चर्यरूपत्व-मिति न मायामात्रसूत्रविषयभाष्यविरोधः । एवं मायाशब्दार्थ उक्तः । अथ भगवतो माया-संबन्धश्रवणात् तद्वश्यत्वशङ्काव्युदासाय मायीति पदगतमत्वर्थीयप्रत्ययार्थमाह—**परमपुरु-षस्य चेति** । मायीति पदोक्तो मायासंबन्धो न तत्तिरोभाव्यत्वम्, अपितु तच्छेषित्वम् । जीवस्यैव तु तत्तिरोधेयत्वम् , तस्यैव तथात्वश्रवणादित्यर्थः । मायाभिभवो जीवस्यैवेत्ये-तस्मिन्नर्थे परोक्तमेव वचनमाह—**अनादीति** । ''इन्द्रो मायाभिः'' इत्यत्रानेकविचित्र-शक्त्यभिधायित्वं बहुवचनादवगम्यते । **ममेति** ; स्पष्टम् । निगमयति—**इतीति** । मायाशब्दस्य मिथ्याभूतविषयेषु प्रयोगो दृश्यते चेत्, तत्र लाक्षणिकः **स्यात्** , **अर्थस्य**

सत्यत्वाभावेन तस्याश्चर्यत्वाभावात् । प्रतिभासस्तु द्वित्वादिविषयत्वादाश्चर्यरूपः । मन्त्रौषधादिश्चाश्चर्यरूप इति तत्संबन्धाल्लाक्षणिकत्वम् ।

भावप्रकाशिका

**प्रतिबन्दीत्वेनानुसंधेय इति ;** यदि "नासदासीन्नो सदासीत्" इति श्रुतिबलात् तमःशब्दितप्रकृतेरनिर्वचनीयत्वं, तर्हि "अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते" इति प्रमाणबलात् ब्रह्मणोऽपि सदसद्विलक्षणत्वप्रसङ्ग इत्यर्थः । भाष्ये—**अचित्समष्टिभूते तमःशब्दाभिधेय इति ;** ननु कथं सदसच्छब्दितयोश्चिदचिद्व्यष्ट्योरचित्समष्टौ लय इति चेत्—न ; योग्यतावशेन सूक्ष्मचिदचिच्छरीरके लय इत्यर्थकत्वेनादोषात् । भाष्ये—**सत्यं तमःशब्देनेति ;** तमःशब्देनाभिहितस्याचित्समष्टित्वमिति सिद्धान्तिनोक्ते सत्यमित्यादिनाऽचित्समष्टिभूतायाः प्रकृतेः सूक्ष्मावस्थोच्यत इति कथमनूद्यते ? पूर्वत्र तमस एवाचित्समष्टित्वकथनेन प्रकृतेरचित्समष्टित्वस्य वा तमसस्तत्सूक्ष्मावस्थात्वस्य वाऽकथनादिति चेत्—न ; उभयोरपि विरोधाभावेन तथानुवादोपपत्तेः । **क्रमेणोपादानविवक्षामिति ;** पूर्वपक्षोपन्यासदशायां "तम आसीत्" इति वाक्यानन्तरं "मायां तु प्रकृतिम्" इति वाक्यमुपादानस्य पूर्वपक्षिणो विवक्षामित्यर्थः । तमःशब्दात् सांख्याभिमतप्रकृतिरुच्यत इति शङ्काव्यावृत्त्यर्थं "प्रकृतिं विद्यात्" इति वाक्यं तदनन्तरमेवोपात्तमिति भावः । ननु "अस्मान्मायी सृजते विश्वमेतत् तस्मिंश्चान्यो मायया संनिरुद्धः" इति वाक्यप्राप्तमायानुवादेन "मायां तु प्रकृतिं विद्यात्" इति वाक्येन प्रकृतिशब्दितमुपादानत्वं विधीयते, "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इत्यादौ प्रकृतिशब्दस्योपादान एव प्रसिद्धेः ; परैरपि तथा व्याख्यातत्वाच्च । तत एवोपादानमिथ्यात्वस्यापि सिद्धेर्मायानुवादेन प्रकृतित्वं विधीयत इत्येव परेण सुवचमिति चेत्—न ; प्रकृतिशब्दस्योपादानपरत्वादपि प्रसिद्धिप्राचुर्येणाचित्समष्टिप्रकृतेरेवोपस्थित्या तस्या मायात्वरूपानिर्वचनीयत्वविधानस्यैव तन्मतेऽप्युचितत्वादिति भावः । **न मायामात्रसूत्रेति ;** "मायामात्रं तु कार्त्स्न्येन" इत्यादिसूत्रे मायाशब्दस्याश्चर्यार्थकत्वप्रतिपादकभाष्येण विचित्रार्थसर्गकारित्वप्रतिपादकस्यास्य भाष्यस्य न विरोध इत्यर्थः । **बहुवचनादवगम्यत इति ;** त्वदभिमताविद्याया एकत्वादिति भावः । **प्रतिभासस्तु द्वित्वादिविषयत्वादिति ;** अविद्यमानचन्द्रद्वित्वादिविषयत्वादित्यर्थः ।

श्रुतप्रदीपिका

**नासदासीदित्यादि** ; " अनादि मत्परं ब्रह्म न सत्तन्नासत् " इति वचनं यथा न परस्य ब्रह्मणोऽनिर्वचनीयत्वपरस्तथेहापीत्यभिप्रायः । **उत्पत्तीति** ; कार्यावस्थजीवे सच्छब्दश्रुतेरसच्छब्दोऽपि तदन्यकार्याचित्पर इत्यर्थः । **तमःशब्देति** ; " तम आसीत् " इति ह्यनन्तरोक्तिः । हेत्वन्तरमाह—**सदसतोरिति** ; न ह्यनिर्वाच्यत्वं कदाचिदिति भावः । तमसोऽचित्समष्टित्वमुपपादयति—**अत्रेति** । चोदयति—**सत्यमिति** । परिहरति—**नैतदिति** । इतिर्हेतौ । शङ्कते—**मायेति** । प्रत्याह—**तदपीति** । मिथ्यार्थत्वमेव नास्ति ; तथोपगमेऽपि भेदाग्रहादिनोपपत्तेर्नानिर्वाच्यत्वमर्थ इति भावः । सर्वत्रातद्विषयत्वे हेतुमाह—**असुरेति** । **यथेति** ; न हि रज्जुसर्पः शस्त्रच्छेद्य इति भावः । तस्यार्थमाह—**अत इति** । तं स्फुटयति—**अस्मादिति** । **विचित्रः** ; नानाविधः । तादृगर्थसर्गकरत्वमाश्चर्यत्वं विस्मयनीयत्वम्, मायाशब्दो ह्याश्चर्यवाचीति वक्ष्यमाणत्वात् । मायित्वं शेषितयेत्याह—**परमेति** । व्यावर्त्यं विवृणोति—**जीवस्येति** । "मायाभिः" इति बहुवचनस्वारस्यमभिप्रेत्याह—**विचित्राः शक्तय इति** । **ममेति** ; स्फुटम् ।

श्रीभाष्यम्

**नाप्यैक्योपदेशानुपपत्त्या ; न हि " तत्त्वमसि " इति जीवपरयोरैक्योपदेशे सति सर्वज्ञे सत्यसंकल्पे सकलजगत्सर्गस्थितिविनाशहेतुभूते तच्छब्दावगते प्रकृते ब्रह्मणि विरुद्धाज्ञानपरिकल्पनाहेतुभूता काचिदप्यनुपपत्तिर्दृश्यते । ऐक्योपदेशस्तु त्वंशब्देनापि जीवशरीरकस्य ब्रह्मण एवाभिधानादुपपन्नतरः । " अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि " इति सर्वस्य वस्तुनः परमात्मपर्यन्तस्यैव हि नामरूपभाक्त्वमुक्तम् । अतो न ब्रह्माज्ञानपरिकल्पनम् ।**

श्रुतप्रकाशिका

अथ श्रुत्यर्थापत्त्या अनिर्वचनीयसिद्धिं दूषयति—**नापीति** । प्रतिज्ञातमुपपादयति—**न हीति** । अज्ञानापरिकल्पनेऽनुपपत्तिर्नास्ति ; तत्कल्पन एवानुपपत्तिः, विरुद्धधर्मश्रवणादित्यभिप्रायेण तच्छब्दावगतविशेषणान्युक्तानि । समानविभक्तिश्रुतिसिद्धतया ह्यैक्यापरित्यागः । तथा श्रुतहानस्यान्याय्यत्वात् शब्दावगतविशेषाः स्वीकार्या इति भावः ।

ऐक्योपदेशानुपपत्तिरिति चेत्, तत्राह— **ऐक्येति** । जीवपरयोर्हेयसंबन्धतदनर्हत्वाभ्यां ह्यैक्यविरोधः । जीवशरीरकस्य परमात्मन ऐक्याभिधाने हेयसंबन्धस्य जीवद्वारकतया विरोधः परिहृत इत्यर्थः । **उपपन्नतरः**; मुख्यतयोपपन्न इति भावः । जीववाचि-शब्देन तच्छरीरकपरब्रह्माभिधानममुख्यमिति चेत्, तत्राह— **अनेनेति** । श्रुत्यर्थापत्त्यसिद्धिं निगमयति— **अत इति** ।

**श्रुतप्रदीपिका**

श्रुत्यर्थापत्तिं व्युदस्यति— **नापीति** । उपपादयति— **न हीति** । अक्लृप्तौ नानु-पपत्तिः, क्लृप्तावेवानुपपत्तिरित्यभिप्रायेण तच्छब्दावगतविशेषणान्युक्तानि । कथं निर्वाह इत्यत्राह— **ऐक्येति** । मुख्यत्वं तरबर्थः । कथं तदित्यत्राह— **अनेनेति** ।

**श्रीभाष्यम्**

इतिहासपुराणयोरपि न ब्रह्माज्ञानवादः क्वचिदपि दृश्यते । ननु "ज्योतींषि विष्णुः" इति ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञाय "ज्ञान-स्वरूपो भगवान् यतोऽसौ" इति शैलाब्धिधरादिभेदभिन्नस्य जगतो ज्ञानैकस्वरूपब्रह्माज्ञानविजृम्भितत्वमभिधाय "यदा तु शुद्धं निजरूपि" इति ज्ञानस्वरूपस्यैव ब्रह्मणः स्वस्वरूपावस्थितिवेलायां वस्तुभेदाभाव-दर्शनेनाज्ञानविजृम्भितत्वमेव स्थिरीकृत्य "वस्त्वस्ति किम्" "मही घटत्वम्" इति श्लोकद्वयेन जगदुपलब्धिप्रकारेणापि वस्तुभेदानामस-त्यत्वमुपपाद्य "तस्मान्न विज्ञानमृते" इति प्रतिज्ञातं ब्रह्मव्यतिरिक्त-स्यासत्यत्वमुपसंहृत्य "विज्ञानमेकम्" इति ज्ञानस्वरूपे ब्रह्मणि भेद-दर्शननिमित्ताज्ञानमूलं निजकर्मैवेति स्फुटीकृत्य "ज्ञानं विशुद्धम्" इति ज्ञानस्वरूपस्य ब्रह्मणः स्वरूपं विशोध्य "सद्भाव एवं भवतो मयोक्तः" इति ज्ञानस्वरूपस्य ब्रह्मण एव सत्यत्वं, नान्यस्य; अन्यस्य चासत्यत्वमेव; तस्य भुवनादेः सत्यत्वं व्यावहारिकमिति तत्त्वं तवोपदिष्ट-मिति ह्युपदेशो दृश्यते ।

## श्रुतप्रकाशिका

इतिहासपुराणयोर्ब्रह्माज्ञानपरत्वाभावं प्रतिजानीते—**इतिहासेति । ब्रह्मैकमेव तत्त्वमिति प्रतिज्ञायेति ;** जडाजडयोः स्वरूपैक्यायोगेन सामानाधिकरण्यस्य बाधार्थत्वात् उत्तरश्लोकेषु तद्व्यतिरिक्तस्य मिथ्यात्वकथनाच्चेत्यभिप्रायः । विज्ञानविजृम्भितानि : विविधं ज्ञायते येन, विपरीतं ज्ञायते येनेति वा करणे व्युत्पत्तिः; विज्ञानमविद्या । "यदा तु शुद्धम्" इत्यादिना तस्य हि व्यतिरेको वक्ष्यते । विज्ञाने विजृम्भितानीति योजना त्वयुक्ता, अस्वारस्यात् । विजृम्भितानीति नपुंसकान्तपदस्य पुंलिङ्गभेदशब्दविशेषणत्वायोगेन विजृम्भितशब्दस्य भावार्थप्रत्ययान्तत्वस्य युक्तत्वेन षष्ठीसमासस्य युक्तत्वाच्च । ब्रह्मव्यतिरिक्तस्याविद्यापरिकल्पितत्वं व्यतिरेकमुखेन स्थिरीकरोतीत्याह—**यदा त्विति । शुद्धम् ;** अविद्यारहितम् । **निजरूपि :** तत्कृतभेददर्शनरहितम् । अस्तदोषम् ; रागादिदोषरहितम् । संकल्पतरोः ; समन्तात्कल्प्यतेऽनेनेति संकल्पो दोषः । "वस्तुषु वस्तुभेदाः" इत्यत्र वस्तुष्विति बहुवचने न तात्पर्यम् । जडोपलक्षिते वस्तुनि जडगतभेदा न संभवन्तीत्यर्थः । यद्वा एको वस्तुशब्द आकारपरः ; जडगताकारभेदा न भवन्तीत्यर्थः । "वस्त्वस्ति किम्" "मही घटत्वम्" इति श्लोकद्वये प्रथमेनार्थस्वभाव उक्तः । द्वितीयेनोदाहरणं दर्शितमिति भिदा । तत्र—कुतो हि तत्त्वम्; एवं सति कुतः परमार्थ इत्यर्थः । कृत्स्नमपरमार्थत्वेनोपलब्धं चेत्कथं तत्र प्रामण्यमिति शङ्कायामुच्यते—"स्वकर्मभिस्तैर्मितात्मनिश्चयैः" इति; तत्त्वार्थनिश्चयविरोधिकर्मवशादित्यर्थः । यद्वा न केवलमात्मविद्भिरेवासत्यत्वमुपलभ्यते, अपित्वज्ञैरपीति भावः । न केवलं शास्त्रप्रमाणेन, लौकिकजडग्राहिप्रमाणेनापि तस्य मिथ्यात्वं सिध्यतीत्युक्तं भवति । "तस्मान्न विज्ञानमृते" इति श्लोकार्धमनात्मभूतविजातीयभेदनिषेधमुपसंहरतीत्याह—**तस्मादिति ।** "विज्ञानमेकम्" इत्यर्धं सजातीयरूपात्मभेदनिषेधपरम् । **भेददर्शननिमित्ताज्ञानमूलं निजकर्मैवेतीति ;** भेददर्शनम्; सजातीयभेददर्शनम् । तदुत्तरोत्तरभाविकार्याज्ञानहेतुः । तस्यापि पूर्वकर्मैवेत्यर्थः । यो देवादिशरीरभेदहेतुः स एवेत्येवकाराभिप्रायः । यद्वा देवादिशरीरभेदप्रतीतिहेतुकाज्ञानमात्मनि देवत्वाद्याकारारोपणरूपम् । तस्य हेतुः कर्मैवेत्यर्थः । अनात्मन्यात्मबुद्धेरप्यज्ञानशब्दवाच्यत्वं युक्तम्, तस्या अपि मूलाज्ञानकार्यत्वात् । "श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ।

अनात्मन्यात्मबुद्धिर्या " इति तस्या अज्ञानपर्यायाविद्याशब्दवाच्यत्वाच्च । " ज्ञानं विशुद्धम् " इति स्वगतभेदनिषेध: । विशुद्धं विमलमिति; अविद्यातत्कृतभेददर्शनरहितमित्यर्थः । तत्कृतशोकादिरहितमित्याह—"विशोकम्" इति । एवं—"सदैकम् इति सजातीयविजातीय-भेदविरहानुवाद: । यद्वा एकमिति सजातीयभेदनिषेधानुवाद: । सदैकमित्युक्तप्रकारेण स्वगतभेदराहित्यमुच्यते । परमपरेशादिशब्दवाच्यं चिन्मात्रमेवेत्याह—"परम:" इति । नेदं परमतं, तत्त्वमेवोक्तमित्याह—**सद्भाव इति** । संव्यवहारभूतम्; समन्तात् व्यवहारार्हमेदम् । भुवनाश्रितम्; भुवनेनाधिष्ठानतयाऽश्रितमेवैतद्वर्तते । तत्रापि हेतुरज्ञानमेवोक्तमित्यर्थ: । यद्वा भुवनाश्रितम्; भुवनमाश्रितम् । संव्यवहारभूतम्; व्यावहारिकम् । एतत् लोकसिद्धं सत्यत्वं यत् तत्रापि कारणमविद्येत्युक्तमित्यर्थ: । एतदभिप्रायेण हि **तस्य भुवनादेः सत्यत्वं व्यावहारिकमितीत्युक्तम्** । **इति ह्युपदेशो दृश्यत इति**; तस्मादितिहासपुराणयोर्ब्रह्माज्ञानवादो न दृश्यत इति वक्तुं न शक्यमित्यर्थ: ।

## भावप्रकाशिका

विशब्दस्य वैविध्यवैपरीत्यरूपार्थद्वयपरत्वसंभवमभिप्रायन्नाह—**विविधं ज्ञायतेऽनेन, विपरीतं ज्ञायतेनेनेति वा करणे व्युत्पत्तिरिति**; " करणाधिकरणयोश्च " इति ल्युट् । विज्ञानमविद्येत्यत्र प्रमाणमाह—**यदा तु शुद्धमित्यादिना** । **तस्य हि व्यतिरेको वक्ष्यत इति**; विज्ञानशब्दस्य " विज्ञानमेकं निजकर्मभेद " इत्यत्रेव ब्रह्मस्वरूपज्ञान-परत्वे तद्व्यतिरेके प्रपञ्चव्यतिरेकप्रतिपादकस्य " यदा तु शुद्धम् " इत्यस्य श्लोकस्यासामञ्जस्यप्रसङ्गादिति भाव: । ननु विज्ञाने ब्रह्मणि विजृम्भितानि कल्पितानीत्यस्य वक्तुं शक्यत्वात् श्रीधरेण तथा व्याख्यातत्वाच्च कथं विज्ञानशब्दस्याविद्यार्थकत्वनिर्णय इत्याशङ्क्याह—**विज्ञाने विजृम्भितानीतीति** । **अस्वारस्यादिति**; "सप्तमी" इति योगविभागाश्रयणेन सप्तमीसमासस्य क्लिष्टत्वादिति भाव: । नपुंसकस्येति पाठः । नपुंसकान्तपदस्येति पाठे नपुंसकत्वद्योतकविभक्त्यन्तपदस्येत्यर्थ: । **पुंलिङ्गभेदशब्दविशेषणत्वायोगेनेति**; "जृभि गात्रविनामे" इत्यस्याकर्मकतया " गत्यर्थाकर्मक " इति कर्तरि क्तान्तस्य वा ण्यन्तात् कर्मणि क्तान्तस्य वा विजृम्भितशब्दस्याश्रयणे विशेष्यनिघ्नताप्रसङ्गात् " नपुंसके भावे क्त: " इति भावक्तान्तत्वपक्ष एव नपुंसकत्वस्य युक्तत्वाच्च भावप्रत्ययान्त एव विजृम्भितशब्द: । न च भेदानां कथं विजृम्भण-

रूपधात्वर्थत्वमिति वाच्यम्, उपचारेण तथा प्रयोगोपपत्तेः। ततश्च भावप्रत्ययान्तत्वे सिद्धे विजृम्भणरूपस्य भावस्य कर्त्राकाङ्क्षाया एवोत्कटत्वादधिकरणाकाङ्क्षाया अतथात्वात् षष्ठीसमास एव युक्त इति भावः। **बहुवचने न तात्पर्यमिति**; प्रत्यक्षादिसिद्धबहुत्वानुवादित्वादिति भावः। **जडोपलक्षित इति**; देहान्तःकरणादिभिः परस्परव्यावृत्ततया प्रतीते एकस्मिन्नात्मवस्तुनीत्यर्थः। **जडगतभेदा न संभवन्तीत्यर्थ इति**; अन्तःकरणाद्युपाधिप्रयुक्तभेदा न भवन्तीत्यर्थः। वस्तुभेदशब्दयोः कर्मधारयमभिप्रयन्नाह— **यद्वा एको वस्तुशब्द आकारपर इति**; प्रथमो वस्तुशब्दो जडपर इत्यभिप्रायः। अस्मिन् पक्षे कर्मप्रतिबद्धात्मनिश्चयैः सत्यत्वेनालक्ष्यत इत्यस्य वक्तव्यतया सत्यत्वेनेत्यंशस्याध्याहारप्रसङ्गादुत्तरार्धस्य पूर्वार्धैकवाक्यत्वाभावाच्चापिशब्दमात्रमध्याहृत्य व्याचष्टे— **यद्वा न केवलमिति। तदुत्तरोत्तरभावीति**; अनेन भाष्ये भेददर्शनं निमित्तं यस्याज्ञानस्येति बहुव्रीहिरभिप्रेत इति भावः। अस्मिन् पक्षे कार्याज्ञानं ममकाररागद्वेषादि। **तस्यापि पूर्वकर्मैवेत्यर्थ इति**; न च भेददर्शननिमित्तकाज्ञाने भेददर्शनस्यैव हेतुत्वात् कथं कर्मणो हेतुत्वमिति वाच्यम्, मूलकारणं कर्मैवेत्यर्थात्। अस्मिन् पक्षे निजकर्मभेदविभिन्नचित्तैः बहुधाभ्युपेतमित्यस्यायमर्थः—निजकर्मभेदेन विभिन्नचित्तैः सजातीयभेददर्शिभिः। चित्तशब्दो बुद्धिपरः। बहुधाभ्युपेतं कार्याज्ञानयुक्तमिति। अस्मिन् पक्षे बहुधाभ्युपेतमित्यस्यातिक्लिष्टत्वात्पक्षान्तरमाह—**यद्वा देवादिशरीरभेदेति। सजातीयविजातीयभेदविरहानुवाद इति**; "विज्ञानमेकम्" इत्यर्धेन सजातीयात्मभेदस्य "तस्मान्न विज्ञानम्" इत्यर्धेनानात्मभूतविजातीयभेदस्य च निषिद्धतया तन्निषेधानुवाद इत्यर्थः। **स्वगतभेदराहित्यमुच्यत इति**; तद्वदेव पूर्वार्धप्रतिपन्नमनूद्यत इत्यर्थः। द्वितीयपक्षे भाष्यानुगुण्यमाह—**एतदभिप्रायेण हीति।**

### श्रुतप्रदीपिका

उपबृंहणयोस्तदप्रतीतिमाह—**इतीति**। चोदयति—**नन्विति। प्रतिज्ञायेति**; बाधे सामानाधिकरण्यम्, उपरि मिथ्यात्वोक्तेरिति भावः। विविधं ज्ञायतेऽनेनेति विज्ञानमविद्या। न सप्तमीसमासः, अपास्तदोषमिति वक्ष्यमाणत्वात्, लिङ्गभेदाद्ययोगाच्च; तदा विजृम्भितानिति हि निर्देष्टव्यम्। यदेति व्यतिरेकमुखेन विवरणमित्यर्थः। **शुद्धं निजरूपि**; अविद्यातत्कृतभेददृष्टिरहितम्। अपास्तदोषम्; रागादिदोषरहितम्। समन्तात् कल्प्यन्ते भेदा

अनेनेति संकल्पोऽविद्या, "अविद्यातरुसंभूतिबीजम्" इति हि योगाध्यायेऽभिहितम्। वस्तुभेदाः। आकारभेदाः। "वस्त्वस्ति" इत्यर्थस्वरूपोक्तिः। "मही" इत्युदाहरणम्। स्वकर्मेति; न परं तत्त्वज्ञैः, अज्ञैरपीति भावः। **तस्मादिति** विजातीयभेदनिषेधोपसंहारः। सजातीयाभावमाह—**विज्ञानमिति**। स्वगतं निषेधति—**ज्ञानमिति**। विशुद्धं; विमलम्; अविद्याभेदरहितम्। एकं सदेकमिति सजातीयविजातीयभेदविरहानुवादः। परम इत्यादि; परेशादिशब्दाश्चिन्मात्रपरा इत्यर्थः। **सद्भाव इति**; न परमतमिति भावः। संव्यवहारभूतम्; समन्ताद्व्यवहारार्हभेदं भुवनेनाधिष्ठानतयाश्रितम्। तत्र हेतुरविद्येत्युक्तमित्यर्थः।

### श्रीभाष्यम्

**नैतदेवम्; अत्र भुवनकोशस्य विस्तीर्णं स्वरूपमुक्त्वा पूर्वमनुक्तं रूपान्तरं संक्षेपतः "श्रूयताम्" इत्यारभ्याभिधीयते। चिदचिन्मिश्रे जगति चिदंशो वाङ्मनसागोचरस्वसंवेद्यस्वरूपभेदो ज्ञानैकाकारतयाऽस्पृष्टप्राकृतभेदोऽविनाशित्वेनास्तिशब्दवाच्यः। अचिदंशस्तु चिदंशकर्मनिमित्तपरिणामभेदो विनाशीति नास्तिशब्दाभिधेयः। उभयं तु परब्रह्मभूतवासुदेवशरीरतया तदात्मकमित्येतद्रूपं संक्षेपेणात्राभिहितम्।**

### श्रुतप्रकाशिका

एतत्प्रतिक्षिपति—**नैतदेवमित्यादिना**। **नैतत्**; चिन्मात्रब्रह्मणोऽविद्यासंबन्धित्वम् अविद्याकल्पितत्वेन प्रपञ्चस्य मिथ्यात्वं च यदुक्तं न तत्प्रामाणिकमित्यर्थः; तथा सत्यर्थविरोधात् प्रकरणविरोधात् शास्त्रतात्पर्यविरोधात् "अशेषमूर्तिर्भगवान्" इत्यादिपदानां लाक्षणिकत्वात् प्रपञ्चधर्मिग्राहकप्रमाणविरोधात् श्रुतेः सविशेषवस्तुपरत्वोपपादनेन स्मृतेस्तद्विरुद्धार्थपरत्वापातात् पूर्वोक्ततर्कविरोधाच्च तदभावः। अत्रार्थविरोधो नाम सर्वज्ञत्वादिगुणकस्याज्ञानादिप्रसक्तिविरोधः अविद्याया आश्रयतिरोधानाद्यनुपपत्तिश्च। प्रपञ्चस्य विस्तरेण प्रतिपादनवैयर्थ्यं प्रकरणविरोधः। अन्यत्तु स्पष्टम्। दशश्लोक्यामस्तिनास्तिसत्यासत्यज्ञानाज्ञानादिशब्दा आत्मानात्मविषया इति नात्र विगानम्। तत्र नास्त्यसत्यशब्दयोः किं ज्ञानबाध्यत्वं प्रवृत्तिनिमित्तम्? उत परिणामित्वमिति विचारे परिणामित्वपक्षे स्वारस्य-

मस्ति, "मही घटत्वम्" इत्युपपादनात् । अज्ञानशब्दस्य च नानिर्वचनीयपरत्वम् ; अपितु कर्मपरत्वमेव, "यज्ञः पशुः" इत्यादिस्वारस्यात् । अन्यत्र "शरीराकृतिभेदास्तु भूपैते कर्मयोनयः" "अविद्या कर्मसंज्ञाऽन्या" "बाह्यकर्मवृत्तिप्रजः" इत्यादिवचनाच्च । चिदचिद्विवेकोऽत्र क्रियत इत्यभिप्रेत्य तदनुगुणसंगतिमाह—**अत्रेति । अत्र**; अस्मिम् द्वितीयांशे । **विस्तीर्ण**मिति स्वरूपविशेषणम् । विस्तीर्णशब्देन स्थौल्यं विवक्षितम् । संसृष्टस्थूलरूपमुक्त्वा वियुक्तं सूक्ष्मरूपमुच्यत इति भावः । यद्वा विस्तीर्णमिति क्रियाविशेषणम् । उत्तरत्र मिथ्यात्वं विवक्षितं चेत्पूर्वं विस्तरेण कथनमनुपपन्नम् । न हि पूर्वमेव भ्रान्तस्य भ्रमान्तरापादनं कार्यम् । तस्मात्पूर्वं विस्तरेण भुवनकोशस्य कथितत्वान्न मिथ्यात्वं विवक्षितमिति भावः । वक्ष्यमाणमादिभरतचरितं ह्रस्थं विस्तररूपम्; तत्संक्षेपश्चायं वक्ष्यमाणसंक्षेपः । उक्तसंक्षेपश्च दृश्यते । अत उक्तसंक्षेपशङ्काव्यावृत्त्यर्थमाह—**अनुक्तमिति** । अनुक्तं संसृष्टरूपान्तरं कथ्यत इति शङ्काव्यावृत्त्यर्थमाह—**रूपान्तरमिति**; वियुक्तमित्यर्थः । मिथ्यात्वव्यतिरेकेण वक्तव्यं सकलमुक्तम् । तस्मादनुक्तं वक्तव्यम् । रूपान्तरं नाम मिथ्यात्वं नान्यदिति शङ्कायां मिथ्यात्वं विनाऽनुक्तं रूपान्तरमाह—**चिदचिन्मिश्र इति**; चिदचिन्मिश्रे जगतीत्यनेन "संक्षेपः श्रूयतां पुनः" इत्यत्र पुनःशब्दो व्याख्यातो भवति । चिदचिदात्मके जगति स्थूलरूपमुक्तम् । तत्रैव जगतीदमपि रूपान्तरं पुनरुच्यत इति तस्यार्थः । "सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यम्" इत्यादिवाक्योक्तं विशेषमाह—**चिदंशो वाङ्मनसेति** । "द्वैतिनोऽतथ्यदर्शिनः" इत्यादिवाक्यानां भेदनिषेधपराणामर्थं हृदि निधायाह—**अस्पृष्टेति** । यदि चिदंशस्य ज्ञानैकाकारत्वमचिदंशस्य परिणामास्पदत्वं च विवक्षितं, तर्ह्यस्तिनास्तिसत्यासत्यादिशब्दप्रवृत्तिनिमित्तत्वेन किमर्थमुक्तमिति चेत्, उच्यते—शाखाविशेषेषु "सच्च त्यच्चाभवत्" "विज्ञानं चाविज्ञानं च, सत्यं चानृतं च सत्यमभवत्, इत्यादिवाक्येषु अस्तिनास्तिसत्यासत्यादिशब्दानां श्रूयमाणानामनधीतशाखागतानां च किं ज्ञानबाध्यत्वाबाध्यत्वे प्रवृत्तिनिमित्तभूते? उत परिणामित्वापरिणामित्वे इति शङ्कां निराकर्तुं परिणामित्वापरिणामित्वे एव नास्त्यादिशब्दार्थः न तु ज्ञानबाध्यत्वाबाध्यत्वे इत्यधीतानधीतशाखार्थज्ञापनार्थमिति । पृथिव्यादितत्त्वानां संघातविशेषावस्थायामेव जीवं प्रति शरीरत्वं दृष्टं, न त्वेकैकस्य; मनुष्यादिशरीराणामपि तादृशपिण्डावस्थायामेव शरीरत्वं दृष्टं; न भस्माद्यवस्थायामिति चिदचितोः प्रत्येकमवस्थाविशेषेषु

भगवच्छरीरत्वाभावशङ्काव्यावृत्त्यर्थमाह—**उभयमिति**। चिदचिद्रूपमन्योन्यसंसृष्टं निष्कृष्टं च भगवच्छरीरमित्यर्थः। निष्कृष्टस्य भगवच्छरीरत्वप्रतिपादनाद्भगवन्तं प्रति शरीरत्वस्य निरुपाधिकतया स्वरूपप्रयुक्तत्वं फलितमिति मुक्तावस्थायामपि जीवस्य भगवच्छरीरत्वसिद्धिः। **एतद्रूपम्**; अयमाकार इत्यर्थः।

### भावप्रकाशिका

**दशश्लोक्यामिति**; विष्णुपुराणे द्वितीयांशे द्वादशाध्याये—

"इत्येष संनिवेशोऽयं पृथिव्या ज्योतिषां तथा।
द्वीपानामुदधीनां च पर्वतानां च कीर्तितः॥
वर्षाणां च नदीनां च ये च तेषु वसन्ति वै।
तेषां स्वरूपमाख्यातं संक्षेपः श्रूयतां पुनः॥"

इत्युपक्षिप्य—

"यदम्बु वैष्णवः कायस्ततो विप्र वसुंधरा।
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता॥
ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च।
नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य॥
ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्।
तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥
वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्॥
मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः।
जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥
तस्मान्न विज्ञानमृतेऽस्ति किंचित् क्वचित्कदाचिद् द्विज वस्तुजातम्।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम्॥

ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥
सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते ॥
यज्ञः पशुर्वह्निरशेष ऋत्विक् सोमः सुरा स्वर्गमयश्च कामः ।
इत्यादि कर्माश्रितमार्गदृष्टं भूरादिभेदाश्च फलानि तेषाम् ॥''

इति दशश्लोकी पठिता । **नात्र विगानमिति ;** यद्यपि '' यदस्ति यन्नास्ति च विप्रवर्य'' इत्यत्रास्तिनास्तिशब्दयोर्भावाभावरूपेण प्रतिपन्नवस्तुपरतया योजयितुं शक्यत्वादस्ति-शब्दस्यात्मपरत्वे विगानं संभवति, तथापि नास्त्यसत्यशब्दयोरचेतनपरत्वे न विवाद इत्यत्र तात्पर्यम् । **अपितु कर्मपरत्वमेवेति ;** कर्ममूलवैविध्यानुसन्धानपरत्वमेवेत्यर्थः, उत्तरत्र तथाभिधास्यमानत्वात् । **वियुक्तं सूक्ष्मरूपमिति ;** परस्परमुपकरणोपकरणिभाववियुक्तं प्रकृतिपुरुषयोः सूक्ष्मं रूपमुच्यत इत्यर्थः । **आदिभरतचरितं हृत्स्थमिति ;** ''मैत्रेय तस्य चरितं कथयिष्यामि ते पुनः'' इति प्रथमाध्याये उपक्षिप्तत्वादिदानीं हृत्स्थमिति भावः । ननु संक्षेपशब्दस्य सकलशास्त्रार्थसंक्षेपपरत्वसंभवे प्रथमाध्यायोक्तप्रतिज्ञावशेनादिभरतचरितस्य बुद्धिस्थत्वं परिकल्प्य, एतस्य तत्संक्षेपत्वकल्पनं क्लिष्टम् ; किंच तत्संक्षेपरूपत्वं प्रतिज्ञातं चेत् विस्तरकथनस्य स्वतः प्राप्ततया ''भगवन् सर्वमाख्यातम् '' इति मैत्रेयस्यादिभरत-चरितप्रश्नो न युक्त इति चेत्—न ; सकलसंक्षेपरूपत्वे वक्ष्यमाणसकलसंक्षेपरूपत्वमपि संभवतीत्यत्र तात्पर्यात् । **सत्तामात्रमगोचरमिति;** यद्यपि नैतानि वाक्यान्येतत्प्रकरणस्थानि, तथापि ''ज्ञानस्वरूपो भगवान् यतोऽसौ'' इत्यादीनामेतत्प्रकरणस्थानां तत्समानार्थत्वं वक्तव्यमित्यभिप्रायेण तथोक्तमिति द्रष्टव्यम् । **अधीतानधीतशाखार्थज्ञापनार्थमितीति ;** अत्रेतिः समाप्तौ ।

**श्रुतप्रदीपिका**

परिहरति—**नैतदिति** । अर्थप्रकरणशास्त्रतात्पर्यविरोधः प्रपञ्चस्य धर्मिग्राहकविरोधः श्रुतिविरोधो विशेषाः । '' अशेषमूर्तिर्भगवान '' इत्यादिपदलक्षणा चानुसन्धेया । अत्र ज्ञानतदन्यशब्दयोरात्मानात्मविषयत्वमस्तिनास्तिसत्यासत्यादिशब्दानां च तद्गोचरत्वमपि न विगीतम् । अत्र नास्त्यस्त्यादिशब्दानां परिणामित्वापरिणामित्वे निमित्ते, न तु ज्ञानबाध्य-

त्वाबाध्यत्वे इति "मही घटत्वम्" इत्यादिभिरवगम्यते। परिणामित्वस्य नास्त्यसत्यादिशब्दप्रवृत्तिनिमित्तत्वेन कथनं श्रुतिष्वेतद्विषयेऽनृतादिशब्दानामैदमर्थ्यज्ञापनार्थम्। अज्ञानादिशब्दश्च नानिर्वाच्यपरः, अपि तु कर्मपरः, "सर्वकर्मक्षये" "निजकर्मभेद" इत्यादिभिरैकार्थ्यात्। **अत्रेति**; अत्र; द्वितीयांशे। **विस्तीर्णमिति**; मिथ्यात्वविवक्षायां विस्तरोक्तिरयुक्तेति भावः। अनुक्तमित्युक्तसंक्षेपव्युदासः। वक्ष्यमाणमादिभरतचरितं ह्यस्य विस्तरः। **रूपान्तरम्**; वियुक्तरूपम्। संसृष्टरूपं ह्युक्तम्। संक्षेप्यार्थशरीरमाह—**चिदचिदित्यादिना**। "प्रत्यस्तमित" इत्यादिग्रन्थमभिप्रयन्नाह—**वाङ्मनसेति**। भेदनिषेधार्थमाह—**अस्पृष्टेति**। इदं सर्वावस्थमपीश्वरदेहभूतमित्यभिप्रायेणाह—**उभयं त्विति**। **एतद्रूपम्**; अर्थरूपम्।

### श्रीभाष्यम्

तथाहि—

"यदम्बु वैष्णवः कायस्ततो विप्र वसुंधरा।
पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुता॥"

इत्यम्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायः। तस्य च विष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य "ज्योतींषि विष्णुः" इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्याह। अस्मिन् शास्त्रे पूर्वमप्येतदसकृदुक्तम्—"तानि सर्वाणि तद्वपुः" "तत्सर्वं वै हरेस्तनुः" "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति। तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते—"ज्योतींषि विष्णुः" इति। अत्रास्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकमित्युक्तम्। इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयमित्याह—"ज्ञानस्वरूपो भगवान् यतोऽसौ" इति। अशेषक्षेत्रज्ञात्मनावस्थितस्य

भगवतो ज्ञानमेव स्वाभाविकं रूपम्, न देवमनुष्यादिवस्तुरूपम्। यत एवं तत एवाचिद्रूपदेवमनुष्यशैलाब्धिधरादयश्च तद्विज्ञानविजृम्भिताः; तस्य ज्ञानैकाकारस्य सतो देवाद्याकारेण स्वात्मवैविध्यानुसंधानमूलाः, देवाद्याकारानुसंधानमूलकर्ममूला इत्यर्थः। यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणपरिणामास्पदं ततस्तन्नास्तिशब्दाभिधेयम्; इतरदस्तिशब्दाभिधेयमित्यर्थादुक्तं भवति। तदेव विवृणोति—"यदा तु शुद्धं निजरूपि" इति। यदैतत् ज्ञानैकाकारमात्मवस्तु देवाद्याकारेण स्वात्मनि वैविध्यानुसंधानमूलसर्वकर्मक्षयान्निर्दोषं परिशुद्धं निजरूपि भवति, तदा देवाद्याकारेणैकीकृत्यात्मकल्पनामूलकर्मफलभूतास्तद्भोगार्था वस्तुषु वस्तुभेदा न भवन्ति।

### श्रुतप्रकाशिका

एतदुपपादयति—**तथाहीत्यादिना**। दशश्लोक्यां न भगवदात्मकत्वमसाधारणं प्रतिपाद्यम्। तत्तु सर्वप्रकरणसाधारणम्। असाधारणप्रतिपाद्यं तु प्रकृतिपुरुषविवेक एव, शास्त्रस्योपनिषदर्थोपबृंहणपरत्वात्। सांख्यादिमतव्यावृत्त्यर्थं सर्वप्रकरणेषु भगवदात्मकत्वमुच्यते। अत्रासाधारणप्रतिपाद्यः प्रकृतिपुरुषविवेक एवेत्यभिप्रायेण हि पूर्वम् "अनुक्तं रूपान्तरम्" इत्युक्तम्। भगवदात्मकत्वस्य सर्वप्रकरणसाधारण्यं हि "पूर्वमप्येतदसकृदुक्तम्" इत्युत्तरत्र च वक्ष्यते। दशश्लोकीस्थसामानाधिकरण्यं शरीरात्मभावनिबन्धनमिति ज्ञापयितुं पूर्वश्लोकमुपादत्ते—**यदम्ब्विति**। ऋषिणाभिप्रेतं फलितमर्थमाह—**अम्बुनो विष्णोरिति**। न हि बाल्यावस्थायां शरीरभूतस्य वस्तुनोऽवस्थान्तरे चेतनेन स्वरूपैक्यमस्ति; अपितु सर्वावस्थमपि तद्वस्तु शरीरमेवेति भावः। **तस्य च विष्णुरात्मेतीति**; अभिप्रेत्येत्यर्थः। शरीरात्मभाव इति वार्थः। **सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येति**; अनधीतशाखास्वपि तादात्म्योपदेशोऽस्ति; तस्यायमेवार्थ इति ज्ञापनं तादात्म्योपदेशस्योपबृंहणम्। यद्वा प्रत्यक्षसकलश्रुतिगततादात्म्योपदेशोपबृंहणं नामानधीतशाखासु तद्विरुद्धार्थप्रतिपादनं नास्तीति ज्ञापनम्। अत्र इतिशब्दत्रयस्य 'अनेन श्लोकेन

भगवानिममर्थमभिप्रेत्यायमर्थ इत्याह ' इत्यन्वयप्रकारः । न केवलमत्र समष्टिसृष्टिश्लोकगतव्यधिकरणनिर्देशेन व्यष्टिश्लोकगतसामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमिति विज्ञायते, अपितु प्रदेशान्तरेषु व्यष्ट्यवस्थानां भगवन्तं प्रति शरीरत्वं सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं चासकृत्कण्ठोक्तमित्याह—**अस्मिन्निति** । शरीरात्मभावस्य सामानाधिकरण्यहेतुत्वं कण्ठोक्तम्—" विश्वरूपो यतोऽव्ययः" इति । तथाऽन्यत्रापि " सर्वगत्वादनन्तस्य स एवाहम् " " सर्वं समाप्नोषि ततोऽसि सर्वः" इत्यादि द्रष्टव्यम् । **तदिदमि**त्यादिना "ज्योतींषि" इत्यादि श्लोके पादत्रयस्यार्थ उच्यते । संसृष्टस्य भगवदात्मकत्वमुक्तमित्यर्थः । " प्रधानादि विशेषान्तं चेतनाचेतनात्मकम् " इत्युक्तत्वात् ज्योतिरित्यादिशब्दाः संसृष्टजीववाचिनः । अथोत्तरश्लोकसंगत्यर्थं विशिष्टवाक्यार्थानुवादेन चतुर्थपादार्थं दर्शयति—**अत्रास्त्यात्मकमिति** । " यदम्बु " इत्यादि श्लोकेन वैयधिकरण्येन समष्ट्यवस्थचिदचितोर्भगवदात्मकत्वमुक्तम् । व्यष्ट्यवस्थयोरसंसृष्टयोः संसृष्टयोरपि तयोः सामानाधिकरण्येन भगवदात्मकत्वमुच्यते "ज्योतींषि" इत्यादिश्लोकेन । तत्र पादत्रयेण व्यष्ट्यवस्थयोः संसृष्टयोस्तदात्मकत्वमुक्तम् । चतुर्थपादेन तु निष्कृष्टयोरपि तदात्मकत्वमुक्तमित्यर्थः । अनन्तरश्लोकमवतारयति—**इदमिति** । अचिदंशस्य नास्त्यात्मकत्वनिबन्धनमेव तात्पर्यविषयः । अचिदंशस्य हि मिथ्यात्वशङ्का व्युदसनीया । अतस्तस्य परिणामित्वात् नास्त्यात्मकत्व एव तात्पर्यम् । चिदंशस्य त्वपरिणामित्वादस्त्यात्मकत्वं फलितं स्यादित्यभिप्रायेण **अस्य च नास्त्यात्मकत्वे हेतुरयमित्याहे**त्युक्तम् । व्याख्येये प्रतीकमुपादत्ते—**ज्ञानस्वरूप इति** । अत्र "ज्ञानस्वरूपो भगवान्" इति सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वं न केवलं पूर्वश्लोके " यदम्बु वैष्णवः कायः" इत्युक्तत्वादवगम्यते, अस्मिन्नपि श्लोके " अशेषमूर्तिः" इत्यनेनापि ज्ञायत इत्यभिप्रायेण व्याचष्टे—**अशेषेति** । अशेषशब्देनाचितोऽपि विवक्षितत्वे भगवन्तं प्रति तस्य मूर्तित्वं विहितं स्यात् , अप्राप्तत्वात् ? ततश्च ' न तु वस्तुभूतः" इति देवमनुष्यशैलाब्धिधरादिवस्तुभावनिषेधोऽनुपपन्नः । अतोऽशेषशब्दः क्षेत्रज्ञविषय इत्यभिप्रायेण—**अशेषक्षेत्रज्ञात्मने**त्युक्तम् । अत्र ज्ञानस्वरूपादिशब्दानां परमविशेष्यपर्यन्ताभिधायित्वेऽपि विशेषणविशेषणे वाक्यस्य तात्पर्यम् । अतो ज्ञानस्वरूपत्वं विशेषणभूतजीवस्यैव विधीयते ; यथा—" लोहितोष्णीषा ऋत्विजः प्रचरन्ति " इत्यत्र विशेषणगतं लौहित्यमेव विधेयं परंपरया ऋत्विक्प्र-

चारकर्मविशेषणम् । तद्वत् "काठिन्यवान् यो बिभीर्ते" "नृसिंहमूर्तिर्भगवान् श्वेतः" इत्याद्युदाहरणं द्रष्टव्यम् । "ज्ञानस्वरूपः" इत्यत्र दिव्यात्मस्वरूपस्य ज्ञानस्वरूपत्वमुच्यत इति न शङ्कनीयम्, "सर्वकर्मक्षये ज्ञानमपास्तदोषम्" इति विवरणानुपपत्तेः । न हि दिव्यात्मस्वरूपस्य कर्मतत्कृतरागद्वेषादिहेयसंबन्धप्रसङ्गः । न तु वस्तुभूत इत्यस्यार्थमाह— **न देवमनुष्यादीति** । शैलादिस्थावरोक्तिः सर्वशरीराणामुपलक्षणमिति ज्ञापनार्थो देवमनुष्यादिशब्दः । उत्तरार्धं व्याचष्टे—**यत एवमिति** । शैलाब्धिधरादिभेदान् विज्ञानविजृम्भितानि जानीहीत्यनेन फलितं हेतुहेतुमद्भावं विवृणोति—**तद्विज्ञानेत्यादिना** । विज्ञानशब्दं व्याचष्टे—**तस्येति** । **विज्ञानम्** ; विविधज्ञानम् । कथं शैलाब्धिधरादिभेदस्य वैविध्यानुसंधानमूलत्वम् ? "निजकर्मभेदविभिन्नचित्तैः" "सर्वकर्मक्षये" इति कर्ममूलत्वेन वक्ष्यमाणत्वात्कर्मैव हि मूलमित्यत्राह—**देवादीति** । वैविध्यानुसन्धानस्य देवादिभेदहेतुत्वं सद्वारकम्, उपरितनग्रन्थैकार्थ्यात् "अविद्यासंचितं कर्म" "बाह्यकर्मवृतिप्रजः" "भूपैते कर्मयोनयः" इत्यादिवचनान्तराच्चेत्यर्थः । पूर्वम् "इदमस्त्यात्मकम्" इत्यादिनोक्तश्लोकवाक्यार्थः कथं घटत इत्यत्राह—**यतश्चेति** । 'ज्ञानस्वरूपः' 'विज्ञानविजृम्भितानि' इत्यनेन फलितमित्यर्थः । **तदेवेति** ; पूर्वपक्षयोजनायामुक्तेष्वर्थेष्वपेक्षितांशोपजीवनेन सिद्धान्तयोजना क्रियते । विज्ञानविजृम्भितत्वमेव व्यतिरेकमुखेन विवृणोतीत्यर्थः । पूर्वश्लोके देवादिभेदानां स्वात्मवैविध्यानुसन्धानमूलत्वं सद्वारकमिति व्याख्यानमनन्तरश्लोके व्यतिरेकमुखेन विवरणे कर्महेतुत्वश्रवणनिबन्धनमिति स्पष्टयन्नाह—**देवाद्याकारेणेति** । निर्दोषमित्यादिपदानामर्थविभागो "ज्ञानं विशुद्धम्" इत्यादिश्लोकव्याख्याने विशदयिष्यत इति ग्रन्थलाघवार्थमत्र न विस्तृतः । निर्दोषम् ; शरीरसंबन्धरहितम् । **परिशुद्धम्** ; तत्कृतरागद्वेषसुखदुःखादिरहितम् । **निजरूपि** ; आविर्भूतस्वरूपम् । संकल्पशब्दं व्याचष्टे— **एकीकृत्यात्मकल्पना**शब्देन । "समित्येकीकारे" इति हि शाब्दाः । पूर्ववत् सद्वारकमिति व्याचष्टे—**आत्मकल्पनामूलकर्मफलभूता इति** । देहात्मनोरेकीकृत्यानुसन्धानफलं देवाद्याकारेण स्वात्मवैविध्यानुसन्धानम्; तयोरेकैकविज्ञानशब्दे संकल्पशब्देऽप्यर्थसिद्धम् । सुखदुःखे हि कर्मफले ; तत्कथं वस्तुभेदस्य कर्मफलत्वमिसि शङ्कायां **तद्भोगार्था** इत्युक्तम् । सुखादिभोगद्वारभूतत्वाद्देवादिभेदाः कर्मफलमित्यर्थः । "भोक्ता भोग्यं प्रेरितारं च मत्वा" इत्यादिषु भोग्यशब्दार्थः स्पष्टीकृतो भवति । **तद्भोगार्था** इत्यनेन भोगस्था-

नभोगोपकरणानां भोगसिद्धिप्रयोजकत्वमेव भोग्यत्वमित्यर्थः। सप्तम्यन्तवस्तुशब्दो जीवपर्यन्तदेहपरः। द्वितीयवस्तुशब्दो देवादिशरीरमात्रपरः। **वस्तुभेदाः**; देवादिशरीरभेदाः। अत्र वस्तुभेदशब्देन भेदस्य वस्तुरूपत्वात्पारमार्थ्यमपि फलितम्।

### भावप्रकाशिका

**विष्णुरात्मेतीत्यस्य** वाक्यस्य व्यवहितेनापि "शरीरात्मभावः" इत्यनेनान्वयसंभवे अभिप्रेत्येत्यध्याहारोऽनुचित इत्यभिप्रेत्याह—**शरीरात्मभाव इति वार्थ इति। सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्येत्यत्र** सकलपदमनधीतशाखापरम्; तस्याश्चोपबृंहणं तद्विरुद्धार्थवाक्यासत्त्वप्रतिपादनमिति द्वेधार्थसंभवमभिप्रेत्य व्याचष्टे—**अनधीतशाखास्वपीति; तादात्म्योपदेशोऽस्तीति**; य इति शेषः, उत्तरत्र 'तस्यायमेवार्थः' इति तच्छब्दश्रवणात्। **अत्रेतिशब्दत्रयस्येति**; एवमिहान्वयक्रमः—"यदम्बु वैष्णवः कायः" इति श्लोकेन सकलश्रुतिगततादात्म्योपबृंहणरूपस्य सामानाधिकरण्योपदेशस्य "ज्योतींषि विष्णुः" इत्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनमित्यभिप्रेत्याम्बुनो विष्णोः कार्यत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः शरीरमित्याहेति। न च 'विष्णुरात्मेत्यभिप्रेत्य' इति पूर्वग्रन्थविरोध इति वाच्यम्, तस्य व्याख्यानान्तरत्वेनादोषात्। केचित्तु—अनेन श्लोकेन तस्य विष्णुरात्मेत्यभिप्रेत्य शरीरात्मभाव एव सामानाधिकरण्ये निबन्धनमिति तात्पर्यत आहेति योजयन्ति। **विश्वरूपो यतोऽव्यय इति**; "सर्वेन्द्रियान्तःकरणं पुरुषाख्यं हि यज्जगत्। स एव" इति सामानाधिकरण्येन निर्दिश्य कथमिदं भिन्नयोः सामानाधिकरण्यमित्यपेक्षायां "सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" इति शरीरात्मभावस्य 'यतः' इति पञ्चम्या कण्ठतो हेतुतयोक्तेरित्यर्थः। इदं च वेदार्थसंग्रहे भाष्यकृता सुव्यक्तमुक्तम्। **पादत्रयस्यार्थ उच्यत इति**; "यदस्ति यन्नास्ति च विप्रवर्य" इति चतुर्थपादार्थस्य "अत्रास्त्यात्मकं नास्त्यात्मकं च" इत्यादिभाष्यग्रन्थेनानुवादमुखेन स्फुटीकरिष्यमाणत्वात् पादत्रयस्यार्थ उच्यत इत्युक्तम्। केचित्तु—असंकोचेन पादचतुष्टयस्याप्यर्थ उच्यते, श्लोकमात्रस्य शरीरात्मभावायत्ततादात्म्योपदेशपरत्वे विप्रतिपत्त्यभावात्। इयांस्तु विशेषः—पादत्रयगतानां ज्योतिरादिपदानां निर्णीतार्थतया न जिज्ञासा; चतुर्थपादगतास्तिनास्तिशब्दयोरनिर्णीतार्थतया तत्र जिज्ञासया तत्पदार्थमात्रस्यानुवादोपपत्तेरिति वदन्ति। **विशिष्टवाक्यार्थानुवादेनेति**; पर्यवसन्नवाक्या-

र्थानुवादेनेत्यर्थः । **नास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तमिति** ; न त्वस्यास्त्यात्मकत्वे हेतुरयमित्याहेत्युक्तमित्यर्थः । "ज्ञानस्वरूपो भगवान् यतोऽसौ" इत्यंशेन 'इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्, अस्य च नास्त्यात्मकत्वे हेतुरयम्' इत्यप्रतिपादनादाह—**प्रतीकमुपादत्त इति** । ननु भाष्ये—**अशेषक्षेत्रज्ञात्मनावस्थितस्येति** कथं लभ्यते? क्षेत्रज्ञस्य प्रागनिर्दिष्टत्वात् । न च "यदस्ति यन्नास्ति च विप्रवर्य" इत्यनेनास्तिशब्देन क्षेत्रज्ञस्योपस्थापनमस्तीति वाच्यम्, 'इदमस्त्यात्मकम्, इदं नास्त्यात्मकम्' इति विभागानभिज्ञं मैत्रेयं प्रत्यस्तिशब्दस्य क्षेत्रज्ञोपस्थापकत्वाभावेनाशेषमूर्तिशब्देन क्षेत्रज्ञात्मनावस्थितस्य भगवत उपस्थापने प्रमाणाभावादित्याशङ्क्य, अस्तिनास्तिशब्दाभ्यामुपस्थापनेऽपि ज्योतिरादिशब्दैः संसृष्टवचनैश्चेतनाचेतनयोरुपस्थिति-संभवात् तत्र चाचिच्छरीरके ज्ञानस्वरूपशरीरकत्वोपदेशस्य वा "न वस्तुभूतः" इति देवादिशरीरकत्वनिषेधस्य वाऽसंभवात् क्षेत्रज्ञशरीरक एव योग्यतावशेनाशेषमूर्तिशब्देन परामृश्यते । ततश्च क्षेत्रज्ञशरीरको भगवान् ज्ञानस्वरूपः ज्ञानशरीरको भवति; स्वरूपशब्दः शरीरपरः; वस्तुस्वरूपदेवादिशरीरको न भवतीत्युक्ते क्षेत्रज्ञस्य ज्ञानस्वरूपत्वमस्ति, अर्थस्वरूपदेवादिशरीरत्वं च नास्तीति फलति; ततश्च देहात्मविवेकोऽपि फलितो भवति ; यथा 'अङ्गुलीयकवानसौ रजतवान्न सुवर्णवान्' इत्युक्ते 'अङ्गुलीयकं रजतरूपं न सुवर्णरूपम्' इति तद्वदित्यभिप्रयन्नाह—**अशेषशब्देनाचितोऽपीति । वस्तुभावनिषेधोऽनुपपन्न इति** ; अचिच्छरीरकस्य भगवतो "न तु वस्तुभूतः" इति देवमनुष्यशैलाब्धिधरादिवस्तुशरीरकत्वनिषेधस्य शरीरभूते चिदंशे देवमनुष्यादिभावनिषेधपर्यवसितत्वादित्यभिप्रायः । **ऋत्विक्प्रचारकर्मविशेषणमिति** ; यथा परंपरया प्रचारविशेषणगतमुष्णीषलौहित्यं, प्रचारे ऋत्विजां विशेषणत्वं, तत्र चोष्णीषस्य, तत्र च लोहित्यस्येत्यभिप्रायः । "काठिन्यवान् यो बिभर्ति तस्मै भूतात्मने नमः" इत्यत्रात्मस्वरूपे भूमिद्वारा काठिन्यवदिति भावः । भाष्ये—**यत एवं तत एवेति** ; ननु क्षेत्रज्ञस्य ज्ञानस्वरूपत्वेन देवादिरूपत्वाभावेऽपि देवादिभेदस्य तद्विज्ञानविजृम्भितत्वमनावश्यकं, क्षेत्रज्ञभिन्नत्वमात्रेण तद्विज्ञानविजृम्भितत्वस्यानावश्यकत्वात्; इतरथा परमात्मनित्यविभूत्यादेरपि तथात्वप्रसङ्गात् । न च जीवभिन्नस्यानित्यत्वेन सिद्धस्य देवादेस्तद्विज्ञानविजृम्भितत्वमावश्यकमिति वाच्यम्, देवादिभेदस्याद्याप्यनित्यत्वानिश्चयात्; निश्चये वा तस्यासत्यशब्दितत्वोपयुक्तानित्यत्वस्य

सिद्धतया कर्मपरिणामरूपतयाऽनित्यत्वप्रतिपादनार्थं प्रवृत्तस्य "ततो हि शैला-ब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि" इत्यस्य वैयर्थ्यप्रसङ्गात् । किंच क्षेत्रज्ञात्मनावस्थितस्य देवादिभूतत्वाभावेन देवादिस्वरूपस्य विज्ञानविजृम्भितत्वे देवाद्या-त्मनावस्थितस्य ज्ञानस्वरूपक्षेत्रज्ञभूतत्वाभावेन क्षेत्रज्ञस्यापि विज्ञानविजृम्भितत्वप्रसङ्ग इति चेत्—न ; "न तु वस्तुभूतः" इति देवादिस्वरूपस्य क्षेत्रज्ञरूपावस्थितपरमात्म-स्वाभाविकत्वे प्रत्याख्याते पुनः किंरूपमित्यपेक्षायां "विज्ञानविजृम्भितानि" इत्याग-न्तुकरूपत्वमुच्यत इत्यदोषात् । अत एव भाष्ये—**ज्ञानमेव स्वाभाविकं रूप-मिति** स्वाभाविकपदं प्रयुक्तम् । **देवादिभेदहेतुत्वं सद्वारकमिति** ; पूर्वपूर्ववैविध्यानुस-न्धानेन कर्मणा च देवादिभेदा इत्यर्थः । कर्माविद्ययोर्बीजाङ्कुरवत् परस्परहेतुत्वसंभवात् हेतुहेतुमद्भावव्यत्यासशङ्का न कार्या । **ज्ञानस्वरूपः विज्ञानविजृम्भितानीत्यनेन फलितमिति** ; "ज्ञानस्वरूपः" इत्यनेन ज्ञानस्वरूपस्योक्ततया परिणामशून्यत्वावगमात् सत्यत्वम् , "विज्ञानविजृम्भितानि" इत्यनेन परिणामित्वं च फलितम् । अत एव "निज-सिद्धज्ञानैकरूपत्वेन" इति भाष्यमिति भावः । ननु "यदा तु शुद्धम्" इत्यस्य पूर्वोक्त-विवरणरूपत्वेन पूर्वपक्षिसंमतस्य कथं तदेव विवृणोतीति भाष्यकृताप्यभ्युपगम इत्याशङ्-क्याविरुद्धांशे तदुपजीवनं न दोषायेत्याह—**पूर्वपक्षयोजनायामिति** । **निर्दोषमित्या-दिपदानामर्थविभाग इति** ; अपास्तदोषमित्यादिपदानामिति वक्तव्ये लाघवार्थं निर्दोषपद-मुपात्तमिति द्रष्टव्यम् । यद्वा निर्दोषमित्यादीति छेदः । **पदानामिति** ; श्लोकस्थपदाना-मित्यर्थः । **आत्मकल्पनामूलकर्मफलभूता इति** ; आत्मकल्पना मूलं यस्येति बहुव्रीहिः । व्यक्तिभेदेन बीजाङ्कुरन्याये दोषाभावात् । **विज्ञानशब्दे संकल्पशब्दे पीति**; वैविध्यानु-सन्धानस्य विज्ञानशब्दार्थस्य एकीकृत्यानुसन्धानस्य संकल्पशब्दार्थस्य च हेतुहेतुमद्भावेन करणत्वसंभवात् "विज्ञानविजृम्भितानि, संकल्पतरोः फलानि" इत्युक्तयोर्न विरोधः, अन्यत-रोक्तावन्यतरस्यार्थसिद्धत्वादिति भावः । **भोग्यशब्दार्थः स्पष्टीकृतो भवतीति** ; भोगार्था इत्युपक्षिप्तानामेव वस्तुभेदानामुत्तरवाक्ये भोग्यभूता इति परामर्शादित्यर्थः । **भोगसिद्धिप्रयोजनकत्वमेवेति** ; "तस्य निमित्तं संयोगोत्पातौ" इत्यस्मिन्नर्थे "गोद्व्यचः" इति भोगशब्दाद्यत्प्रत्ययः; न तु "ऋहलोर्ण्यत्" इति ण्यदन्तं, तथात्वे भोगस्थानादीनां भोग्यशब्देन परिग्रहानापत्तेरिति भावः ।

### श्रुतप्रदीपिका

उक्तमुपपादयति—**तथाहीति**। सामानाधिकरण्यनिबन्धनज्ञापनाय समष्टिविषयं पूर्व-श्लोकमुपादत्ते—**यदम्ब्विति**। **ब्रह्माण्डमपीति** ; न हि बालदशायां शरीरस्य युवत्वे चेतनैक्यमिति भावः। अत्र सामानाधिकरण्योक्तिप्रयोजनमाह—**सकलेति**। न परं समष्टि-विषयग्रन्थे व्यष्टेः परदेहत्वावगमः; व्यष्टिविषयग्रन्थेऽपीत्याह—**पूर्वमिति**। श्लोकार्थमाह—**तदिति**। संगत्यर्थं चतुर्थपादार्थमाह—**अत्रेति**। **ज्ञानेत्यादि** ; "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इतिवत् विशेषणविशेषणे तात्पर्यम् "नृसिंहमूर्तिर्भगवान् श्वेतः" इतिवत् सद्वारं ज्ञानस्वरूपत्वम्। **देवमनुष्येति** ; शैलादिशब्दः प्रदर्शनार्थ इति भावः। कथं वैविध्यधीमूलत्वम्? "सर्वकर्मक्षये" "निजकर्मभेद" इति ह्युच्यत इत्यत्राह—**देवादीति** ; प्रणाड्येत्यर्थः। विज्ञानविजृम्भितत्वफलितार्थमाह—**यतश्चेति**। **तदेव विवृणोतीति** ; व्यतिरेकमुखेनेत्यर्थः। पूर्वपक्षयोजनायामुपजीवनीयं निर्दोषं शरीर-रहितम्। परिशुद्धं रागादिरहितम्। निजरूपि ; आविर्भूतस्वरूपम्। संकल्पशब्दार्थ-माह—**तदादेवेति**। कथं वस्तुभेदः कर्मफलसुखादिस्तत्फलमित्यत्राह—**तद्भोगार्था इति** ; द्वारभूतत्वादिति भावः।

### न्यायसुदर्शनम्

**ज्ञानस्वरूपो भगवान्यतोऽसावित्यत्र** भगवच्छब्द उद्देश्यसमर्पकः, ज्ञानस्वरूपः अशेषमूर्तिः न तु वस्तुभूत इत्यादीनि पदानि विधायकानि चेदर्थत्रयविधानेन वाक्यभेद-प्रसङ्गः; भगवतोऽवस्तुत्वं च प्रसज्येत। तथा ज्ञानस्वरूपभगवच्छब्दाभ्यामुद्दिश्याशेष-मूर्त्यादिना विधानेऽप्यर्थद्वयविधानं, प्राग्वदवस्तुत्वं च प्रसज्येत। अशेषमूर्तिर्भगवानित्युद्दिश्य ज्ञानस्वरूपत्वादिविधाने पृथिव्यादीनामपि ज्ञानस्वरूपत्वापत्तेर्जडाजडाविभागप्रसङ्गः, प्राग्वदवस्तुत्वं च। अशेषमूर्तिशब्देनाशेषाधिष्ठानं स्वरूपं लक्षयित्वा तस्य ज्ञानस्वरूपत्व-विधानेऽपि शब्दस्य लक्षणैव दोषः; "न तु वस्तुभूतः" इत्यनेन तस्य स्वरूपस्यावस्तु-त्वं च प्रसज्येत। न पृथिव्यादिवस्तुस्वरूप इत्यर्थस्य ग्रहणेऽप्यप्रसक्तार्थप्रतिषेधप्रसङ्गः, "यदम्बु वैष्णवः कायः" इति शरीरशरीरिभावस्य प्रस्तुतत्वात् "ज्योतींषि विष्णुः" इत्यादिसामानाधिकरण्यस्यापि तन्निबन्धनत्वाच्च भगवतः पृथिव्यादिस्वरूपत्वाप्राप्तेः। तथापि पृथिव्यादिव्यतिरेक एव भगवत्स्वरूपस्य सिध्यति। तदोक्तार्थस्य वक्ष्यमाणार्थहेतुता न

स्यात्; न हि भगवतः पृथिव्यादिव्यतिरेकसिद्धेः पृथिव्यादीनां तदज्ञानविजृम्भितता भवति। तस्मादित्थं पक्षान्तरे दोषानालोच्याशेषमूर्तिशब्देनाशेषक्षेत्रज्ञात्मनावस्थितं भगवन्तमुद्दिश्य तथाविधस्य तस्य ज्ञानस्वरूपत्वं तस्य देवाद्यर्थाकाराभिमानस्याज्ञानमूलत्वं चात्र प्रतिपादितमिति मन्तव्यम्। "न तु वस्तुभूतः" इति पृथिव्याद्यर्थाकारस्य निषेध्याकारत्वेन तद्व्यतिरिक्तक्षेत्रज्ञविशिष्टाकार एवाशेषमूर्तिशब्देनोद्दिश्यते। चिदचिन्मिश्रत्वादशेषस्य जगतस्तत्र चिदंशस्यैव प्रधानत्वात् प्रधानभूतक्षेत्रज्ञविशिष्टाकारस्यैवोद्देश्यत्वं युज्यत इति च मन्तव्यम्। यद्वा 'न पृथिव्यादिवस्तुभूतः' इति स्वरूपैक्यं प्रतिषिध्यते, "ज्योतींषि विष्णुः" इत्यादिसामानाधिकरण्येन स्वरूपैक्यशङ्कायाः प्रसज्यमानत्वात्। अशेषमूर्तिरसौ विष्णुर्ज्ञानस्वरूपो भगवान्; ज्ञानस्वरूपत्वे च संपूर्णषाड्गुण्यः। तस्मात्परिदृश्यमानचेतनाचेतनवस्तुविलक्षणः। हेतुद्वयमुखेन जगद्वैलक्षण्यलक्षणैकार्थविधानान्न वाक्यभेद इत्याशङ्क्याह—"ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि" इति। विज्ञानस्वरूपस्य भगवतो विजृम्भितानि; विस्तारभूतानि; विभूतिभूतानीत्यर्थः; "विस्तारं सर्वभूतस्य विष्णोः सर्वमिदं जगत्" इत्युक्तत्वात्। विस्तारभूतिशब्देनापृथक्सिद्धविभूतिभूतशरीरता विश्वस्य लक्ष्यते; "यदम्बु वैष्णवः कायः" इत्यत्रैवोक्तत्वात्। तस्मात् 'स एव सर्वम्' इति सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनं, न स्वरूपैक्यनिबन्धनमिति जानीहीत्यर्थः। अत्र ज्ञानस्वरूपशब्देन विष्णोर्जडव्यावृत्तिः। भगवच्छब्देन ज्ञानस्वरूपभूतानां जीवानां व्यावृत्तिः। अतो ज्ञानशब्दवाच्यत्वं क्षेत्रज्ञानामप्यविशिष्टमन्यत्रासकृदुक्तं चेति ज्ञान शब्देन क्षेत्रज्ञमुपादाय "यदा तु शुद्धम्" इत्यादिभिस्तस्याचिद्वस्तुनश्च विशेष उच्यते। "सर्वकर्मक्षये" इति वचनादसौ ज्ञानशब्दः क्षेत्रज्ञस्वरूपगोचरः; न भगवद्गोचरः, तस्य कर्मसंबन्धानर्हत्वात्। "एको व्यापी" इत्यत्र एक एवात्मा निरवयव इत्यर्थः।

"एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान्।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः॥"

इत्यत्र 'एकः' इत्यस्यात्मनः परमात्मांशत्ववचनात् सर्वचैतन्यैक्यावगमे अयमंशांशिभावलक्षणभेदो न सिध्येत्। अत आत्मन एव निरवयवत्वपरोऽयमेकशब्दः। परमात्मव्यतिरिक्तसर्वात्मैक्यावगमः सर्वेषामनङ्गीकारादपसिद्धान्तः। "वेणुरन्ध्रविभेदेन"

इत्यत्र ज्ञानैकाकारस्यात्मनो वायुस्थानीयस्य वेणुस्थानीयशरीरे वर्तमानस्य रन्ध्रभेदस्थानीयेन्द्रियभेदेन षड्जादिभेदवत् द्रष्टृत्वश्रोतृत्वमन्तृत्वसुखित्वदुःखित्वादिभेद औपाधिकः प्रवर्तत इत्यर्थः। एष भेदः प्रत्यात्मं प्रतिशरीरं द्रष्टव्यः। "पुमान् सर्वगतो व्यापी" इत्यत्र सर्वगतः सर्वज्ञः, 'गत्यर्था बुद्ध्यर्थाः' इति चानुमतेः। सर्वाचेतनान्तःप्रवेशस्वभावो न तैर्व्याप्यः। अथवा सर्वकालव्यापी। अतो गमनादिप्रयोजनशून्यः। सर्वार्थसंबन्धित्वं हि सर्वगतत्वम्। सर्वार्थैर्विषयविषयिभावलक्षणसंबन्धो ज्ञानस्यास्ति। अतः स्वगुणभूतज्ञानद्वारा आत्मनः सर्वार्थसंबन्धित्वात् सर्वगतत्वव्यवहारः। आकाशवद्यतो निष्क्रियः, तेन गमनादिप्रयोजनाभावात् निष्क्रियत्वाच्च गमनादिप्रश्नोऽस्य निरर्थक इत्यर्थः।

"सोऽहं न गन्ता नागन्ता नैकदेशनिकेतनः।
त्वं चान्ये च न च त्वं च त्वं नान्ये नाहमप्यहम्॥"

इति स्वात्मनि प्रतीतं विशेषं सर्वात्मस्वप्यतिदिश्य यथादृष्टगत्या गतियोगं देवमनुष्यादिभावं च प्रतिषेधतीति न तेनाप्यात्माभेदः प्रतीयते।

"तन्मनः समतालम्बि कार्यं साम्यं हि मुक्तये।
इति साम्योपदेशश्च भेद एवोपपद्यते॥
एवमेकमिदं विद्धि न भेदे सकलं जगत्।
वासुदेवाभिधानस्य स्वरूपं परमात्मनः॥"

इति पृथिव्यात्मपर्यन्तं सर्वं जगत् परमात्मस्वरूपशरीरम्, "परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज। व्यक्ताव्यक्ते तथैवान्ये रूपे" इत्यादिवचनात्। अथवा अयं श्लोकः परमात्मसाम्यमात्मसु व्यपदिशति; यथा परमात्मस्वरूपमेकमसंयुतात्मकमविकारि नागन्तुकदेवादिभेदयोगि एवमविकारि देवादिभेदरहितं च विद्धीत्यर्थः। महाभारते—

"अक्षरश्च क्षरश्चैव द्विधा भावोऽयमात्मनः।
एकत्वमक्षरं प्रोक्तं नानात्वं क्षरमुच्यते॥"

इत्येकत्वमविकारित्वमिति स्पष्टमुक्तम्। अत्रापि "आदिमध्यान्तहीनं सततैकरूपमेकं सदैकमेकस्वरूपं च सदा" इत्यादिष्वेकत्वमविकारित्वाभिप्रायं प्रयुक्तम्।

"सितनीलादिभेदेन यथैकं दृश्यते नभः ।
भ्रान्तिदृष्टिभिरात्मापि तथैकः सन् पृथक्पृथक् ॥"

इत्यत्र यथा आकाशस्य ज्योत्स्नातपान्धकाराद्युपाधिभेदेन सितनीलादिभेदो दृश्यते, एवमेव ज्ञानैकाकारस्याविकार्यात्मन एकरूपस्य तत्तत्कर्माद्युपाधिभेदेन देवादिभेदः सुखित्व-दुःखित्वादिभेदश्च प्रतीयत इत्यर्थः ।

"एकः समस्तं यदिहास्ति किंचित् तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥"

इति । एकानेकोद्देशेन अस्तिनास्तित्वविधिपरः अस्तिनास्त्युद्देशेनैकत्वानेकत्वविधि-परो वायं श्लोकः । अत्र चैकशब्दोऽविकारित्वपरो देहेन्द्रियसंघातप्रत्यनीकनिरवयवत्वपरो वा । इह जगति यदस्ति ।

"यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥"

इति श्लोकेनाविकार्यस्तीत्युक्तम् । यदविकारि तत्समस्तम् । एको निरवयवः । यन्नास्ति विकारि ततोऽन्यत्परं व्यवस्थितम् । अनेकात्मकं प्रधानस्याप्यनेकतया परिणाम-शक्तियोगात् अनेकात्मनां पृथिव्यादीनां ततोऽनन्यत्वाच्चानेकात्मकत्वमभिप्रेतम् । समस्त-मिति सर्वोद्देशमात्रं ; न विपर्यये सामस्त्यं विवक्षितम् । किंतु प्रत्येकमपि वृत्तिरिति दर्श-यति—सोऽहं स च त्वमिति । ज्ञानैकाकारत्वेनैकात्मकवस्तु अहं नानेकात्मकदेहः । अथवा, एको यद्वस्तु अविकारि निरवयवं वा तत्समस्तमस्तीत्युच्यते । "एष वै यजमानो यत्सोमः" इत्यादिवल्लिङ्गभेदः । ततोऽन्यदनेकात्मकं परं विकार्यचेतनं नास्तीति "सितनीलादि" श्लोकेनैकत्वविधानात् "नास्ति परं ततोऽन्यत्" इति विहितप्रत्यनी-काकारग्रहणाच्चैकोद्देशेनास्तित्वमेवात्र विधीयते । समस्तशब्देनैकात्मकवस्तूनि बहूनीति च प्रतीयते । एकत्वविधाने ततोऽन्यदनेकमिति प्रत्यनीकत्ववचनं स्यात् । सोऽहं स च त्वमिति ; अस्त्यात्मकवस्त्वहमिति सर्वात्मसु विधेयावृत्तिः । त्यज भेदमोहमिति ; अने-कानि त्यज ; देवादिभेदमोहं त्यजेत्यर्थः । श्रीविष्णुधर्मे—

"पुनश्च श्रूयतामेतत्संक्षेपाद्वदतो मम ।
नानात्वैकत्वविज्ञानस्वरूपमवनीपते ॥

आत्मा क्षेत्रज्ञसंज्ञोऽयं संयुक्तः प्राकृतैर्गुणैः ।
तैरेव विगतः शुद्धः परमात्माभिधीयते ॥ ''

इति । अत्र ''नानात्वैकत्वविज्ञानस्वरूपं श्रूयताम्'' इति वचनात् तदेवोत्तरश्लोकेनोच्यते । तत्र क्षेत्रज्ञावस्था शुद्धावस्था च नानात्वमेकत्वं चेति क्रमात् प्रतीयते । नानात्वमेकत्वं च क्षराक्षररूपे इति महाभारते प्रतीयते । अत: ''तैरेव विगतः शुद्धः परमात्माऽभिधीयते'' इत्यक्षरस्वरूपमभिहितम् । ''अक्षरादपि चोत्तमः'' इति परमात्मनोऽक्षरादपि परत्ववचनाद्यमक्षररूपपरमात्मा गौणपरमात्मा, न साक्षात्परमात्मेति मन्तव्यम् ।

**श्रीभाष्यम्**

ये देवादिषु वस्तुष्वात्मतयाभिमतेषु भोग्यभूता देवमनुष्यशैलाब्धिधरादिवस्तुभेदाः, ते तन्मूलभूतकर्मसु विनष्टेषु न भवन्तीत्यचिद्वस्तुनः कादाचित्कावस्थाविशेषयोगितया नास्तिशब्दाभिधेयत्वम्, इतरस्य सर्वदा निजसिद्धज्ञानैकाकारत्वेनास्तिशब्दाभिधेयत्वमित्यर्थः । प्रतिक्षणमन्यथाभूततया कादाचित्कावस्थायोगिनोऽचिद्वस्तुनो नास्तिशब्दाभिधेयत्वमेवेत्याह—''वस्त्वस्ति किम्'' इति । अस्तिशब्दाभिधेयो ह्यादिमध्यपर्यन्तहीनः सततैकरूपः पदार्थः, तस्य कदाचिदपि नास्तिबुद्ध्यनर्हत्वात् । अचिद्वस्तु किंचित् क्वचिदपि तथाभूतं न दृष्टचरम् । ततः किमित्यत्राह—''यच्चान्यथात्वम्'' इति । यद्वस्तु प्रतिक्षणमन्यथात्वं याति तदुत्तरोत्तरावस्थाप्राप्त्या पूर्वपूर्वावस्थां जहातीति तस्य पूर्वावस्थस्योत्तरावस्थायां न प्रतिसंधानमस्ति । अतः सर्वदा तस्य नास्तिशब्दाभिधेयत्वमेव । तथा ह्युपलभ्यत इत्याह—''मही घटत्वम्'' इति । स्वकर्मणा देवमनुष्यादिभावेन स्तिमितात्मनिश्चयैः स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथाभूतमालक्ष्यते, अनुभूयत इत्यर्थः । एवं सति किमप्यचिद्वस्तु अस्तिशब्दार्हमादिमध्यपर्यन्तहीनं सततैक-

रूपमालक्षितमस्ति किम्? न ह्यस्तीत्यभिप्रायः। यस्मादेवं तस्मात् ज्ञानस्वरूपात्मव्यतिरिक्तमचिद्वस्तु कदाचित्क्वचित् केवलास्तिशब्दवाच्यं न भवतीत्याह—"तस्मान्न विज्ञानमृते" इति। आत्मा तु सर्वत्र ज्ञानैकाकारतया देवादिभेदप्रत्यनीकस्वरूपोऽपि देवादिशरीरप्रवेशहेतुभूतस्वकृतविविधकर्ममूलदेवादिभेदभिन्नात्मबुद्धिभिस्तेन तेन रूपेण बहुधाऽनुसंहित इति तद्भेदानुसंधानं नात्मस्वरूपप्रयुक्तमित्याह—"विज्ञानमेकम्" इति।

श्रुतप्रकाशिका

अत्रान्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह—**ये देवादिष्विति**। देवादिषु वस्तुष्वात्मतयाभिमतेषु; प्रथमवस्तुशब्दो जीवपर्यन्तदेहपर एवेत्यभिप्रायः। संसृष्टाकारे ह्यात्माभिमानः। "तद्भोगार्थाः" इति पूर्वोक्तस्य पदस्य व्याख्येयं पदमुदाहरति—**भोग्यभूता इति**। 'भोग्यभूताः' इत्यनेन 'वस्तुभेदाः' इति पदस्याचिदंशमात्रपरत्वमुक्तम्। "न तु वस्तुभूतः" इत्युक्तत्वात् पूर्वश्लोकोक्तभेदा एवात्र विवक्षिता इत्याह—**देवमनुष्येति**; कारणाभावात्कार्याभावो हि व्यतिरेकः; तं स्पष्टयति—**तन्मूलभूतेति**। परमप्रकृतार्थस्य फलितत्वमाह—**इत्यचिद्वस्तुन इति**। पूर्वश्लोकफलितार्थकथने आत्मनोऽस्तिशब्दवाच्यत्वे हेतुरनुक्तः। अत्र तु तस्यापि फलितत्वमाह—**इतरस्येति**। जगदुपलब्धिप्रकारेणापि वस्तुभेदानां परिणामित्वमुपपाद्यते श्लोकद्वयेन; तत्र प्रथमस्य वाक्यार्थमाह—**प्रतिक्षणमिति**। श्लोकस्य नास्तिशब्दाभिधेयतापरत्वं "यदस्ति यन्नास्ति" इत्युपक्रमावगतम्। अस्मिम् श्लोके प्रयोजकशिक्षा। 'वस्त्वस्ति किम्' इत्यर्धयोजनौपयिकतयात्राभिधेयं "यदस्ति यन्नास्ति" इत्युपक्रमवशात्सिद्धमर्थमाह—**अस्तिशब्देति**। सततैकरूपतयाऽस्तिशब्दवाच्यत्वे सति हि पूर्वार्धोक्तस्य तदभावस्य नास्तिशब्दाभिधेयताहेतुत्वसिद्धिः। पूर्वार्धं व्याचष्टे—**अचिद्वस्त्विति**। किमनेन नास्तिशब्दाभिधेयत्वस्येति शङ्कायामुत्तरार्धमवतारयति—**ततः किमित्यत्राहेति**। "याति" इति वर्तमाननिर्देशस्याभिप्रायमाह—**प्रतिक्षणमिति**। "भूयो न तत्तथा" इत्यस्यार्थमाह—**तदिति**। **उत्तरोत्तरावस्थाप्राप्त्येति** भूयःशब्दार्थः।

"न तत्तथा" इत्यस्यार्थमाह—**पूर्वपूर्वावस्थां जहातीति**। तत्रेत्यस्यार्थमाह—**पूर्वावस्थस्योत्तरावस्थायामिति**। "कुतो हि तत्त्वम्" इत्यस्यार्थमाह—**न प्रतिसंधानमिति**; तत्त्वम्; तस्य भाव:। 'तदिदम्' इति प्रतिसंधानानर्हत्वं फलितमित्यर्थ:। ननु तत्त्वं कुत:? पूर्वावस्थत्वं कुत:? इत्युक्तम्। कथं प्रतिसंधाननिषेध:? उच्यते—कुत:शब्द: प्रमाणप्रतिक्षेपपर:। 'पर्वतोऽग्निमान्' इत्युक्ते कुत:? इति प्रमाणाकाङ्क्षा हि द्योत्यते। अत: प्रतिक्षेपपर: कुत:शब्दोऽपि प्रमाणप्रतिक्षेपपर:; कुत: प्रमाणादित्यर्थ:। पूर्वावस्थस्य भूयस्तथात्वे प्रमाणं च प्रत्यभिज्ञा। अत: प्रमाणे प्रतिक्षिप्ते प्रतिसंधानं निषिद्धं भवतीति भाव:। अन्यथा "न तत्तथा" इत्यनेन पौनरुक्त्यं स्यात्। हिशब्देन फलितमर्थमाह—**अत इति**। नास्तिशब्दवाच्यत्वे प्रयोजकशिक्षा कृता। शिक्षितमर्थमुदाहरणेन दर्शयत्यनन्तरश्लोक इत्यभिप्रायेणाह—**तथाहीति**। "मही घटत्वम्" इति श्लोकं व्याचष्टे—**स्वकर्मणेत्यादिना**। "मही घटत्वम्" इत्यत्र 'याति' इति पूर्वश्लोकादनुषङ्ग:। कर्मण आत्मनिश्चयविरोधित्वं सद्वारकमित्याह—**देवमनुष्यादिभावेनेति**; देवादिदेहसंसर्गेणेत्यर्थ:। स्तिमितम्; प्रतिबद्धम्। अस्थिरे भोग्यत्वबुद्धि: स्थिरतरसुखरूपात्मनिश्चयस्तैमित्यादिति भाव:। यद्वा आत्मज्ञानरहितैरप्यचिद्वस्तुनोऽस्थिरत्वमालक्ष्यत इत्याह—**तथाहीति**। **आलक्ष्यत इति**; चाक्षुषज्ञाने प्रयोगप्राचुर्यात् तद्व्यावृत्त्यर्थम**नुभूयत** इत्युक्तम्। श्लोकव्याख्यानपरिसमाप्तिं द्योतयति—**इत्यर्थ इति**। "ब्रूहि" इत्यादेरर्थमाह—**एवं सतीति**। अनेन "अत्र" इति पदं व्याख्यातम्। **अचिद्वस्त्विति** पदेन श्लोकस्थवस्तुशब्दो व्याख्यात:। **अस्तिशब्दार्ह**मित्यादि विशेषणं सामर्थ्यसिद्धतयोक्तम्। अथवा श्लोकद्वयाभिप्रायमाह—**एवं सतीति**। "न तु वस्तुभूत:" इति पुराणग्रन्थे "किमप्यचिद्वस्तु" "अचिद्वस्तु किंचित्" इति भाष्ये चाचिद्विषयवस्तुशब्दप्रयोगात् "तद्वस्तु नृप तच्च किम्" इति ग्रन्थस्थवस्तुशब्दतुल्यत्वं न शङ्कनीयम्। अस्ति किमित्यनेन श्लोकस्थस्यास्तिशब्दस्य भवत्यर्थत्वमुक्तम्। अत एव "यदस्ति" इत्यस्तिशब्दवन्नात्मस्वरूपपरत्वं शङ्कनीयम्। फलितमाह—**न हीति**। 'अस्ति किम्? न ह्यस्ति' इति भाष्यस्वारस्येन श्लोकद्वयोपक्रमगतस्य "अस्ति किम्" इति वाक्यस्य प्रत्यभिज्ञातस्य भवत्यर्थतया व्याख्यातत्वं प्रतीयते। यद्वा 'अस्तिशब्दाभिधेय:' इत्यनेन "वस्त्वस्ति किम्" इत्यत्रास्तिशब्दो

व्याख्यात:, "यदस्ति" "तस्मान्न विज्ञानमृतेऽस्ति" इत्यादिनैकरूप्यात्। एवं "वस्त्वस्ति किम्" "मही घटत्वम्" इति श्लोकद्वयस्य प्रत्येकमुक्तो वाक्यार्थः पूर्वपक्ष-योजनायामुपजीव्य:। उत्तरश्लोकस्य प्रथमार्धं व्याचष्टे—**यस्मादिति। यस्मादेवं तस्मात्;** परिणामित्वादेव, न तु ज्ञानबाध्यत्वादित्यर्थः। **अच्छिद्रस्तु**शब्देन वस्तुजात-शब्दार्थ उक्तः। जातशब्दशिरस्को वस्तुशब्दो न नित्यवाचीति भावः। **केवलास्ति-शब्दवाच्यमिति;** एतच्छ्लोकस्थास्तिशब्दो न भवत्यर्थः, ज्ञानव्यतिरिक्तस्य "तदेत-दक्षयं नित्यम्" इत्यादिना नित्यत्वेनोक्तस्य निषेध्यत्वायोगात् "यदस्ति" इत्याद्यु-पक्रान्तस्योपसंहारौचित्याच्चेति भावः। प्रागभावप्रध्वंसाभाववतोऽच्छिद्रस्तुनो नास्तिशब्दा-भिधेयत्वमवच्छिन्नास्तिशब्दवाच्यत्वं चेति तद्व्यावृत्त्यर्थं केवलशब्दः। एवमात्मव्यतिरिक्त-वस्तुनो नास्तिशब्दाभिधेयत्वमुपसंहृतम्। "विज्ञानम्" इत्यादि व्याचष्टे—**आत्मा त्विति।** तुशब्दोऽचिद्वैषम्यपरः। **सर्वत्र;** सर्वशरीरेषु। एकशब्दं व्याचष्टे—**ज्ञानैकाकारतयेति।** "एको व्रीहिः सुनिष्पन्नः सुपुष्टं कुरुते प्रजाः" इतिवदयमेक-शब्द आकारैक्यपरः। स चाकारो विज्ञानशब्दोक्तं ज्ञानत्वमित्यभिप्रायेणोक्तम्। ज्ञानैकाकारतयेति भावप्रधानो निर्देशः, ज्ञानत्वैकाकारतयेत्यर्थः। स्वरूपतो धर्मतश्चा-विशेषेण ज्ञानत्वं सद्वारकमद्वारकं चाकारो हि भवति। ज्ञानैकाकारतयेत्यत्रैक-शब्देन संकोचविकासदुःखरूपत्वादिव्युदासश्च। **देवादिभेदप्रत्यनीकस्वरूपोऽपीति;** एकरूपत्वाद्भेदप्रत्यनीकत्वम्। निजकर्मादिपदं व्याचष्टे—**देवादीति।** भेदशब्दार्थ-माह—**विविधेति;** बुद्धिशब्देन चित्तशब्दार्थ उक्तः। बुद्धेर्भेदश्चात्मन्यारोप्यमाण-देवाद्याकाररूपविषयभेदात्। **बहुधा;** देवत्वादिबहुप्रकारविशिष्टतयाऽभ्युपेतमित्यर्थः। बहुधाशब्देनैकशब्दस्याकारैक्यपरत्वं स्पष्टम्। फलितमर्थमाह—**नात्मस्वरूपप्रयुक्त-मिति;** औपाधिकमित्यर्थः।

### भावप्रकाशिका

**व्याख्येयपदव्याख्यानार्थमिति;** "वस्तुषु" इत्यादिपदस्याव्याख्यातत्वात् तदर्थमित्यर्थः। **व्याख्येयं पदमुदाहरतीति;** "भोक्ता भोग्यम्" इति श्रुतिगत-भोग्यपदमित्यर्थः। **हेतुरनुक्त इति;** यद्यपि "ज्ञानस्वरूपः" इत्यनेनैवास्तिशब्द-वाच्यत्वे हेतुरुक्तः, तथापि भाष्ये नोक्तः। अत एव पूर्वश्लोकव्याख्याने "इतरदस्ति-

शब्दाभिधेयम् " इत्युक्तम्, न तु तत्र हेतुरुपन्यस्त इति भावः। **प्रयोजकशिक्षेति ;** अस्तिनास्तिपदप्रवृत्तिनिमित्तशिक्षेत्यर्थः। **अत्राभिधेयमिति ;** अस्मिन् श्लोके अस्ति-शब्दस्यास्तिशब्दाभिधेय एवार्थ इत्यर्थः। **स्वभोग्यभूतमचिद्वस्तु प्रतिक्षणमन्यथा भूतमालक्ष्यते** इति भाष्ये प्रतिक्षणमन्यथा भूतं वस्तु भोग्यत्वेनालक्ष्यते, भोग्यमचिद्वस्तु प्रतिक्षणमन्यथात्वेनालक्ष्यत इत्युद्देश्यविधेयभावभेदेनार्थद्वयसंभवमभिप्रेत्य द्वेधापि व्याचष्टे— **अस्थिर इत्यादिना।** **चाक्षुषज्ञाने प्रयोगप्राचुर्यादिति ;** यद्यपि चक्षुषा प्रत्यक्षेणो-पलक्ष्यते इत्युक्तावपि न दोषः, तथापि चाक्षुषज्ञानातिरिक्तप्रमाणान्तरसंग्रहायानुभूयत इति व्याख्यातमिति द्रष्टव्यम्। **श्लोकव्याख्यानपरिसमाप्तिमिति ;** अस्यां योजनायामिति शेषः। अयं भावः—आलक्ष्यते भुज्यत इति वा भोग्यत्वेनालक्ष्यत इति वा पूर्वयोज-नायामेतादृशाप्रसिद्धार्थप्रदर्शनपरतया 'इत्यर्थः' इत्यस्य साफल्यं संभवेत्। अस्यां तु योजनायामालक्ष्यत इत्यस्यानुभूयत इत्यर्थे प्रसिद्धिसत्त्वेन 'इत्यर्थः' इत्यस्य वैयर्थ्यात् समाप्तिद्योतकत्वमेव। अस्मिंश्च पक्षे एवं सतीत्युत्तरभाष्यं श्लोकद्वयाभिप्रायकथनपरम्। एतदेवाभिप्रेत्य वक्ष्यति—अथवा श्लोकद्वयाभिप्रायमाहेति। पूर्वयोजनायां तु 'इत्यर्थः' इत्यस्य समाप्तिद्योतकत्वाभावात् 'एवं सति' इत्युत्तरभाष्यं ब्रूहीत्यादिपदार्थकथनपरम्। एतत्पक्षाभिप्रायेण **ब्रूहीत्यादेरर्थमाहेत्यादिग्रन्थ** इति। अतः श्लोकव्याख्यानसमाप्तौ ब्रूहीत्याद्यर्थकथनं विरुद्धमिति न चोदनीयम्। **अस्तिशब्दार्हमित्यादि विशेषणं सामर्थ्यसिद्धतयेति ;** न तु " वस्त्वस्ति किम् " इति शब्दाभिधेयतया, तत्रास्तिशब्दस्य भवत्यर्थकत्वादिति भावः। **वस्तुशब्दतुल्यत्वं न शङ्कनीयमिति ;** " वस्त्वस्ति किम्" इत्यत्र वस्तुशब्दस्येत्यर्थः। **यद्वास्तिशब्दाभिधेय इत्यनेनेति ;** पूर्वयोजनायामस्ति-शब्दार्हमित्यध्याहारः। अस्मिन् पक्षे तु भवत्यर्थकास्तिशब्दाध्याहार इति विशेषः। **पूर्वपक्षयोजनायामिति ;** अतश्च पूर्वपक्षे विभज्य श्लोकद्वयार्थानुक्तिर्न दोषायेति भावः। **अवच्छिन्नास्तिशब्दवाच्यत्वं चेति ;** 'तदानीमस्ति' 'इदानीमस्ति' इति पदान्तरस-हितास्तिशब्दवाच्यत्वं चेत्यर्थः। **आकारैक्यपरत्वं स्पष्टमिति ;** "संख्याया विधार्थे धा" इति विधार्थभूतप्रकारे धाप्रत्ययविधानात् बहुधेत्यस्य बहुप्रकारमित्यर्थो वर्णनीयः। ततश्च तत्प्रतियोगिन एकशब्दस्यापि प्रकारैक्यमेवार्थः। न च 'एकं राशिं पञ्चधा कुरु' इत्य-त्रेव " अधिकरणविचाले च " इति धाप्रत्ययोऽस्त्विति वाच्यम्, अधिकरणविचालनं हि

एकस्य वस्तुनोऽनेकधा करणम् ; संख्यान्तरापादनमित्यर्थः । न हि विज्ञानस्य संख्यान्तरापादनं स्वरसम् । तस्माद्विधार्थ एव धाप्रत्यय इति प्रकारैक्यमेवैकशब्दस्याभ्युपेयमित्यर्थः । ननु "बहुधाभ्युपेतम्" इति विधार्थे धाप्रत्ययाश्रयणे 'पञ्चधा भुङ्क्ते' इत्यत्रेव क्रियागतं प्रकारबहुत्वं प्रतीयत इति वक्तव्यं, न तु विज्ञानगतम् ; क्रियाप्रकारबहुत्वस्य धाप्रत्ययार्थत्वात् । ततश्च "बहुधाभ्युपेतम्" इत्यत्राभ्युपगमक्रियागतप्रकारबहुत्वं पर्यवस्येत् , न तु ज्ञानप्रकारबहुत्वम् । ततश्च "विज्ञानमेकम्" इत्यत्र विज्ञानप्रकारैक्यं कथं सिध्येत् ? तद्बोधकाभावात् ; एकत्वबहुत्वयोर्भिन्नविषयत्वादिति चेत्—न ; अभ्युपगमक्रियाबहुत्वस्याभ्युपगम्यमानविज्ञानबहुत्वपर्यवसिततयैकत्वबहुत्वयोः समानविषयत्वादिति भावः । **औपाधिकमित्यर्थ इति** ; ननु देवाद्यनुसंधानस्यौपाधिकत्वे किं प्रयोजनम् ? "यदम्बु वैष्णवः कायः" इति श्लोकद्वयेनोक्तचिदचिदात्मकस्य जगतः संसृष्टत्वावस्थायां वियुक्तत्वावस्थायां च भगवच्छरीरत्वमापादितम् ; "ज्ञानस्वरूपो भगवान् यतोऽसौ" इत्यादिश्लोकद्वयेन चिदचिद्विवेकश्चितः सत्यशब्दवाच्यत्वमचितोऽन्वयव्यतिरेकाभ्यां कर्मपरिणामतयाऽसत्यशब्दवाच्यत्वं चोपपादितम् । तदेवाचितोऽसच्छब्दवाच्यत्वं जगदुपलब्धिप्रकारेणापि "वस्त्वस्ति किम्" इत्यादिश्लोकद्वयेनापि दृढीकृत्य "तस्मात्तु विज्ञानम्" इति श्लोकार्धेन चित एव सच्छब्दवाच्यत्वं नाचित इत्युपसंहृतमेवेति समर्थनीयान्तराभावात् "विज्ञानमेकम्" इति श्लोकार्धोपन्यासहेतुभूतशिष्यजिज्ञासाविषयभूतं किमपि न दृश्यत इति चेत् , सत्यम् ; अचिद्वस्तुनोऽसत्यशब्दप्रवृत्तिनिमित्तभूतपरिणामित्वोपपादककर्महेतुत्वोपसंहाररूपतया सार्थक्यात् ।

## श्रुतप्रदीपिका

एवमन्वितेषु पदेषु व्याख्येयपदव्याख्यानार्थमाह— **ये देवादिष्विति** ; सप्तम्यन्तवस्तुशब्दो देहविशिष्टात्मपर इति भावः । द्वितीयवस्तुशब्दो विशेषणभूतपरः । **भोग्येति** ; भोगार्थपदव्याख्येयत्वसूचनम् । "भोक्ता भोग्यम्" इत्यादौ भोग्यशब्दो भोगार्थपर इति भावः । व्यतिरेकं स्पष्टयति—**तन्मूलेति** । स हि कारणाभावे कार्याभावः । फलितार्थमाह—**इत्यचिदिति** । आत्मनोऽस्तिशब्दवाच्यत्वहेतोरपि फलितत्वमाह— **इतरस्येति** । अनन्तरग्रन्थस्य वाक्यार्थमाह—**प्रतीति** । शाब्दयोजनौपयिकमर्थमाह—**अस्तिशब्देति** । शब्दार्थमाह—**अचिद्वस्त्वितीति** । उत्तरार्धस्य शङ्कामाह— **तत इति** । वर्तमाननिर्देशस्य फल-

माह—**प्रतिक्षणमिति**। भूयःशब्दार्थमाह—**उत्तरेति**। तत्रेत्यस्यार्थमाह—**पूर्वेति**। कुतो हि तत्त्वमित्यस्यार्थमाह—**न प्रतिसंधानमिति**; **तत्त्वं**; तस्य भावः। कुतःशब्दः प्रमाणप्रतिक्षेपक इति भावः। **महीत्यादि**; मही घटत्वं यातीत्यनुषङ्गः। कर्मणः प्रणाड्या स्तैमित्यहेतुत्वमाह—**देवेति**; **स्तिमितः**; प्रतिबद्धः। चाक्षुषज्ञानमात्रव्युदासायाह—**अनुभूयत इति**। अत्रशब्दार्थमाह—**एवं सतीति**। फलितमाह—**न हीति**। "वस्तु" "मही" इति श्लोकद्वयस्यैकवाक्यत्वं पूर्वपक्षयोजनायामुक्तम्। अनन्तरश्लोकपूर्वार्धं व्याचष्टे—**यस्मादिति**। **तस्मादिति**; तस्मात्; परिणामित्वान्न मिथ्यात्वादिति भावः। उत्तरार्धं व्याचष्टे—**आत्मा त्विति**। बुद्धिशब्देन चित्तशब्दो व्याख्यातः।

**श्रीभाष्यम्**

आत्मस्वरूपं तु कर्मरहितम्। तत एव मलरूपप्रकृतिस्पर्शरहितम्। ततश्च तत्प्रयुक्तशोकमोहलोभाद्यशेषहेयगुणासङ्गि। उपचयापचयानर्हतयैकम्। तत एव सदैकरूपम्। तच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावादित्याह—"ज्ञानं विशुद्धम्" इति। चिदंशः सदैकरूपतया सर्वदास्तिशब्दवाच्यः। अचिदंशस्तु क्षणपरिणामित्वेन सर्वदा नाशगर्भ इति सर्वदा नास्तिशब्दाभिधेयः। एवंरूपचिदचिदात्मकं जगद्वासुदेवशरीरं तदात्मकमिति जगद्याथात्म्यं सम्यगुक्तमित्याह—"सद्भाव एवम्" इति। अत्र सत्यमसत्यमिति "यदस्ति यन्नास्ति" इति प्रक्रान्तस्योपसंहारः। एतत् ज्ञानैकाकारतया समस्तशब्दगोचरस्वरूपभेदमेवाचिन्मिश्रं भुवनाश्रितं देवमनुष्यादिरूपेण सम्यग्व्यवहारार्हभेदं यद्वर्तते तत्र हेतुः कर्मैवेत्युक्तमित्याह—"एतत्तु यत्" इति। तदेव विवृणोति—"यज्ञः पशुः" इति। जगद्याथात्म्यज्ञानप्रयोजनं मोक्षोपाययतनमित्याह—"यच्चैतत्" इति।

## श्रुतप्रकाशिका

उपाधिविमोक्षे कीदृशं स्वरूपमित्यपेक्षायामनन्तरश्लोकं व्याचष्टे—**आत्मेति**। विशुद्ध-पदं व्याचष्टे—**कर्मरहितमिति**। विमलपदं व्याचष्टे—**तत एवेति**। विमलपदव्याख्यान-मिति स्पष्टीकर्तुं मलरूपशब्दः। **मलरूपप्रकृतिस्पर्शरहितमित्यनेन** "सर्वकर्मक्षये ज्ञानम-पास्तदोषम्" इत्यस्यार्थोऽवगतः, कर्मक्षयवाचिपदानन्तरपदस्य शरीरसंबन्धरहितपरत्वेन व्याख्यातत्वात्। तथा च श्रुतिः—

"अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य।
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानि ॥"

इति। अत्र हि "पापं विधूय" इत्युक्त्वा "धूत्वा शरीरम्" इत्युक्तम्। उपरितन-पदानि व्याचष्टे—**ततश्चेति**; तत एवेत्यर्थः। हेतोर्नैरपेक्ष्यसूचकश्चशब्दः। निरस्ता-शेषलोभादिसङ्गमित्यर्थः। एकमिति पदं व्याचष्टे—**उपचयापचयानर्हतयैकमिति; उप-चयापचयौ**; वृद्धिक्षयौ। **तदर्हत्वम्**; सावयवत्वम्। सावयवत्वाभावादेवैकशब्दवाच्य-त्वम्। निरवयवत्वमेकत्वमित्यर्थः। **तत एव सदैकरूपमिति**; निरवयवत्वात्सावयवत्व-प्रयुक्तवृद्धिक्षयरहितमित्यर्थः। सामानाधिकरण्यं व्याचष्टे—**तच्चेति**। "यदम्बु वैष्णवः कायः" "अशेषमूर्तिः" इत्युक्तत्वादयमेवार्थः। "न यतोऽन्यदस्ति" इत्येतद्व्याचष्टे—**अतदिति। यतः**; यस्मात् वासुदेवात्। **अन्यत्**; स्वपर्यवसितं वस्तु नास्तीत्यर्थः। यद्वा वासुदेवादिति पदमध्याहृत्य योजना, वासुदेवादन्यन्नास्तीति यतः, तत इत्यर्थः। अस्यां योजनायां तच्छब्दः प्रसिद्धपरामर्शी। अतोऽपि पूर्वयोजना साधीयसी, तद्वृत्तस्य यद्वृत्तप्रतिनिर्देशरूपत्वस्वारस्यात् पञ्चम्यन्ताध्याहारानपेक्षत्वाच्च। "ज्ञानस्वरूपः" "यदा तु" इति श्लोकौ चिदचित्साधारणौ। "वस्त्वस्ति" इत्यादिसार्धश्लोकद्वयमचिदसाधारणम्। "विज्ञानम्" इत्यादिसार्धश्लोकश्चिदसाधारण इति विभागः। न परमतमुक्तं, तत्त्वमेवोक्त-मित्यभिप्रायेण "सद्भावः" इत्याद्यर्धमुक्तम्। तत्र यथाशब्दार्थमाह—**चिदंश इति। यथा**; येन प्रकारेण, परिणामित्वापरिणामित्वरूपेण; न ज्ञानबाध्यत्वाबाध्यत्वरूपेणेत्यर्थः। **एवंरूपेति**; शरीरशरीरिभावरूपेण येन प्रकारेण भगवदात्मकत्वं, न तु स्वरूपैक्येनेत्यर्थः। श्लोके यथाशब्दप्रतियोग्येवंशब्दः। 'सत्यं ज्ञानमसत्यमन्यच्च यथाऽवस्थितम्, एवं सद्भाव उक्तः' इत्यन्वयोऽभिप्रेतः। अतः सत्यासत्यशब्दवाच्यत्वनिर्वाहकापरिणामित्वपरिणामित्वे

भगवदात्मकत्वं च यथाशब्दविवक्षितं भवति। अन्यदुपक्रान्तमन्यदुपसंहृतं भवति, अस्ति-नास्तिशब्देनोपक्रम्य सत्यासत्यशब्देनोपसंहारादित्यत्राह—**अत्रेति**। उपक्रमोपसंहारयोः शब्दान्तरनिर्देशस्यायमभिप्रायः—अन्येष्वपि शब्देषु क्वचिदेवं श्रुतेषु तेषामपि प्रवृत्तिनि-मित्तमिदमेवेति। उत्तरार्धस्यार्थमाह—**एतदिति**। "प्रत्यस्तमितभेदम्" "अगोचरं वचसाम्" इत्यनयोरर्थमभिप्रेत्याह-**ज्ञानैकाकारतया सममशब्दगोचरस्वरूपभेदमिति;** एवकारेण विरोधः सूचितः। भुवनाश्रितत्वस्य घटकं पदमाह—**अचिन्मिश्रमिति। भुव-नाश्रितम्;** अण्डान्तर्गतम्; भोगस्थानगतमित्यर्थः। संव्यवहारशब्दं व्याचष्टे—**सम्यग्व्यवहारार्हभेदमिति;** सम्यक्छब्दः स्पष्टत्वपरः। तत्कर्म किमित्याकाङ्क्षायामुत्त-रश्लोकस्य तद्विवरणपरत्वमाह-**तदेव विवृणोतीति**। स्वर्गमयश्च कामः; स्वर्गविषयेच्छे-त्यर्थः। फलस्य वक्ष्यमाणत्वाद्देवतायाः फलस्य च यष्टव्यत्वेन साध्यत्वेन च कर्मान्तर्भावः। 'इत्यादि'शब्देन दानहोमादिकं पापं चोक्तं भवति। भूरादिशब्देन पापफलमप्युक्तं भवति। पश्वादिपरिकरयुक्तो यज्ञ एकं कर्म। एवंविधयज्ञात्मकं दानहोमाद्यात्मकं च कर्म तत्र हेतुः। आश्रितमार्गदृष्टम्; तैस्तैराश्रितमार्गा वर्णाश्रमाः, तेषु दृष्टमित्यर्थः। अनन्तर-श्लोकार्थमाह-**जगदिति**। कर्मवश्यः सर्वत्र व्रजति हि; यद्वा कर्मवश्यो हि सर्वत्र व्रजति। तस्मादेवं कुर्यादित्यर्थः। निगलित एव हि सर्वत्र कारागृहे चरति। अतस्तन्मोचनाय यतेतेति भावः। ध्रुवमचलं सदैकरूपम्; स्वरूपतो गुणतश्चैकरूपमित्यर्थः। यद्वा स्वरूपतो गुणतो रूपतश्चैकरूपमित्यर्थः। तस्मान्नैतदेवमिति पूर्वेणान्वयः।

### भावप्रकाशिका

**कर्मक्षयवाचिपदानन्तरपदस्येति;** कर्मक्षयवाचिपदं विशुद्धमिति पदम्। तद-नन्तरपदं विमलमिति पदम्। **शरीरसंबन्धरहितपरत्वेनेति;** प्रकृतिस्पर्शरहितमित्यस्य शरीरसंबन्धरहितमित्यस्य च समानार्थत्वादिति भावः। **अन्येष्वपि शब्देष्विति;** सदसदादिशब्देष्वित्यर्थः। ननु "स्वर्गमयश्च कामः" इत्यस्य काम्यमानस्वर्गपरत्वमेव किं न स्यादित्याशङ्क्य "भूरादिभोगाश्च फलानि तेषाम्" इति फलस्य वक्ष्यमाणत्वात् स्वर्गेच्छापरत्वमेव युक्तमित्याह-**फलस्य वक्ष्यमाणत्वादिति**। ननु "यज्ञः पशुः" इत्यादिश्लोकस्य कथं कर्मस्वरूपप्रतिपादनपरत्वम्? पश्वादीनां यज्ञशेषतया तदनुप्रविष्टत्वेऽपि वह्निशब्दनिर्दिष्टदेवताया भूरादिभोगानां च फलभूतानामतच्छेषभूतानां कर्मत्वासंभवादित्या-

शङ्कयाह—**देवतायाः फलस्य चेति । सर्वत्र व्रजति हीति ;** व्रजत्येवेत्यर्थः । **कर्मवश्यो हीति ;** कर्मवश्य एवेत्यर्थः । **ध्रुवमचलं सदैकरूपमिति ;**

" यच्चैतद् भुवनगतं मया तवोक्तं सर्वत्र व्रजति हि तत्र कर्मवश्यः ।
ज्ञात्वैतद्ध्रुवमचलं सदैकरूपं तत्कुर्याद्विशति हि येन वासुदेवम् ॥"

इति श्लोकस्थैः " ध्रुवमचलं सदैकरूपम् " इति पदैः क्रमेण स्वरूपतो रूपतो गुणतश्चैकरूप्यमुच्यत इत्यर्थः । सदैकरूपमित्यत्र रूपत ऐकरूप्यस्योचितत्वमभिप्रयन्नाह—**यद्वा स्वरूपतो गुणतो रूपतश्चेति । पूर्वेणान्वय इति ;** सिद्धान्तोपक्रमगतप्रतिज्ञावाक्येन " नैतदेवम् " इत्यनेनान्वय इत्यर्थः ।

**श्रुतप्रदीपिका**

उपाधिविगमे कीदृगात्मस्वरूपमिति शङ्कायामनन्तरश्लोकं व्याचष्टे—**आत्मेति ।** विशुद्धशब्दार्थमाह—**कर्मेति ।** विमलशब्दव्याख्यानम्—**मलरूपेति ।** " विधूय-पापम् " " धूत्वा शरीरम् " इति श्रवणादिति भावः । उपचयापचयार्हत्वं सावयवत्वम् । तदभावादेकं **निरवयवम् ।** ततो व्याध्यादिरहितमित्यर्थः । सामानाधिकरण्यार्थमाह—**तच्चेति ।** नेत्यादिकं व्याचष्टे—**अतदिति ।** हेतुत्वं गम्यम् । यतःशब्दस्य हेतुपरत्वे वासुदेवादित्यध्याहारः । " ज्ञानस्वरूपः" " यदा तु " इति श्लोकौ चिदचित्साधारणौ । " वस्त्वस्ति " इत्यादिसार्धश्लोकद्वयमचिदसाधारणम् । " विज्ञानम् " इति सार्धश्लोकश्चिदसाधारण इति विभागः । न परमतमित्यनन्तरश्लोकार्थः । तत्र यथाशब्दार्थमाह—**चिदश इत्यादिना ।** अन्यदुपक्रान्तमन्यदुपसंहृतमित्यत्राह —**अत्रेति ।** भुवनाश्रयत्व-घटकमचिन्मिश्रपदम् । किं तत्कर्मेत्यपेक्षायामनन्तरश्लोकार्थमाह—**तदेवेति ।** तदनन्तर-स्यार्थमाह—**जगदिति ।**

**श्रीभाष्यम्**

**अत्र निर्विशेषे परे ब्रह्मणि तदाश्रये सदसदनिर्वचनीये चाज्ञाने जगतस्तत्कल्पितत्वे वानुगुणं किंचिदपि पदं न दृश्यते । अस्तिनास्तिशब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत् परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकम् । ज्ञानैकाकारस्यात्मनो देवादिवि-**

विधाकारानुभवेऽचित्परिणामे च हेतुर्वस्तुयाथात्म्यज्ञानविरोधि क्षेत्रज्ञानां कर्मैवेति प्रतिपादनात् अस्तिनास्तिसत्यासत्यशब्दानां च सदसदनिर्वचनीयवस्त्वभिधानासामर्थ्याच्च नास्त्यसत्यशब्दावस्तिसत्यशब्दविरोधिनौ। अतश्च ताभ्यामसत्त्वं हि प्रतीयते, नानिर्वचनीयत्वम्। अत्र चाचिद्वस्तुनि नास्त्यसत्यशब्दौ न तुच्छत्वमिथ्यात्वपरौ प्रयुक्तौ; अपितु विनाशित्वपरौ। "वस्त्वस्ति किम्" "मही घटत्वम्" इत्यत्रापि विनाशित्वमेव ह्युपपादितम्; न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा, एकेनाकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनात्। तुच्छत्वं हि प्रमाणसंबन्धानर्हत्वम्। बाधोऽपि यद्देशकालादिसंबन्धितया यदस्तीत्युपलब्धं तस्य तद्देशकालादिसंबन्धितया नास्तीत्युपलब्धिः। न तु कालान्तरेऽनुभूतस्य कालान्तरे परिणामादिना नास्तीत्युपलब्धिः, कालभेदेन विरोधाभावात्। अतो न मिथ्यात्वम्।

### श्रुतप्रकाशिका

एवं श्लोकानां स्वोक्तार्थानुगुण्यमुपपाद्य परोक्तार्थाननुगुणत्वमुपपादयति—**अत्रेत्यादिना**। 'किंचिदपि पदं न दृश्यते' इति न वाच्यम्, नास्त्यादिशब्दाः सामानाधिकरण्यमज्ञानवाचिपदजातं चानुगुणमिति चेत्, तत्राह—**अस्तीति**। **परमस्येत्यादि**; परमपरेशादिशब्दानां भवत्पक्षे मुख्यार्थासिद्धिरिति भावः। हेत्वन्तरं चाह—**अस्तिनास्तिसत्यासत्येति**; प्रथमश्चस्त्वर्थः। स्वोक्तयोजनायामनुगुणस्य शब्दस्य परपक्षाननुगुणत्वरूपं वैषम्यमस्तीति भावः। अस्तिसत्यशब्दौ दृष्टान्तार्थौ; यथा अस्तिसत्यशब्दौ न सद्विलक्षणपरौ तथा नास्त्यसत्यशब्दावपि नासद्विलक्षणपरावित्यर्थः। कथमनिर्वचनीयवस्त्वभिधानासामर्थ्यमित्यत्राह—**नास्तीति**। अर्थद्वारको विरोधः। ततः किमित्यत्राह—**अतश्चेति**। यद्वा 'अनिर्वचनीयवस्त्वभिधानासामर्थ्यात्' इति व्युत्पत्त्यभाव उक्तः। परस्परविरुद्धार्थत्वमत्र हेत्वन्तरतयोक्तम्। चः समुच्चये। तथापि सत्त्वाभावातु-

च्छत्वं मिथ्यात्वं वोक्तं भवतीति चेत्तत्राह—**अत्रेति** । कथं विनाशित्वपरावित्यत्राह—**वस्त्विति** । विनाशित्वमेव हि मिथ्यात्वमिति शङ्कायां विनाशित्वस्वरूपं शोधयति—**एकेनेति** । एकेनाकारेण कालान्तरेऽनुभूतस्य कालान्तरे आकारान्तरेणोपलब्धिरस्तु; ततः कथं विनाशित्वं तुच्छत्वमिथ्यात्वव्यावृत्तमिति शङ्कायां तुच्छत्वादिस्वरूपं शोधयति—**तुच्छत्वं हीति । परिणामादिनेति**; परिणामशब्दः परिणामसामान्यपरस्तद्विशेषपरश्च, यथा वादशब्दः सर्वकथासाधारणो वीतरागकथामात्रपरश्च तद्वत् । अत्रायं परिणामशब्दो वर्धमानावस्थावाची; "परिणामर्द्धिजन्मभिः" इति प्रयोगात् । "यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूताम्" इति वक्ष्यमाणवचनकटाक्षेणैवमुक्तम् । परिणामशब्दस्य विकारमात्रपरत्वे आदिशब्दः प्रदेशान्तरगमनपरः । कालान्तरानुभूतस्य कालान्तरे नास्तीत्युपलब्धिः कथं न बाध इत्यत्राह—**कालभेदेनेति** । विरोधे हि बाधः। बाध्यत्वं हि मिथ्यात्वमित्यभिप्रायेणाह—**अत इति** ।

### भावप्रकाशिका

**नासद्विलक्षणपरावित्यर्थ इति**; यथा ब्रह्मणि प्रयुज्यमानावस्तिसत्यशब्दौ न सदसद्विलक्षणपरौ, एवं प्रपञ्चेऽपि प्रयुज्यमानौ नास्त्यसत्यशब्दौ न सदसद्वैलक्षण्यपरावित्यर्थः। **अर्थद्वारको विरोध इति**; यद्यपि सदसद्विलक्षणत्वमपि सत्त्वविरुद्धं भवति, तथापि सत्त्वाभावमेवासच्छब्दो वदेत्, नातिरिक्तमिति भावः । **विनाशित्वमेव हि मिथ्यात्वमिति शङ्कायामिति**; तटस्थशङ्कायामित्यर्थः, मृषावादिनस्तादृश्याः शङ्काया अनुत्थानात्; तथा सति विवादपर्यवसानात् । **विनाशित्वस्वरूपं शोधयतीति; एकेनाकारेणैकस्मिन् कालेऽनुभूतस्य कालान्तरे परिणामविशेषेणान्यथोपलब्ध्या नास्तित्वोपपादनादिति** भाष्यस्य परिणामविशेषेणान्यथोपलब्धिर्हि विनाशित्वमित्यभिप्रायं मत्वा विनाशित्वस्वरूपं शोधयतीत्यवतारिका रचिता । केचित्तु **एकेनाकारेणेत्यादि** भाष्यमेवमवतारयन्ति—ननु "वस्त्वस्ति किं, मही घटत्वमित्यत्र विनाशित्वमेव ह्युपपादितं, न निष्प्रमाणकत्वं ज्ञानबाध्यत्वं वा" इत्युक्तम्; नात्र विनिगमकं पश्याम इत्याशङ्क्य "वस्त्वस्ति किम्" इत्यादिश्लोकद्वयेन कालान्तरेऽन्यथोपलब्धस्य कालान्तरेऽन्यथोपलम्भेनोपपद्यमानस्य नास्तित्वस्य प्रमाणसंबन्धानर्हत्वलक्षणतुच्छत्वरूपे प्रतिपन्नदेशकालोपाधौ निषेधप्रतियोगित्वलक्षणमिथ्यात्वरूपे वा पर्यवसानासंभवेन विनाशित्व एव

पर्यवसानस्योचितत्वमभिप्रयन्नाह— एकेनाकारेणैकस्मिन् काल इतीति । अस्मिन् पक्षे विनाशित्वमेव मिथ्यात्वमिति शङ्कायाः कथं विनाशित्वं तुच्छत्वमिथ्यात्वरूपावृत्तमिति शङ्कायाश्च तटस्थशङ्कात्वाश्रयणक्लेशो नास्तीति च वदन्ति ।

श्रुतप्रदीपिका

अथ परोक्तार्थपरत्वाननुगुणत्वमाह— **अत्रेति** । सामानाधिकरण्यं नास्त्यादिपदं चानुगुणमित्यत्राह— **अस्तिनास्तिशब्दाभिधेयमिति** । हेत्वन्तरं चाह— **अस्तीति** । आद्यश्चस्त्वर्थः । कथमसामर्थ्यमित्यत्राह— **नास्तीति** । सत्त्वाभावात्तुच्छत्वं मिथ्यात्वं वास्त्येवेत्यत्राह— **अत्रेति** । विनाशित्वमेव मिथ्यात्वमिति शङ्कायां शोधयति— **एकेनेत्यादिना** । **परिणामादिनेति ;** परिणामविशेषो विवक्षितः । वक्ष्यमाणवचनेऽपि तथा ; वादशब्दवत् । **कालेति ;** विरोधे बाधः, तदर्हत्वं हि मिथ्यात्वमित्यर्थः ।

श्रीभाष्यम्

एतदुक्तं भवति— ज्ञानस्वरूपमात्मवस्तु आदिमध्यपर्यन्तहीनं सततैकस्वरूपमिति स्वत एव सदास्तिशब्दवाच्यम् । अचेतनं तु क्षेत्रज्ञभोग्यभूतं तत्कर्मानुगुणपरिणामि विनाशीति सर्वदा नास्त्यर्थगर्भमिति नास्त्यसत्यशब्दाभिधेयमिति । यथोक्तम्—

" यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै ।
परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥"
" अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ।
तत्तु नास्ति न संदेहो नाशिद्रव्योपपादितम् ॥"

इति । देशकालकर्मविशेषापेक्षयाऽस्तित्वनास्तित्वयोगिनि वस्तुनि केवलास्तिबुद्धिबोध्यत्वमपरमार्थ इत्युक्तम् । आत्मन एव केवलास्तिबुद्धिबोध्यत्वमिति स परमार्थ इत्युक्तम् । श्रोतुश्च मैत्रेयस्य—

" विष्ण्वाधारं यथा चैतत् त्रैलोक्यं समवस्थितम् ।
परमार्थश्च मे प्रोक्तो यथा ज्ञानं प्रधानतः ॥"

**इत्यनुभाषणाच्च । "ज्योतींषि विष्णुः" इत्यादिसामानाधिकरण्यस्यात्मशरीरभाव एव निबन्धनम् । चिदचिद्वस्तुनोश्चास्तिनास्तिशब्दप्रयोगनिबन्धनं ज्ञानस्याकर्मनिमित्तस्वाभाविकरूपत्वेन प्राधान्यम्, अचिद्वस्तुनश्च तत्कर्मनिमित्तपरिणामित्वेनाप्राधान्यमिति प्रतीयते ।**

**श्रुतप्रकाशिका**

परिणामित्वापरिणामित्वयोरर्थयोर्न हि नास्त्यस्त्यादिशब्दाः पारिभाषिकाः; तत्कथं तदभिधानप्रकारः ? परिणामास्पदस्यापि वस्तुनो नित्यत्वान्नास्तिशब्दाभिधेयत्वं चानुपपन्नमित्यत्राह—**एतदुक्तं भवतीति ;** सततैकरूपत्वमस्तिशब्दप्रवृत्तिनिमित्तम् । विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थः । घटावस्थायां पिण्डो नास्ति, कपालावस्थायां घटो नास्ति, चूर्णावस्थायां न कपालसत्तेति सदा नाशगर्भत्वम् । उत्तरावस्थाप्राप्तिर्हि पूर्वावस्थस्य विनाशः । तदवस्थस्य सैवोत्पत्तिः । तस्मान्नास्तिशब्दाभिधेयत्वमचिद्वस्तुनः । चिद्वस्तुनस्त्ववस्थान्तरापत्त्यवस्थान्तरप्रहाणाभावेनैकरूपत्वान्न विनाशगर्भत्वम् । अतस्तदस्तिशब्दवाच्यमेव । यत्सदास्त्येव तदस्तिशब्दवाच्यम् । "सिद्धे शब्दार्थसंबन्धे" इत्यत्र सिद्धशब्दवदवधारणगर्भोऽयं शब्दः । तत्र हि सिद्ध एवेति व्याख्यातम् 'अब्भक्षो वायुभक्षः' इत्यादि दृष्टान्तीकृत्य ; तथात्रापीत्यर्थः । अस्तिनास्तीतिशब्दानां प्रवृत्तिनिमित्तमिदमेवेत्यस्मिन्नर्थे प्रमाणमाह—**यथोक्तमिति ।** असदसत्यसत्सत्यादिशब्दानां मिथ्यात्वामिथ्यात्वयोः प्रसिद्धिस्वारस्यमस्तीति शङ्कायां मिथ्यागर्भत्वमपि दर्शयति—**देशेति । कर्मविशेषापेक्षयेति ;** पालनरञ्जनादिसद्भावासद्भावाभ्यां राजत्वपितृत्वादिरूपेणास्तित्वं नास्तित्वं च कर्मापेक्षम् । औपाधिकास्तित्वयोगिनि वस्तुनि स्वाभाविकास्तित्वयोगित्वबुद्धिविषयत्वं न परमार्थ इत्यर्थः । अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादचितो नास्त्यसत्यादिशब्दवाच्यत्वमित्युक्तम् । आत्मनः स्वाभाविकास्तित्वयोगात्तत्र तद्धीविषयत्वं परमार्थ इत्याह—**आत्मन एवेति ।** पदशो दशश्लोक्यामुक्तमर्थं श्रोतुरनुवादप्रकारेण द्रढयति—**श्रोतुश्चेति ।** प्रधानतः; "द्व्येकयोः" इतिवत् भावप्रधानो निर्देशः; प्राधान्येनेत्यर्थः । प्राधान्यम् ; उत्कर्षः । अनुभाषणश्लोकपूर्वार्धफलितमर्थमाह—**ज्योतींषीति ।** तदेकधार्यद्रव्यत्वं हि शरीरलक्षणम् । अतो "विष्ण्वाधारम्" इत्यनेनात्मशरीरभावः सिद्धः । उत्तरार्धफलितमर्थमाह—**चिदचिदिति ।** ज्ञानप्राधान्यं कण्ठो-

क्तम्; तेनाचिद्वस्तुनोऽप्राधान्यस्यार्थसिद्धत्वादाह—**अचिद्वस्तुनश्चेति**। प्राधान्याप्राधान्ये उत्कर्षापकर्षौ। तौ चापरिणामित्वपरिणामित्वलक्षणौ, नामिथ्यात्वमिथ्यात्वलक्षणौ। धर्मिणि सति हि प्राधान्याप्राधान्ये। प्रतीतिमात्रसिद्धं हि मिथ्या। अतो न तत्राप्राधान्यशब्दः स्वरस इत्यभिप्रायः।

### भावप्रकाशिका

**विनाशगर्भत्वं नास्तिशब्दप्रवृत्तिनिमित्तमित्यर्थ इति;** नश्वरत्वं नास्तिशब्दप्रवृत्तिनिमित्तमिति नास्त्यर्थत्वं नश्वरस्य। अतश्च **अचेतनं सर्वदा नास्त्यर्थगर्भमिति** भाष्यस्य सर्वदा नाशगर्भमित्यर्थ इति भावः। **स्वाभाविकास्तित्वयोगित्वबुद्धिविषयमिति;** स्वाभाविकास्तित्वमपरमार्थ इत्यर्थः। अपरमार्थभूतस्वाभाविकास्तित्वयोगात् अचिद्वस्तुनोऽप्यपरमार्थत्वमिति भावः। न चापरमार्थस्वाभाविकसत्यत्वस्याचिद्रूपेऽभावात् कथं तद्योगेनाचेतनेऽपरमार्थत्वव्यवहार इति वाच्यम्, अचेतनमसत्सत्यत्वकमिति प्रतीत्या कस्यचित् संबन्धस्य बहुव्रीह्यर्थस्य वक्तव्यत्वात्। **अपरमार्थत्वगर्भास्त्यर्थोपेतत्वादिति;** अपरमार्थस्वाभाविकसत्यत्वोपेतत्वादित्यर्थः।

### श्रुतप्रदीपिका

नास्त्यादिशब्दाः किं परिणामिनि पारिभाषिकाः? परिणामिनोऽपि स्वरूपेण नित्यत्वान्न नास्तीतिशब्दार्थतेत्यत्राह—**एतदुक्तमिति**। विनाशरूपावस्थागर्भत्वं निमित्तमित्यर्थः। अस्तिशब्दोऽवधारणगर्भः, 'अब्भक्षः' इतिवत्। अत्र मानमाह—**यथेति**। असत्यादिपदानां मिथ्यात्वे प्रसिद्धत्वमिति शङ्कायां मिथ्यागर्भत्वमपि दर्शयति—**देशेति**। पचनाद्यपेक्षपाचकत्वादिकं कर्मापेक्षम्। औपाधिकास्तित्वयोगिनि स्वतोऽस्तिताधीविषयत्वमपरमार्थः। स्वतोऽस्तित्वयोगिनि तु तद्धीविषयत्वं परमार्थ इत्यर्थः। अनुवादेनापि द्रढयति—**श्रोतुरिति**। अनुवादफलितमाह—**ज्योतींषीति**। नियमेन धार्यद्रव्यं हि शरीरम्। प्राधान्याप्राधान्ये चाविकारित्वविकारित्वे।

### श्रीभाष्यम्

निवर्तकानुपपत्तिः-६ **यदुक्तं निर्विशेषब्रह्मविज्ञानादेवाविद्यानिवृत्तिं वदन्ति श्रुतय इति; तदसत्, "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्। तमेवं विद्वानमृत इह भवति। नान्यः पन्था**

**विद्यतेऽयनाय" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "न तस्येशे कश्चन तस्य नाम महद्यशः" "य एनं विदुरमृतास्ते भवन्ति" इत्याद्यनेकवाक्यविरोधात्। ब्रह्मणः सविशेषत्वादेव सर्वाण्यपि वाक्यानि सविशेषज्ञानादेव मोक्षं वदन्ति। शोधकवाक्यान्यपि सविशेषमेव ब्रह्म प्रतिपादयन्तीत्युक्तम्।**

### श्रुतप्रकाशिका

अथ निर्विशेषब्रह्मात्मैक्यज्ञानस्य निवर्तकत्वपरत्वेन परोक्तश्रुतीनामतदर्थत्वं वक्तुं परोक्तमनुवदति—**यदुक्तमित्यादिना**। परिहरति—**तदसदिति**। तत्र ज्ञानस्य निर्विशेषवस्तुविषयत्वं तेनात्मैक्यविषयत्वं च परिहरिष्यन् प्रथमं निर्विशेषवस्तुविषयत्वं व्युद्सितुमुपादत्ते—**वेदाहमिति**। अनेन विग्रहादिविशिष्टविषयज्ञानमेवोपायः, नान्य इत्युक्तम्। एतत्समानार्थत्वादाह—**सर्वे निमेषा इति**। तत्र हि "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति प्रतीकोपादानं कृतम्। अनेन विशेषणेन विद्युच्छब्दश्च व्याख्यातो भवति। विद्युतः; विद्युद्वर्णादित्यर्थः, "आदित्यवर्णम्" इत्यनेनैकार्थ्यात्। "न-तस्येशे" इत्यनेनोपायभूतं ज्ञानान्तरं नास्तीति फलितम्, अधिकज्ञेयान्तराभावात्। उक्ताकारविशिष्टपुरुषवेदनस्योपायत्वं दर्शयति—**य एनं विदुरिति**। एषामन्येषामप्यादि-शब्दगृहीतानां च वाक्यानामुपादानमनेकवाक्यविरोधप्रदर्शनाय। ननु "सदेव, एकमेव" इत्यादिकारणवाक्येषु निर्विशेषस्य प्रतिपन्नत्वात्तज्ज्ञानमेव साक्षान्मोक्षोपाय इति सगुणज्ञानस्यो-पायत्वं तद्व्यवधानेन स्यात्; यद्वा सगुणज्ञानोपायत्वपरवाक्येऽपि न सगुणत्वे तात्पर्यम्; वस्तुमात्रमेव लक्ष्यत इति चेत्तत्राह—**ब्रह्मण इति**। सद्विद्यादिष्वपि सगुणविषयत्वोप-पादनाद्यथावस्थितस्वरूपविषयज्ञानस्यैव मोक्षोपायत्वात् तान्यपि सविशेषज्ञानोपायत्वपरा-णीत्यर्थः। तर्हि शोधकवाक्यैर्विरोध इत्यत्राह—**शोधकेति**।

### भावप्रकाशिका

**तेनात्मैक्यविषयत्वं चेति;** तेन; निर्विशेषवस्तुनेत्यर्थः। यद्वा निर्विशेष-वस्तुविषयत्वेनेत्यर्थः। **तत्र हि "अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ" इति प्रतीकोपादानं कृतमिति;** ततश्च "अद्भ्यः संभूतः" इत्युत्तरानुवाकपठितेन "वेदाह-

मेतं पुरुषं महान्तम् , आदित्यवर्णम् '' इत्यनेन '' सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि'' इत्यस्य '' अम्भस्यपारे '' इत्यनुवाकगतस्यैकवाक्यत्वं व्यक्तमिति भावः ।

### श्रुतप्रदीपिका

अथ निर्विशेषब्रह्मात्मैक्यधियो निवर्तकत्वे परोक्तश्रुतीनामतदर्थत्वमाह— **यदुक्तमित्यादिना** । तद्विपरीतार्थपरश्रुतिं दर्शयति— **वेदेति** । **न तस्येति ;** अधिकज्ञेयाभावात् तत्त्वान्तरज्ञानोपायत्वव्युदासः फलितः । कारणवाक्यैर्निर्विशेषत्वोक्तेस्तद्धीरुपाय इत्यत्राह— **ब्रह्मण इति ;** सद्विद्यादिष्वपि सगुणविषयत्वोपपादनादित्यर्थः । शोधकान्याशङ्क्याह— **शोधकेति** ।

### नयप्रकाशिका

'' सत्यं ज्ञानमनन्तं ब्रह्म'' इत्यादिशोधकवाक्येष्वपि सगुणधीः । न च सामानाधिकरण्यस्यैकार्थपरत्वाद्विशिष्टार्थपरत्वे तद्विरोध इति वाच्यम्, सामानाधिकरण्यस्यानेकविशेषणविशिष्टैकार्थाभिधानपरत्वेनैव व्युत्पत्तेः । न हि केवलमेकार्थवृत्तित्वमात्रं सामानाधिकरण्यम् । तथात्वे च तत्स्वरूपस्यैकपदमात्रेण सिद्धत्वात् पदान्तरवैयर्थ्यं सामानाधिकरण्यलक्षणहानिश्च । ''भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकारण्यम्''इति हि तल्लक्षणम् । केवलैकार्थपरत्वे तु प्रवृत्तिनिमित्तभेदाभावः । न चैकार्थपरत्वेऽपि मिथ्यात्वजडत्वादिव्यावृत्तिभेदेनापर्यायत्वं, न सामानाधिकरण्यलक्षणहानिश्चेति वाच्यम् ; तत्परित्यागेन व्यावृत्तस्वरूपपरत्वेन लक्षणाप्रसङ्गात् ; मुखान्तरेण वस्तुनो विशिष्टत्वाङ्गीकाराच्च, तत्तद्वस्तुप्रत्यनीकत्वरूपपरत्वाङ्गीकारात् । न च स्वरूपमात्रस्य प्रत्यनीकत्वं, तथात्वे एकपदमात्रेण स्वरूपस्य समर्पितत्वात् तत्स्वरूपेण सकलेतरव्यावृत्तिसिद्धेः पदान्तरवैयर्थ्यात् । न च '' यतो वा इमानि '' '' एकमेवाद्वितीयम् '' इत्यादिवाक्यैः सजातीयादिभेदव्यावृत्तत्वेन ब्रह्मण उपलक्षितत्वात्तदविरोधेन सामानाधिकरण्यार्थो युक्त इति स्वरूपमात्रैक्याहानादेवापर्यायता वाच्येति सत्यादिपदैर्निर्गुणमेव लक्ष्यत इति वाच्यम्, '' एकमेवाद्वितीयम् '' इत्यादिवाक्यानां सजातीयादिभेदनिरासकत्वाभावात् । प्रत्युत '' सदेव सोम्येदमग्र आसीत् '' इत्यादौ जगदुपादानतया प्रतिपन्नस्य ब्रह्मणः स्वव्यतिरिक्ताधिष्ठात्रन्तरनिवारणेन तस्यैवाधिष्ठातृत्वसाधने विचित्रशक्तियोगित्वस्यैव प्रसाधितत्वात् सगुणपरत्वमेव । एकस्यैवोपादानत्वस्य मृत्कुण्डलादिष्वदर्शनात् शक्तिवैचित्र्यप्रतीतिः । ''सदेव''इत्यादौ '' तदैक्षत '' इत्यादौ च

तस्यैवाधिष्ठातृत्वं प्रतीयते । अतः 'अद्वितीयम्' इति पदस्याधिष्ठात्रन्तरनिषेधपरत्वमेव, उपादानकारणत्वेऽभिहिते निमित्तकारणस्यैव बुद्धिस्थत्वात्। अद्वितीयपदस्य ब्रह्मव्यतिरिक्तसर्वनिषेधपरत्वे नित्यत्वसर्वगतत्वादेः स्वाभिमतस्यापि निषेधप्रसङ्गः । न च नित्यत्वादि ब्रह्मस्वरूपमेवेति वाच्यम्, सर्वकालसंबन्धिस्वरूपत्वान्नित्यत्वस्य सर्वदेशसंबन्धिस्वरूपत्वात् सर्वगतत्वस्य । एतेन सर्वशारवान्यायेनापि न निर्गुणत्वसिद्धिरित्युक्तं भवति । किंच ब्रह्मणः कारणत्वे सर्वज्ञत्वादेरपेक्षितत्वात् अत्र क्वापि तदश्रवणेऽप्यन्यत्र कारणवाक्येषु श्रूयमाणसर्वज्ञत्वादेरुपसंहारः फलितः । तन्न्यायादेव वाक्यान्तरादिभिरपि न निर्विशेषप्रतीतिरिति पूर्वमेवोक्तम् । अतोऽनेकगुणविशिष्टैकार्थाभिधानपरत्वमेव सामानाधिकरण्यस्य; ततोऽभीष्टव्यावृत्तिसिद्धिश्च; पदानां मुख्यार्थता च । न च "ब्रह्मविदाप्नोति" इत्युपक्रमे श्रूयमाणब्रह्मशब्दार्थमात्रस्य बुद्धिस्थत्वात् तत्समर्पणेनार्थवत्त्वे "सत्यम्" इत्यादिवाक्यस्य नार्थान्तरकल्पना युक्तेति वाच्यम्, ब्रह्मेति शब्दार्थमात्रस्य तच्छब्दादेव ज्ञातत्वात्। न ह्यन्यशब्दार्थस्य शब्दान्तरेण ज्ञानम्। शब्दान्तरेणापि तदर्थमात्रस्य ज्ञाप्यमानत्वात् पदान्तरवैयर्थ्यं च । अथेतरव्यावृत्तत्वेन विशेषतो ज्ञातुं बुभुत्सा, तर्हि ब्रह्मणो विशेषाङ्गीकारः । विशेषणैरेव हि व्यावृत्तिः, न तु स्वरूपमात्रेण । विशेषलक्षणैरपि व्यावृत्तत्वधीः काकादिभिर्गृहादेरिवेति चेत्, तर्हि ब्रह्मणः सत्यज्ञानादिस्वरूपत्वं न स्यात् । ब्रह्म च ज्ञानादिस्वरूपमिष्टम् । सत्यादिवाक्यानां च ब्रह्मस्वरूपशोधकता चेष्टा। सत्यादेर्जगत्स्रष्टृत्वादिवन्नोपलक्षणता चेष्टा। सत्यादिपदानां स्वरूपमात्रार्पणपरत्वे च पदान्तरवैयर्थ्यं पूर्वमेवोक्तम् । न च गुणसद्भावे वस्तुपरिच्छेदात्परमात्मनोऽनन्तत्वहानिरिति वाच्यम्; तथात्वे प्रमाणाभावात्, वस्तुपरिच्छेदस्य परिमितस्वरूपत्वात्, वस्त्वन्तरसद्भावेऽपि परमात्मनोऽपरिमितत्वाच्च। परमात्मनोऽत्यन्तसूक्ष्मत्वेन सर्वव्यापिस्वभावत्वात्; सूक्ष्मत्वं च "अणोरणीयान्" इत्यादिश्रुतेः। व्याप्तिश्च "अन्तर्बहिश्च तत्सर्वम्" इत्यादिश्रुतेः। व्याप्यसत्त्वाभावात्तच्छ्रुत्यानर्थक्यम् । अनन्तपदं तु देशादिभिरपरिच्छेद्यत्वं चाह। ब्रह्मणः स्वरूपं च सगुणमेव। अनन्तपदात् तद्गुणानामप्यानन्त्यं सिद्धम्। एवं च "तवानन्तगुणस्य" इत्यादिप्रमाणानामप्यबाधः । किंचानन्तपदस्य दुःखित्वभ्रान्तिव्यावृत्तिपरत्वं न शब्दात्तावत् प्रतीयते । अथानन्तत्वं नामापरिच्छिन्नत्वम्; तत्प्रतिभटत्वं परिच्छिन्नत्वम्; तस्यैव दुःखित्वमिति चेत्—न; विकल्पासहत्वात्। परिच्छिन्नत्वं नाम किं

वस्त्वन्तरसद्भावः ? वस्तुपरिमितत्वं वा ? न तावदाद्यः, वस्त्वन्तरसद्भावे दुःखित्वे प्रमाणाभावात्। नापि द्वितीयः, अणुपरिमितस्यापि जीवस्य मुक्तदशायामुत्तरकाले दुःखित्वाभावश्रवणात्। संसारदशायामपि न परिमितत्वप्रयुक्तं दुःखित्वं, किंतु कर्मसंबन्धप्रयुक्तम्। अतः सत्यादिगुणविशिष्टैकार्थपरत्वमेव सत्यमित्यादिवाक्यस्य। न च गुणवत्त्वे विज्ञानघन इत्याद्येकरसत्वप्रतिपादनपरश्रुतिविरोध इति वाच्यम्, श्रुतेर्जीवपरत्वात् एकरसत्वप्रतिपादनपरत्वाभावाच्च। तच्च त्रिपाद्यामुक्तम्। तत्रैव विज्ञान इत्यादिनैकरसत्वप्रतीतेश्च। परमात्मपरत्वेऽप्यनेकरसता। तत एवाविद्यापरिणतितिरोधानमात्रस्यैव शास्त्रवेद्यत्वमित्युक्तिरपि व्यर्था, श्रुतिस्मृत्यादिविरोधात्। वेदान्तानां ब्रह्मैकविषयत्वं हि प्रतीयते; 'ब्रह्मजिज्ञासा' इति हि सूत्रम्। अन्यथात्व विद्याजिज्ञासेति सूत्रं स्यात्। अथ तद्व्यावृत्तिमुखेन ब्रह्मपरत्वं श्रुत्यादेरिति चेत्—न; तत्र तथात्वाप्रतीतेः। न च तात्पर्यात् तथात्वकल्पनमिति वाच्यम्, तत्रापि प्रमाणाभावात्। पूर्वापरश्रुतिवाक्यानुरूपं हि तात्पर्यकल्पनम्। तत्कल्पनं च शब्दार्थानुसारात्। शब्दार्थश्च व्युत्पत्त्यनुसारात्। व्युत्पत्तिश्च लोकतः। लोके च शब्दानामतद्व्यावृत्तितो न व्युत्पत्तिः। वैदिकाश्च शब्दा लौकिका एव, लोकवेदाधिकरणन्यायात्। किं वैदिकाः शब्दा अर्थाश्च लौकिकशब्दार्थेभ्योऽन्ये? उत त एवेति संशयः। "अथ शब्दानुशासनम्, केषां शब्दानाम्? लौकिकानां वैदिकानां च" इति शाब्दैर्भेदेन व्यपदिष्टत्वात्, देवासः देवा इति रूपभेदात् "उत्ताना ह वै देवगवा हव्यं वहन्ति हिरण्यवर्णो वनस्पतिः"इत्यर्थभेददर्शनाच्च तत्र व्युत्पत्त्यभावाद्वेदस्याप्रामाण्यमिति पूर्वः पक्षः। शब्दार्थयोः प्रत्यभिज्ञायमानत्वादनुशासनार्थतया व्यपदेशभेदोपपत्तेः एकदेशविकारेऽप्यन्यत्वायोगात् "हिरण्यवर्णः" इत्यादेरर्थवादत्वाच्चानन्यत्वे व्युत्पत्तिसद्भावाद्वेदस्य प्रामाण्यमिति राद्धान्त इति। अतो लोकव्युत्पत्त्यनुसारादेव वेदस्यार्थो वर्णनीयः। यच्च ब्रह्मणः स्वयंप्रकाशस्य स्वगुणप्रकाशकत्वे गुणानां च नित्यत्वेऽन्यसंवेद्यत्वासिद्धिरित्युक्तम्; तच्चासत्—स्वयंप्रकाशस्याप्यन्यसंवेद्यत्वे विरोधाभावात्, स्वयंप्रकाशस्य पुरुषान्तरज्ञानस्यातीतस्वज्ञानस्यापि ज्ञानान्तरवेद्यत्वदर्शनाच्च। नित्यानां च न संवेद्यत्वमिति नियमाभावाच्च, नित्यपरमात्मजीवादेः श्रुत्यादिषु वेद्यत्वदर्शनात्। अतः स्वयंप्रकाशपरमात्मजीवस्वरूपधर्मभूतज्ञानानां स्वयंप्रकाशत्वेऽपि प्रमाणान्तरवेद्यतापि सिद्धा। न च सामानाधिकरण्यतात्पर्यानुरोधात्र लक्षणादोष इति वाच्यम्, स्वरूपमात्रतात्पर्याभावस्योक्तत्वात्। विशिष्टवस्त्वैक्यतात्पर्यं त्विष्टमेव। न च लक्षणाया अस्वीकारे आनन्दादिपदानन्वय इति वाच्यम्, अन्वयविरोधा-

भावात् । "सत्यं ज्ञानम्" इत्यादिपदानां सत्यादिगुणिब्रह्मपरत्वे "आनन्दो ब्रह्म" इत्यादिवाक्यानां ब्रह्मणः स्वरूपतो गुणतश्च सुखस्वरूपत्वप्रतिपादनपरत्वे को विरोधः? श्रुतिविरोधाभावस्तु पूर्वमेवोक्तः। युक्तिविरोधाभावोऽप्युक्तो वक्ष्यते च। वस्तुतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् संबन्धाभावाच्च न लक्षणोपपत्तिश्च । न च ब्रह्मणः पारमार्थिकवस्तुसंबन्धाभावेऽप्यामोक्षात् प्रातिभासिकवस्तुसम्बन्धानिराकरणाल्लक्षणोपपत्तिरिति वाच्यम्, वस्तुतस्तस्यासत्त्वात् सम्बन्धाभावाच्च लक्षणानुपपत्तेः । तच्चादर्शनात् । न च मिथ्यारजतेन शुक्तिर्लक्ष्यत इति वाच्यम्, शुक्तिकारजतस्य मिथ्यात्वाभावात् । तच्च वक्ष्यते । शुक्तिकायां रजतेन शुक्तेरलक्ष्यमाणत्वाच्च । लक्षकत्वे च रजतस्य पारमार्थ्यमेव, शाखाचन्द्रादौ परमार्थानामेव लक्षकत्वदर्शनात्, शुक्तिकारजतादेर्विवादाध्यासितत्वेनादृष्टान्तत्वाच्च। लोके प्रमाणान्तरसिद्धस्यैव वस्तुनो लक्ष्यत्वदर्शनात् प्रमाणान्तरासिद्धस्य ब्रह्मणो लक्ष्यत्वं चानुपपन्नम् । न च तस्य स्वयंप्रकाशत्वेन प्रमाणान्तरानपेक्षत्वात् प्रतिभाससमानत्वमात्रस्यैव लक्षणायां प्रयोजकत्वमिति वाच्यम्, तादृक्प्रयोजकक्लृप्तेर्नियामकहेत्वभावात्, लोकवेदयोः प्रमाणान्तरसिद्धस्यैव लक्ष्यत्वदर्शनेन प्रयोजकत्वेन स्वीकार्यत्वाच्च । सर्वपदानां लक्षणा चानुपपन्ना; अन्विताभिधानानुपपत्तिनिबन्धनत्वात् तस्याः ; कस्यचित्पदस्यापि मुख्यार्थाभावे लक्षणाक्षेपकशब्दाभावात् ।

" वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः ।
तत्सम्बन्धिवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥ "

इति हि नीतिविदुक्तिः। न च—वाक्यप्रामाण्यानुपपत्तेरेव लक्षणाप्रयोजकत्वम् ; यत्र तु तदारोपनिवृत्तिमात्रमुखेनार्थबोधकत्वं तत्र निवृत्तिमुखेनैव प्रामाण्यात् सकलपदलक्षणाव्यतिरेकेण तदसिद्धिरिति वाच्यम् ; श्रुतिवाक्यानां तदारोपनिवृत्त्यवबोधकत्वासिद्धेरितरेतराश्रयप्रसङ्गाच्च—सर्वपदानां लक्षणासिद्धेः श्रुतीनां तदारोपनिवृत्तिपरत्वसिद्धिः, एतत्सिद्धौ तत्सिद्धिरिति। अतो वाक्ये एकस्यापि पदस्य वाचकत्वाभावे लक्षणैवानुपपन्ना । 'विषं भुङ्क्ष्व' इत्यादिष्वपि न सर्वपदलक्षणा, विषपदेन निषेधमात्रलक्षणया सर्वानुपपत्तेः शान्तत्वात् । प्रत्यवायफलत्वेऽपि विषपदेनापि प्रत्यवायो लक्ष्यते, विषस्यापि क्लेशकरत्वात्। अतो निषेधलक्षणायां नानुपपत्तिः।

### श्रीभाष्यम्

**"तत्त्वमसि" इत्यादिवाक्येषु सामानाधिकरण्यं न निर्विशेषवस्त्वैक्यपरम्, तत्त्वंपदयोः सविशेषब्रह्माभिधायित्वात्। तत्पदं हि**

सर्वज्ञं सत्यसंकल्पं जगत्कारणं ब्रह्म परामृशति, "तदैक्षत बहु स्याम्" इत्यादिषु तस्यैव प्रकृतत्वात्। तत्समानाधिकरणं त्वंपदं चाचिद्विशिष्टजीवशरीरकं ब्रह्म प्रतिपादयति; प्रकारद्वयावस्थितैकवस्तुपरत्वात् सामानाधिकरण्यस्य। प्रकारद्वयपरित्यागे प्रवृत्तिनिमित्तभेदासंभवेन सामानाधिकरण्यमेव परित्यक्तं स्यात्। द्वयोः पदयोर्लक्षणा च। 'सोऽयं देवदत्तः' इत्यत्रापि न लक्षणा, भूतवर्तमानकालसंबन्धितयैक्यप्रतीत्यविरोधात्। देशभेदविरोधश्च कालभेदेन परिहृतः। "तदैक्षत बहु स्याम्" इत्युपक्रमविरोधश्च। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च न घटते। ज्ञानस्वरूपस्य निरस्तनिखिलदोषस्य सर्वज्ञस्य समस्तकल्याणगुणात्मकस्याज्ञानं तत्कार्यानन्तापुरुषार्थाश्रयत्वं च न संभवति। बाधार्थत्वे च सामानाधिकरण्यस्य त्वंतत्पदयोरधिष्ठानलक्षणा निवृत्तिलक्षणा चेति लक्षणादयस्त एव दोषाः।

### श्रुतप्रकाशिका

एवं ज्ञानस्य निर्विशेषविषयत्वं तद्विरुद्धवचनोदाहरणेन प्रतिक्षिप्तम्। अथ तत्त्वमस्यादिसामानाधिकरण्यान्यथानुपपत्त्या निर्विशेषज्ञानमेवोपाय इति शङ्कायां तस्य जीवपरैक्यविषयत्वं व्युदस्यति—**तत्त्वमस्यादीति**। शोधकवाक्येषु सामानाधिकरण्यमतद्व्यावृत्तिमुखेन वस्त्वैक्यपरम्। "तत्त्वमसि" इत्यादिषु जीवब्रह्मणोः सामानाधिकरण्यमन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्। अचिद्ब्रह्मणोऽस्तु "सर्वं खल्विदं ब्रह्म" इत्यादावतात्त्विकरूपारोपणेन सामानाधिकरण्यम्। "ज्योतींषि विष्णुः" इत्यादौ बाधार्थमिति चतुर्धा हि परैः सामानाधिकरण्यं तत्र तत्राभ्युपेतम्। तत्र "तत्त्वमसि" इत्यादिवाक्येऽन्वयमुखेन वस्तुमात्रपरत्वं गत्यभावे बाधार्थपरत्वं चाशङ्क्य निराक्रियते। तत्र प्रथमं वस्त्वैक्यपरत्वं दूषयितुमाह—**न निर्विशेषवस्त्वैक्यपरमिति**। कुत इत्यत्राह—**तत्त्वमिति**। तच्च कथमित्यत्राह—**तत्पदं हीति**। हिर्हेतौ। सर्वज्ञत्वादिगुणकप्रतिपादनं कथमित्यत्राह—**तदैक्षतेति**। तच्छब्दस्य प्रकृतसर्वाकारविशिष्टवस्तुपरामर्शित्वं व्युत्पत्तिसिद्धम्; यथा—'शुक्ला शोभनाक्षी मदीया

पूर्णश्रृङ्गा घटोध्नी गौः, तामानय' इति। ननु 'गौस्तिष्ठति, तामानय' इत्यादावानयनादिक्रियानर्हस्थित्यादिविशेषणविधुरवस्तुपरामर्शित्वं दृश्यते; तच्च मुख्यम्। नैवम्; आनयनसमकालान्वयायोग्येनापि स्थित्यादिविशेषणेन पूर्वकालवैशिष्ट्यस्य विवक्षितत्वात्। अन्यथा धावतोऽपि गोपिण्डस्यानयनप्रसङ्गः। विशेषणं विशेष्यवस्तुनि यथान्वयार्हं तथान्वितस्य तस्यापरित्यागो हि विवक्षितत्वम्। प्रकृतसर्वविशेषणेष्वेकस्यापि परित्यागे प्रकृतत्वमेव हीयेत, 'शुक्ला शोभनाक्षी मदीया पूर्णश्रृङ्गा घटोध्नी गौः, तामानय' इत्युक्ते शौक्ल्येतरसमस्तविशेषणान्वितव्यक्त्यानयनेऽपि प्रकृतव्यक्तेरानीतत्वाभावात्। अतः सविशेषे प्रकृते निर्विशेषस्य प्रकृतत्वं दूरोत्सारितम्। न च प्रकृतसर्वविशेषणपरित्यागेऽपि धर्म्यैक्येन प्रकृतत्वसिद्धिः, सर्वाकारप्रहाणे प्रतिसंधानानर्हत्वात्। न हि 'अपवरके घटोऽस्ति, तमानय' इत्युक्ते घटत्वाविवक्षायां मृन्मात्रस्य सिद्धिः प्रकृतत्वसिद्धिः। कथमेकाकारपरित्यागेऽप्यसंभवत् प्रकृतत्वं सर्वाकारपरित्यागे संभवति? अङ्गुलीयकत्वप्रहाणेऽपि कनकं प्रतिसंधीयत इति चेत्; सत्यं प्रत्यक्षेण तत्। शब्दस्तु प्रकृताकारप्रहाणे प्रतिसंधानमेव जनयितु न शक्नोति। अत एव हि 'यदङ्गुलीयकं तदानय' इत्युक्ते कनकमात्रं नानीयते। अतः प्रकृत सर्वाकारप्रहाणे प्रतिसंधानानर्हस्य वस्तुनः प्रकृतत्वमेव नास्तीति तच्छब्दस्य वस्तुमात्रपरत्वं लाक्षणिकं स्यात्। तत्पदोपस्थापितसार्वज्ञ्यादीनां त्वंपदोपस्थापिताज्ञत्वादीनां च विरोधान्निर्विशेषपरत्वमिति चेत्, तत्राह—**तत्समानाधिकरणमिति।** 'घटस्य शुक्लः' इत्यादिव्यधिकरणवाक्येषु धर्मवाचिपदस्य धर्मिपर्यन्तत्वाभावात्तद्व्यावृत्त्यर्थं **तत्समानाधिकरणमित्युक्तम्। अचिद्विशिष्टजीवशरीरकमिति;** अज्ञत्वादिगुणानां सर्वज्ञत्वादिगुणके परमात्मनि विरोधः सद्वारकतया परिहृत इत्यर्थः। त्वंपदप्रवृत्तिनिमित्तसंबोधनीयार्थस्वरूपाभिमुख्यविशेषप्रयोजकोपलक्षणाभिप्रायेण **अचिद्विशिष्टजीवे**त्युक्तम्। समानाधिकरणत्वे सति कथं त्वंपदं जीवविशिष्टब्रह्मपरमित्यत्राह—**प्रकारद्वयेति। प्रकारद्वयावस्थितम्;** प्रकारद्वयविशिष्टम्। प्रकृततत्त्वंपदप्रवृत्तिनिमित्तपरः प्रकारद्वयशब्दो न्यूनत्वनिवर्तकः; न तु प्रकारत्रित्वादिव्यवच्छेदपरः। तदुपपादयति—**प्रकारद्वयपरित्याग इति।** दूषणान्तरमाह—**द्वयोरिति;** अविरोधेन मुख्यतया निर्वाहे संभवत्येकस्यापि पदस्य लक्षणा न युक्ता। विरोधे सत्यप्येकपदलक्षणयैवाविरोधः सिध्यतीति पदद्वयलक्षणाऽनुपपन्नेत्यर्थः। ननु पदद्वयलक्षणा न दूषणम्, 'सोऽयं देवदत्तः' इत्यादिषु दृष्टत्वात्; तत्र हि देशकाल-

विशिष्टाकारे देशकालान्तरान्वयविरोधाल्लाक्षणिकमेव पदद्वयम्; तत्राह—**सोऽयमिति**। किमेकस्य देशद्वयसंबन्धे विरोधः? उत कालद्वयसंबन्धे? इति विकल्पमभिप्रेत्याह—**भूतेति**। न हि विशिष्टाकारे विशेषणान्तरान्वयः। अपि तु विशेष्यमात्रे। अतः कालद्वयसंबन्धो न विरुद्धः। यदि विरुद्धः, तर्हि बौद्धोक्तं क्षणिकत्वमेवापद्येत; अनेककालसाध्यधर्मविधानं फलप्राप्तिश्च नोपपद्येयातामिति भावः। **देशभेदेति**; यद्येकस्य देशद्वयसंबन्धविरोधस्तर्हि विष्णुक्रमणतीर्थस्नानादिविधिर्नोपपद्यते; प्रत्यभिज्ञाविरोधश्चेति भावः। यौगपद्यं कथं संभवतीति चेत्; उच्यते—देशद्वयसंबन्धस्य कालद्वयसंबन्धस्य वा न युगपद्भावः। तत्प्रतिपत्तेरेव हि यौगपद्यम्। प्रतिपत्तिस्तु देशद्वयकालद्वयसंबन्धं क्रमभाविनमेव दर्शयति। अतो न विरोधः। अन्यथा अतीतानागतविषयज्ञानेष्वतीतानागतविषययोर्वर्तमानत्वं ज्ञानस्यातीतानागतत्वं वा प्रसज्येतेति। दूषणान्तरमप्याह—**तदैक्षतेति**; उपक्रमाधिकरणे हि उपक्रमप्राबल्यमुक्तमिति भावः। उपक्रमोपक्रमे ऐक्यस्य प्रतिपन्नत्वान्नोपक्रमविरोधः; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञावाक्यं हि "तदैक्षत; बहु स्याम्" इति वाक्यात् पूर्वमित्यत्राह—**एकविज्ञानेनेति**; तत्र निमित्तत्वोपादानत्वतदनुगुणसार्वज्ञ्यसर्वशक्त्यादिगुणसिद्धेरित्यर्थः। विशिष्टमेव कारणं, तदेव स्थूलावस्थं कार्यमिति द्रव्यान्तरत्वाभावात् कारणज्ञानेन कार्यज्ञानमुपपद्यते। मृषावादिनस्तु कारणज्ञाने कार्यस्य विषयतयाऽन्तर्भावोऽभिमतश्चेद्विरोधः, सत्यविषयज्ञाने मिथ्यार्थस्य विषयत्वायोगात्। मिथ्यात्वेनेत्यध्याहारश्च स्यात्। अनन्तर्भावे त्वज्ञाते ज्ञातत्वव्यवहारो न मुख्यः स्यात्। अतोऽस्मत्पक्ष एव प्रतिज्ञावाक्यं स्वरसम्। श्रुत्यन्तरविरोधमाह—**ज्ञानस्वरूपस्येति**। ज्ञानस्वरूपस्य सर्वज्ञस्येत्यनेन धर्मिधर्मभूतज्ञाने विवक्षिते। सर्वज्ञस्याज्ञत्वं निरस्तनिखिलदोषस्य समस्तकल्याणगुणात्मकस्यानन्तापुरुषार्थाश्रयत्वमिति विरोधः। **ज्ञानस्वरूपस्ये**त्यनेन तिरोधानानुपपत्तिश्च सूचिता। इत्थं सामानाधिकरण्यस्य निर्विशेषवस्त्वैक्यपरत्वं दूषितम्। अथ बाधार्थत्वं दूषयति—**बाधार्थत्वं चेति**। 'रज्जुः सर्पः' इत्येवंरूपबाधार्थं सामानाधिकरण्यमेव नास्ति, सामानाधिकरण्यस्यैकस्मिन् विशेष्ये प्रकारद्वयोपस्थापकतया बाधार्थत्वविरोधात्। अतः पदद्वयमुख्यार्थत्वेऽभिमते बाधार्थं सामानाधिकरण्यं न सिध्येत्। सर्पशब्देन नञर्थं लक्षयित्वा 'असर्पो रज्जुः' इति निर्वाहं दृष्टान्तवाक्यस्याशङ्क्य दार्ष्टान्तिकवाक्यस्य ततोऽप्यधिकं दूषणमाह—**बाधार्थत्वे चेति**। **त्वंतत्पदयो**रित्यत्र न क्रमविवक्षा। तत्पदमधिष्ठानमात्रं लक्षयति।

त्वंपदं जीवभावनिवृत्तिं लक्षयति । यद्वा त्वंपदेनाधिष्ठानलक्षणा । तत्पदेन निवृत्तिलक्षणा । आदिशब्देन सामानाधिकरण्यलक्षणहानिः, उपक्रमविरोधः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुपपत्तिः, श्रुत्यन्तरविरोधश्चेति दूषणानि विवक्षितानि ।

### भावप्रकाशिका

**चतुर्धा हि परैः सामानाधिकरण्यमिति;** "व्याप्तेश्च समञ्जसम्" इत्यत्र शांकरभाष्ये सामानाधिकरण्ये अध्यासापवादैकत्वविशेषणानीति चत्वारः पक्षा उपन्यस्ताः । तत्राध्यासो नाम—द्वयोर्वस्तुनोरनिवर्तितायामेवान्यतरबुद्धौ अन्यतरबुद्धिरध्यस्यते; यथा नाम्नि ब्रह्मत्वबुद्धावध्यस्तायामप्यनुवर्तत एव नामबुद्धिः, न ब्रह्मबुद्ध्या निवर्तते ; यथा प्रतिमादिषु विष्ण्वादिबुद्धिरध्यासः । अपवादो नाम-यत्र कस्मिंश्चिद्वस्तुनि पूर्वनिविष्टायां निश्चितायां मिथ्यात्वबुद्धौ पश्चादुपजायमाना यथार्थबुद्धिः पूर्वनिविष्टाया मिथ्यात्वबुद्धेर्निवर्तिका भवति; यथा देहेन्द्रियसंघाते आत्मबुद्धिरात्मन्येवात्मबुद्ध्या पश्चाद्भाविन्या तत्त्वमसीत्यनया यथार्थबुद्ध्या निवर्तते । यथा दिग्भ्रान्तिर्दिग्याथार्थ्यबुद्ध्या निवर्तते । एकत्वं च समानाधिकृतयोः शब्दयोर्द्वयोरनतिरिक्तार्थवृत्तित्वम् ; तद्यथा 'सिन्धुरः करी; कोकिलः पिकः' इति । विशेषणविशेष्यभावे 'नीलमुत्पलम्' इत्युपन्यस्तम् । तस्यापीदमुपलक्षणमिति द्रष्टव्यम् । **सर्वं खल्विदं ब्रह्मेत्यादाविति;** ननु शमविधिपरत्वेन 'नाम ब्रह्म' इत्यादाविव सर्वस्मिन् ब्रह्मदृष्टिविधिपरत्वाभावेनाध्यासे सामानाधिकरण्यमिति परैर्न व्यवहृतम् ; कथमेवमुच्यत इति चेत्—न ; यदि न व्यवहृतं तर्हि 'नोदाहरणमादर्तव्यम्'इति न्यायेन संप्रतिपन्नमुदाहरणान्तरं द्रष्टव्यम् । **स्थित्यादिविशेषणविधुरेति ;** तिष्ठतिक्रियाया आनयनदशायामसंभवादिति भावः । **स्थित्यादिविशेषणेनेति;** यत् प्रत्याय्य व्यावृत्तिमत्तया ज्ञाते तात्पर्यविषयेतरविशेषणान्वयधीः , तत्त्वस्यैव विशेषणरूपत्वं , न तु विधेयान्वयित्वमिति भावः । **यथान्वयार्हमिति ;** विधेयसमकालतया विधेयभिन्नकालतया वा यथान्वयार्हमित्यर्थः । अत एव 'सोऽयं देवदत्तः' इत्यादौ देशकालादीनामपि विशेषणत्वमिति भावः । **एकस्यापि परित्याग इति ;** अत एव "संबन्धादेवमन्यत्रापि" इत्यधिकरणे व्याहृतिविद्यायां "तस्योपनिषदहमित्यध्यात्मम्" इत्यत्र तच्छब्दस्य पूर्वप्रकृतस्थानविशेषविशिष्टवचनत्वात् तत्तन्नाम्नो व्यवस्थितिः , न तु विशेष्यमात्रवचनतया व्यवस्थितत्वमिति समर्थितमिति भावः । **प्रकृतत्वं दूरोत्सारितमिति ;** अत एव निर्विशेषप्रतीतिस्तत्पदेन लक्षणयैवेति परैरपीष्यत इति भावः ।

**प्रतिसंधानानर्हत्वादिति ;** तत्पदजन्यप्रतिसंधानानर्हत्वादित्यर्थः । **कनकं प्रतिसन्धीयत इति;** न च तच्छब्दानुविद्धतया तदिति प्रात्यक्षिकप्रतिसंधाने सत्यपि तत्पदजन्यप्रतिसंधान-विषयत्वस्यानुपपादितत्वात् कथमयमाक्षेप इति वाच्यम्, तच्छब्दानुविद्धप्रतिसंधानानर्हस्य तत्पदजन्यप्रतिसंन्धानानर्हत्वमपि संभवतीति तदभिप्रायात् । **शब्दस्त्विति ;** वस्तुतस्तु प्रत्यक्षेण यत्राङ्गुलीयकत्वप्रहाणेन तदिति कनकं प्रतिसंधीयते, तत्रापि संस्कारसाचि-व्यादङ्गुलीयकत्वविशिष्टमेव प्रतिसंधीयते ; ततश्च तच्छब्दानुविद्धप्रत्ययस्थले सर्वत्रापि प्रकृता-कारविशिष्टस्यैव परामर्श इत्युक्तावपि न दोषः । **प्रयोजकोपलक्षणाभिप्रायेणेति ;** ततश्च किंचिज्ज्ञत्वादिरूपमाभिमुख्यप्रयोजकमचिद्विशिष्टेत्यनेन संगृहीतमिति भावः । **अन्यथाऽती-तानागतेति ;** प्रतीतियौगपद्यमादाय विषययौगपद्याभ्युपगमे प्रत्येतव्यस्य प्रतीतिसमकाल-त्वमिति नियमोऽभ्युपगतः स्यात्; ततश्चातीतानागतविषयेऽपि विषयविषयिणोः समकाल-त्वनिर्वाहाय विषयिणो वातीतत्वं विषयस्य वा विद्यमानत्वं स्यादिति भावः ।

### श्रुतप्रदीपिका

अथ सामानाधिकरण्यान्यथानुपपत्त्या परोक्तं निर्विशेषत्वधिय उपायत्वं व्युदस्यति— **तत्त्वमित्यादिना ।** हेतुमाह— **तत्त्वमिति ।** तत्पदस्य विशेषार्थमाह— **तदिति ।** तच्च कथमित्यत्राह— **तदैक्षतेति ।** तत्त्वंपदोक्तसार्वज्ञ्याज्ञत्वादिविरोधात् स्वरूपमात्रपरत्व-मित्यत्राह— **तत्समानाधिकरणमिति ।** अनेनासमानविभक्तिकनिष्कर्षकपदव्यावृत्तिः । सद्वारकत्वादविरोध इत्यर्थः । कुत इत्यत्राह— **प्रकारद्वयावस्थितेति ।** स्वरूपमात्रपरत्वे दूषणद्वयमाह— **प्रकारद्वयपरित्याग इति ।** लक्षणा न दोषः, 'सोऽयम्' इत्यादौ दर्शनादित्यत्राह— **सोऽयमिति ।** किं कालद्वयसंबन्धो विरुद्धः ? उत देशद्वयसंबन्धः ? प्रथमं परिहरति— **भूतेति ।** द्वितीयं परिहरति— **देशेति ।** विरोधाल्लक्षणा चेदन्यतर-पदलक्षणयैवालम् । तथाच सविशेषत्वमिति भावः । दूषणान्तरमाह— **तदिति ।** उपक्रमस्तदनुगुण इत्याह— **एकेति ;** सार्वज्ञ्यसर्वशक्तित्वसिद्धेरिति भावः । श्रुत्यन्तर-विरोधमाह— **ज्ञानेति ।** तत्त्वंपदप्रवृत्तिनिमित्तयोः स्वरूपोपलक्षणत्वं दूषितम् । अथ बाधार्थत्वं दूषयति— **बाधेति ।** अन्यतरपदेनाधिष्ठाने लक्षिते तत्र पदान्तरेण धर्मान्तर-निवृत्तिर्लक्ष्येति पदद्वयलक्षणा । आदिशब्दात् सामानाधिकरण्यहानिः ।

**नयप्रकाशिका**

न च "तत्त्वमसि" इति वाक्यस्य ब्रह्मणः परोक्षाद्यंशपरित्यागेन निर्विशेषस्वरूपपरत्व-मिति वाच्यम्, तत्र तादृशार्थस्वीकारहेत्वभावात्; वाक्यात् सविशेषवस्तुप्रतीतेश्च। तत्पदस्य प्रकृतपरामर्शित्वात् प्रकृतस्य च "तदैक्षत" इत्यादौ सर्वज्ञत्वादिविशिष्टप्रतीतेस्तादृशब्रह्मपर-त्वम्। त्वंपदस्यापि तत्पदसामानाधिकरण्यात् देहविशिष्टजीवशरीरकब्रह्मपरत्वमिति न निर्वि-शेषपरत्वम्। अन्यथा लक्षणादोषः सामानाधिकरण्यहानिश्चेत्युक्तम्। न च सामानाधिकरण्यस्य लक्षणैकस्वभावत्वान्न लक्षणा दोष इति वाच्यम्, तादृशस्वभावत्वे प्रमाणाभावात्। तादृशस्व-भावत्वे च स्थपतीष्टौ षष्ठीसमासाश्रयणेन त्रैवर्णिकानामधिकारः स्यात्। षष्ठीसमासे संबन्ध-मात्रे लक्षणा, समानाधिकरणसमासे तु त्वत्पक्षे कृत्स्नपदलक्षणेति षष्ठीसमासप्राबल्यापातात्। स्थपतीष्टौ च समानाधिकरणसमासस्य प्राबल्यात् जात्यन्तरस्येत्युक्तं षष्ठे। तच्च स्थपतिर्निषादः स्यात् "रौद्रं वास्तुमयं चरुं निर्वपेत्" इत्यारभ्य "एतया निषादस्थपतिं याजयेत्" इति श्रूयते। तत्र किं स्थपतीष्टिस्त्रैवर्णिकस्य? उत जात्यन्तरस्येति संशयः। तदर्थं किं निषादानां स्थपतिर्निषादस्थपतिरिति षष्ठीसमासः? उत निषादश्चासौ स्थपतिश्चेति कर्मधारय इति वाक्य-वृत्त्योर्विकल्पार्थवचनेन समासासमासयोः पाणिनिस्मरणात् षष्ठीसमासेऽपि लक्षणाभावात् विद्याग्निलाभाच्च त्रैवर्णिकस्येति पूर्वः पक्षः। षष्ठ्यर्थवाचकाश्रवणात् समासस्य शक्त्यन्तर-कल्पनानुपपत्तेः वावचनस्य प्रयोगद्वयार्थतयोपपत्तेर्मुख्यतया जात्यन्तरस्येति सिद्धान्त इति। न च सर्वपदलक्षणायाः प्राभाकरैर्लौकिकवाक्येष्वङ्गीकृतत्वात् सर्वपदलक्षणा न दोष इति वाच्यम्, तत्स्वीकृतत्वस्य स्वीकारहेतुत्वे तत्स्वीकृतानामात्मबहुत्वकार्यवाक्यार्थादेरपि स्वीकार्य-त्वप्रसङ्गात्। युक्तिबाधस्तूक्तः। एकस्य भ्रान्तत्वेऽन्येनापि भ्रमितव्यमिति नियमाभावाच्च। न हि प्राभाकराणां न भ्रम इत्यत्र प्रमाणम्, तेषामपि संसारित्वेन भ्रमसंभवात्। किंतु तेषां क्वचित्क्वचित् भ्रमः। मिथ्यावादिनां तु सर्वप्रतीतीनामपि भ्रान्तत्वं वदतां तद्भावभा-वित्वेन सर्वत्र भ्रम इति विशेषः। न च विमतिपदं सत्यादिवाक्यमखण्डैकरसार्थपर्यवसायी-त्याद्यनुमानादखण्डार्थपरता सामानाधिकरण्यस्येति वाच्यम्, बुभुत्सितार्थलक्षणवाक्यत्वरूप-हेतोस्तद्वाक्यस्य विशिष्टार्थपरत्वस्यापि साधकत्वेन प्रमाणसमत्वात्। 'श्यामो युवा' इत्यादिवाक्यानां दृष्टान्तत्वं च। 'प्रकृष्टः प्रकाशश्चन्द्रः' इत्यादिवाक्यस्य विशिष्टार्थपरत्वाद् दृष्टान्तश्च साध्यविकलः। तस्य विशिष्टार्थपरता चोत्तरत्र साध्यते। न च विमतिपदं 'तत्त्व-

मसि' इति समानाधिकरणमेकवस्तुनिष्ठमित्याद्यनुमानात् सामानाधिकरण्यस्याखण्डैकार्थतेति वाच्यम्, तत्त्वंपदयोः केवलद्रव्यवाचित्वस्यासिद्धत्वेन हेतोरसिद्धत्वात्। तत्त्वंपदयोः सर्वज्ञत्वादिविशिष्टपरत्वमेवोक्तम्। 'सोऽयं देवदत्तः' इत्यस्यापि विशिष्टार्थपरत्वेन दृष्टान्तश्च साध्यसाधनविकलः। तस्य विशिष्टार्थपरता च वक्ष्यते। किंच तत्पदस्य निर्विशेषवस्तुपरत्वे "तदैक्षत" इत्याद्युपक्रमगतसर्वज्ञत्वादिप्रतीतिविरोधः। ब्रह्मव्यतिरिक्तवस्त्वभावात् ज्ञातव्याभावात्। ज्ञातव्याभावे ब्रह्मविज्ञानात् तदितरस्य ज्ञातत्वप्रतिज्ञाविरोधश्च। ब्रह्मणो दोषाश्रयत्वाद्यपुरुषार्थता च। सर्वज्ञत्वादिहेयप्रतिभटत्वप्रतिपादनश्रुतिविरोधश्च।)

**न्यायसुदर्शनम्**

(**भूतवर्तमानकालद्वयसंबन्धितयैक्यप्रतीत्यविरोधात्** इत्यत्र न विशेषणपरित्यागेन स्वरूपैक्यं प्रतीयते; किंतु विशेषणानामेकाश्रयत्वप्रतिपादनमुखेनाश्रयभेदो निरस्यत इत्यभिप्रायः। एतच्च व्यक्तमानन्दमयाधिकरणे वक्ष्यते। **तदैक्षत बहु स्यामित्युपक्रमविरोधश्चेत्यत्र** "ऐतदात्म्यमिदं सर्वम्" "तत्त्वमसि श्वेतकेतो" इत्येतद्वाक्यं ब्रह्मणो नाभेदबोधार्थं, तदाऽभेदात् बहुत्वासिद्धेः "बहु स्याम्" इति संकल्पितं ब्रह्माभिलषितमेवानिष्पन्नं स्यादित्यर्थः। "बहु स्याम्" इति संकल्प्य एवमेवं कृत्वा बहुधाभूतमभवत् ब्रह्मेति तस्य बहुत्वोपादानमेव "ऐतदात्म्यमिदं सर्वम्" "तत्त्वमसि" इति प्रदर्श्यते। तस्मात् सर्वभेदबाधार्थं सामानाधिकरण्यमिति दुरुक्तम्। कार्यकारणयोर्भेद एवात्र सामानाधिकरण्येन बाध्यते, न तु कारणभूतब्रह्मणः कार्यकारणस्वगतनानात्वलक्षणभेदः। प्रत्युत स उपादेय एवेत्यभिप्रायः।)

**श्रीभाष्यम्**

**इयांस्तु विशेषः—'नेदं रजतम्' इतिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनम्। तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्च। अधिष्ठानं तु प्राक् तिरोहितमतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति चेत्—न; प्रागधिष्ठानाप्रकाशे तदाश्रयभ्रमबाधयोरसंभवात्। भ्रमाश्रयमधिष्ठानमतिरोहितमिति चेत्; तदेवाधिष्ठानस्वरूपं भ्रमविरोधीति तत्प्रकाशे सुतरां न तदाश्रयभ्रमबाधौ। अतोऽधिष्ठानातिरेकिपारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ।**

अधिष्ठाने हि पुरुषमात्राकारे प्रतीयमाने तदतिरेकिणि पारमार्थिके राजत्वे तिरोहिते सत्येव व्याधत्वभ्रमः। राजत्वोपदेशेन च तन्निवृत्तिर्भवति; नाधिष्ठानमात्रोपदेशेन, तस्य प्रकाशमानत्वेनानुपदेश्यत्वात् भ्रमानुपमर्दित्वाच्च।

**श्रुतप्रकाशिका**

उक्तदृष्टान्तादुपलक्ष्यसामानाधिकरण्याच्च दूषणमत्राधिकमित्याह—**इयांस्तु विशेष इति**; बाधार्थत्वे विशेषो न पूर्वोक्तदूषणहानिः, अपितु तैः सह वक्ष्यमाणाधिकदूषणद्वयापात एव विशेष इत्यर्थः। अधिकं दूषणमाह—**नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पनमिति**; 'शुक्तिरेव रजतम्' इत्यत्र प्रमाणान्तरेण 'नेदं रजतम्' इति बाधस्य प्रतिपन्नत्वात् बाधकल्पनम्। अत्र बाधस्याप्रतिपन्नत्वेऽप्यगत्या बाधकल्पनमित्यर्थः। **तत्पदेनाधिष्ठानातिरेकिधर्मानुपस्थापनेन बाधानुपपत्तिश्चेति**; 'शुक्तिरेव रजतम्' इत्यत्र शुक्तित्वरूपं विरुद्धधर्मं शब्द एवोपस्थापयति। अतस्तत्र बाधकल्पनम्। अत्र त्वधिष्ठानमात्रं लक्षयता तत्पदेन शुक्तित्ववद्विरुद्धधर्मानुपस्थापनाद्बाधकल्पनमनुपपन्नमित्यर्थः। विरोधपरिहारार्थं लक्षणा चेदन्यतरपदलक्षणैव विरोधपरिहारायालम्। तदा सविशेषत्वप्रसङ्ग इति चार्थसिद्धम्। प्रमाणान्तरेण बाधस्य प्रतिपन्नत्वात् शब्देन विरुद्धधर्मोपस्थापनाच्च बाधकल्पनम्। अत्र तूभयाभावात्तदनुपपन्नमित्युक्तम्। तत्र विरुद्धाकारोपस्थापनं शङ्कते—**अधिष्ठानं त्विति**; तदधिष्ठानमतिरोहितस्वरूपं यथा भवति तथोपस्थाप्यत इति क्रियाविशेषणम्। अप्रकाशितविरोधिप्रकाशनं हि बाधकल्पनं, न तु धर्मोपस्थापनमेव बाधकल्पनमिति नियमोऽस्ति। अतस्तत्पदेन प्रागप्रकाशितविरोध्यधिष्ठानस्वरूपप्रकाशनाद्बाधकल्पनमित्यर्थः। अत्राह—**नेति**। किं विरोधिरूपमधिष्ठानं प्रकाशते? उत नेति विकल्प्य, अप्रकाशपक्षे दूषणमाह—**अधिष्ठानेति**; तदाश्रयेत्याश्रयशब्दो विषयपरः। यद्वा तदधिष्ठानकभ्रमबाधयोरित्यर्थः। प्रकाशपक्षं शङ्कते—**भ्रमेति**। **भ्रमाश्रयमधिष्ठानमित्यत्र** पाठो निरीक्षणीयः, आश्रयशब्दो विषयपरः। भ्रमाश्रयमित्यत्र भ्रमस्याश्रयो विषयीकरणमत्रेति वैयधिकरण्येन वा भ्रम आश्रय आश्रयणीयः संबन्धनीयो येनेति सामानाधिकरण्येन वा कथंचित् बहुव्रीहित्वमपि निर्वोढुं शक्यम्; आरोप्याकाराधिकरणभूतमधिष्ठानमिति वार्थः। भ्रमाश्रयत्वायातिरोहितमिति चेदित्यर्थः। दूषयति—

**तदेवेति ।** किमिदमधिष्ठानं विरोधिरूपम्? उताविरोधीति विकल्पाभिप्रायेण विरोधीति पक्षे दूषणमुक्तम् । अविरोधित्वपक्षे बाधकल्पनानुपपत्तिः भ्रमानुच्छेदश्चेति दूषणं स्पष्टमिति न तदुक्तम् । **अत इति ;** पारमार्थिकशब्दस्यायमभिप्रायः—भ्रमविरोध्याकारस्यापारमार्थिकत्वे, अध्यस्तरूपमेव सत्यं स्यात् । यथा शुक्तित्वापारमार्थ्ये रजतत्वं सत्यं भवतीति । यदिदं चोद्यम्—विरोध्याकारस्यापारमार्थ्येऽपि भ्रमनिवृत्तिरुपपद्यते ; यथा पलाशपुष्पविषयदावभ्रमवतो भ्रमरस्य वृन्तविषयभ्रमरभ्रमेण पलाशपुष्पं श्लिष्यतः पलाशपुष्पविषयदावभ्रमो वृन्तविषयभ्रमरभ्रमश्च निवृत्त इति । यथाहुः—

"भ्रमरी भ्रमरभ्रमेण वृन्ते यददावभ्रममाश्लिषत्पलाशम् ।"

इति ; तदयुक्तम्, तत्रापि परमार्थविरोध्याकारेणैव भ्रमविषयनिवृत्तेः । दावत्वविरोधिपलाशपुष्पत्वाकारः परमार्थः । भ्रमरत्वविरोधिवृन्तत्वाकारश्च परमार्थः । अपरमार्थत्वे दावत्वं भ्रमरत्वं च सत्यं स्यात् शुक्तित्वेऽपरमार्थे रजतत्वमिव । वृन्तविषयभ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरिति चेत् ; ततः किम्? दावत्वबुद्धिनिवृत्तिर्भ्रमरत्वस्य सत्यत्वप्रतिपत्तिकृता । ततश्चासत्ये सत्यत्वविषयभ्रमान्तरं तिष्ठति । तन्निवृत्तिरप्यसत्यविषयसत्यत्वभ्रमान्तरेणेति भ्रमपरंपरया निःशेषाविद्यानिवृत्त्यनुपपत्तिः । किंच—दावत्वविषयधीनिवृत्तावपि दावत्वनिवृत्तिर्न भ्रमरभ्रमेण ; अपि तु परमार्थपुष्पत्वाकारेणैव । अन्यथा परमार्थरजते अपरमार्थशुक्तित्वबुद्ध्या रजतधीनिवृत्त्या रजतस्यापि शुक्तित्वप्रसङ्गात् । भ्रमान्तरेण भ्रमान्तरनिवृत्तावनवस्था च स्यात् ; निवर्तकभ्रमान्तरस्यापि निवर्तकान्तरापेक्षत्वात् , यथा रज्जुविषयसर्पभूदलनाम्बुधाराभ्रमपरंपरायाः । किंच भ्रमरभ्रमनिवृत्त्यनन्तरं निवर्तकापारमार्थ्यज्ञानादापतन् दावभ्रमः परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्तः । अतो निःशेषाविद्यानिवृत्तिलक्षणमोक्षवादिना भ्रमपरंपरापर्यवसानार्थमन्ततो गत्वा परमार्थाकारोऽभ्युपगन्तव्यः । रज्जुत्ववत् चरमभ्रमः स्वयमेव न स्यादिति चेत्—न ; स्वयं स्वबाधकर्मत्वे कर्मकर्तृविरोधप्रसङ्गात् । किंच बाधकस्य सत्यात्मकत्वाद्बाध्यस्य मिथ्यात्वादेकस्यैव निवर्त्यनिवर्तकत्वाभ्युपगमे तस्यैव मिथ्यात्वं सत्यत्वं चेति विरोधः स्यात् । किंच प्रपञ्चोऽपि बाधकानपेक्षः स्वयमेव स्वात्मानं निवर्तयेत् । स्वयं नाशेऽपि नाशस्यावस्थान्तररूपत्वादविद्या सूक्ष्मरूपेण स्थिता स्यात् । नाशकल्पकाविद्यान्तरं च स्यात् । परमार्थविरुद्धधर्मतत्तिरोधानाभावे भ्रमबाधासंभवं दृष्टान्तेनोपपादयति—**अधिष्ठाने हीति ।** अत्र राजकुमारसमाधिर्भगवतो भाष्यकारस्य ।

भावप्रकाशिका

**उक्तदृष्टान्तादिति;** 'शुक्तिरेव रजतम्' इति दृष्टान्तादित्यर्थः। **उपलक्ष्यसामानाधिकरण्यादिति;** "अन्वयमुखेनोपलक्षितवस्त्वैक्यपरम्" इति प्रतिपादितात् उपलक्ष्यसामानाधिकरण्यादित्यर्थः। **पाठो निरीक्षणीय इति;** आश्रयशब्दस्य नित्यपुंलिङ्गत्वादिति भावः। **आश्रयशब्दो विषयपर इति;** विषयीकरणपर इत्यर्थः। स्वसिद्धान्तमाह—**आरोप्याकाराधिकरणभूतमधिष्ठानमिति वार्थ इति;** भ्रम्यत इति भ्रमः, आरोप्याकारो रजतादिरेव; तस्याश्रयम् आश्रीयत इत्याश्रयम् "अकर्तरि च कारके" इत्यधिकारे कर्मणि "एरच्" इत्यच्प्रत्ययः। न च "घञजबन्ताः पुंसि" इति पुंलिङ्गत्वमजन्तत्वे स्यात्,

> "क्तल्यू नपुंसके भावे स्त्रियां क्तिन्नादयो यतः।
> अतो घञाद्याः पुंस्येव यथा पाकश्चयो लयः॥"

इत्युक्तेरिति वाच्यम्, तस्य भावार्थघञादिविषयत्वात्। यथोक्तम्—

> "भावे घञाद्याः पुंस्येव कर्तृभिन्ने तु कारके।
> पुंनपुंसकयोरेव न कथंचित् स्त्रियां क्वचित्॥"

इति। तेन कर्मादिषु कारकेषु पुंनपुंसकत्वमस्तीति विशेष्यस्य नपुंसकत्वान्नपुंसकत्वमिति द्रष्टव्यम्। **यथा पलाशपुष्पविषयेति;** यद्यपि श्लोके भ्रमर्या वृन्ते भ्रमरभ्रमेण पलाशपुष्पविषयदावभ्रमे निवृत्ते पलाशपुष्पाश्लेषमात्रं प्रतीयते; 'भ्रमरभ्रमेण' इत्यस्य 'अदावभ्रमम्' इत्यनेनान्वितत्वेन 'आश्लिषत्' इत्यनेनान्वितत्वाभावात्, तावन्मात्रस्यैव प्रकृतोपयुक्तत्वाच्च; तथापि भ्रमरज्ञानस्य भ्रान्तित्वस्पष्टीकरणार्थं पलाशपुष्पाश्लेषस्य भ्रमरभ्रमनिवर्तकत्वमप्युपन्यस्तमिति द्रष्टव्यम्। **भ्रमविषयनिवृत्तेरिति;** निवृत्तिरपहारः, असत्त्वमिति यावत्। **पारमार्थिकधर्मतत्तिरोधानानभ्युपगमे भ्रान्तिबाधौ दुरुपपादौ** इति हि भाष्यम्। तत्र बाधो हि विषयापहारः, विषयासत्त्वमिति यावत्। ततश्च भ्रान्त्यन्तरं निवर्ततां, मा वा। दावत्वरूपविषयस्यासत्त्वरूपो बाधः पारमार्थिकपलाशपुष्पत्वकृतः, विरोधिधर्मपारमार्थ्यायत्तत्वात् तद्विरोधिधर्मासत्त्वस्येति भावः। भ्रान्तिबाधो नाम भ्रान्तिविनाश एवेत्यभिप्रेत्याशङ्कते—**भ्रमरभ्रमेण दावत्वभ्रमनिवृत्तिरिति चेदिति।** **असत्ये सत्यत्वविषयभ्रमान्तरमिति;** ननु—"तन्निवृत्तिरपि भ्रमान्तरेणेत्याश्रयणे भ्रमपरंपरया निःशेषाविद्यानिवृत्त्यनुपपत्तिः" इत्येतावतैव ग्रन्थेन विवक्षितार्थः सिध्यतीति "ततः किम्? दावत्वबुद्धि-

निवृत्तिः '' इत्यादिग्रन्थस्य नातीव प्रयोजनं पश्यामः ; किंच अभ्रमरे भ्रमरत्वविषयत्वेनैव भ्रमत्वोपपादनसंभवे सत्यत्वविषयत्वपर्यन्तोपपादनस्यापि न प्रयोजनमिति चेत्— न ; विरुद्धाकारसत्यत्वावगाहिज्ञानस्यैव बलवत्त्वेन बाधकत्वमिति शिक्षणार्थत्वेनास्य ग्रन्थस्योपपत्तेः । **निःशेषाविद्यानिवृत्त्यनुपपत्तिरिति ;** भ्रमेण भ्रमनिवृत्तिमात्रदर्शनेऽपि मोक्षे निःशेषाविद्यानिवृत्तिमभिलषता सुदूरमपि गत्वा पारमार्थिको धर्मः स्वीकरणीय इति भावः । **किंच भ्रमरभ्रमनिवृत्त्यनन्तरमिति ;** वृन्तत्वज्ञानेन भ्रमरत्वव्यतिरेकनिश्चये निवर्तकीभूतभ्रमरत्वबुद्धेरपारमार्थ्यनिश्चयेन दावत्वबुद्धेः पारमार्थ्यबुद्धेरवर्जनीयत्वादिति भावः । **परमार्थपलाशपुष्पत्वग्रहणेनैव प्रतिनिवृत्त इति ;** यद्यपि दावत्वभ्रमस्य वृन्ते भ्रमरत्वपारमार्थ्यभ्रममात्रेणापि तद्बाधकज्ञानानुत्पत्तिस्थले निवृत्तिः संभवति, तथापि भ्रमर्याः पलाशपुष्पत्वज्ञानादेव सा भ्रान्तिर्यत्र निवृत्ता तदभिप्रायेण तथोक्तमिति द्रष्टव्यम्। **न स्यादिति चेदिति ;** नश्येदिति चेदित्यर्थः । ननु—न तस्यैव मिथ्यात्वं सत्यत्वं च प्रसज्यते ; विनाश्यविनाशकभावलक्षणबाध्यबाधकभावस्य मिथ्यात्वसत्यत्वनिरपेक्षत्वात्, तुल्यसत्ताकयोरेव पूर्वोक्तज्ञानयोर्विनाश्यविनाशकत्वलक्षणबाध्यबाधकत्वदर्शनात् । न च बाधकज्ञानविषयस्य सत्यत्वं बाध्यज्ञानस्य मिथ्यात्वं चापेक्षितमिति चरमज्ञानविषयमिथ्यात्वसत्यत्वे स्यातामिति वाच्यम्, तस्याबाध्यसिद्धेरित्यस्वरसादाह—**किंच प्रपञ्चोऽपीति । स्वयं नाशेऽपि नाशस्यावस्थान्तररूपत्वादिति ;** न च परतो नाशेऽपि नाशस्यावस्थान्तररूपत्वादिति सुवचमिति वाच्यम्, ज्ञानेन निवृत्तिस्थले मूलभूताविद्याया एव निवृत्तिरिति नावस्थान्तरापत्तिलक्षणो विनाश इत्यत्र तात्पर्यात् । अत एव यत्र मुद्गरप्रहारेण घटनाशस्तत्र स्वकारणे विलयमात्रमेव, न तु घटस्यात्यन्तनिवृत्तिः । यत्र तु शुक्तिज्ञानेन रजतनिवृत्तिः, तत्र स्वोपादानेन सह निःशेषनिवृत्तिः, न तु स्वकारणे विलय इति पराभ्युपगम इति भावः । **राजकुमारसमाधिरिति ;** समन्वयाधिकरणभाष्ये '' कश्चिद्राजकुमारः '' इत्यादिना स्पष्टयिष्यते । उक्तं च परैरपि—

'' राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते ।
यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः ॥ '' इति ।

**श्रुतप्रदीपिका**

तच्छब्दास्वारस्योपक्रमतदुपक्रमश्रुत्यन्तरविरोधा उक्ताः । अधिकं दूषणद्वयं विवक्षन्नाह—**द्वयानिति ।** मानान्तरेण बाधदर्शनं शब्देन विरुद्धधर्मोपस्थापनं च ' शुक्तिरेव

रजतम्' इत्यादिषु दृष्टम्। इह तु तदभावो वैषम्यम्। धर्म एवोपस्थापनमिति न नियमः, विरुद्धार्थोपस्थापनमेव बाधकल्पकमिति शङ्कते—**अधिष्ठानमिति**। दूषयति—**नेति**। स्वरूपं किं प्रकाशते ? न वेति विकल्पं मत्वा द्वितीयं दूषयति—**अधिष्ठानेति**। प्रथमे तत् भ्रमविरुद्धं न वेति विकल्पमभिप्रेत्य प्रथमं दूषयति—**तदेवेति**। द्वितीये भ्रमानुच्छेदोऽनुपपन्ना बाधक्लृप्तिश्च स्पष्टतया नोक्ते। **अत इति**। शुक्तित्वमिथ्यात्वे रूप्यस्य सत्यत्वमित्यभिप्रायेणोक्तम्—**पारमार्थिक इति**। वृन्ते भृङ्गभ्रमात् दावभ्रमनिवृत्तिश्च भृङ्गसत्यत्वधीजन्या। वस्तुनिवृत्तिस्तु सत्यपलाशत्वेन। ब्रह्मण्यपि तथा चेत् सर्पभूदलनादाविव भ्रमपरंपरयाऽनवस्थां दर्शयति—**अधिष्ठानेति**।

### नयप्रकाशिका

(न च सामानाधिकरण्यस्य भेदापादनपरत्वं न स्वरूपोपलक्षणपरत्व इति वाच्यम्, स्वतोऽप्रतिपन्नस्य बाधककल्पनं, तदिति पदेनाधिष्ठानातिरेकिप्रकृतसर्वज्ञत्वादिधर्मानुपस्थापने च बाधानुपपत्तिश्चेत्युपलक्षणपक्षदूषणद्वयाधिक्यात्। न च प्रासबाधः श्रुतिलिङ्गादौ 'नेदं रजतम्' इत्यादौ च दृश्यत इति वाच्यम्, तत्र गत्यन्तराभावात्। न चाज्ञानेन प्राग्ज्ञानोदयादधिष्ठानं तिरोहितम्। अतिरोहितस्वरूपं तत्पदेनोपस्थाप्यत इति बाधोपपत्तिरिति वाच्यम्, अधिष्ठानतिरोधाने तदाश्रयभ्रमबाधयोरनुपपत्तेः। न हि रजतभ्रमाधिष्ठानशुक्त्याद्यप्रकाशे भ्रमोपपत्तिः। न च तर्हि अधिष्ठानप्रकाशोऽस्त्विति वाच्यम्, अधिष्ठानस्वरूपप्रकाशस्यैव भ्रमविरोधित्वेन तत्प्रकाशे भ्रमबाधायोगात्। न हि शुक्तिप्रतिभासे रजतभ्रमः। अधिष्ठानातिरेकिधर्मानङ्गीकारे तु न भ्रान्तिबाधोपपत्तिः। धर्माङ्गीकारपक्षे तु पुरुषाद्याकारप्रतीतौ राजत्वादिधर्मतिरोधानात् दोषादिवशात् बाधकत्वादिधर्मप्रतीतेः केनचिदुक्तदोषादिनिरासे च राजत्वादिधर्मप्रतीतेश्च भ्रमतन्निवृत्त्योरप्युपपत्तिः। न हि लोके निर्विशेषवस्तुसद्भावो वा तस्य तत्प्रतीतिविषयत्वं वास्ति, येन निर्विशेषवस्तुनि भ्रमबाधोपपत्तिः स्यात्। शुक्त्यादेरपि शुक्तित्वाद्यप्रतीतावपि भास्वरत्ववर्तुलत्वादिधर्मविशिष्टत्वप्रतीतावेव रजतत्वादिभ्रमः। निर्विकल्पेऽपि विशिष्टैव प्रतीतिरिति वक्ष्यते। तस्मात् तद्धर्मतिरोधान एव "तत्त्वमसि" इत्याद्युपदेशोपपत्तिः।)

### न्यायसुदर्शनम्

(**नेदं रजतमितिवदप्रतिपन्नस्यैव बाधस्यागत्या परिकल्पन**मित्यादिग्रन्थस्य सर्वत्र बाधः प्रतीतः नञ्श्रवणात् विरोधिधर्मान्तरोपस्थापनाद्वा हि स्यात्। 'नेदं रजतम्,

इति नञ्श्रवणादेव बाधः प्रतीतः । 'यदिदं रजतमेतच्छुक्तिका' इत्यत्र शुक्तिकात्वरूप-विरोधिधर्मान्तरोपस्थापनात् रजतबाधःप्रतीतः । तत्त्वमस्यादिसामानाधिकरण्ये तदुभया-भावात् बाधानुपपत्तिरित्यभिप्रायः । ननु— अधिष्ठानातिरेकिपारमार्थिकधर्मान्तरनिरोधानान-भ्युपगमे भ्रान्तिबाधासंभवः कथमुपपाद्यते ? द्विचन्द्रज्ञाने धर्मान्तरतिरोधानाभावे भ्रान्तिदर्श-नात्, व्यभिचरितं हि धर्मान्तरतिरोधानम् । एकत्वं तत्रापि तिरोहितमिति चेत्— न; एकत्वाग्रहणे द्वित्वज्ञानमेव न संभवति, एकत्वग्रहणपूर्वकत्वात् द्वित्वज्ञानस्य, उच्यते— युग-पद्देशद्वयविशिष्टचन्द्रग्रहणमेव हि द्विचन्द्रज्ञानम् । तत्र च नायनतेजोगतिभेदेन देशद्वयग्रहण-मित्युक्तम् । तत्र वक्रगत्या सामग्र्या चन्द्रदेशाग्रहणपूर्वकं चन्द्रमात्रं गृहीत्वा देशान्तरं गृह्यते । तत एव देशान्तरस्य चन्द्रमात्रस्य च नैरन्तर्यहानं भवतीति तत्रापि देशान्तरयुक्ततया भानं स्वदेशयुक्तत्वाकाराग्रहणपूर्वकमेवेति न व्यभिचारः ।)

**श्रीभाष्यम्**

जीवशरीरकजगत्कारणब्रह्मपरत्वे मुख्यवृत्तं पदद्वयम् । प्रकार-द्वयविशिष्टैकवस्तुप्रतिपादनेन सामानाधिकरण्यं च सिद्धम् । निरस्त-निखिलदोषस्य समस्तकल्याणगुणात्मकस्य ब्रह्मणो जीवान्तर्यामित्वम-प्यैश्वर्यमपरं प्रतिपादितं भवति । उपक्रमानुकूलता च । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिश्च, सूक्ष्मचिदचिद्वस्तुशरीरस्यैव ब्रह्मणः स्थूल-चिदचिद्वस्तुशरीरत्वेन कार्यत्वात् । "तमीश्वराणां परमं महेश्वरम्" "परास्य शक्तिर्विविधैव श्रूयते" "अपहतपाप्मा" "सत्यकामः सत्य-संकल्पः" इत्यादिश्रुत्यन्तराविरोधश्च । "तत्त्वमसि" इत्यत्रोद्देश्योपा-देयविभागः कथमिति चेत्—नात्र किंचिदुद्दिश्य किमपि विधीयते, "ऐतदात्म्यमिदं सर्वम्" इत्यनेनैव प्राप्तत्वात्; अप्राप्ते हि शास्त्रमर्थवत् । "इदं सर्वम्" इति सजीवं जगन्निर्दिश्य "ऐतदात्म्यम्" इति "तस्यैष आत्मा" इति तत्र प्रतिपादितम् । तत्र च हेतुरुक्तः—"सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः" इतिवत् ।

## श्रुतप्रकाशिका

एवं बाधार्थत्वं दूषितम् । अथ स्वपक्षे इमानि दूषणानि न सन्तीत्याह—**जीव शरीरकेति ।** **मुख्यवृत्त**मित्यनेन लक्षणाहानिरुक्ता । **प्रकारद्वयेति ;** अनेन सामानाधिकरण्यसिद्धिः । **निरस्तनिखिलदोषस्ये**त्यादिना तत्पदोक्तगुणाविरोधः । **उपक्रमानुकूलता चेति ;** "सदेव सोम्येदम्" "तदैक्षत" इत्युपक्रमाविरोध उक्तः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः कथमित्यत्राह—**सूक्ष्मेति ;** विशिष्टं कारणं तदेव कार्यमिति प्रतिज्ञोपपत्तिरित्यर्थः । श्रुत्यन्तराविरोधमाह—**तमीश्वराणामिति ।** वाक्यं चेदुद्देश्योपादेयविभागवत्, उद्देश्यं ह्यवगतम्, उपादेयं विधेयमनवगतम्, अत्र तत्पदं नोद्देश्यसमर्पणपरम्, सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वात्; त्वंशब्दस्य चान्तर्यामिपरत्वे सत्युद्देश्यसमर्पकत्वमनुपपन्नम्, अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वात् । तस्मात् त्वंशब्देन जीवमात्रमुद्दिश्य तस्य तत्पदेन ब्रह्मभावो विधीयत इत्यभ्युपगन्तव्यम् । तत्र विरोधान्निर्विशेषवस्त्वैक्यपरं सामानाधिकरण्यं भवतीत्यभिप्रायेण चोदयति—**तत्त्वमसीत्यत्रोद्देश्योपादेयविभागः कथमिति चेदिति ।** परिहरति—**नात्रेति ।** प्रमाणान्तरागोचरार्थस्य कथमविधानमित्यपेक्षायां, न केवलं प्रत्यक्षाद्यवगतार्थविषयमेव वाक्यमनुवादकम्, अपितु वाक्यान्तरप्रतिपन्नार्थविषयमप्यनुवादकमित्यभिप्रायेण वाक्यान्तरप्राप्तिं दर्शयति—**ऐतदात्म्यमिति ।** अस्मिन्नेव प्रकरणे प्रथमप्रतिपन्ननामरूपव्याकरणश्रुत्यैव परमात्मशरीरभूतचिदचिद्वाचकशब्दानां परमात्मपर्यन्ताभिधायित्वं च ज्ञातमिति भावः । ततः किमित्यत्राह—**अप्राप्ते हीति ;** अप्रतिपन्नार्थविषयं शास्त्रमज्ञातज्ञापनरूपप्रयोजनवदित्यर्थः । अतस्तदेवोद्देश्योपादेयविभागवत्; न तु प्रकृतनिगमनरूपं वाक्यम् । अतोऽस्य निगमनवाक्यस्य प्रतिपन्नार्थविषयत्वान्नोद्देश्योपादेयविभागवत्त्वमिति भावः । ननु निगमनवाक्यस्याप्युद्देश्योपादेयविभागवत्त्वं प्रतीयते, यथा—'तस्माच्छब्दोऽनित्यः; तस्मादयमग्निमान्' इति ; अत्र शब्दपर्वताद्युद्देशेनानित्यत्वाग्निमत्त्वादिकं हि विधेयतया प्रतीयते । नैतद्युक्तम्, प्रतिपादितार्थविषयस्य निगमनवाक्यस्याप्रतिपन्नार्थविषयत्वव्याघातात् । प्रतीतिस्तु विधायकवाक्यस्थोद्देश्योपादेयसमर्पकपदप्रत्यभिज्ञानात् निर्देशे प्रथमचरमभावादिसारूप्याच्चोद्देश्योपादेयविभागवत्त्वभ्रान्तिरेव । "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्" इति हि नीतिविदः । ननु—सर्वत्रोद्देश्यानुगुणा तिङ्विभक्तिः । अत एव हि युष्मदस्मदोः पदान्तरसामानाधिकरण्येन परस्परसामानाधिकरण्येन च प्रयोगे-

षूद्देश्यानुगुणा मध्यमोत्तमपुरुषव्यवस्था दृश्यते—"त्वं भूतानामधिपतिरसि" अहमस्मि प्रथमजा ऋतस्य"; तथा—" यदग्ने स्यामहं त्वं त्वं वा स्या अहं स्युष्टे सत्या इहाशिषः" इत्यादिषु। अग्ने अहं त्वं यदि स्यां त्वमिव देवता स्यां त्वमहं यदि स्याः, अहमिवार्थी स्याः, तदा ते तवाशिषः सत्याः स्युरित्यर्थः। तस्मात् "तत् त्वमसि" इत्यत्रापि मध्यमपुरुषप्रयोगात्त्वंपदस्योद्देश्यसमर्पकत्वं तत्पदस्य चोपादेयसमर्पकत्वमकामेनापि स्वीकार्यम्। नैवम्—पदद्वयावगतार्थस्य पूर्ववाक्यप्राप्तत्वादेव। तर्हि मध्यमनिर्देशः कथमिति चेत्, उच्यते—तत्त्वंपदयोरुभयोरपि प्रयुक्तत्वादुद्देश्योपादेयविभागाभावाच्च प्रथममध्यमपुरुषयोरविशेषेण प्राप्तौ निगमनवाक्यस्य प्रापकवाक्यानुरोधित्वस्य न्याय्यत्वात् तत्र च "इदं सर्वम्" इति निर्दिष्टजगदन्तर्गतचिद्विशेषविशिष्टपरमात्मवाचिनस्त्वंपदस्य प्रापकवाक्यस्थोद्देश्यवाचिपदवाच्यैकदेशविषयत्वात् तदनुरोधेन मध्यमनिर्देश इति। ननु "ऐतदात्म्यमिदं सर्वम्" इत्यचेतने ब्रह्मानुप्रवेशमुक्त्वा "तत्त्वमसि" इति जीवब्रह्मणोः स्वरूपैक्यमुच्यत इति शङ्कायामाह—**इदं सर्वमिति सजीवं जगन्निर्दिश्येति**। सर्वशब्दो नाचेतनमात्रपरः, संकोचकाभावे स्वारस्यभङ्गायोगात् "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति पूर्ववाक्ये सर्वशब्देन प्रजानां विशेषितत्वात् प्रजाशब्दस्य चाचित्संसृष्टचेतनविशेषपरत्वात् 'इदं सर्वमसृजत" इत्यादिवाक्यान्तरे विज्ञानाविज्ञानशब्दवाच्यचिदचिदात्मकस्य जगतः सर्वशब्देन निर्देशाच्चेति भावः। ऐतदात्म्यमिति पदं व्याचष्टे—**तस्यैष आत्मेति**। इदं सर्वमिति पदद्वयमुद्देश्यसमर्पकम्। **ऐतदात्म्यम्**; एतदात्मकत्वं विधेयम्। विशिष्टस्य ब्रह्मणः कारणतया प्रकृतत्वेऽप्येतच्छब्दश्चिदचिद्विलक्षणविशेष्यांशपरः, अर्थवशात्; तदात्मकत्वं 'मृदात्मको घटः' इतिवत् स्वरूपैक्यकृतं स्यादित्यत्राह—**तत्र च हेतुरुक्त इति**। **सदायतना** इत्यनेनाधाराधेयभाव उक्तः। अनेन शरीरशरीरिभावः सिद्धः। चेतनेन यावदात्मभावितया धार्यद्रव्यं हि शरीरम्। अस्मिन् वाक्ये हेतुत्वमप्रकटमिति तद्वैशद्यायाह—**सर्वं खल्विति**। अत्रापि प्राणनेन सदायतनत्वं फलितम्, 'सन्मूलाः' इत्यादिवाक्येनैकार्थ्यात्। तत्र सन्मूला इति तज्जत्वं, सत्प्रतिष्ठा इति तल्लत्वं, सदायतना इति तदनत्वं चोच्यते। तच्चान्तःप्रविश्य प्रशासनेन धारकतया स्थितिहेतुत्वम्, "अन्तः प्रविष्टः शास्ता जनानाम्" "एतस्य वा अक्षरस्य प्रशासने गार्गि सर्वमिदं विधृतं तिष्ठति" इत्यादिश्रुतेः। एवं निष्कृष्टब्रह्मस्वरूपस्योपादानत्व-

लयस्थानत्वायोगात् सर्वस्य तदनत्वोक्त्या च चिदचिच्छरीरकत्वं सिद्धम् । अतः सर्वशब्दः कार्यावस्थचिदचिच्छरीरकपरमात्मपरः । ब्रह्मशब्दस्यासंकोचेन स्वरूपरूपगुणैर्निरवधिक-बृहत्त्ववाचित्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्तिरूपार्थसामर्थ्याच्च ब्रह्मशब्दः कारणावस्थ-चिदचिद्विशिष्टपरः । एवमुभयावस्थचिदचित्प्रकारिणो ब्रह्मण एकत्वं सामानाधिकरण्यं-प्रतिपाद्यमिति कार्यकारणावस्थप्रकार्यैकत्वमस्य वाक्यस्यार्थः । चिदचित्प्रकारित्वं प्रातिपदिक-बोध्यम् । अवस्थाद्वयविशिष्टवस्त्वेकत्वं सामानाधिकरण्यबोध्यमिति न वाक्यभेदः । अतो यथोक्त एवार्थः ।

### भावप्रकाशिका

**सार्वज्ञ्यादिगुणकत्वस्य प्रत्यक्षाद्यगोचरत्वादिति ;** यद्यपि पूर्वसंदर्भप्रतिपन्नस्य सार्वज्ञ्यादिगुणकस्योद्देश्यत्वं संभवति, तथापि तत्पक्षे ' असि ' इति मध्यमपुरुषानुपपत्तिरिति दूषणं द्रष्टव्यम् । **अन्तर्यामिणः प्रत्यक्षाद्यविषयत्वादिति ;** यदि चान्तर्यामी पूर्वप्राप्तः, तदोपदेशवैयर्थ्यमपि द्रष्टव्यम् । ननु " ऐतदात्म्यम् " इत्यनेन शरीरशरीरिभावस्य प्राप्तत्वेऽपि त्वंशब्दतदर्थबुद्धीनां परमात्मपर्यन्तत्वरूपस्य " तत्त्वमसि" इति वाक्यप्रतिपा-द्यार्थस्याप्राप्तत्वादुद्देश्योपादेयसिद्धिरित्याशङ्क्य तस्यापि प्राप्तिमुपपादयति—**अस्मिन्नेव प्रकरण इति ;** इदं च त्वमादिशब्दानां परमात्मपर्यन्तत्वमिति " तत्त्वमसि " इत्यस्यार्थ इत्यभ्युपगम्योक्तमिति द्रष्टव्यम् । **उद्देश्योपादेयविभागवत्त्वभ्रान्तिरेवेति ;** ननु "अग्नि-र्हिमस्य भेषजम् " इत्यादौ प्राप्त्यप्राप्तिनिबन्धनानुवाद्यत्वविधेयत्वाभावेऽपि निर्देशगतस्वात-न्त्र्यपारतन्त्र्यरूपोद्देश्योपादेयविभागवत्त्वे न दोषः । न चानुवाद्यत्वविधेयत्वे एवोद्देश्यत्वोपा-देयत्वे इति वक्तुं शक्यम् ; "पौर्णमास्यां पौर्णमास्या यजेत" इत्यादावनुपादेयस्यापि कालस्य विधेयत्वदर्शनादिति चेत्—न ; "अग्निर्हिमस्य भेषजम्" इत्यादिवाक्ये उद्देश्योपादेयभाव-व्यवहारस्याभियुक्तेष्वदर्शनादिति भावः । केचित्तु—उद्देश्योपादेयशब्दावनुवाद्यत्वविधेयत्व-पराविति वदन्ति । **प्रापकवाक्यस्थोद्देश्यवाचीति ;** यद्यपि त्वंशब्दस्य " ऐतदात्म्य-मिदम्" इति प्रापकवाक्यस्थविधेयवाचकैतदात्म्यशब्दवाच्यपरमात्मपर्यन्ततया विधेयत्ववा-चित्वमपीति न विनिगमकमस्ति, तथाप्यसति विनिगमके द्वयोरपि प्रयोगार्हत्वात् मध्यमपुरुषः प्रयुक्त इति भावः । **तदनुरोधेन मध्यमनिर्देश इतीति ;** यद्यपि—मानान्तरसिद्धत्वेऽपि त्वंशब्दार्थस्य तच्छब्दार्थप्रकृतित्वविवक्षायां प्रकृतेरेवासिक्रियाकर्तृत्वान्मध्यमपुरुषो भवति ।

अत एव "यदग्ने स्यामहं त्वं त्वं वा स्या अहम्" इति मन्त्रे 'अहं त्वं स्यां, त्वं वा अहं स्याः' इति प्रकृत्याश्रयपुरुषो भवतीति "युष्मद्युपपदे" इति सूत्रे प्रतिपादितम्। ततश्च त्वदात्मक एव सर्वज्ञत्वादिगुणको जगत्कर्तेत्ययमर्थः पर्यवस्यति, विवक्षानुसारित्वाच्छब्दप्रवृत्तेः मानान्तरसदसद्भावयोरप्रयोजकत्वात्। अत एव हि "आत्मेति तूपगच्छन्ति" इत्यधिकरणे आचार्याः स्वयमेव तथा वक्ष्यन्ति; तथाप्यत्रोपायान्तरमुपन्यस्तमिति द्रष्टव्यम्। **सदायतना इत्यनेनाधाराधेयभाव उक्त इति**; "सन्मूलाः सत्प्रतिष्ठाः" इत्यत्र सच्छब्दो विशिष्टपरः। प्रजाशब्दोऽपि कार्यावस्थब्रह्मपरः, केवलस्योपादानत्वासंभवात्। "सदायतनाः" इत्यत्र तु सच्छब्दो विशेष्यस्वरूपमात्रपरः। प्रजाशब्दोऽपि न ब्रह्मपर्यन्तः, अपित्वचिद्विशिष्टजीवमात्रपरः। वैरूप्यमपि प्रामाणिकत्वादभ्युपेयम्। अथवा प्रजाशब्दः सर्वत्र विशेषणमात्रपरः। अस्मिन्नपि पक्षे उपपत्तिः प्रागेव दर्शिता। **सन्मूला इत्यादिवाक्येनैकार्थ्यादिति**; "सर्वं खलु" इति वाक्ये इतिकरणेन हेतुत्वं स्पष्टम्। अनित्यस्य शरीरशरीरिभावार्थत्वमस्पष्टम्। "सदायतनाः" इत्यत्र शरीरशरीरिभावः स्पष्टः। हेतुत्वमस्पष्टम्। ततश्च नष्टाश्वदग्धरथन्यायेनोभयोरपि परस्पराकाङ्क्षतयार्थनिर्णायकत्वमिति भावः।

## श्रुतप्रदीपिका

उक्तदूषणाभावं स्वपक्षे दर्शयति—**जीवेति। निरस्तेत्यादिना** तच्छब्दावगतगुणाविरोध उक्तः। अन्यत् स्पष्टम्। तत्पदं नोद्देश्यपरं, ब्रह्मणो मानान्तरावेद्यत्वात्। न च त्वंपदं जीवशरीरकब्रह्मपरम्, ब्रह्मणो जीवशरीरकत्वाज्ञानात्। अतस्त्वमिति जीवमात्रमुद्दिश्य तदिति स्वरूपैक्यविधानमिति शङ्कते—**तत्त्वमिति**। परिहरति—**नात्रेति**। ततः किमित्यत्राह—**अप्राप्ते हीति**। **इदमिति**; ऐतदात्म्यमित्यचित्तदात्मत्वोक्तिः; अतो जीवतादात्म्यमप्राप्तमित्यत्राह—**सजीवमिति**। सर्वशब्दस्वारस्यात् "सर्वाः प्रजाः" इति पूर्ववाक्यानुगुण्यात् "इदं सर्वमसृजत" "सच्च त्यच्चाभवत्" "विज्ञानं चाविज्ञानं च" इति श्रुत्यन्तरानुरोधाच्च सर्वशब्दश्चिदचित्पर इति भावः। 'मृदात्मको घटः' इतिवत् स्यादित्यत्राह—**तत्रेति**। सदायतनत्वाच्छरीरशरीरिभावः। हेतुत्वस्पाष्ट्यायाह—**सर्वमिति**। सदायतनत्वस्थाने तदनत्वम्। अनुप्रविश्य प्रशासनेन धृत्या हि स्थितिः।

नयप्रकाशिका

(समस्तकल्याणगुणस्य हेयप्रतिभटस्य परमात्मनः शरीरमेव जीवात्मस्वरूपम् । तद्धर्मो जीवस्याज्ञानतिरोहितत्वेन नित्यो न ज्ञातः । तत्स्वरूपं प्राप्यते—"तत्त्वमसि" इति । प्रकृतपरमात्मनः शरीरमित्यर्थः ।) एवं पदद्वयस्यापि न मुख्यत्वहानिः, जगत्कारणत्वजीवप्रकारत्वविशिष्टब्रह्मपरत्वात् । तत्तत्प्रकारविशिष्टैकवस्तुप्रतिपादनात् सामानाधिकरण्यमपि मुख्यवृत्तम् । जीवान्तर्यामित्वप्रसाधनात् परमात्मनो नित्यैश्वर्यस्यापि न भङ्गः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अपि न हानिः, स्थूलसूक्ष्मचिदचिद्विशिष्टब्रह्मण एव कार्यत्वेन कारणत्वेन च कार्यकारणयोरनन्यद्रव्यत्वात् । न ब्रह्मणः कल्याणगुणत्वहानिश्च । कल्याणगुणयोगित्वं हेयप्रतिभटत्वं च तस्य "तमीश्वराणाम्" इत्यादिश्रुतेः । पक्षान्तरे तु सर्वदोषः । ननु "तत्त्वमसि" इत्यत्र किं ब्रह्मणो जीवशरीरकत्वं विधीयते ? किं वा जीवस्य ब्रह्मशरीरत्वमिति चेत्, उच्यते—"ऐतदात्म्यमिदं सर्वम्" इत्यादिना प्रतिपादितार्थोपसंहारत्वात् "तत्त्वमसि" इत्यस्य न कस्याप्यर्थस्य विधायकत्वमिति । अज्ञातज्ञापनं हि शास्त्रम् । तद्वाक्ये हि "इदं सर्वम्" इति प्रपञ्चोद्देशेन "ऐतदात्म्यम्" इति परमात्मात्मकत्वं ज्ञाप्यते । कथमस्य तदात्मकत्वमित्यत्र हेतुरुच्यते—"सन्मूलाः" इत्यादिना । सन्मूला इत्यादयो हेतुगर्भविशेषणानि ; सन्मूलत्वात् सदायतनत्वात् सत्प्रतिष्ठत्वादित्यर्थः । सन्मूलत्वात्; सच्छब्दवाच्यपरमात्मशेषत्वादित्यर्थः । सदायतनत्वादिमाः प्रजाः । अतः सतः परमात्मन आयतनमिति षष्ठीसमासोऽत्राश्रयणीयः । अन्यथा "सत्प्रतिष्ठाः" इत्यनेन पुनरुक्तिप्रसङ्गात् । सदायतनाः ; सन्नियाम्या इत्यर्थः । सत्प्रतिष्ठत्वात्; सद्धार्यत्वादित्यर्थः । अतः सचेतनप्रपञ्चस्य परमात्मशेषत्वान्नियाम्यत्वाद्धार्यत्वाच्च तच्छब्दवाच्यपरमात्मशरीरत्वमित्यर्थः । परस्य सर्वनियन्तृत्वशेषित्वधारकत्वैः सर्वात्मकत्वमपि सिद्धम् । एतच्छ्रुत्यर्थ एव "न विलक्षणत्वात्" इत्यधिकरणे शरीरलक्षणत्वेनोक्तः । लक्षणं ह्यसाधारणो धर्मः । तच्च प्रतिज्ञातार्थस्य वस्तुतो हेतुरेव । अथ सन्मूलत्वस्य कथं शेषत्वमिति चेत्, कार्याणां कारणेष्वतिशयाधानैकस्वरूपत्वादिति ब्रूमः । कार्यत्वं नाम कारणावस्थाविशेष एव । अवस्थाश्चावस्थावतोऽतिशयाधायकत्वेनैवोपादेयाः । 'परगतातिशयाधानेच्छयोपादेयत्वमेव यस्य स्वरूपं स शेषः' इति शेषलक्षणम् । अतो जगतः परमात्मात्मकत्वहेत्वभिधानपरं सन्मूला इति वाक्यम् । यथा शान्तिविधिपरे वाक्ये सर्वात्मकत्वप्रति-

ज्ञाया: "तज्जलान्" इति हेतुनिर्देश: । तज्जत्वात्तल्लत्वात्तदनत्वाच्च इदं सर्वं ब्रह्म खल्विति हि तस्यार्थ: । "सर्वं खल्विदं ब्रह्म" इति वाक्यस्य शान्तिपरत्वाङ्गीकारात् वाक्यभेदो भाष्यकाराङ्गीकृत इति प्रतीयते । अत: "सर्वत्र प्रसिद्ध" इति सूत्रस्य पूर्वव्याख्यानमप्युपादेयत्वेनैव कृतम् । अत: शरीरशरीरिभावनिबन्धन एव सर्वत्र जगद्ब्रह्मणोस्तादात्म्यनिर्देश: । ननु विकारित्वेऽपि तादात्म्यनिर्देश उपपन्न इति चेत्—न; स्वरूपेण विकारे श्रुतिविरोधात्, शरीरशरीरिभावेन तादात्म्यस्य "अन्त: प्रविष्ट: शास्ता" इत्यादौ कण्ठोक्तेश्च ।

**न्यायसुदर्शनम्**

(ननु "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इत्यत्र केयं शरीरशरीरिभावप्रतीति: ? यावता "ऐतदात्म्यमिदं सर्वम्" इति "मृदात्मको घट:" इतिवत् सर्वस्य तद्द्रव्यत्वं प्रतीयते । उच्यते—प्रतीयत एवात्र जगद्ब्रह्मणो: शरीरशरीरिभाव: । "स एषोऽणिमा" ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति हि श्रुति: । तत्रास्य वाक्यस्य कार्यकारणैकद्रव्यत्वप्रतिपादनपरत्वेऽपि शरीरशरीरिभाव: प्रतीयते । कथमिति चेत्, स एषोऽणिमेत्यत्र तावत् स एषोऽणीयानिति ह्यर्थ:, केवलपरिमाणस्यावस्थानायोगात् । अत: इमनिच् ईयसुनर्थ: । अणीयस्त्वेन निर्दिष्टं च न ब्रह्मस्वरूपमात्रम्, स्वरूपमात्रस्य कारणत्वे तस्य जगद्रूपेण परिणामप्रसङ्गेनाविकारित्वशास्त्रविरोधात् । न ब्रह्मण्यध्यस्तमिदं जगदित्ययमर्थोऽत्र प्रतिपाद्यते, तत्र स्थितदृष्टान्तविरोधात् । बीजन्यग्रोधदृष्टान्तोऽत्र प्रतिपाद्यते—"न्यग्रोधफलमद आहर" इत्यारभ्य "एतस्याणिम्नो महान् न्यग्रोधस्तिष्ठति" इत्यादिना "स एषोऽणिमा ऐतदात्म्यमिदं सर्वम्" इत्यादिना च; तद्वत् । तस्मात्परिणाम एवात्र विवक्षितो नाध्यास: । अध्यासपक्षे शुक्तिकारजतगन्धर्वनगरमरीच्युदकादयो हि दृष्टान्तीकर्तव्या: । तत: स्वरूपमात्रस्याणिमशब्दवाच्यत्वे स्वरूपपरिणामादिदोषप्रसङ्गात् कारणं सशरीरं शरीरद्वारा तस्याणीयस्त्वं च यथा मुक्तस्यानेकधाभाव: शरीरद्वारक इत्युक्तम्—"भावं जैमिनि: विकल्पामननात्" इति । तथा ब्रह्मणोऽपि कादाचित्कसूक्ष्मस्थूलत्वे शरीरद्वारके एव । तस्मादस्य वाक्यस्य कार्यकारणभूतद्रव्यैक्यविवक्षायामपि शरीरशरीरिभावप्रतीतेरपरिहरणीयत्वात् आर्थतद्ग्रहणाद्वरं शाब्दतयैव तस्य ग्रहणमिति "ऐतदात्म्यमिदं सर्वम्" इत्यादि वाक्यं शरीरशरीरिभावपरमित्युक्तम् । अयमर्थ:—य एषोऽणिमा, अणुतरशरीरक: । ऐतदात्म्यमिदं सर्वम्; एतदात्मक-

मिदं सर्वं चेतनाचेतनात्मकं स्थूलाकारं जगत् तस्य शरीरभूतमिति यावत्। अणुतर-शरीरकदशायां च ते चिदचिद्वस्तुन्येव। तस्य सूक्ष्मभूते शरीरे अवस्थाद्वयेऽपि शरीरिभूतस्य ब्रह्मणः शरीरभूतचिदचिद्वस्तुनोश्च स्वेन स्वेन "बहु स्याम्" इति संकल्प्य तेजः-प्रभृतिसृष्टिवचनेन प्रागपि सूक्ष्मं चिच्छरीरमाकाशादिवदस्तीति गम्यते। अनेन जीवेना-त्मना सृष्टिमनुक्त्वापि सिद्धं कृत्वा तद्व्यवहारदर्शनात् सोऽपि तदानीं सूक्ष्मभूतोऽस्तीति गम्यते। अतः सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्म कारणं, स्थूलचिदचिद्वस्तुशरीरकं तदेव कार्यमिति भाष्यव्यपदेशः। प्राक् सृष्टेरेकत्वं जीवविशिष्टस्वरूपस्य ब्रह्मण एवाचिच्छरी-रतयेति वक्ष्यामः। अतोऽनेन वाक्येन शरीरशरीरिभावः कार्यकारणैक्यं च सिध्य-तीति गभीरन्यायानुसारिणो भाष्यकारस्याभिप्रायः। तत एव "बहु स्याम्" इति संकल्पितं बहुशरीरत्वं च सिध्यति। उत्तरत्र कार्यावस्थः कारणावस्थश्च परमात्मा एक एवेति भाष्येण इदमेव वाक्यं कार्यकारणद्रव्यैक्यप्रतिपादनपरमित्यपि व्याख्यातम्। ततः उभयथाप्यविरोध इति भावः।)

### श्रीभाष्यम्

तथा श्रुत्यन्तराणि च ब्रह्मणस्तद्व्यतिरिक्तस्य चिदचिद्वस्तुनश्च शरीरात्मभावमेव तादात्म्यं वदन्ति—"अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "यः पृथिवीमन्तरे संचरन्" इत्यारभ्य "यस्य मृत्युः शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" "तत्सृष्ट्वा, तदेवानुप्राविशत्, तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादीनि। अत्रापि—"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति ब्रह्मात्मकजीवानुप्रवेशेनैव सर्वेषां वस्तुत्वं शब्दवाच्यत्वं च

प्रतिपादितम् । "तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यनेनैकार्थ्याज्जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मानुप्रवेशादेवेत्यवगम्यते । अतश्चिदचिदात्मकस्य सर्वस्य वस्तुजातस्य ब्रह्मतादात्म्यमात्मशरीरभावादेवेति निश्चीयते । तस्मात् ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य तच्छरीरत्वेनैव वस्तुत्वात्तस्य प्रतिपादकोऽपि शब्दस्तत्पर्यन्तमेव स्वार्थमभिदधाति । अतः सर्वशब्दानां लोकव्युत्पत्त्यवगततत्तत्पदार्थविशिष्टब्रह्माभिधायित्वं सिद्धमिति "ऐतदात्म्यमिदं सर्वम्" इति प्रतिज्ञातार्थस्य "तत्त्वमसि" इति सामानाधिकरण्येन विशेष उपसंहारः ।

**श्रुतप्रकाशिका**

अथ "सर्वं खल्विदं ब्रह्म" इति वाक्यप्रतिपन्नस्य तादात्म्यस्य शरीरशरीरिभावनिबन्धनत्वं नियन्तृत्वनियाम्यत्वादिना शरीरशब्देन च विशदयितुं श्रुतिवाक्यानि दर्शयति—**तथेति** । "अन्तः प्रविष्टः शास्ता" इत्येतत् सर्वात्मशब्दव्याख्यानरूपम् । अनेन शरीरात्मभाव उक्तः । अन्तः प्रविश्य नियाम्यत्वं हि शरीरत्वम् । तत्स्पष्टीकरणार्थमुदाहरति—**यः पृथिव्यामिति** । "यः पृथिव्याम्" "य आत्मनि" इति पर्यायद्वयेन चेतनाचेतनयोर्भगवन्तं प्रति शरीरत्वमुक्तम् । "आत्मनि तिष्ठन्" इत्युक्ते 'वेद्यामग्निस्तिष्ठति' 'तिले तैलं तिष्ठति' इतिवद्बहिरबहिःस्थितिसाधारण्यं स्यात् तद्वैशद्यार्थमाह—**आत्मनोऽन्तर इति** ; "अन्तरो यमयति" इत्यनेन शरीरलक्षणमुक्तम् । तस्मात्तन्नियाम्यं तच्छरीरमित्यर्थः । न च 'शिलापुत्रकस्य शरीरम्' इतिवदयं निर्देशः, अपवादकाभावे व्यतिरेकनिर्देशस्वारस्यभङ्गायोगात्, "यस्य पृथिवी शरीरम्" इति व्यतिरेकनिर्देशस्वारस्यभङ्गाभावस्य प्रकरणसिद्धत्वात्, तदपवादाभावे तत्राप्यौपचारिकत्वाश्रयणायोगात् । अधिकरणाधिकर्तव्यभावव्याप्यव्यापकभावाङ्गप्राङ्गभावनियाम्यनियन्तृभावरूपविरुद्धधर्मैः स्वारस्यभङ्गस्यात्यर्थमपोदितत्वाच्च । "यं पृथिवी न वेद" इति दृष्टान्तार्थम् । यथा अचेतनं न वेत्ति तथा चेतनोऽपीति भावः । "य आत्मनि" इति पर्यायेण परिशुद्धात्मनो भगवच्छरीरत्वमुच्यते, नक्षत्रचन्द्रादित्यादीनामचित्संसृष्टचेतनविशेषाणां परमात्मशरीरत्वस्य पृथगुक्तत्वात्, "यः सर्वेषु भूतेषु तिष्ठन्" इत्यनुक्तानामपि

संसृष्टजीवानां परमात्मशरीरत्वस्य पृथगुक्तत्वाच्च। न च भूतशब्दः पृथिव्याद्यचिन्मात्रपरः, "यस्य पृथिवी शरीरं यस्यापः शरीरम्" इत्यादिना पृथिव्यबादीनां भूतानां पृथगुक्तत्वात्। "यमात्मा न वेद" इतीयत्तया वेदननिषेधः भगवत्प्रसादेन विना तज्ज्ञानस्य शक्यत्वनिषेधो वा क्रियते। कारणावस्थमपि भगवतः शरीरं शरीरी च नारायणाख्यो देवताविशेष इति ज्ञापयितुमाह—**यः पृथिवीमन्तरे संचरन्निति। मृत्युः**; तमःशब्दवाच्या प्रकृतिः, तत्रैव तमःशब्दस्थाने मृत्युशब्दपाठात्। शरीरशरीरिभावस्तत्तन्नामभाक्त्वनिर्वाहक इत्याह—**तत्सृष्ट्वेति।** न केवलं श्रुत्यन्तरानुरोधादैतदात्म्यशब्दार्थो निश्चीयते; स्वप्रकरणवाक्यादपीत्याह—**अत्रापीति।** अनेन जीववाचिशब्दस्य परमात्मपर्यन्तत्वमपि श्वेतकेतुनावगतमिति सिद्धम्। **जीवेनात्मना**; जीवशरीरकेण मया "व्याघ्रेण भूत्वा बहवो मयात्ताः" इतिवत्। नामरूपे इति पदं व्याचष्टे—**वस्तुत्वं शब्दवाच्यत्वं चेति**; तत्तद्देवादिवस्तुत्वं देवादिशब्दवाच्यत्वं चेत्यर्थः। अचिद्ब्रह्मणोस्तादात्म्यमनुप्रवेशकृतमस्तु; जीवब्रह्मणोस्तु स्वरूपैक्यकृतमेव स्यात्, "जीवेन मया" इति श्रवणादित्यत्राह—**तदनुप्रविश्येति।** ननु—जीवमनुप्रविष्टस्यापि ब्रह्मणो नामवाच्यत्वं न व्याकरणात्सिध्यति, नामरूपव्याकरणश्रुतेर्नामवाच्यत्वप्रतिपादनपरत्वाभावात्। यथा रूपव्याकरणं रूपनिष्पादनमात्रं, न तु स्वस्य तद्बोध्यत्वापादनम्, एवं नामव्याकरणमपि शब्दसृष्टिरेव, न तु तद्बोध्यत्वापादनमिति। नैवम्—"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इति समानवाक्ये इदंशब्दवाच्यजगदात्मकब्रह्मणः प्रलयदशायामुपसंहृतनामरूपस्य सृष्टिदशायां नामरूपाभ्यां व्याकृतत्वश्रवणात्। "नामरूपाभ्याम्" इतीत्थंभावे तृतीया। नामरूपाभ्यां विशिष्टमक्रियतेत्यर्थः। न च नामकर्तृत्वमेव नामविशिष्टत्वं, न तु नामवाच्यत्वमिति वक्तुं युक्तम्; संज्ञासंज्ञिसंबन्धव्युत्पादके नामोच्चारयितरि च पुरुषे घटादिनामविशिष्टत्वाप्रसिद्धेः। नामवाच्यस्यैव हि नामविशिष्टत्वप्रसिद्धिः। उच्चारयितुः शब्दोपादानत्वाभावान्नामविशिष्टत्वाप्रसिद्धिः; कृत्स्नोपादानस्य तु ब्रह्मणः शब्दोपादानत्वयोगात् रूपविशिष्टत्ववन्नामविशिष्टत्वोपपत्तिरिति चेत्—न; नभसि घटादिनामविशिष्टत्वाप्रसिद्धेः। न हि घटादिनामविशिष्टत्वे कथिते नभसो नामित्वं स्वरसतः प्रतीयते। वाच्यत्वेन शब्दसंबन्धिष्वेव हि नामित्वप्रतीतिस्वारस्यम्। न च लक्षणावृत्त्यापि तत्तन्नामबोध्यत्वं ब्रह्मणः संभवतीति वाच्यम्, लक्षणागौणवृत्तिगोचरयोः कूलमाणवकयोर्गङ्गापदाग्निपदापेक्षया नामि-

त्वाप्रसिद्धेः। ननु श्येनशब्दस्य यागविशेषं प्रति गौणनामत्वं निर्णीतम्—सत्यम्; तद्-गत्याश्रितं, प्राणहारित्वगुणसाम्यात् प्रयोगान्यथासिद्धेः। "यथा वै श्येनो निपत्यादत्ते" इति श्रुतिः। मुख्यस्यैव हि शब्दस्य नामत्वप्रतीतिः। अत्र तु स्वतः प्राप्तस्य मुख्यत्व-स्यापवादाभावान्न तत्प्रहाणं युक्तम्। अतोऽनेन वाक्येन नामवाच्यत्वं शब्दस्वारस्यादवगम्यते। एतदैकार्थ्यात् "नामरूपे व्याकरवाणि" इत्यत्रापि ब्रह्मपर्यन्तनामरूपव्याकरणमेव विवक्षितम्। किंच न तावत् वर्णसृष्टिप्रतिपादनशङ्कापि भवितुमर्हति, नामशब्दस्य वर्णमात्रपर्यायत्वाभावात्। ब्रह्मव्यतिरिक्तसमस्ततत्तत्पदार्थस्वरूपनिष्पादनस्य रूपव्याकरणोक्तिसिद्धत्वेन गगनासाधारण-रूपशब्दनिष्पादनस्यापि रूपव्याकरणोक्त्यैव सिद्धत्वात्तत्प्रतिपादनवैयर्थ्यं च स्यात्। न च रूपशब्दस्य गोबलीवर्दन्यायेन संकोचः, संकोचकस्य नामव्याकरणनिर्देशस्यान्यथासिद्धत्वात्। अतो निष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेव नामव्याकरणं स्यात्। तत्र "बहु स्याम्" इत्यनेन स्रक्ष्यमाणबहुत्वस्य ब्रह्मविशेषणत्वावगमात् अस्मिन्वाक्येऽपि व्याकरण-स्यानुप्रवेशपूर्वकत्वप्रतिपादनाच्च व्याक्रियमाणरूपस्य ब्रह्मविशेषणत्वमवगम्यते। अतो ब्रह्मवि-शेषणरूपसमभिव्याहारान्नाम्नोऽपि ब्रह्मविशेषणत्वमवगम्यते। नाम्नो विशेषणत्वं वाचकतयै-वेत्युपपादितम्। कृत्स्नस्य रूपस्य ब्रह्मविशेषणत्वरूपावगमात् तत्तद्रूपप्रवृत्तिनिमित्तकत्वाच्च नाम्नां ब्रह्मविशेषणत्वं तस्य वाचकतयैवेत्यवगम्यते। स्रक्ष्यमाणबहुत्वविषयस्य बहुशब्दस्योप-क्रमे ब्रह्मपर्यन्तत्वेन प्रयोगदर्शनादुपक्रमोक्तबहुत्वावान्तरभिदारूपवत्तत्तद्रूपवाचिनां च नाम्नां ब्रह्मवाचकतया तद्विशेषणत्वमवगम्यते। "तत्तेज ऐक्षत" "ता आप ऐक्षन्त" इति प्रकरणे तेजःप्रभृतिशब्दानां परमात्मविषयतया प्रयोगदर्शनाच्च नाम्नां ब्रह्मविशेषणत्वं तद्वाचकतयेत्यवगम्यते। "वचसां वाच्यमुत्तमम्" "हरिरखिला-भिरुदीर्यते तथैकः" "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इत्यादिस्मृतिस्वारस्याच्च नामवाच्यत्वमवगम्यते। ततश्च "नामरूपे व्याकरवाणि" इति श्रुतिश्चिदचिद्विशिष्टस्य ब्रह्मणस्त-न्नामवाच्यत्वमेव प्रतिपादयतीति सिद्धम्। ऐतदात्म्यशब्दार्थव्याख्यानं निगमयति—**अत इति**। शरीरवाचिशब्दानां शरीरिपर्यन्तत्वं निगमयति—**तस्मादिति**। तस्मात्; उदाहृत-वाक्यैः शरीरशरीरिभावप्रतिपादनात् तस्य तत्तन्नामभाक्त्वनिर्वाहकत्वाच्चेत्यर्थः। ननु न तत्पर्यन्ताभिधानमुपपद्यते, लोके तत्तद्वस्तुमात्रपर्यन्तत्वेन व्युत्पन्नतया व्युत्पत्तिभङ्गप्रसङ्गात्; ब्रह्मण एकत्वेन द्वित्वबहुत्वानुपपत्तेश्चेत्यत्राह—**अतः सर्वशब्दानामिति**। लोकव्युत्पत्तिशब्द-

स्यायं भावः—नात्र व्युत्पत्तिविरोधः, व्युत्पन्नार्थापरित्यागात् । ब्रह्मणो लौकिकप्रमाणागोचर-तया तत्पर्यन्तव्युत्पत्त्यभावः, न त्ववाचकतयेति सोऽन्यथासिद्धः । यथा लिङादेरपूर्ववाचित्वं वेदव्युत्पत्त्यावगम्य लोकतो व्युत्पत्त्यभावपरिहारः कार्यवाक्यार्थवादिभिरुच्यते तद्वत् । तत्तत्पदार्थविशिष्टशब्देन ब्रह्मणोऽपि द्वित्वबहुत्वादिकं सद्वारकमुपपन्नमित्युक्तं भवति । "तत्त्वमसि" इत्यस्योपसंहारवाक्यतामाह—**इत्यैतदात्म्यमिति । सामानाधिकरण्येन विशेष उपसंहार इति ;** वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहारः, सामान्येन प्रतिज्ञातस्य विशेष उपसंहार इत्यर्थः । "तदैक्षत" इत्यादिना तच्छब्दार्थः प्रतिपन्नः। "ऐतदात्म्यम्" इत्यादिना जीवस्य ब्रह्मात्मकत्वं प्रतिपन्नम् । "अनेन जीवेन" इत्यादिना जीववाचिशब्दानां ब्रह्मपर्यन्तत्वं च प्रतिपन्नमिति नात्रोद्देश्योपादेयविभागः । अयं ह्यप्राप्तार्थप्रतिपादकवाक्यानाम् ; न तु निगमनवाक्यानाम्, तेषां प्राप्तविषयत्वात् । निगमनं चोक्तार्थप्रतिष्ठार्थत्वादपेक्षितं दृश्यते । तस्मान्निगमनवाक्येऽस्मिन्नुद्देश्योपादेयविभागमुखेन चोद्यस्य नावकाश इति परिहार उक्तो भवति । यत्र त्वप्राप्तार्थपरवाक्ये जगद्ब्रह्मणोः सामानाधिकरण्यं, तत्र ब्रह्मणस्तद्रूपनामभाक्त्वं विधेयं ज्ञातव्यम् ।

**भावप्रकाशिका**

**शरीरात्मभाव उक्त इति ;** आत्मत्वप्रतिपादनेन शरीरत्वमिति फलितमिति भावः । **साधारण्यं स्यादिति ;** अतश्चान्यतरमात्रेऽपि पर्यवस्येदिति भावः । **अयं निर्देश इति ;** "यस्यात्मा शरीरम्" इत्यादिनिर्देश इत्यर्थः । **अधिकरणाधिकर्तव्येति ;** "य आत्मनि तिष्ठन्" इत्यधिकरणाधिकर्तव्यत्वमुक्तम्, "आत्मनोऽन्तरः" इति व्याप्यव्यापकभावः, "यमात्मा न वेद" इत्यज्ञप्राज्ञभावः, "य आत्मानमन्तरो यमयति" इति नियाम्यनियन्तृभावश्चोक्त इति भावः । **पृथिव्यबादीनामिति ;** "ऋक्पूरब्धूः" इत्यप्रत्ययाभावः समासान्तविधेरनित्यत्वादिति द्रष्टव्यम् । अन्तर्यामिब्राह्मणेनैव चारितार्थ्यात् "यः पृथिवीमन्तरे संचरन्" इति सुबालवाक्योपादानस्य प्रयोजनमाह—**कारणावस्थमपीत्यादिना । जीवेन मयेति श्रवणादित्यत्राह—तदनुप्रविश्येतीति ;** ननु श्रुत्यन्तरे तादृशवाक्यान्तरसद्भावेऽप्यश्रुतवेदान्तान्तरस्य श्वेतकेतोः "अनेन जीवेनात्मना" इत्यनेन वाक्येन जीवब्रह्माभेदसिद्धिः कस्मान्न स्यादिति चेत्—न ; अत्रापि प्रकरणे "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" इत्यनेन प्रजाशब्दार्थस्याचित्संसृष्टचेतनस्य सच्छरीर-

त्वादिकथनेन "सता सोम्य तदा संपन्नो भवति" इत्यादिभेदनिर्देशेन चाभेदभ्रमनिवृत्त्युपपत्तेः । **नामरूपाभ्यामितीत्थंभावे तृतीयेति ;** यद्यप्येकीकृतं वस्तु नामरूपाभ्यां करणाभ्यां विभिन्नतयाऽक्रियत अज्ञाप्यत इत्येवं व्याकरणे नामरूपयोः करणत्वमपि संभवति ; कारकविभक्तित्वसंभवे उपपदविभक्तित्वं चान्याय्यम् ; तथाप्युपायान्तरप्रदर्शनपरत्वाददोष इति ध्येयम् । **संज्ञासंज्ञिसंबन्धव्युत्पादक इति ;** संकेतयितरि पित्रादावित्यर्थः । **गङ्गापदाग्निपदापेक्षया नामित्वाप्रसिद्धेरिति ;** न च—घटपदवाच्यस्यापि कलशस्य नामित्वं नास्त्येव, घटशब्दस्य संज्ञाशब्दत्वाभावादिति वाच्यम् ; अन्यत्र नामशब्दस्य घटादिशब्दसाधारणवाचकत्वमात्रार्थकत्वेन संज्ञाशब्दपर्यायत्वाभावादिति भावः । **निष्पाद्यमानतत्तद्रूपवाचकशब्दव्युत्पादनमेवेति ;** तत्तद्रूपवाचकशब्दवाच्यत्वसंपादनमेवेत्यर्थः । ननु- अस्तुनामव्याकरणं शब्दवाच्यत्वसंपादनं, तथापि चिदचितोरेव नामवाच्यत्वसिद्धिः; न ब्रह्मणः, ब्रह्मपर्यन्तत्वे प्रमाणाभावात् , "तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यत्रापीदंशब्दस्य जगद्वाचितया ब्रह्मवाचित्वाभावादित्याशङ्क्य नामवाच्यत्वस्य ब्रह्मपर्यन्तत्वमुपपादयति—**तत्र बहु स्यामित्यनेनेत्यादिना ;** तत्र ; नामव्याकरणस्य नामवाच्यत्वसंपादनरूपत्वे सतीत्यर्थः । **लोकतो व्युत्पत्त्यभावपरिहार इति ;** लौकिकानामपूर्वे व्युत्पत्तिः कुतो नास्तीति शङ्कायामपूर्वस्य लौकिकप्रमाणागोचरत्वेनेति यथा परिहारः क्रियते तथेत्यर्थः । **वैयधिकरण्येन प्रतिज्ञातस्य सामानाधिकरण्येनोपसंहार इति ;** "ऐतदात्म्यम्" इति बहुव्रीहिणा वैयधिकरण्येन " इदं सर्वम्" इति सामान्येन च निर्दिष्टस्य शरीरात्मभावस्य "तत्त्वमसि" इति सामानाधिकरण्येन विशेषे उपसंहारः कृत इत्यर्थः । **न तु निगमनवाक्यानामिति ;** ननु यथा 'धूमवान् सर्वोऽपि वह्निमान्' इति पर्वतसाधारण्येन धूमवत्त्वावच्छेदेन वह्निमत्त्वव्याप्त्युपदर्शनेन ज्ञातत्वेऽपि 'पर्वतो वह्निमान्' इति वाक्यस्यैतत्पर्वतत्वावच्छेदेन वह्निप्रतिपादकस्य यथोद्देश्योपादेयत्वम् , एवमिह किं न स्यादिति चेत्—न ; तत्रापि 'इमे पर्वता वह्निमन्तः' इति पुरोवर्तिपर्वतसाधारण्येन निश्चयस्थले उद्देश्योपादेयविभागाभावस्येष्टत्वादिति भावः ।

### श्रुतप्रदीपिका

शरीरशब्दनियन्तृनियाम्यत्वादिभिः स्फुटयितुमाह—**तथेति । अन्तरिति ;** सर्वात्मत्वव्याख्या । तच्च विशदयति—**य इति । न वेदेति;** "यमात्मा" इत्यस्य दृष्टान्त-

तथा देवताविशेषस्य कारणदशायामपि चिदचिच्छरीरत्वायाह—**यः पृथिवीमिति** । अनुप्रवेशस्य नामभाक्त्वहेतुतां दर्शयति—**तत्सृष्ट्वेति** । स्वप्रकरणेऽपि दर्शयति—**अत्रापीति** । "जीवेनात्मना" इति जीवस्य ब्रह्मात्मकत्वं व्यासिक्तमिति स्फुटयति—**तदनुप्रविश्येति** ; "सिंहेन भूत्वा बहवो मयात्ताः" इतिवदित्यर्थः । "ऐतदात्म्यम्"इत्यस्य देहात्मनिबन्धनतां निगमयति—**अत इति** । देहवाचिशब्दानां देहिनि मुख्यत्वं निगमयति—**तस्मादिति** । तस्मात्; शरीरत्वनामभाक्त्वहेतुत्वश्रुतेः । व्युत्पत्तिभङ्गः द्वित्वाद्यनुपपत्तिश्चे-त्यत्राह—**अत इति** । ब्रह्मणो मानान्तरावेद्यत्वात् तत्पर्यन्तव्युत्पत्त्यभावः । द्वित्वादिकं सद्वारकमित्यर्थः । उद्देश्योपादेयपरिहारं निगमयति—**इतीति** ; वैयधिकरण्येन सामान्ये-नोक्तस्य सामानाधिकरण्येन विशेष उपसंहार इत्यर्थः ।

### नयप्रकाशिका

ननु सद्विद्याप्रकरणे "अनेन जीवेनात्मना" इति ब्रह्मणः स्वरूपेण जीवत्वं प्रतीयत इति चेत्—न ; तन्निर्देशस्यापि शरीरशरीरिभावनिबन्धनत्वात्, "अनेन जीवेन" इति पृथङ् निर्दिश्य "आत्मना"इति सामानाधिकरण्यनिर्देशात्; अन्यथा आत्मनेत्येतावदेव निर्देशः स्यात् । "तत्सृष्ट्वा" इत्यादिवाक्यसाम्याच्च ; "तत्सृष्ट्वा" इति सृज्यं पृथगभिधाय "अनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यनुप्रवेशनिबन्धनत्वेन ब्रह्मणस्तत्तदर्थत्वाभिधानात् । अतो ब्रह्मव्यतिरिक्तस्य ब्रह्मशरीरत्वेन ब्रह्मप्रकारत्वात् तत्प्रकारवाचकशब्दानां तत्प्रकारिणि पर्यवसानम् । लौकिकानामेवंविधप्रतीत्यभावस्तु वेदान्तश्रवणरूपसहकारिविरहात् । अतः "ऐतदात्म्यम्" इति सिद्धैकदेशार्थानुवादेन "तत्त्वमसि" इत्युपसंहार एव । सर्वस्य तदन्तरात्मकत्वात्त्वापि सर्वान्तर्गतत्वेन त्वमपि तदन्तरात्मक इत्यर्थः ।

### श्रीभाष्यम्

**अतो निर्विशेषवस्त्वैक्यवादिनो भेदाभेदवादिनः केवलभेदवा-दिनश्च वैयधिकरण्येन सामानाधिकरण्येन च ब्रह्मात्मभावोपदेशाः सर्वे परित्यक्ताः स्युः । एकस्मिन् वस्तुनि कस्य तादात्म्यमुपदिश्यते? तस्यैवेति चेत्, तत् स्ववाक्येनैवावगतमिति न तादात्म्योपदेशावसेय-मति किंचित् । कल्पितभेदनिरसनमिति चेत्, तत्तु न सामानाधि-**

करण्यतादात्म्योपदेशावसेयमित्युक्तम् । सामानाधिकरण्यं तु ब्रह्मणि प्रकारद्वयप्रतिपादनेन विरोधमेवावहेत् । भेदाभेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात् तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुःष्युरिति निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः । स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणवत् दोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव । केवलभेदवादिनां चात्यन्तभिन्नयोः केनापि प्रकारेणैक्यासंभवादेव ब्रह्मात्मभावोपदेशा न संभवन्तीति सर्ववेदान्तपरित्यागः स्यात् ।

### श्रुतप्रकाशिका

एवं भेदश्रुतिघटकश्रुत्यविरोधार्थं "तत्त्वमसि" इति वाक्यसामानाधिकरण्यं शरीरशरीरिभावेनोपपादितम् । शरीरवाचिशब्दानां शरीरिपर्यन्ताभिधानं जातिगुणपदयोर्व्यक्तिगुणिपर्यन्ताभिधानवत् संभवतीत्याकृत्यधिकरणन्यायेनोपपिपादयिषुः शरीरवाचिशब्दानामाकृत्यधिकरणन्यायविषयतानिरूपणरूपस्य "अंशो नानाव्यपदेशात्" इत्यधिकरणस्य पूर्वपक्षभूतेष्वर्थेषु दूषणमाह—**अत इति** । **अतः**; जगद्ब्रह्मणोः श्रुतिभिः शरीरशरीरिभावप्रतिपादनात् तस्य च तत्त्वमस्यादिविरोधाभावाच्चेत्यर्थः । भेदाभेदवादिशब्देनौपाधिकस्वाभाविकभेदाभेदवादिनोर्द्वयोरपि तन्त्रेणोक्तिः । केवलभेदशब्देन स्वपर्यवसितभेदो विवक्षितः । तद्वादिनश्च वैशेषिकादयः । वैयधिकरण्यं च "अस्यैष आत्मा" इत्येवंरूपत्वादुपदेशस्य । ब्रह्मात्मभावोपदेशपरित्यागः कथमिति शङ्कायां मृषावादिपक्षे तदनुपपत्तिं वक्तुमाह— **एकस्मिन्निति** । शङ्कते—**तस्यैवेति** । प्रतिवक्ति—**तदिति** । **स्ववाक्येन**; "सत्यं ज्ञानम्" इत्यादिना स्वरूपपरवाक्येन । प्रतिपन्नादधिकार्थप्रतिपत्तिरस्ति वा, न वा? प्रथमे सविशेषत्वम् । द्वितीये तादात्म्योपदेशवैयर्थ्यमिति भावः । पुनः शङ्कते—**कल्पितेति** । दूषयति—**तदिति**; प्रकारद्वयोपस्थापकत्वादिति भावः । **सामानाधिकरण्यतादात्म्येति**; सामानाधिकरण्येन तादात्म्योपदेशावसेयमित्यर्थः । न केवलमसाधकत्वम्; विरुद्धमपीत्याह—**सामानाधिकरण्यं त्विति** । औपाधिकभेदाभेद-

वादे तदनुपपत्तिमाह—**भेदाभेदेति** । क्लेशकर्माद्यस्पृष्टः सार्वज्ञ्यादिगुणको हीश्वरः । अत ईश्वरस्य निर्दोषस्य तदनर्हानीश्वरतादात्म्यव्याघातादीश्वरतादात्म्योपदेशो विरुद्ध इत्यर्थः । **परित्यक्ताः स्युः** ; परित्यागः फलित इत्यर्थः । स्वाभाविकभेदाभेदपक्षे तदनुपपत्तिमाह—**स्वाभाविकेति** । **गुणवत् दोषाश्च स्वाभाविका भवेयुरिति** ; ब्रह्मण ईश्वरांशेन सार्वज्ञ्यादिगुणा इव जीवांशेन दोषाश्च स्वाभाविका भवेयुः ।

" अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते ।
अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥ "

इति संसारप्रवाहानन्त्येन दोषा नित्याः स्युरित्यर्थः । यद्वा तत्तद्दोषसंबन्धार्हत्वं स्वाभाविकं स्यादित्यर्थः । ततः किमित्यत्राह—**इति निर्दोषेति** । सद्ब्रह्मात्मादिशब्दानां नारायणशब्दपर्यवसायित्वेनेश्वरातिरिक्तवस्तुनिषेधादिभिरीश्वरस्यैव ब्रह्मत्वं सिद्धं कृत्वा " निरवद्यं निरञ्जनम् " इत्यादिश्रुत्युक्तं ब्रह्मणो निर्दोषत्वं चाभिप्रेत्य निर्दोषब्रह्मतादात्म्योपदेशविरोध उक्तः । निर्दोषश्रुतिविरोधः फलितः । तर्हि निर्दोषश्रुतिविरोध इति वक्तव्ये किमर्थं निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध इत्युक्तम् ? उच्यते—हेयानर्हतादात्म्यं हि पुरुषार्थः । स्वरूपैक्ये च ब्रह्मणो हेयार्हत्वात् हेयार्हब्रह्मतादात्म्यधीर्न हेयापहा ; तत्तादात्म्यानुभवोऽप्यपुरुषार्थश्चेत्युपायत्वप्राप्यत्वविरोधात्तादात्म्योपदेशपरवाक्यस्य प्रयोजनपर्यवसानं न स्यात् । न ह्यसिना छिद्यमानस्य कालाग्निना दह्यमानस्य च पुरुषस्योपासनमुपासकानर्थं परिहरति ; न च तत्तादात्म्यधीः कस्यचित् पुरुषार्थः, तद्वदिति ज्ञापनाय तादात्म्योपदेशो विरुद्ध इत्युक्तम् । स्वनिष्ठभेदपक्षं दूषयति—**केवलेति** । **अत्यन्तभिन्नयोः** ; प्रकारप्रकारिभावरहितयोरित्यर्थः । **केनापि प्रकारेण** । विशेष्यांशतोऽप्यैक्यासिद्धिरित्यर्थः ।

### भावप्रकाशिका

**भेदश्रुतिघटकश्रुत्यविरोधार्थमिति** ; द्वाभ्यामपि सामानाधिकरण्यस्याविरोधार्थमित्यर्थः । **तन्त्रेणोक्तिरिति** ; अचिद्ब्रह्मणोर्भेदाभेदौ स्वाभाविकौ ; चिद्ब्रह्मणोस्त्वभेदः स्वाभाविकः, भेदस्त्वौपाधिकः ; मुक्तावभेदवचनादिति भास्करमतम् । चिद्ब्रह्मणोरपि भेदाभेदौ स्वाभाविकौ , मुक्तौ भेदस्यापि निर्देशादिति यादवप्रकाशमतमिति विवेको द्रष्टव्यः । **स्ववाक्येन सत्यं ज्ञानमित्यादिनेति** ; आदिपदेन " सदेव सोम्येदम् " इत्यादेः प्राकरणिकवाक्यस्यापि परिग्रहः । **परित्यागः फलित इत्यर्थ इति** ; स्वारसिकार्थपरित्याग

एवोपदेशपरित्यागः। न हि वेदस्य तदर्थत्यागादन्यस्त्यागोऽस्तीति भावः। ब्रह्मज्ञानेन जीवस्य दोषनिवृत्तेः शास्त्रसिद्धत्वान्नित्यदोषोपहितत्वं ब्रह्मणो बाधितमित्यस्वरसादाह— **यद्वा तत्तद्दोषसंबन्धार्हत्वमिति**; यथा जीवस्य दोषसंबन्धार्हत्वं स्वाभाविकम्, एवं तदभिन्नब्रह्मणोऽपि स्यादित्यर्थः। ननु—निर्दोषब्रह्मतादात्म्योपदेशविरोधो न संभवति। तन्मते ईश्वरस्यैव निर्दोषत्वम्। चिदचिदीश्वरसमुदायात्मकब्रह्मद्रव्यस्य न निर्दोषत्वम्; येन निर्दोषब्रह्मतादात्म्योपदेशविरोधः स्यादित्याशङ्क्याह—**सद्ब्रह्मात्मादिशब्दानामिति। निर्दोषश्रुतिविरोधः फलित इति**; जीवस्य ब्रह्मतादात्म्ये प्रतिपाद्ये ब्रह्मणो निर्दोषत्वश्रुतिर्विरुध्येतेति पर्यवसितोऽर्थः। **हेयापहेति**; "स्रगियं यदि जीवितापहा" इतिवत् "अन्येभ्योऽपि दृश्यते" इति डप्रत्यये "क्विप् च" इति क्विपि वा रूपम्। क्विप्पक्षे बह्वादिषु पाठसामर्थ्यात् ङीषभावे "ऋन्नेभ्यः" इति न ङीबिति धातुवृत्तावुक्तमिति द्रष्टव्यम्। ततश्च "अपे क्लेशतमसोः" इति क्लेशतमसोरेवोपपदयोर्डप्रत्ययविधानमिति कथमिदं रूपमिति न चोदनीयम्।

### श्रुतप्रदीपिका

अथ देहिनि देहशब्दस्य मुख्यत्वमुपपादयितुं देहशब्देष्वाकृतिनयसंचारेण परस्य "अंशो नाना" इत्यधिकरणपूर्वपक्षार्थदूषणमाह—**अत इत्यादिना। अतः**; नामभाक्त्वनिर्वाहकशरीरत्वश्रवणात्। **भेदाभेदेति**; तन्त्रोक्तिरौपाधिकस्वाभाविकयोः। केवलशब्दः स्वनिष्ठपरः। **स्ववाक्यम्**; सत्यज्ञानादि। **केनापि प्रकारेण**; विशेष्यांशतोऽप्यैक्यासिद्धेरित्यर्थः।

### नयप्रकाशिका

(मिथ्यावादिपक्षे तु तादात्म्योपदेशो व्यर्थः, ब्रह्मव्यतिरिक्तवस्त्वनङ्गीकरणात्; ब्रह्मप्रतिपादकवाक्यमात्रादेवाब्रह्मणो ज्ञातत्वात्। न च तादात्म्योपदेशस्य तस्मिन् कल्पितभेदनिरसनपरत्वमिति वाच्यम्, तस्य सामानाधिकरण्यानवसेयत्वस्य पूर्वमेवोक्तत्वात्।) औपाधिकभेदपक्षेऽपि ब्रह्मण उपहितांशस्यैव जीवत्वादुपाधियुक्तदोषवत्ता ब्रह्मण एव। ततश्च "अपहतपाप्मा" इत्यादिश्रुतिविरोधः। यादवप्रकाशमतेऽपि ब्रह्मणः स्वतो जीवत्वाभ्युपगमात् कल्याणगुणवत्त्ववत् दोषवत्तापि, स्वाभाव्यात्। ततश्च निर्दोषत्वप्रतिपादकश्रुतिविरोधः। वैशेषिकादिपक्षेऽपि जीवपरयोरत्यन्तभिन्नत्वाज्जीवात्मनां परमात्मान्तरात्मकत्वानङ्गीकारात् जीवस्य जडत्वसर्वगतत्वाङ्गीकाराच्च सर्वश्रुतिविरोधः।

श्रीभाष्यम्

निखिलोपनिषत्प्रसिद्धं कृत्स्नस्य ब्रह्मशरीरभावमातिष्ठमानैः कृत्स्नस्य ब्रह्मात्मभावोपदेशाः सर्वे सम्यगुपपादिता भवन्ति। जातिगुणयोरिव द्रव्याणामपि शरीरभावेन विशेषणत्वेन 'गौरश्वो मनुष्यो देवो जातः पुरुषः कर्मभिः' इति सामानाधिकरण्यं लोकवेदयोर्मुख्यमेव दृष्टचरम्। जातिगुणयोरपि द्रव्यप्रकारत्वमेव 'खण्डो गौः, शुक्लः पटः' इति सामानाधिकरण्यनिबन्धनम्। मनुष्यत्वादिविशिष्टपिण्डानामप्यात्मनः प्रकारतयैव पदार्थत्वात् 'मनुष्यः पुरुषः षण्डो योषिदात्मा जातः' इति सामानाधिकरण्यं सर्वत्रानुगतमिति प्रकारत्वमेव सामानाधिकरण्यनिबन्धनं, न परस्परव्यावृत्ता जात्यादयः। स्वनिष्ठानामेव हि द्रव्याणां कदाचित् क्वचित् द्रव्यविशेषणत्वे मत्वर्थीयः प्रत्ययो दृष्टः 'दण्डी कुण्डली' इति, न पृथक्प्रतिपत्तिस्थित्यनर्हाणां द्रव्याणाम्। तेषां विशेषणत्वं सामानाधिकरण्यावसेयमेव।

श्रुतप्रकाशिका

एवं पूर्वपक्षचतुष्टयेऽप्यनुपपत्तिमुक्त्वा स्वपक्षे वैषम्यमाह—**निखिलेति**। सम्यक्शब्देन मुख्यत्वं विवक्षितम्। कथं मुख्यत्वमित्यत्राह—**जातिगुणयोरिति**। दण्डादिव्यावृत्त्यर्थमाह— **शरीरभावेन विशेषणत्वेनेति**। कथं मुख्यमेव दृष्टचरमित्युच्यते? अमुख्यत्वेऽपि हि प्रयोगः संभवति। अमुख्यत्वं च शरीरस्य द्रव्यत्वात्। न हि दण्डकुण्डलादिशब्दानां विशेष्यपर्यन्ताभिधानं दृष्टम्। तस्मादद्रव्यत्वे सति विशेषणत्वं, जातिगुणयोरन्यतरत्वे सति विशेषणत्वं वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति शरीरवाचिशब्दस्य विशेष्यपर्यन्ताभिधानममुख्यमित्यत्राह—**जातिगुणयोरपीति**। एवकारेण जातिगुणयोरन्यतरत्वादेः प्रयोजकत्वव्युदासः। ततः किमित्यत्राह—**मनुष्यत्वादीति**। अत्र प्रकारशब्दो विशेषणमात्रपरः। एवकारेण दण्डकुण्डलादिव्यावृत्तिरभि-

प्रेता । **सामानाधिकरण्यं सर्वत्रानुगतमितीति ;** सामानाधिकरण्यस्यानुगतत्वादनुगतमेव तत्प्रयोजकं वाच्यमित्यर्थः । जातित्वगुणत्वादेः प्रयोजकत्वं किं न स्यादित्यत आह— **न परस्परेति । परस्परव्यावृत्ताः** परस्परानुयायिनः । **जात्यादयः ;** जातित्वादयः । अयमभिप्रायः—'गङ्गायां घोषः' इत्यादिषु प्रवाहकूलयोर्गङ्गापदप्रवृत्तिनिमित्तभूतस्यानुयायिन आकारस्यादर्शनात् तत्र लाक्षणिकत्वं युक्तम् ; अत्र तु यत्र यत्र विशेष्यपर्यन्ताभिधायित्वेन प्रयोगो दृष्टचरः, तत्र तत्र प्रयोगेष्वनुवृत्ताकारदर्शनादननुगताकारप्रयोजकत्वाश्रयणेन क्वचिल्लाक्षणिकत्वं वक्तुमयुक्तम् । अन्यथा अद्रव्यत्वे सति विशेषणत्वं विशेष्यपर्यन्ताभिधाने प्रयोजकमित्यपि न वक्तव्यम् । जातित्वं गुणत्वं वा प्रयोजकमस्तु, अन्यल्लाक्षणिकं स्यात् । न च तथा भवदभिमतम्, जातिगुणवाचिनामुभयेषामपि हि शब्दानां विशेष्यपर्यवसायित्वेन प्रयोगदर्शनात् । तस्माच्छरीरवाचिशब्दानामपि विशेष्यपर्यन्ताभिधायित्वेन प्रयोगदर्शनात् प्रयोगेषु सर्वेष्वनुवृत्तैकाकारदर्शनाच्चाननुवृत्ताकारान्तरस्य प्रयोजकत्वकल्पनेनान्यतरस्यामुख्यत्वकल्पनाया अयुक्तत्वादिदमपि सामानाधिकरण्यं जातिगुणवाचिशब्दानामिव मुख्यमेवेति । ननु प्रकारभूतद्रव्यवाचिपदानां मत्वर्थीयप्रत्ययनिरपेक्षविशेष्यपर्यन्ताभिधायित्वं दण्डादिशब्दानां तथात्वादर्शनादनुपपन्नमिति शङ्कायां प्रकारतयैवेति पूर्वमभिप्रेतं विवृणोति—**स्वनिष्ठानामेव हीति ;** अपृथक्सिद्धप्रकारवाचित्वमेव मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकमित्यर्थः ।

### भावप्रकाशिका

**दण्डादिव्यावृत्त्यर्थमाहेति ;** "शरीरभावेन"इति पदसमभिव्याहारेण "विशेषणत्वम्" इति भाष्यस्यापृथक्सिद्धतया विशेषणत्वमिति लभ्यते, न विशेषणत्वमात्रमिति भावः । **तत्र तत्र प्रयोगेष्वनुवृत्ताकारदर्शनादिति ;** ननु जातिगुणद्रव्येष्वपृथक्सिद्धविशेषणत्वस्यानुगतस्य मत्वर्थप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोजकस्य संभवेऽपि देवादिशब्दप्रवृत्तिनिमित्तस्य शरीरजीवपरमात्मसाधारणस्य प्रवाहतीरानुगतगङ्गापदप्रवृत्तिनिमित्तस्येवैकस्याभावात् तच्छब्दप्रवृत्तिनिमित्तदेवत्वादिजात्याश्रयशरीरस्यैव मुख्यत्वम्, अतदाश्रयात्मनि तत्संबन्धाल्लक्षणैवास्त्विति चोद्यस्य कः परिहार उक्त इति चेत् ; उच्यते—देवत्वादिकमेव देवादिशब्दस्य शरीरात्मसाधारणं प्रवृत्तिनिमित्तं 'स्थूलो मनुष्यो देवः' इत्याद्यबाधितप्रयोगवशात् देहस्य देवत्वाद्याश्रयत्वाभ्युपगमवत् 'देवोऽहं जानामि' इत्यबाधितप्रयोगवशात् देवत्वस्या-

त्माश्रयत्वस्याप्यभ्युपगन्तव्यत्वात् । न च देहात्माविवेककृतोऽयं प्रयोग इति वाच्यम्, 'नाहं देहः' इति देहात्मविवेकवतोऽपि ' नाहं देवो मनुष्यः' इत्यप्रतीतेः । न च—देहद्वारा देवत्वरूपप्रवृत्तिनिमित्ताश्रयत्वेऽप्यात्मनः साक्षात् प्रवृत्तिनिमित्ताश्रयत्वाभावान्न तच्छब्दवाच्यत्वम्; अन्यथा घटद्वारा घटत्वाश्रयभूतलस्यापि घटशब्दवाच्यत्वप्रसङ्ग इति वाच्यम्, तत्र ' भूतले घटत्वम् ' इति वा ' भूतलं घटः' इति वा भूतलस्य घटत्वाश्रयत्वग्राहकस्याबाधितप्रमाणस्याभावेन तस्य घटशब्दवाच्यत्वाभावेऽपि ' देवोऽहं जानामि ' इत्यबाधितप्रतीतेर्देवत्वरूपप्रवृत्तिनिमित्ताश्रयत्वस्य सत्त्वेन तच्छब्दवाच्यत्वस्याप्यावश्यकत्वात् । अपूर्वान्तरितस्यापि यागादेः स्वर्गसाधनत्ववत् आस्तरणान्तरितस्यापि पर्यङ्कादेः शयानदेवदत्ताधारत्ववत् शरीरान्तरितस्याप्यात्मनो देवत्वाद्याश्रयत्वं न विरुध्यते । भूतलस्य तु घटाधारत्वमेव; न तु घटत्वाधारत्वं, तथा अप्रतीतेरिति विशेषः । 'उष्णं जलम् ' इत्यादौ त्वबाधितप्रतीतिव्यवहाराभावात् नोष्णादिशब्दवाच्यत्वम् । अत एवापृथक्सिद्धविशेषणवाचिशब्दानां विशेष्यवाचित्वे दीपाद्यपृथक्सिद्धप्रभावाचिनामपि दीपादिवाचित्वप्रसङ्ग इत्यादिक्षुद्रोपद्रवाणामपि नावकाशः, दीपादेः प्रभात्वरूपप्रवृत्तिनिमित्ताश्रयत्वाभावात् ।

### श्रुतप्रदीपिका

**निखिलेति**; सम्यक्शब्दो मुख्यत्वपरः । कथं तदित्यत्राह—**जातीति** । अमुख्यत्वेऽपि प्रयोगः संभवेत्; तच्च देहस्य द्रव्यत्वात्; अद्रव्यत्वे सति प्रकारत्वं हि मत्वर्थीयानपेक्षसामानाधिकरण्ये प्रयोजकमित्यत्राह—**जातिगुणयोरपीति** । ततः किमित्यत्राह—**मनुष्यत्वादीति** । गङ्गापदे तु नानुगतनिमित्तदृष्टिः । अत्रानुयायिनिमित्तेन मुख्यत्वे संभवति क्वाचित्कनिमित्तं कल्पयित्वा क्वचिदमुख्यत्वक्लृप्तिरयुक्ता । न चेत् गुणत्वमेव प्रयोजकं स्यात् । जातेरमुख्यत्वं स्यादित्यर्थः । **परस्परव्यावृत्ताः**, परस्परानुगता इति प्रतिबन्धभिप्रेता । दण्डादावदर्शनात् त्वदुक्तमयुक्तमित्याशङ्कायां प्रकारतयैवेत्यभिप्रेतं विवृणोति—**स्वनिष्ठानामिति** ।

### नयप्रकाशिका

अस्मत्पक्षे तु न काचिद्धानिः । ननु जातिगुणवाचिनामेव शब्दानां द्रव्यवाचिशब्दसामानाधिकरण्यं दृष्टं लोके; न तु द्रव्यवाचकशब्दस्येति चेत्—न; अपृथक्सिद्धविशेषणस्यैव सामानाधिकरण्यनिर्देशप्रयोजकत्वात्, न तु जातित्वादेः । देहश्चापृथकसिद्ध-

विशेषणम् । देहोऽपि पृथिव्यादेरवस्थाविशेष एव । आत्मसामानाधिकरण्येन 'मनुष्यः, पशुः' इत्यादौ देहवाचकशब्दप्रयोगो दृश्यते ;

" वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ।
शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ॥"
" अदुष्टां विनतां भार्यां यौवने यः परित्यजेत् ।
स स्त्री स्यात् सप्तजन्मानि विधवा च पुनः पुनः ॥"

इत्यादौ च दृश्यते ।

श्रीभाष्यम्

यदि 'गौरश्वो मनुष्यो देवः पुरुषो योषित् षण्ड आत्मा कर्मभिर्जातः' इत्यत्र 'खण्डो मुण्डो गौः; शुक्लः पटः, कृष्णः पटः' इति जातिगुणवदात्मप्रकारत्वं मनुष्यादिशरीराणामिष्यते तर्हि जातिव्यक्त्योरिव प्रकारप्रकारिणोः शरीरात्मनोरपि नियमेन सह प्रतिपत्तिः स्यात् । न चैवं दृश्यते । न हि नियमेन गोत्वादिवदात्माश्रयतयैवात्मना सह मनुष्यादिशरीरं पश्यन्ति । अतो 'मनुष्य आत्मा' इति सामानाधिकरण्यं लाक्षणिकमेव । नैतदेवम्; मनुष्यादिशरीराणामप्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वं तत्प्रकारत्वं च जात्यादितुल्यम् । आत्मैकाश्रयत्वमात्मविश्लेषे शरीरविनाशादवगम्यते । आत्मैकप्रयोजनत्वं च तत्कर्मफलभोगार्थतयैव सद्भावात् । तत्प्रकारत्वमपि 'देवो मनुष्यः' इत्यात्मविशेषणतयैव प्रतीतेः । एतदेव हि गवादिशब्दानां व्यक्तिपर्यन्तत्वे हेतुः । एतत्स्वभावविरहादेव दण्डकुण्डलादीनां विशेषणत्वे 'दण्डी कुण्डली' इति मत्वर्थीयप्रत्ययः । देवमनुष्यादिपिण्डानामात्मैकाश्रयत्वतदेकप्रयोजनत्वतत्प्रकारत्वस्वभावात् 'देवो मनुष्य आत्मा' इति लोकवेदयोः सामानाधिकरण्येन व्यवहारः । जातिव्यक्त्योर्नियमेन सहप्रतीतिरुभयोश्चाक्षुषत्वात् । आत्मनस्त्वचाक्षुषत्वाच्चक्षुषा शरीर-

ग्रहणवेलायामात्मा न गृह्यते। पृथग्ग्रहणयोग्यस्य प्रकारैकस्वरूपत्व दुर्घटमिति मा वोचः, जात्यादिवत् तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारैकस्वभावत्वावगमात्। सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धन इत्युक्तम्। यथा चक्षुषा पृथिव्यादेर्गन्धरसादिसंबन्धित्वं स्वाभाविकमपि न गृह्यते, एवं चक्षुषा गृह्यमाणं शरीरमात्मप्रकारैकस्वभावमपि न तथा गृह्यते; आत्मग्रहणे चक्षुषः सामर्थ्याभावात्। नैतावता शरीरस्यं तत्प्रकारत्वस्वभावविरहः। तत्प्रकारैकस्वभावत्वमेव सामानाधिकरण्यनिबन्धनम्। आत्मप्रकारतया प्रतिपादनसमर्थस्तु शब्दः सहैव प्रकारतया प्रतिपादयति।

**श्रुतप्रकाशिका**

यत्र यत्र नियतप्रकारत्वं तत्र तत्र सहोपलम्भनियमो दृष्टः; शरीरे तु सहोपलम्भनियमाभावादपृथक्सिद्धविशेषणत्वमनुपपन्नम्; तस्मात् सामानाधिकरण्यं लाक्षणिकमित्यभिप्रायेण चोदयति—**यदि गौरश्च इति**। पक्षे व्यापकविपर्ययं दर्शयति—**न चैवमिति**। तद्विवृणोति—**न हीति**। ततः किमित्यत्राह—**अत इति**। परिहरति—**नैतदेवमिति**। सहोपलम्भनियमस्य नियतप्रकारत्वप्रयोजकत्वे दूषणं वक्ष्यन् प्रथमं शरीरस्याप्यपृथग्विशेषणत्वं संप्रतिपन्नमिति दर्शयति—**मनुष्यादीति**। आत्मैकाश्रयत्वतदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्यर्थः। यद्वा प्रकारत्वशब्देन प्रकारतयैव प्रतीतिर्विवक्षिता, उत्तरत्र प्रकारत्वविवरणे 'आत्मविशेषणतयैव प्रतीतेः' इति वक्ष्यमाणत्वात्। तेन विशेष्यप्रतिपत्तिसंभवे दण्डकुण्डलादिवत् पृथगवस्थितत्वेन प्रतिपन्नत्वाभावः फलितः। तदेकाश्रयत्वं तदेकप्रयोजनत्वं विशेष्यप्रतीतिसंभवे पृथक्सिद्धत्वेनाप्रतीतत्वं चापृथक्सिद्धविशेषणत्वे प्रयोजकमित्यर्थः। तेषु त्रिष्वात्मैकाश्रयत्वं पक्षे दर्शयति—**आत्मैकाश्रयत्वमिति**। तदेकप्रयोजनत्वं दर्शयति—**आत्मैकेति**। न च दुःखैकफलनारकशरीरेष्वव्याप्तिः, दुःखस्याप्रयोजनत्वेऽपि तेषां पापक्षयरूपप्रयोजनहेतुत्वात्। न च पत्यादिप्रीतिहेतुषु भृत्यादिदेहेषु तदेकप्रयोजनत्वादतिव्याप्तिः शङ्कनीया, तत्प्रयोजनसाधनत्वेन विना स्थित्यभावस्य विवक्षितत्वात्। क्रयविक्रयाद्यर्हस्य तदेकप्रयोजनत्वं हि न सिध्यति; तत्कर्म-

फलभोगार्थतयैव सद्भावादिति ह्युक्तम् । अतस्तदेकप्रयोजनशब्दस्याप्ययमेवार्थः । अथ तत्प्रकारत्वं दर्शयति—**तत्प्रकारत्वमपीति** । विशेष्यप्रतीतिसिद्धौ तत्पृथक्सिद्धत्वेन प्रतीत्यभावस्तत्प्रकारत्वशब्देन विवक्षित इत्यर्थः । पञ्चमीनिर्देश औपचारिकः । यद्वा तत एव तत्प्रकारत्वेनोक्तमित्यर्थः । अथवा पृथक्सिद्धत्वप्रतीत्यभावे प्रतीतिविशेषो हेतुतयोदाह्रियते । एतत् तदेकाश्रयत्वादि त्रितयं सपक्षेऽपि दर्शयति—**एतदेव हीति** । विपक्षव्यावृत्तत्वं दर्शयति—**एतत्स्वभावेति** । ईदृशप्रकारत्वमेव पक्षे मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यहेतुरित्याह—**देवमनुष्यादीति** । सहोपलम्भनियमस्यान्यथासिद्धिमाह—**जातिव्यक्त्योरिति** । सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वप्रयुक्तः, न त्वपृथक्सिद्धविशेषणत्वप्रयुक्त इत्यर्थः । चाक्षुषत्वं प्रदर्शनार्थम् । उपाधेरपक्षस्थत्वं दर्शयति—**आत्मनस्त्विति** । एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तदभावान्नापृथक्सिद्धविशेषणत्वमित्याशङ्क्याह—**पृथग्ग्रहणेति** । स्वरूपम्; धर्मः; प्रकारत्वमेव धर्मो यस्य तत् प्रकारतैकस्वरूपम् । एकशब्देन कदाचिदप्रकारत्वस्य व्युदासः । ततश्च दण्डकुण्डलादिवैषम्यम् । किमपृथक्सिद्धविशेषणत्वे प्रयोजकान्तराभावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यते ? उतास्यानुयायित्वादिदमपि प्रयोजकमुच्यत इति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति—**जात्यादीति । प्रकारतैकस्वभावत्वावगमादि**त्यत्र स्वभावशब्देनैव प्रकारत्वनियमे सिद्धेऽप्येकशब्दप्रयोग एकसामग्रीवेद्यतास्वभावत्वव्यावृत्त्यर्थः । यदि तदेकाश्रयत्वादिरेवापृथग्विशेषणत्वे प्रयोजकः, कथं तर्हि जात्यादौ सहोपलम्भनियम इत्यत्राह—**सहोपलम्भेति** । अनेन पूर्वं चाक्षुषत्वोक्तिरेकसामग्रीवेद्यत्वप्रदर्शनार्थेति स्पष्टम् । अथ पूर्वोक्तविकल्पे द्वितीयशिरसि चापृथग्विशेषणत्वप्रयोजकतयोच्यमानमिदं किं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यप्रयोगविषयेषु सर्वेष्वनुयायि ? उत भवदभिमतजातिगुणेष्वेवानुयायीति विकल्पोऽभिप्रेतः । तत्र न प्रथमः, देहात्मनोरेकसामग्रीवेद्यत्वाभावात् । ततश्चानुगतप्रयोजकसद्भावादपृथग्विशेषणत्वस्याप्यनुगतत्वेन सामानाधिकरण्यप्रयोगाणां सर्वेषां मुख्यत्वे संभवत्यप्यननुगतमाकारं प्रयोजकत्वेनाङ्गीकृत्यापृथग्विशेषणत्वमपि संकुचितं कृत्वा तद्द्वारा सामानाधिकरण्यप्रयोगाणाममुख्यत्वाश्रयणमनुपपन्नमित्यर्थसिद्धम् । प्रकारतैकस्वभावत्वावगमादित्यत्रैकशब्देनैकसामग्रीवेद्यतास्वभावत्वस्य व्युदस्तत्वात् । अथ पराभिमतस्थलानुयायि-

१. 'प्रथमविकल्पद्वितीयशिरसि' इति भावप्रकाशिकासंमतः पाठः ।

स्वरूपे द्वितीयशिरसि गन्धादौ व्यभिचारेण दूषणं वदन्नेकसामग्रीवेद्यत्वस्याप्यपृथग्विशेषणत्वाव्यापकत्वमाह—**यथेति** । न ह्यचाक्षुषस्यापि गन्धस्य पृथिवीनियतप्रकारत्वहानिः । एवंशब्दो यथाशब्दप्रतिनिर्देशरूपः । कस्मादग्रहणमित्यत्राह—**आत्मग्रहण इति** । व्यापकत्वाभावफलमाह—**नैतावतेति । एतावता;** चक्षुषा ग्रहणाभावमात्रात् । न तत्प्रकारत्वस्वभावहानिः, एकसामग्रीवेद्यत्वस्यापृथग्विशेषणताव्यापकत्वाभावात् तदेकाश्रयत्वादिप्रयोजकान्तरसद्भावाच्चेति भावः । ततः किमित्यत्राह—**तत्प्रकारतेति** । एकशब्द एकसामग्रीवेद्यतास्वभावत्वव्युदासपरः । एवकारः सहोपलम्भनियमव्युदासार्थः । अपृथग्विशेषणत्वे सति शरीरस्य केनापि प्रमाणेन तत्तथोपलभ्येतेत्यत्राह—**आत्मेति** ।

**भावप्रकाशिका**

ननु "मनुष्यादिशरीराणाम्" इति भाष्ये तत्प्रकारत्वमपृथक्सिद्धविशेषणत्वरूपतयोच्यमानं दण्डादिष्वतिप्रसक्तमित्याशङ्क्याह—**अन्यतरान्वितमिति ।** नन्वात्मैकाश्रयत्वतदेकार्थत्वयोरन्यतरान्वितं प्रकारत्वमपृथक्सिद्धविशेषणत्वमित्ययुक्तम्, व्यर्थविशेषणत्वात् । किंच तथा सत्यात्मैकाश्रयत्वतदेकप्रयोजनत्वान्यतरप्रयुक्तमित्येवोच्येत, किमित्यात्मैकाश्रयत्वं तदेकप्रयोजनत्वमिति निर्देश इत्यस्वरसादपृथक्सिद्धत्वप्रयोजकत्रयपरतया व्याचष्टे—**यद्वा प्रकारत्वशब्देनेति । उत्तरत्र प्रकारत्वविवरण इति;** न चात्मविशेषणतयैव प्रतीतेरिति भाष्यखण्डस्य प्रकारत्वप्रमाणोपन्यासपरत्वसंभवेन प्रकारत्वविवरणरूपत्वमसिद्धम्; अतः प्रकारत्वं प्रकारतैकस्वभावत्वमित्यर्थः किं न स्यादिति वाच्यम्; तथा हि सति तदेकाश्रयत्वतदेकप्रयोजनत्वतद्विशेषणत्वैः शरीरस्यापि तत्प्रकारतैकस्वभावत्वावगमादिति विशेषणत्वतत्प्रकारतैकस्वभावत्वयोरुपपाद्योपपादकभावेन भेदेन निर्दिशत् भाष्यं विरुध्येत । अतो विशेषणत्वं विशेषणतयैव प्रतीतत्वं विवक्षितमिति भावः । **भृत्यादिदेहेष्विति;** न च भृत्यदेहस्य स्वामिप्रयोजनसाधनत्वेऽपि स्वप्रयोजनादेरपि साधकतया नातिव्याप्तिः शक्यशङ्केति वाच्यम्, तथात्वे पत्नीपुत्रादिभोगसाधने शरीरेऽसंभवापत्तेरिति भावः । ननु प्रकारत्वं प्रकारतयैव प्रतीतिरिति व्याख्यातत्वात् विशेषणतया प्रतीतेः प्रकारतया प्रतीतत्वमित्युक्ते साध्याविशेष इत्याशङ्क्याह—**पञ्चमीनिर्देशस्त्वौपचारिक इति । एतत् त्रयमिति;** त्रित्वोक्तिः "मनुष्यादिशरीराणाम्" इत्यादिभाष्यद्वितीयव्याख्याभिप्रायेणेति द्रष्टव्यम् । **रूपमिति;** अत्र स्वशब्द आत्मीयवाचीति भावः । **प्रयोजनान्तरा-**

**भावादेकसामग्रीवेद्यत्वं प्रयोजकमुच्यत इति ;** एकसामग्रीवेद्यत्वमपृथक्सिद्धविशेषणत्वे प्रयोजकमिति तदभावान्नापृथक्सिद्धविशेषणत्वमित्युच्यत इत्यर्थः । एवं सत्येव "पृथग्ग्रहण-योग्यस्य" इति भाष्यावतारिकाग्रन्थैकरूप्यमुपपद्यत इति द्रष्टव्यम् । **एकसामग्रीवेद्यता-स्वभावत्वव्यावृत्त्यर्थ इति ;** अत्र केचित्— "प्रकारतैकस्वरूपत्वं दुर्घटम्" इत्यत्रैकशब्द-स्येवेहापि कदाचिदप्रकारत्वव्युदासकत्वस्यैव युक्तत्वात् तस्यैवेह कथनाच्च तदेव युक्तम् ; न त्वेकसामग्रीवेद्यत्वस्वभावत्वव्यावृत्त्यर्थत्वम् , तदेकाश्रयत्वादीनामपृथक्सिद्धविशेषणत्वावगम-कत्ववदेकसामग्रीवेद्यत्वाभावावगमकत्वाभावात् । अत एव "यदि तदेकाश्रयत्वादिरेवा-पृथक्सिद्धविशेषणत्वे प्रयोजकः" इत्युत्तरग्रन्थावतारिकापि न युक्ता, एकसामग्रीवेद्यत्वाभावस्यो-क्तरीत्या प्रागसमर्थितत्वेनैकाश्रयत्वादिरेवेत्यनुवादासंभवात् । "कथं तर्हि सहोपलम्भनियमः" इत्यप्ययुक्तम् ; तस्य ह्ययमभिप्रायः— एकसामग्रीवेद्यत्वस्यापृथक्सिद्धविशेषणत्वाप्रयोजकत्वे अपृथक्सिद्धविशेषणेषु जातिव्यक्त्यादिष्वेकसामग्रीवेद्यत्वासंभवेन तन्निबन्धनः सहोपलम्भ-नियमोऽपि न स्यादिति, एवमाक्षिपन्तं प्रति 'सहोपलम्भनियमस्त्वेकसामग्रीवेद्यत्वनिबन्धनः' इति परिहारस्यायुक्तत्वात् तदभ्युपगमेनैवाक्षेपस्य प्रवृत्तत्वात् जात्यादौ सहोपलम्भनियम इत्यध्याहारस्यापि क्लिष्टत्वाच्च । किंच "पृथग्ग्रहणयोग्यस्य प्रकारतैकस्वरूपत्वं दुर्घटम्" इति भाष्यस्य सहोपलम्भनियमशून्यस्य तत्प्रकारतैकस्वरूपत्वं दुर्घटमित्यर्थस्यैव स्वरसतः प्रतीतेः स एवार्थ उचितः । किं प्रकारतैकस्वरूपत्वे प्रमाणाभावात् तन्नास्तीत्यभिप्रायः ? उत प्रकारत्वस्य स्वभावत्वे यद्वस्तु यत्स्वभावविशिष्टं तद्वस्तु गृह्यमाणं तत्स्वभावयुक्तमेव गृह्यत इत्यपृथक्सिद्धत्वस्वभावत्वे तद्विशिष्टमेव गृह्येतेत्यभिप्राय इति विकल्प्य प्रथमं दूषयति— भाष्ये **जात्यादिवदिति ।** द्वितीयं दूषयति— भाष्ये **सहोपलम्भनियमस्त्विति । सहोप-लम्भनियमः ;** सहैव प्रकारतयोपलम्भनियम इत्यर्थः । "सहैव प्रकारतया प्रतिपादयति" इत्युत्तरभाष्यानुगुण्यात् । वस्तुग्राहकं प्रमाणं तत्तत्स्वभावविशिष्टमेव गृह्णातीति नियमाभ्यु-पगमे बाधकं दर्शयति— **यथा चक्षुषेति ।** पृथिव्याः स्वाभाविकगन्धरसादिसंबन्धित्वस्या-ग्रहवत् शरीरगतात्मप्रकारत्वस्वभावत्वस्याप्यग्रहणोपपत्तौ प्रमाणान्तरसिद्धप्रकारतैकस्वभावत्व-स्यापह्नवानर्हत्वादिति भाव इति वदन्ति । **प्रथमविकल्पद्वितीयशिरसीति ;** अनुयायि-त्वादेकसामग्रीवेद्यत्वमपि प्रयोजकमिति द्वितीयविकल्प इत्यर्थः । **अनुगतप्रयोजकसद्भावा-दिति ;** तदेकाश्रयत्वादिरूपानुगतप्रयोजकसद्भावादित्यर्थः । **द्वितीयशिरसि गन्धा-**

**दाविति**; यद्यपि शरीरादिषु भिन्नसामग्रीवेद्येष्वपृथक्सिद्धविशेषणत्वस्य समर्थितत्वेनापृथक् सिद्धसामान्ये प्रयोजकत्वशङ्काया अनुत्थानात् जात्यादिगतापृथक्सिद्धत्वविशेषे एकसामग्रीवेद्यत्वस्य प्रयोजकत्वेऽपि तस्याप्रत्याख्येयत्वात् तत्प्रत्याख्यानं प्रकृतानुपयुक्तं, तथापि पराभिमानखण्डनार्थमुक्तमिति द्रष्टव्यम्। **एकशब्द एकसामग्रीवेद्यतास्वभावत्वव्युदासपरः; एवकारः सहोपलम्भनियमव्युदासार्थ इति**; अत्र केचित्—एकशब्दोऽप्रकारत्वावस्थाव्युदासपरः, एवकारः सहोपलम्भनियमैकसामग्रीवेद्यत्वव्युदासपर इत्येव युक्तमिति वदन्ति ।

## श्रुतप्रदीपिका

सहधीनियमनिवृत्त्या नापृथग्विशेषणत्वमिति लक्षणेति चोदयति—**यदीत्यादिना**। सहधीनियमं परिहरिष्यन्नयुतसिद्धविशेषणत्वे हेतुमाह—**मनुष्यादीति**; पूर्वयोरन्यतरान्वितं प्रकारत्वमित्यर्थः। यद्वा प्रकारतयैव प्रतिपन्नत्वम्। न च साध्याविशिष्टता, दण्डकुण्डलादिवत् पृथगवस्थितत्वेनाप्रतिपन्नत्वमित्यर्थात्: तथोत्तरत्र विवरणात्। तदेकाश्रयत्वादिकमुपपादयति—**आत्मेत्यादिना**। सपक्षे दर्शयति—**एतदिति**। विपक्षात् व्यावृत्तिमाह—**एतत्स्वभावेति**। तस्यैव मत्वर्थीयानपेक्षत्वे प्रयोजकत्वमाह—**देवेति**। सहधीनियमं परिहरति—**जातीति**। चाक्षुषत्वं प्रदर्शनार्थम्, एकसामग्रीवेद्यत्वादित्यर्थः। तच्चायुतसिद्धप्रकारत्वे हेतुरित्याशङ्क्याह—**पृथगिति**। प्रागुक्तं परिहारमाह—**जात्यादिवदिति**। कथं तर्हि जात्यादेः सहधीनियतिरित्यत्राह—**सहेति**। प्रदर्शनार्थं स्फुटं व्यभिचारमप्याह—**यथेति**। **नैतावतेति**; गन्धस्येवेति भावः। ततः किमित्यत्राह—**तत्प्रकारेति**। तर्हि न केनापि मानेन धर्मिपर्यन्तधीः स्यादित्यत्राह—**आत्मेति**।

## नयप्रकाशिका

न च—जात्यादिवत् देहस्यात्मप्रकारत्वे जातिव्यक्त्योरिव देहात्मनोरप्येकधीवेद्यता स्यात्, अतो देहवाचकशब्दस्यात्मनि लक्षणाप्रवृत्तिरिति वाच्यम्, जातिगुणयोर्द्रव्याश्रयत्वादिवत् शरीरस्यात्मद्रव्याश्रयत्वादिना जात्यादितुल्यत्वसिद्धेः। न चैकधीवेद्यत्वद्रव्याश्रयत्वादिरूपोभयस्यापि प्रकारवाचकशब्दानां प्रकारिणि पर्यवसानहेतुत्वम्, अन्यत्र लक्षणयेति वाच्यम्, भिन्नधीवेद्ययोरपि 'सुरभि कुसुमम्' इत्यादौ विशिष्टप्रतीतिव्यवहारयोर्दर्शनात्। दण्डादीनां त्वेतत्स्वभावविरहादेव हि न भिन्नद्रव्यान्तरसामानाधिकरण्यनिर्देशः। गवादिजातिव्यक्त्योरेकधीवेद्यता त्वेकेन्द्रियग्राह्यत्वप्रयुक्ता, न तु प्रकारत्वप्रयुक्ता; 'सुरभि

कुसुमम्' इत्यादिष्वदर्शनादित्युक्तम्। द्रव्यज्ञानं तु चक्षुषा स्पर्शनेन वा। अथ च प्रकारप्रकारिताप्रयोगावगतिश्च 'सरसोऽयं कदलीखण्डः' इत्यादौ भिन्नधीवेद्ययोरपि तथावगतेः। आत्मनस्त्वचाक्षुषत्वादत्राप्येकधीवेद्यत्वाभावः। अतो देहस्यात्मप्रकारताप्रतिपादने शब्दस्य न विरोधः। 'देहः, शरीरम्' इत्यादिशब्दानामात्मपर्यन्तत्वाभावस्तु निष्कृष्य पदार्थपृथक्त्वप्रदर्शनपरत्वात्, 'आकृतिः जातिः' इत्यादिवत्। अतो देहवाचकमनुष्यादिशब्दो देहिपर्यन्तो मुख्य एवेति परमात्मशरीरजीवादिवाचकशब्दानां परमात्मपर्यन्तत्वं मुख्यमेव। आकृतिवाचकगवादिशब्दस्य व्यक्तिपर्यन्तत्वात् प्रायेण सर्ववादिनां देहवाचकशब्दस्यात्मपर्यन्तता मुख्यैवेष्टा। मिथ्यावाद्येकदेशिनां तु तन्नेष्टम्। 'ब्राह्मणो यजेत' इत्यादौ लक्षणयात्मपरत्वे शूद्रस्यापि यज्ञादावधिकारापत्तेः। न च देहस्यैव कर्तृत्वं तत्र विधीयत इति वाच्यम्, कर्तुरेव फलभोक्तृत्वात्; देहस्य च प्रत्यक्षं विनाशदर्शनात्। देशान्तरादिफलभोक्तृत्वाभावे स्वर्गकामादिवाक्यस्याप्रामाण्यापातात्। मिथ्यावादिपक्षे जीवात्मा चैक एव। अतो नोपलक्ष्यात्मभेदात् कर्तृभेदव्यवहारोपपत्तिः। ब्राह्मणादिशब्दस्य देहविशिष्टात्मपरत्वे तु न शूद्रस्याधिकारः। ननु देहविशिष्टात्मनः कर्तृत्वे देहस्यात्र विनाशान्न विशिष्टकर्तुः फलभोक्तृत्वमिति चेत्—न; सूक्ष्मदेहानुवृत्तेर्विशिष्टस्यैव भोक्तृत्वात्। न ह्येकदेशविनाशादन्यत्वम्। किंच अतिचिरन्तनयज्ञेश्वरसूनुशंकरकृते वेदान्तसूत्रोपन्यासे "तादात्म्यनिर्देशः शरीरशरीरिभावनिबन्धनः" इत्युक्तत्वाच्चास्मदीयमार्गस्यैव सांप्रदायिकत्वम्। तथोक्तम् "आकाशस्तल्लिङ्गात्" इत्यत्र—"आकाशशरीरत्वाच्चाकाशशब्देन ब्रह्माभिधीयते; तथा शरीरशरीरिणोश्चाभेदेन व्यपदेशो दृश्यते; यथा—'देवदत्तो बुद्धिमान्' इति। अतः सर्वस्य परमात्मशरीरत्वस्य श्रुत्यादिसिद्धत्वात् सर्वशब्दानां ब्रह्मणि वृत्तौ न मुख्यत्वहानिः। अत एव "वेदैश्च सर्वैरहमेव वेद्यः" इत्याद्युक्तिः। (न च निरस्तसमस्तविशेषस्य ब्रह्मणः प्रवृत्तिनिमित्ताभावान्न शब्दवाच्यत्वमिति वाच्यम्, सविशेषत्वस्य साधितत्वेन तस्य निरस्तसमस्तविशेषत्वस्यासिद्धत्वात्। न च "यतो वाचो निवर्तन्ते" इत्यादौ तस्य वाच्यत्वं निषिध्यत इति वाच्यम्, परमात्मन आनन्दाख्यगुणापरिच्छेद्यत्वमात्रप्रतिपादनपरत्वात्; "सैषानन्दस्य मीमांसा भवति" इत्यादावानन्दाख्यगुणावधिकरणाय प्रक्रान्तत्वात्, "स एको ब्रह्मण आनन्दः" इति तद्गुणस्य पृथङ् निर्देशात्। "यतो वाचः" इत्यस्याब्रह्मपरता च "वचसां वाच्यमुत्तमम्" इत्यादिश्रुतिभिस्तस्य

शब्दवाच्यत्वप्रतीतेश्च । न च तस्य स्वयंप्रकाशत्वेन न प्रमाणगम्यत्वापेक्षेति वाच्यम्, स्वयंप्रकाशत्वस्यापि प्रमाणसाध्यत्वात् । न हि स्वयंप्रकाशत्वं सर्वसंमतम् । अतो ब्रह्म सर्वशब्दवाच्यमेव ; न तु लक्ष्यम् । न च 'सोऽयं देवदत्तः' इत्यादावखण्डार्थपरतेति वाच्यम्, तत्रापि विशिष्टैकार्थपरत्वात्, अतीतवर्तमानक्रियाद्वयसंबन्धितयैक्यप्रतिपादनात् । देशान्तरस्थितिरभूत् संनिहितदेशस्थितिर्वर्तते । न चैकस्य प्रदेशभेदस्थितेर्विरुद्धत्वान्न संबन्ध्यैक्यमिति वाच्यम्, युगपत्संबन्धस्यैव विरुद्धत्वात् ; कालभेदे तु विरोधाभावात् । न च वाक्यस्य कालद्वयसंबन्धमात्रोपलक्षकत्वात् कालद्वयसंबन्धिन एकत्वे प्रमाणाभाव इति वाच्यम्, तदैक्य एतद्वाक्यस्यैव सामानाधिकरण्यनिर्देशेन प्रमाणत्वात् । किंच एकस्य कालद्वयसंबन्धपरत्वेऽपि तत्कालद्वयसंबन्ध्यैक्यसिद्धिः । एवं वस्तुतो विरोध एव नास्ति । विरोधेऽप्यन्यतरपदस्य लक्षणया विरोधपरिहारे न सर्वपदलक्षणा, 'सः' इति भूतक्रियासंबन्धिनं लक्षयित्वा तस्यैव 'अयम्' इति वर्तमानक्रियाविशिष्टताभिधानात् । एवं देवदत्तभेदभ्रमस्याप्यर्थान्निवृत्तिः । तथोभयविशिष्टत्वाभिधानेऽपि । अन्यथा 'देवदत्तः' इति शब्दप्रयोगाभावे 'सोऽयम्' इति प्रयोगमात्रेऽप्युभयोपाधिविनिर्मुक्तस्वरूपमात्रप्रतीतिः स्यात् । न हि तथा प्रतीतिः । किंतूभयक्रियासंबन्धिन एव हि प्रतीतिः । तच्चात्मसाक्षिकमेव । वाक्यप्रयोगस्य परप्रत्यायनहेतुत्वात् तस्य च स्वप्रतीत्यनुकारित्वाच्च विशिष्टार्थपरतैव युक्ता । न चान्यक्रियासंबन्धित्वाकारस्यैवान्यक्रियासंबन्धित्वं न संभवतीति वाच्यम् ; क्रियागुणादिभिः सबन्धिन एव विशेष्यत्वात्, न तु तत्तत्संबन्धाकारविशिष्टस्य । विवादपदं सोऽयमित्याद्यनुमानाच्च तद्वाक्यस्य विशिष्टार्थपरता । न चोपाधिद्वयसंबन्धनिमित्तदेवदत्तभेदनिवर्तनव्यतिरेकेण तद्वाक्यप्रामाण्यानुपपत्तेः कालात्ययापदिष्टता तद्धेतोरिति वाच्यम्, तस्य विशिष्टार्थप्रतिपादनपरत्वसाधनेन प्रामाण्यस्याप्यन्यथासिद्धेः क्षीणत्वादर्थापत्तेः । न च 'प्रकृष्टप्रकाशश्चन्द्रः' इत्यादौ व्यभिचाराद्धेतोरनैकान्त्यमिति वाच्यम्, तस्यापि विशिष्टार्थपरत्वेन सपक्षत्वात् । न च 'चन्द्रः कः' इति प्रातिपदिकार्थमात्रस्य पृष्टत्वात् गुणादिप्रश्नाभावादुत्तरेणापि तथैव भवितव्यमिति वाच्यम्, प्रातिपदिकार्थस्य पूर्वमेव ज्ञातत्वेन तद्विषयप्रश्नानुपपत्तेः । ननु घटादिशब्दवच्चन्द्रशब्दस्यापि सामान्यतोऽर्थवत्तामात्रावगमात् विशेषतोऽनवगमात् विशेषतो ज्ञानार्थः प्रश्न इति चेत्—तर्हि विशिष्टताऽङ्गीकृता, विशेषतो ज्ञातुं बुभुत्सितत्वात् । सामान्यतो ज्ञातस्य यद्विशेषादन्यव्यावृत्तिस्तद्वत्त्वं हि

विशिष्टत्वम् । न च लक्षकादन्यव्यावृत्तिप्रतीतेर्न वस्तुनो विशिष्टत्वनिश्चय इति वाच्यम्, प्रकाशादेर्जात्यादिवद्विशेषणत्वेन काकसाम्याभावात् । प्रश्नोऽपि न केवलं चन्द्र-प्रातिपदिकार्थमात्रविषयः; 'ज्योतिर्गणेषु कश्चन्द्रः' इति हि प्रश्नस्वरूपम्; ज्योतिर्गणान्तर्गत-त्वैकत्वादिधर्मविशिष्टतावगतेः । न हि 'चन्द्रप्रातिपादिकार्थः कः' इति प्रश्नः । 'प्रकृष्ट-प्रकाशश्चन्द्रः' इत्युक्ते प्रकाशगुणविशिष्टतयैव प्रत्यक्षेण सर्वदा गृह्यते; न तु गृहादिभ्यः काकादेरिव चन्द्रात् तत्प्रकाशस्य पृथग् ग्रहणम् । यथाशब्दमेव हि ग्रहणम् । अपरोक्ष-ग्रहणेन पदार्थनिश्चयार्थत्वेन पृष्टत्वादुत्तरेणापि तथैव भाव्यम् । यत्र तु 'देवदत्त-केदारः कः' इत्यादिप्रश्ने 'यत्र सारसः स देवदत्तकेदारः' इत्युत्तरं तत्र तद्वाक्यसम-कालमेव सारसाद्यपायेऽपि केदार इति प्रतीतेस्तत्रोपलक्षणत्वम् । यत्र तु तदनपाय-स्तत्र विशेषणत्वमिति विवेकः । अन्यथा शब्दप्रत्यक्षयोरेकार्थविषयत्वेऽपि वैरूप्यं स्यात् । न च विशिष्टत्वधियः प्रमाणान्तराधीनत्वान्न शाब्दत्वमिति वाच्यम्, शब्दप्रमाण-स्यापि विशिष्टविषयत्वस्य साधितत्वात् । किंचानेकपदात्मकत्वात् वाक्यस्य पदानां च प्रकृति-प्रत्ययविभागेनार्थबाहुल्यादन्यान्वितस्वार्थाभिधायित्वेनैव व्युत्पन्नत्वाच्च यथाव्युत्पत्त्येव शब्दा-र्थनिश्चयात् विशिष्टार्थविषयतैव शब्दस्य । पदमात्रस्यापि प्रकृतिप्रत्ययभेदाद्विशिष्टार्थविषयतैव । अन्यथा शब्दप्रमाणोच्छेदप्रसङ्गः, निर्विशेषपदार्थे व्युत्पत्त्यभावात् । अर्थान्तरान्वितस्वार्थ एव हि शब्दशक्तिरित्युक्तम् । न च 'निर्विशेषः' इत्यादिशब्दानां निर्विशेषवस्तुनि प्रामाण्य-मिति वाच्यम्, गुणादिविशिष्टतया प्रतिपन्नस्यैव पूर्वावस्थातो विसजातीयावस्थान्तरविशेषा-भावख्यापनपरत्वात् । 'व्याधिस्थस्य किमासीत्?' इति पृष्टे 'न विशेषः' इत्युत्तरदर्शनात् । तथा यमलयोः 'पूर्वजदर्शनात् कनीयसो न विशेषः' इत्युक्तिदर्शनाच्च । अन्यथाऽनवबो-धकत्वमेवेत्युक्तम् । न च ब्रह्मणः स्वतः सिद्धत्वेन प्रमाणानपेक्षत्वाच्छब्दानां ज्ञातृत्वादिधर्म-मात्रनिषेधकत्वमिति वाच्यम्, विकल्पासहत्वात् । स्वतःसिद्धत्वशब्देन किमुत्पत्तिः ज्ञप्तिर्वो-च्यते? उभयथापि प्रमाणापेक्षत्वमवर्जनीयम्, स्वतःसिद्धत्वस्यापि विवादास्पदत्वात् । ज्ञेयत्व-स्यापि विवादास्पदत्वमित्युक्तम् । किंच केनचिच्छब्देन ब्रह्मोद्दिश्य ज्ञातृत्वादिनिषेधस्य वक्त-व्यत्वात् तदुद्देशकशब्दस्यापि शब्दत्वेन विशिष्टविषयत्वाद्वस्तुनो विशिष्टत्वम् । ज्ञप्तिरित्यादि-शब्दानामपि प्रकृत्यंशस्य सकर्मकत्वं प्रत्ययांशस्य संख्यादिरर्थ इति शब्दमात्रस्य न निर्विशेष-विषयत्वम्? अतो नाखण्डैकरसवस्तुपरता वेदान्तानाम्। अतो न प्रत्यक्षादिबाधः ।

सर्वप्रमाणानां विशिष्टवस्तुविषयत्वेन विरोधाभावात् । न च प्रत्यक्षस्य सन्मात्रग्राहित्वेन निर्विशेषवस्तुविषयत्वमिति वाच्यम् , विकल्पासहत्वात् । किं प्रत्यक्षमात्रस्य निर्विशेषवस्तु-विषयत्वम् ? उत निर्विकल्पकस्येति ? न तावदाद्यः, सविकल्पकप्रत्यक्षस्य जातिक्रियागुणा-दिविशिष्टवस्तुविषयत्वात् । नापि द्वितीयः, निर्विकल्पकदशायामनुभूतविशेषस्य सविकल्पके प्रत्यभिज्ञायमानत्वात् ; प्रत्यभिज्ञायाश्चानुभवादृतेऽनुपपन्नत्वात् सधर्मकानुभवसिद्धेः । धर्मश्च वस्तुसंस्थानात्मकजातिर्वा गुणादिर्वा । ननु निर्विकल्पकप्रत्यक्षस्य वस्तुमात्रावलम्बित्वान्न जात्यादिग्रह इति चेत्—न; निखिलधर्मविधुरस्य ग्रहणाभावात् । तच्चादर्शनात् रूपसंस्थाना-दिविशेषव्यतिरेकेण ग्रहणानुपपत्तेश्च । तद्व्यतिरेकेण ग्रहणे अन्धकारेऽपि ग्रहणं स्यात् । चक्षुषो रूपरूपितदेकाश्रयजात्यादिग्रहणमात्रे ह्यालोकापेक्षा । वस्तुमात्रग्रहणे रूपविशिष्टग्रहणाभावे च तमसि तद्ग्रहो दुर्वारः । तथा रूपरहितस्य वस्तुनो ग्रहणं स्यात् । तदापि रूपिमात्रं गृह्यत इति चेत् , तर्हि सविशेषविषयत्वापातः । तस्यापि प्रत्यक्षयोग्यवस्तुनो ग्रहणे केनचिद्वि-शेषेण युक्ततयैव ग्रहणं, नान्यथा । 'इदमित्थम्' इति हि सर्वा धियो जायन्ते । अतः कतिपयविशेषयुक्ततया ग्रहणस्यैव निर्विकल्पकता, न तु सर्वविशेषवियुक्ततया ग्रहणस्य । न चालोकेन्द्रियसंनिकर्षाद्यविशेषेऽपि न प्रथमं जात्यादिविशिष्टग्रहणमिति वाच्यम् , सामग्री-सद्भावेऽपि ग्रहणाभावे द्वितीयाक्षसंनिपातेऽपि तदग्रहणापत्तेः । न च प्रथमाक्षसंनिपाते सामग्रीवैकल्यान्न तथा ग्रह इति वाच्यम् , तद्वैकल्याभावात् । विमतिपदं प्रत्यक्षं विशि-ष्टार्थविषयं, विशेषाश्रयविषयत्वात् सविकल्पकप्रत्यक्षवदित्यनुमानाच्च विशिष्टविषयत्वम् । न हि रूपादिविशेषशून्यपदार्थविषयता तस्य । ननु तर्हि सविकल्पकनिर्विकल्पकभेदाभावप्रसङ्गः, सर्वप्रतीतीनामपि विशिष्टविषयत्वेन प्रत्यक्षस्य सविकल्पकत्वादिति चेत्—न; वस्तुतो निरूपणे तथात्वेऽपि विरोधाभावात् । केनचित् प्रत्यक्षेण निर्विशेषविषयेण भाव्यमिति नियमा-भावात् । अतो वस्तुमात्रग्रहणस्यानुपपन्नत्वात् ससंस्थानवस्तुग्रहे न्यायसिद्धे प्रथमाक्षसंनिपात एव वस्तुनः ससंस्थानस्य ग्रहणेऽपि तस्यानुवृत्तत्वस्याप्रतीतत्वान्निर्विकल्पकव्यवहारश्चोपपन्नः । द्वितीयाक्षसंनिपातात्तस्यैव ग्रहणे गोत्वादेः पिण्डान्तरधर्मत्वेनानुवृत्तत्वप्रतीतेर्द्वितीयादिग्रहणस्य सविकल्पकत्वम् । ननु गोपिण्डादेः प्रथमाक्षसंनिपातग्रहणे जातेर्न ग्रहणम् , तस्या अनुवृत्तिप्रत्ययवेद्यत्वात् , अनुवृत्तेरपि द्वितीयादिप्रत्ययगम्यत्वादिति चेत्—न ; तस्या इन्द्रिय-संनिकर्षे ग्रहणाभावस्य वक्तुमशक्यत्वात् , वस्तुनो निर्धर्मकस्य ग्रहणानुपपत्तेरुक्तत्वाच्च

अतो जातेर्ग्रहणमस्त्येव, किंतु तस्या अनुवृत्तत्वं न गृहीतम् । द्वितीयादिप्रत्यक्षेषु जातिमत्त्वेनैव प्रतीतिरिति तेषां सविकल्पकता । प्रथमे तु वस्तुनो विशिष्टस्यैव ग्रहणम्, न तु जात्यादिविशिष्टत्वोल्लेखः; द्वितीयादिषु तद्विशिष्टत्वोल्लेख इति निर्विकल्पकसविकल्पकव्यवहार इत्यर्थः । अतो न कस्यापि प्रत्यक्षस्य निर्विशेषविषयत्वम् ।

एतेन प्रत्यक्षस्य विशिष्टविषयत्वप्रसाधनेन वस्तूनां जात्यात्मना अभेदो व्यक्त्यात्मना च भेद इति वदन्तो भेदाभेदवादिनो निरस्ताः । 'इदमित्थम्' इति विशेषणविशेष्यतयैव हि धीः । ननु जातिव्यक्त्योरविविक्ताकारप्रतीतेरैक्यमस्तीति चेत्—न; वस्तुनः प्रतीतौ प्रथमत एव सकलेतरव्यावृत्तत्वेन प्रतीतेः; व्यावृत्तेश्च जात्यादिविशिष्टप्रतीतिनिमित्तत्वात्, विशिष्टत्वस्य च विशेषणविशेष्ययोः पृथग्भावनिबन्धनत्वात् तत्पृथक्त्वस्य च 'इदमित्थम्' इति प्रतीत्यैव सिद्धेरविविक्ताकारप्रतीतेरसिद्धत्वात् । अतो दण्डादिवत् गोत्वादिरपि विशेष्यात् पृथग्भूत एव । ऐक्ये तु 'इदमित्थम्' इति पृथक्त्वेन धीर्न स्यात्; किंतु 'इदमेव' इति स्यात् । न तु दण्डादिवत् पृथक्स्थित्यनर्हतामात्रेणाभेदसिद्धिः, जात्यादेर्वस्तुसंस्थानतयैव पदार्थत्वेन पृथगनवस्थितिस्वभावत्वात् । तावन्मात्रेणैक्ये रूपादेरप्यपलापः स्यात् । अस्त्विति चेत्—न; जात्यन्धस्य स्पर्शाद् द्रव्यप्रतीतिवत् रूपादिप्रतीतिप्रसङ्गात् । तथा दर्शनमात्राद्रूपप्रतीतिवत् रसादिविशेषप्रतीतिरपि स्यात् । न चैतदस्ति । "अतो वस्तुविरोधः" इत्यादिभाष्यार्थस्तु 'वस्तुनो न द्व्यात्मकता विरोधात्' इति चोद्यस्य परिहारत्वेन भेदाभेदवादिभिः भिन्नाभिन्नत्वेन प्रतीयमानत्वान्न विरोध इति यदुक्तं तत् 'इदमित्थम्' इति प्रकारप्रकारितया भिन्नत्वेनैव प्रतीतेर्निरस्तमिति । अथ जातिव्यक्त्योः सहोपलम्भनियमादैक्यं कल्प्यमिति चेत्—न; सहोपलम्भनियमस्यापृथक्सिद्धविशेषणतैकस्वभावत्वेनान्यथासिद्धत्वात् । तथोभयोरेकशब्दवाच्यत्वस्यापि नैक्यकल्पकत्वं, पूर्वोक्तयुक्तेरेव । अनन्यथासिद्धं हि कल्पकम् । वस्तुनो द्व्यात्मकतानिषेधः सूत्रकारैरेव "नैकस्मिन्नसंभवात्" इति सूत्रे कृतः । अतो न सूत्रकाराभिप्रेतो भेदाभेदपक्षः । न च जीवपक्षनिरासाय तत्र तथोक्तिः, न स्वनिष्टतयेति वाच्यम्; युक्तेः सर्वत्र समत्वात् 'दूषणपरिहारसाम्ये हि नैकः पर्यनुयोज्यः' इति न्यायविन्मार्गः । प्रासङ्गिको भेदाभेदनिरासः । प्रत्यक्षस्य तु वतात् सविशेषविषयता स्थिता । व्याप्तिग्रहणकाले प्रत्यक्षादिना सिद्धनियतसंबन्धविशेषविशिष्टवस्तुविषयत्वादनुमानस्यापि न निर्विशेषविषयत्वम् । न हि निर्विशेषस्यानुमेयत्वं संभवति, लिङ्गाद्यभावात् । तथोपमानार्थापत्त्योरपि

प्रत्यक्षपूर्वकत्वादेव सविशेषविषयता स्पष्टैव। अभावाख्यप्रमाणप्रमेये च प्रमाणानर्हतयाऽनङ्गीकृते। एतदङ्गीकारेऽप्यभावस्यैव गम्यत्वं, न तु वस्तुनः। संभवादिप्रमाणाङ्गीकारेऽपि तस्यापि प्रत्यक्षवत् सविशेषविषयत्वमेव। ननु भाष्ये शास्त्रप्रत्यक्षानुमानानामेव विशिष्टवस्तुविषयत्वमुक्त्वा "प्रमाणसंख्याविवादेऽपि" इत्यादिना पराभिमतार्थानुवादेन सर्वप्रमाणानां विशिष्टविषयत्वप्रसाधनप्रतीतेः प्रत्यक्षादित्रयस्यैव प्रमाणत्वमितरेषां तु तदन्तर्भावोऽभिमत इति प्रतीयते; कथमत्रोपमानार्थापत्त्योः पृथक्प्रमाणत्वाङ्गीकारेण विशिष्टविषयता साधितेति चेत्—न; प्रत्यक्षादिप्रमाणत्रयस्वीकारेऽपि "प्रामाणसंख्याविवादेऽपि" इत्यादिभाष्यस्यास्वरसत्वात्; संख्याविवादानपायात्, प्रमाणस्यैकत्वादिप्रतिपक्षसद्भावात्। न च प्रमाणसंख्यातल्लक्षणानादरपरता तद्भाष्यस्येति वाच्यम्, वृत्तिकारमतानुसारित्वात् भाष्यस्य। वृत्तौ च प्रथमकाण्डे प्रत्यक्षसूत्रस्य प्रत्यक्षादिलक्षणपरत्वेन व्याख्यातत्वात्, तत्र संख्यानियमस्यापि स्वीकृतत्वाच्च। अतो भाष्यकारस्य प्रमाणलक्षणादिषु नादर इति श्रीराममिश्रोक्तिरपि व्यर्थैव प्रतीयते। उत्तरत्र भाष्ये "स्मरणानुमानागमयोगिप्रत्यक्षादिषु" इत्यत्रादिग्रहणात् प्रामाणान्तराङ्गीकारश्च गम्यते। अतोऽनुमानस्य प्रत्यक्षपूर्वतोक्त्यैवोपमानार्थापत्त्योरपि विशिष्टविषयतोक्तैव। अतः "प्रमाणसंख्याविवादेऽपि" इत्यादि भाष्यं वृत्तिकारोक्तेभ्यः प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्याख्यप्रमाणेभ्योऽतिरिक्तप्रमाणतत्संख्याविवादेऽपीत्यध्याहृत्य योजनीयम्। किंच "रेखागवयादपि सत्यगवयबुद्धिः सादृश्यादिनिबन्धना" इत्यदिभाष्यादुपमानाङ्गीकारः। सादृश्यप्रमाणाभ्युपगतौ हि तद्भाष्यस्यार्जवम्। तत्र तत्रानुपपत्त्या कल्पनाया उक्तत्वादर्थापत्त्यङ्गीकारः। अभावस्तु नाङ्गीकृतः, तदनङ्गीकारस्य कण्ठोक्तेः। तत्रापि ज्ञानस्यैव प्रामाण्याङ्गीकारः। भावरूपाज्ञाननिराकरणे साक्षात्प्रतीतिमात्रस्य प्रत्यक्षत्वाङ्गीकारः, अन्तर्याम्यधिकरणे कण्ठोक्तेः। ततस्तत्र तत्रोक्तिप्रकारदर्शनात् पूर्वकाण्डस्थमतद्वयेऽपि प्राभाकरमतमेवावलम्बितमिति प्रतीयते प्रमाणलक्षणादिषु। किंच लक्षणस्वरूपं तत्संख्या चाङ्गीकार्यैव। न ह्यलक्षितेन प्रमाणेन व्यवहारः; तथात्वे प्रामाणत्वानिश्चये प्रमाणाभासैरपि व्यवहारः स्यात्। ततश्च तत्त्वज्ञानं न स्यात्, प्रमाणाधीनत्वात् प्रमेयसिद्धेः। परोक्तप्रमाणानामसिद्ध्यादिदूषणोक्तेश्च प्रमाणलक्षणाङ्गीकारः। प्रमाणलक्षणरहितस्य प्रमाणवदवभासमानस्यैव ह्याभासत्वम्। प्रत्यक्षादेः स्वतः प्रामाण्यमेवाभिमतमिति तत्र भाष्ये प्रतीयते। शब्दप्रमाणस्य च साङ्केतिकत्वनिराकरणात् औत्पत्तिकसूत्रार्थ एव हि वेदार्थसंग्रहे उक्तः।

ऐकशास्त्र्यं च साधितम् । अतः "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" इति सूत्रार्थत्वेन वृत्तिकारोक्तप्रमाणपञ्चकस्य स्वीकारो युक्तः । तदर्थस्यानिष्टत्वे चारुणाधिकरणसूत्रवदन्यथा व्याख्यानं स्यात् । न च तदस्ति । अपूर्वाधिकरणादिवदर्थतः प्रत्यक्षादिप्रमाणत्रयेष्वितरप्रमाणान्तर्भावोक्त्या भङ्गो वा स्यात् । नापि तदस्ति । साक्षात्पददर्शनेऽपि शाबरभाष्ये तद्व्याख्यानेषु च प्रत्यक्षादिपरत्वेन वृत्तिकारेण व्याख्यातमिति तदुक्तप्रक्रियात्वेन प्रत्यक्षादिलक्षणस्य तैः प्रदर्शितत्वात् तत्सद्भावः सिद्धः । अभावप्रमाणाङ्गीकारो वृत्तिकारग्रन्थभाष्ये आपाततः प्रतीतोऽपि प्राभाकरैस्तद्ग्रन्थस्त्वन्यथा व्याख्यात इति न वृत्तिविरोधः । प्रत्यक्षादिप्रमाणपञ्चकस्वीकारे भाष्यकारकालसमीपकालवर्तिविष्णवार्यविरचितग्रन्थे प्रमाणपञ्चकस्यैव भाष्यकाराभिमतत्वेन लक्षितत्वदर्शनाच्च । न च तद्ग्रन्थे भाष्यविरुद्धस्य जीवविभुत्वादिप्रसाधनस्य दर्शनात्तत्रानाप्तिरिति वाच्यम्, कण्ठोक्तार्थविरुद्धस्य त्यागेऽप्यविरुद्धांशत्यागायोगात् । न हि प्रत्यक्षश्रुतिविरुद्धसर्ववेष्टनस्मृतेस्त्यागे सर्वस्मृतीनां त्यागः । अतः प्रमाणपञ्चकाङ्गीकारो भगवतो भाष्यकारस्य । तेषां लक्षणानि च— साक्षाद्धीः प्रत्यक्षमिति प्रत्यक्षस्य, ज्ञातसंबन्धनियमस्यैकदेशदर्शनात् देशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिरनुमानमित्यनुमानस्य, शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानमिति शास्त्रस्य, उपमानमपि सादृश्यमसन्निकृष्टार्थे बुद्धिमुत्पादयतीत्युपमानस्य, अर्थापत्तिरपि दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इत्यर्थापत्तेः, इत्येतानि वृत्तिकारोक्तत्वेनोक्तानि । स्मृतेरन्याऽनुभूतिः प्रमाणमित्युत्प्रेक्षितं सामान्यलक्षणम् । प्रत्यक्षं चानेकविधम्—निर्विकल्पकसविकल्पकयोग्ययोगिप्रत्यक्षभेदात् । अनुमानं च दृष्टं सामान्यतो दृष्टमिति द्विविधम् । शास्त्रं त्वनेकविधम् । उपमानं त्वेकविधमेव । अर्थापत्तिरपि दृष्टश्रुतभेदाद् द्विविधा । योगिप्रत्यक्षं तु कैश्चिन्नाङ्गीकृतम् । तदत्र शास्त्रे उत्तरत्र साधितम् । ज्ञानं च द्विविधमेव—स्मृतिरनुभूतिश्चेति । विपर्ययादीनामेष्वेवान्तर्भावः । सर्वज्ञानानां यथार्थत्वसाधनात् तल्लक्षणानामव्याप्त्यादिपरिहारः पूर्वकाण्ड एव द्रष्टव्यः । अत्र ग्रन्थगौरवभयान्न लिख्यते । प्रमेयभेदस्त्वत्रास्त्येव । पूर्वमीमांसाव्याख्यातृभिः समवायादीनि यानि कल्पितानि तान्युत्सूत्राणि वृत्तिकारेणानुक्तानि चेति मोहात् कल्पितानीत्युपेक्ष्याणि, अनुपपन्नत्वाच्च । अनुपपत्तिश्च समवायादिनिराकरणे । अस्माकं प्रमेयसंग्रहस्तु— द्रव्यगुणकर्माणि त्रीण्येव पदार्थाः । प्रमाणादीनामपि द्रव्यादिष्वेवान्तर्भावः। अतो न्यायस्य धर्मस्थानत्वेऽपि षोडशपदार्थी न्यायसूत्रोक्तापि

न स्वीकार्या । अथवा "प्रमाणप्रमेय" इत्यादिसूत्रस्यावान्तरभेदपरतास्तु । विशेषस्य दुर्निरूपत्वान्नाङ्गीकारः । सामान्यव्यवहारस्तूपाधितः । न वस्त्वन्तरत्वं सामान्यस्येत्युत्तरत्र वक्ष्यते । शक्तिसंख्यासादृश्यानि च गुणेऽन्तर्भूतानि, तेषामाश्रयेण सहोत्पद्यमानत्वात् । भाष्ये शक्त्यादेर्गुणत्वोक्तिरपि दृश्यते । द्रव्यं च द्विविधम्—चेतनमचेतनं चेति । अचिच्च पुनर्द्विविधम्—प्राकृतमप्राकृतं चेति । प्राकृतं च प्रकृतिर्महानहंकारो व्योम वायुस्तेजो जलं मही श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणमनोवाक्पाणिपादपायूपस्थमित्येकोनविंशतिप्रभेदभिन्नम् । प्राणादयस्तु वाय्ववस्थाभेदाः । अहंकारस्तु त्रिविधः—सात्त्विकराजसतामसभेदात् । सात्त्विकाहंकारः इन्द्रियकारणम् । तामसाहंकारस्तु महाभूतकारणम् । राजसस्त्वनयोः सहकारी । अहंकारस्य त्रैविध्यं च पृथग्द्रव्यत्वप्रयोजकम् । अप्राकृतं तु शुद्धसत्त्वमयम् । तच्च पूर्वोक्तप्रकारमेव । तच्च परमव्योम्न्येव । चिद्द्रव्यं च त्रिविधम्—परजीवज्ञानभेदात् । परस्तु वेदान्तैकसमधिगम्यो ज्ञानादिकल्याणगुणको हेयप्रत्यनीकः सर्वनियन्ता । जीववस्तु च त्रिविधम्—बद्धमुक्तनित्यभेदात् । ज्ञानं चार्थप्रकाशकम् । संयोगि द्रव्यमिति द्रव्यलक्षणम् । धर्मभूतज्ञानस्य पृथिव्यादिसंयोगित्वात् प्रकृत्यादेरप्यात्मपरमात्मसंयोगित्वाच्च न लक्षणस्याव्याप्तिः । तत्र प्रकृतिमहदहंकारेन्द्रियाणि मुक्तनित्यपरमात्मानोऽप्राकृताचिच्च शास्त्रैकसमधिगम्याः । तत्रोद्भूतसत्त्वरजस्तमोगुणा प्रकृतिः । बुद्धिलक्षणो महान् । देहादिष्वात्मबुद्धिरहंकारः, शब्दस्पर्शरूपरसगन्धाख्यगुणज्ञानासाधारणकरणानि क्रमेण श्रोत्रादीनि । उक्तिकरणं वाक् । शिल्पकरणं पाणिः । गतिकरणं पादः । विसर्गकरणं पायूपस्थम् । तयोरवान्तरभेदः स्पष्टः । स्वेतरेन्द्रियसहकारि मनः । एषां तु स्वरूपं कार्यकल्प्यमिति केषांचिदाग्रहः । प्रमाणान्तराभावे हि कल्पनावकाशः । इन्द्रियाण्यणुपरिमाणानि । एतच्चोत्तरत्र साधितम् । इन्द्रियसंख्या च । शब्दविशेषगुण आकाशः । स्पर्शविशेषगुणो वायुः । रूपविशेषगुणं तेजः । रसविशेषगुणं जलम् । गन्धविशेषगुणा पृथिवी । एतद्विशेषगुणवत्ता चैषां शास्त्रादेव, अण्डान्तर्वर्तिपृथिव्यादेः पञ्चीकृतत्वात् कस्य को गुण इति ज्ञातुमशक्यत्वात् । पृथिवीव्यवहारस्तु भूयस्त्वनिबन्धन इति भाष्य एव साधितम् । पृथिव्यादेस्त्रिवृत्करणात् पूर्वावस्था च शास्त्रैकसमधिगम्या । त्रिवृत्करणोत्तरकालं तु वायुव्यतिरिक्तमहाभूतानि चाक्षुषाणि । आकाशस्यापि चाक्षुषत्वं भाष्य एव साधितम् । तेजोऽबन्नानि स्पार्शनानि च । वायुस्तु स्पर्शनसिद्धप्रत्यक्षः । एतत्सर्वं परमात्मनो मुक्तानां च सर्वदा प्रत्यक्षम्, तेषां सर्वज्ञत्वेन

सर्वसाक्षात्कारित्वात् । मुक्तानामपि "सर्वं हि पश्यः पश्यति" इत्यादिश्रुतेः सर्वसाक्षात्कारिता । ननु दिक्कालयोरपि श्रुत्यादिषु श्रवणात् पृथग्द्रव्यत्वेन वक्तव्यत्वेऽपि किमिति नोपात्तत्वमिति चेत्—तर्हि ब्राह्मणक्षत्रियादेरपि श्रुत्यादिषु श्रूयमाणत्वात् पृथग्द्रव्यत्वापत्तिः, श्रवणस्याविशेषात् । अथ ब्राह्मणादीनामुपाधितस्तद्व्यवहार इति चेत्, तर्हि अत्राप्युपाधित एव तद्व्यवहारः । अनन्यथासिद्धव्यवहारो हि पृथग्द्रव्यत्वकल्पकः । ननु "अनादिर्भगवान् कालः" इत्यादिना कालस्य नित्यत्वं पृथक्त्वं च प्रतीयत इति चेत्—न; आदित्यादितेजःसंयोगाद्युपाधितो देशस्यैव कालव्यवहारहेतुत्वात्; तस्य च निरन्वयविनाशाभावतो नित्यत्वव्यवहारोपपत्तेः । यथोक्तम्—

> "यदेतदक्षयं नित्यं जगन्मुनिवराखिलम् ।
> आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥"

इति । लोके चादित्यादिदर्शनादर्शनाभ्यामहोरात्रादिव्यवहारादहरादिव्यवहारस्यौपाधिकता तावत् सिद्धा । आदित्यादिग्रहसंयोगोपहितदेशस्यैवाहरादिव्यवहारहेतुत्वमिति जैनपक्षनिराकरणाधिकरण उक्तम् । तत्रैव भाष्ये—"कालस्य पदार्थविशेषणतयैव प्रतीतेस्तस्य पृथगस्तित्वनास्तित्वादयो न वक्तव्याः, न च परिहर्तव्याः । 'कालोऽस्ति, नास्ति' इति व्यवहारोऽपि प्रतिपत्तॄणां जात्याद्यस्तित्वनास्तित्वतुल्यः" इत्यनेन ग्रन्थेन कालव्यवहारस्यौपाधिकत्वं गम्यते । ततस्तस्य पृथग्द्रव्यता न भाष्यकाराभिप्रेतत्वेन कल्प्या । स्वमत्या तु कामं व्यवहरन्त्वर्वाचीनाः । किंच "दिवसस्य रविर्मध्ये सर्वकालं व्यवस्थितः" इत्यादिश्रीविष्णुपुराणग्रन्थेषु चाहरादिकालव्यवहारस्यौपाधिकता गम्यते । न च नित्यकालाङ्गीकारः, तस्य प्रयोजनाभावात् । अनित्यस्यैव तु पदार्थविशेषणत्वं, न तु नित्यस्य कालस्य । प्रकृत्यादेरिव ब्रह्मण्युत्पत्तिविनाशयोः श्रुतिः । नित्यत्वे च "सदेव सोम्येदम्" इत्यादाववधारणश्रुतिविरोधः । न चात्मवन्नित्यत्वेऽपि परमात्मनो लयादिश्रुतिः । न च परमपदादिसद्भावेऽपि "सदेव" इत्यादिश्रुत्यविरोधान्न विरोध इति वाच्यम्, भाष्यादिषु तथात्वोक्तेरेव दर्शनात् । यथा परमपदादिसद्भावेऽपि "सदेव" इत्यादिश्रुत्यविरोधस्तथोक्तो वेदार्थसंग्रहे; न हि तथा विरोधोक्तिः कालविषये । किंच "यदण्डमण्डान्तर" इति श्लोके यामुनाचार्यैः प्रकृत्यादेः परमात्मविभूतित्वाभिधानवत् कालस्य न विभूतित्वमभिहितम् । यदि कालस्य पृथग्द्रव्यत्वं स्यात्, तदा पृथगेवाभिधानं स्यात् । कालश्च

पृथक्पदार्थवादिभिः प्राकृतत्वेनेष्टः । अतः पृथक्त्वे तस्य पुरुषवदभिधेयत्वं स्यात् । अतो देशस्यैवादित्यादिसंयोगादेरुपाधितः कालाख्यपदार्थत्वं, यथा पृथिव्यादेः संस्थानविशेषयोगिनो घटादिपदार्थत्वम् । न च "सदेव सोम्येदमग्र आसीदित्यादावग्र इति कालविशेष" इति भाष्योक्तिदर्शनात् प्रलये ब्रह्मव्यतिरिक्तवस्त्वभावादुपाधितः कालव्यवहारानुपपत्तेः पृथग्द्रव्यताऽङ्गीकार्येति वाच्यम्, सूक्ष्मावस्थापन्नचिदचिदादिदेशस्य विद्यमानत्वात् तदवस्थायामप्यादित्यादेरप्यत्यन्तविभक्तावस्थावत्त्वस्यैव कालव्यवहारहेतुत्वात् । न चाहरादेरभिमानिदेवतानामातिवाहिकत्वोक्तिदर्शनादुपाधीनामभिमानिदेवतात्वानुपपत्तेः पृथग्द्रव्यत्वमङ्गीकृतमिति वाच्यम्, उपाधीनां नाभिमानिदेवतात्वमिति नियमाभावात्, प्रदेशादिभेदोपाधितो जलस्य गङ्गासमुद्रादावभिमानिदेवताभेदश्रवणात् । तथा दिग्व्यवहारोऽप्यौपाधिकः । आदित्योदयास्तमयभेदात् दिग्व्यवस्था । न तु दिगिति पृथिव्यादिवत् पृथग्द्रव्यत्वेनोपलब्धिः । "पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्याद्युक्तिरप्यादित्योदयादिभिर्दिग्भेदक्लृप्तिनिबन्धना ; न तु पृथग्द्रव्यत्वेन सृज्यत्वनिबन्धना । अतो यथोक्तान्येवाचिद्द्रव्याणि । ननु सत्त्वरजस्तमसां साम्यावस्थैव प्रकृतिः, न तु तेषामाश्रय इति चेत्—न ; "रचनानुपपत्तेः" इत्यत्र सत्त्वादिगुणाश्रयस्यैव प्रधानद्रव्यत्वसाधनात् । गुणाश्रयो द्रव्यमिति द्रव्यलक्षणम् । आत्मधर्मभूतज्ञानस्याप्येकत्वसंख्याशक्त्यादिगुणाश्रयत्वात्, प्रकृतिप्राकृतानां च सत्त्वादिगुणाश्रयत्वात्, अप्राकृताचितोऽपि शुद्धसत्त्वगुणाश्रयत्वात्, जीवपरयोरप्यपहतपाप्मत्वादिगुणाश्रयत्वाच्च लक्षणस्य नाव्याप्तिः । अप्राकृताचितः शुद्धसत्त्वगुणता च "क्षयन्तमस्य रजसः पराके" इत्यादौ त्रिगुणातीतत्वप्रतीतेः, श्रीपाञ्चरात्रादौ शुद्धसत्त्वगुणाभिधानाच्च । कर्मान्यत्वे सति द्रव्याश्रितो गुण इति गुणलक्षणम् । सामान्याभावादेव नातिव्याप्तिशङ्का । आश्रयग्रहणेन संयोगिनो व्यवच्छिन्नाः, आश्रयाश्रयिभावसंबन्धस्य विशेषस्याङ्गीकृतत्वात् । तेन जीवादिव्यावृत्तिः, तेषां परमात्मसंबन्धित्वेऽपि संयोगित्वात् । गुणा अपि त्रिविधाः—अचिद्गुणाः चिद्गुणाः साधारणगुणा इति । गुणानां न संख्यानियतिः, परमात्मगुणानन्त्यात् । शब्दस्पर्शरूपरसगन्धगुरुत्वद्रवत्वस्नेहसंस्काराः सत्त्वरजस्तमांस्यचिद्गुणाः । शुद्धसत्त्वगुणाचितस्तु सत्त्वरजस्तमोव्यतिरिक्ताः पूर्वोक्ता एव गुणाः, ते च शुद्धस्वभावाः । रागद्वेषादयस्तु मनोऽवस्थाभेदा एव, न गुणाः । रागाद्युपादानेन "सर्वं मन एव" इति श्रवणात् । सुखदुःखे तु ज्ञानविशेष एव । बुद्धिरपि महत्तत्त्वावस्थैव । धर्माधर्मावपि कर्मविशेषावेव, नात्मनो गुणौ ।

भावनाख्यसंस्कारोऽप्यचिद्गुण एव, तस्य विनाशश्रवणात् । सर्वज्ञत्वसर्वशक्त्यादय ईश्वर-गुणाः । शक्तिसंख्यासादृश्यपरिमाणपृथक्त्वसंयोगविभागपरत्वाश्रयाश्रयिभावसंबन्धादय-श्चिदचित्साधारणगुणाः । एते च प्रत्यक्षतः शास्त्रतश्च सिद्धाः । द्रव्यव्यापारः कर्मेति कर्मलक्षणम् । उत्क्षेपणावक्षेपणादयोऽवान्तरभेदाः । गुणकर्मणां द्रव्यैराश्रयाश्रयिभावलक्षण एव संबन्धः । अतः सर्वे पदार्था द्रव्यादित्रयेऽन्तर्भूताः । एतत् सर्वं भाष्यकारोक्त्यैव प्रतीयते । विस्तरभयान्निवृत्तम् । प्रासङ्गिकोऽयं घोषः । प्रकृतमनुसरामः । किंच भ्रान्त्यादिव्यावृत्तत्वेन मिथ्यावादिभिर्ब्रह्म वक्तव्यम् । तत्स्वभावविशेषोक्त्यैव तद्व्यावृत्तिः । तथैवो-च्यते तैरपि । अथ च निर्विशेषं वस्त्विति चोच्यत इति परस्परव्याहतिः । प्रत्यक्षस्य विशिष्टविषयत्वसाधनेन भेदप्रतीतेरभ्रान्ततापि सिद्धा, सन्मात्रविषयस्यैव कारणदोषबाधकप्रत्य-याद्यभावात् भेदस्य सत्त्वात् । न च भेदस्य स्वरूपादिविकल्पासहत्वात् दुर्निरूपत्वमिति वाच्यम् , जातिगुणादेरेव भेदत्वेन सुनिरूपत्वात् । जात्यादिरेव हि भेदः । ननु जात्यादे-र्भेदत्वे तस्य व्यक्त्यादितो भेदोऽस्ति वा, न वा? नेति चेत्, तर्हि 'जातिर्भिन्ना' इति व्यवहारो न स्यात् । भेदयोगाद्धि 'भिन्नः' इति व्यवहारः । तत्स्वरूपमात्रस्य भेदत्वे स्वरूपभेदोक्त-दूषणानि स्युः । जात्यादेरपि भेदधर्मत्वाङ्गीकारे चानवस्था । स्वस्यैव स्वभेदहेतुत्वे आत्मा-श्रय दोष इति चेत्, मैवम्—संवेदनादिवत् स्वस्यैव स्वभेदव्यवहारस्यापि हेतुत्वात्, वस्तुस्वभावमात्राङ्गीकारेणानुपपत्तेः शान्तत्वात् । संवेदनस्य घटादिव्यवहारहेतुत्ववत् स्वव्यव-हारस्यापि हेतुत्वं परैरप्यङ्गीक्रियते । अतो नानवस्थादिदोषः । किंच मोक्षात् तैरपि भेदः समर्थनीयः । अन्यथा तदवस्थायामप्यनिर्वचनीयत्वनिश्चये सर्वव्यवहारोच्छेदः । तैरपि भेदस्य धर्मत्वपक्षमेवाश्रित्य व्यावहारिको भेदः समर्थितः । तच्च तत्त्वशुद्ध्यादिग्रन्थेषु प्रतीयते । अस्मा-भिस्तु भेदस्य स्थायितामात्रमेव साधनीयम् , तावन्मात्र एव भेदविवादस्य परिशिष्टत्वात् । तत्स्थायिता च मोक्षेऽपि जीवादेर्भेदश्रवणात् सिद्धा । तच्चोत्तरत्र बहुशः साधितम् । न च प्रत्यक्षस्यैकक्षणवृत्तित्वात् भेदग्रहस्य च धर्मिग्रहणप्रतियोगिग्रहणसापेक्षत्वेन क्षणान्तर-वर्तित्वाच्च भेदस्य तद्विषयत्वं संभवतीति वाच्यम् , जात्यादेरेव भेदत्वेन प्रतियोगिग्रहणाद्य-पेक्षाभावात्; प्रत्यक्षस्य क्षणवर्तित्वे प्रमाणाभावाच्च । कारणान्वयव्यतिरेकानुविधायित्वेन क्षणिकत्वस्वीकारेऽप्येकक्षण एव ससंस्थानवस्तुनो ग्राह्यत्वेन भेदस्यापि गृहीतत्वात् । सन्मात्रग्राहित्वे 'घटोऽस्ति' इति जात्यादिविशिष्टप्रतीतिर्न स्यात् । न च जात्यादिग्रहणमेव

नास्ति; कथं प्रतीतिविरोध इति वाच्यम्, जात्याद्यग्रहणे अश्वार्थिनो दूरे महिषेऽश्वबुद्ध्या प्रवृत्तस्य महिषदर्शने निवृत्त्यभावप्रसक्तेः, सर्वत्र सत्ताया एकत्वेन तस्याश्च गृहीतत्वात्। किंच एकार्थदर्शने सर्वशब्दस्मृतिरपि स्यात्, घटादिदर्शने घटादिशब्दस्येव; सन्मात्रस्यैव सर्वत्र विषयत्वात्। सर्वज्ञानानामेकविषयत्वे द्वितीयादिज्ञानानां गृहीतग्राहित्वेन स्मृतित्वं च स्यात्। प्रतिज्ञानं विशेषाऽङ्गीकारे चास्मत्पक्षपातः। किंच सन्मात्रविषयत्वे अन्धबधिराद्यभावप्रसङ्गः, सर्वैः सत्ताया गृह्यमाणत्वात्—अन्धेन स्पर्शात् ग्रहः बधिरेण चक्षुषेति। एवं सामान्यतः प्रत्यक्षस्य न सन्मात्रग्राहित्वमित्युक्तम्। न च विशेषादपि सन्मात्रग्रहः, चक्षुषो रूपरूपिरूपैकार्थाश्रयजातिसंख्यादिविषयत्वात्; त्वचः स्पर्शवद्वस्तुविषयत्वात्। नाप्येकैकगुणग्रहणमपि श्रोत्रादीनां सन्मात्रविषयत्वात्, तेषां शब्दरसगन्धाख्यभेदविषयत्वात्। ते च विषयाः परस्परं विलक्षणा एवावगम्यन्ते। प्रत्यक्षस्य सन्मात्रविषयत्वे शास्त्रस्यानुवादकत्वलक्षणाप्रामाण्यं च, तस्याप्रमितप्रमापकत्वस्वभावात्। प्रमाणान्तरादर्थावगमे कृतं शास्त्रेण। ब्रह्मणः प्रमेयत्वं च। ततश्च जडादिदोषः, दृश्यत्वे घटादिवज्जडत्वाद्यापत्तेस्त्वयैवोक्तत्वात्। ततश्च ब्रह्मणो मिथ्यात्वमेवायातम्, दृश्यत्वस्यैव मिथ्यात्वप्रयोजकत्वाभिमतेः। ततः प्रत्यक्षस्य संस्थानाख्यजात्यादिविशिष्टग्राहित्वमेव।

ननु गोत्वादिजातेः सास्नादिसंस्थानाभिव्यङ्ग्यत्वात् न संस्थानस्यैव जातित्वमिति चेत्—न; विकल्पासहत्वात्। किं संस्थानातिरेकिणो दृश्यत्वेनैवमुच्यते ? उत व्यवहारात् कल्प्यत्वेनेति। न तावदाद्यः, संस्थानव्यतिरेकेणानेकेष्वेकाकारेण बोध्यवस्त्वप्रतीतेः। अनुवृत्तिप्रत्ययबोध्यं हि सामान्यम्; संस्थानस्यैवानुवृत्तत्वेन बोध्यत्वात्। नापि द्वितीयः, संस्थानादेव तद्व्यवहारोपपत्तेः। संस्थानाभिव्यङ्ग्यत्वपक्षेऽपि संस्थानस्याङ्गीकारात् तावन्मात्रेण जातिव्यवहारोपपत्तौ न तत्त्वान्तरकल्पनागौरवम्। संस्थानं नाम द्रव्याणामसाधारणो धर्मः संनिवेशविशेष एव। ननु प्रतिव्यक्ति संस्थानस्य भिन्नत्वात् व्यक्तीनामानन्त्यात् न व्युत्पत्तिः शक्या; अथ सर्वत्रानुगतैकवस्त्वङ्गीकारः, तर्हि तस्यानेकवस्तुसाधारणधर्मत्वान्नासाधारणधर्मतेति चेत्—न; उपाधितो व्युत्पत्तिसंभवात्, संततिविशेषत्वोपाधितो वा विशिष्टमातापितृजन्यत्वोपाधितो वा ब्राह्मणादिशब्दव्युत्पत्तिवत्। स चोपाधिः सास्नाविषाणककुदादिः। अथ सास्नादीनां क उपाधिरिति चेत्, संस्थानसादृश्यमेवेति ब्रूमः। न च गवयादौ सादृश्यसद्भावेऽपि गोत्वादिसामान्यव्यवहाराभावान्न सादृश्योपाधितः सामान्यव्यवहारोपपत्तिरिति वाच्यम्, अत्यन्त-

सौसादृश्योपाधित्वेन स्वीकारात् । न हि गवयादौ संस्थानस्य गोसंस्थानेनात्यन्तसौसादृश्यम्; तथात्वे गवयोऽपि गौरेव स्यात् । व्यङ्ग्यत्वपक्षेऽप्ययं परिहारः समः । गवयादौ कथं न गोत्वादेरभिव्यक्तिरिति चेत्, तत्राभिव्यञ्जकावयवाभावादित्युत्तरे दत्ते, कथं तत्र तदभिव्यञ्जकावयवाभाव इति पुनश्चोदिते, गोसदृशाभिव्यञ्जकाभावादेवेत्युत्तरं स्यात्; जातिप्रतीत्यभावान्नाभिव्यञ्जकत्वमिति केषांचित् संस्थानानामेव गोत्वाद्यभिव्यञ्जकत्वं स्वभाव इति वा । एवमत्रापि गवयादौ तत्संस्थानाभावात् गोत्वाद्यप्रतीतिरिति वक्तुं शक्यम् । कल्पनागौरवमभिव्यङ्ग्यत्वपक्ष एव, जातेः संस्थानातिरिक्तत्वाङ्गीकारात् । एवं स्वरूपजात्यादिविशिष्टवस्तुग्रहणे 'भिन्नः' इति व्यवहारः । स्वस्मिन्नभिन्न इति व्यवहारस्त्वौपचारिकः, जात्यादेरेव भेदत्वेन स्वस्यापि भेदव्यवहारहेतुत्वात्; तदाश्रयजात्यन्तराद्यभावात् । न च वैशेषिकाद्यभिमतजात्यतिरिक्तधर्मस्य भेदत्वस्वीकारोऽपि युक्तः, जात्यादिव्यतिरेकेण भेदाख्यधर्मादर्शनात्; जात्यादिनैव 'भिन्नः' इति व्यवहारोपपत्तेश्च । तस्य तैरप्यङ्गीकृतत्वाच्च । अर्थान्तरकल्पनायां तु गौरवम् । न च जात्यादेरेव भेदत्वे जात्यादिव्यवहारवत् भेदव्यवहारोऽपि स्यादिति वाच्यम्, गवादिग्रहणे 'गौः' इत्यादिव्यवहारात् भेदस्य व्यवह्रियमाणत्वात् । गोत्वादिग्रहणे पार्थिवादिसंकरजातिबुद्धिव्यवहाराणां निवृत्तेः, गोत्वादेरेव सकलेतरव्यावृत्तत्वात् । भेदग्रहणेनैव हि पार्थिवाद्याकारभेदनिवृत्तिः । ननु जात्यादिव्यवहारस्यैव भेदव्यवहारहेतुत्वे "प्रतियोग्यपेक्षया वस्तुनः स्वस्य च भेदव्यवहारहेतुत्वात्" इति भाष्योक्तार्थविरोध इति चेत्—न; भेदव्यवहारस्य कृत्स्नस्य प्रतियोग्यपेक्षाभावात् । किंतु 'अयमस्माद्भिन्नः' इति व्यवहारस्यैव प्रतियोग्यपेक्षत्वम् । तच्च संबन्धिशब्दत्वात्; लोके तथा व्यवहारदर्शनाच्च ।

(न चानुवर्तमानत्वेन सन्मात्रस्यैव सर्वासु प्रतीतिषु पारमार्थ्यम्, व्यावर्तमानानुवर्तमानत्वयोर्बाध्यबाधकत्वयोरप्रयोजकत्वात् । किंतु विरोधस्यैव तत्प्रयोजकत्वम् । विरोधे च प्रबलस्य बाधकत्वं, दुर्बलस्य बाध्यत्वं, बाधितप्रमाणविषयस्य च निवृत्तिः । ननु किं कथयाऽनया? प्रकृते किमायातमिति चेत्, उच्यते—घटादिष्वपि विरोधाभावान्न बाध्यबाधकभाव इति । कथमत्र विरोधाभाव इति चेत्, देशकालभेदादिति ब्रूमः । प्रतिपन्नोपाधावेवाभावप्रतीतौ हि विरोधः । यद्देशकालसंबन्धितया यद्वस्तुनः प्रतीतिः, तद्वस्तुनस्तद्देशकालयोरेवाभावप्रतीतौ विरोधः । भावाभावसाधकप्रमाणयोरनन्यथासिद्धस्य प्राबल्यं नान्यस्य, रज्जुसर्पादौ तथा दर्शनात् । अतः

प्रतिपन्नोपाधौ बाधितत्वस्यैव मिथ्यात्वप्रयोजकत्वम् । न ह्यन्यत्र निवृत्तस्यान्यत्र निवृत्तिरपि शक्या वक्तुम्, अपवरकादौ निवृत्तघटादेर्गृहान्तरादौ दर्शनात् । अतो व्यावर्तमानत्वं न मिथ्यात्वे प्रयोजकम् । एतेन 'घटादयोऽपरमार्थाः, व्यावर्तमानत्वात्' इत्यनुमानमपि निरस्तम्, प्रतिपन्नोपाधावेव बाधितत्वस्य मिथ्यात्वप्रयोजकतयोक्तत्वात् । 'अनुवर्तमानत्वात् सत् परमार्थः' इत्यनुमानं तु सिद्धसाधनम्, वैदिकस्य कस्यापि सतोऽपारमार्थ्यानङ्गीकारात् । न चेदमनुमानं बौद्धं प्रत्युक्तमिति वाच्यम्, शून्यवादिनस्तावदसिद्धत्वादनुवर्तमानत्वस्य ; तथेतरेषामपि । ) अतो न तत्परत्वेनोपन्यासस्तदनुमानस्य । सत्ताख्यं वस्तु च सर्वत्रानुगतं दुर्निरूपमित्युक्तम् । तत्सद्भावेऽपि तस्य तद्विशेषणानां चानुभूतेश्च विषयत्वेन च भेदस्य प्रत्यक्षसिद्धत्वादनुभूतेरेव पारमार्थ्यमित्युक्तिरपि निरस्ता, भेदस्य साधितत्वात् । न च विषयविषयिभावो भ्रान्त इति वाच्यम्, अबाधितत्वात् । अनेन "संविदा स्वीकृतं यत्तत्" इत्याद्युक्तिरपि निरस्ता ; संवित्स्वीकृतस्य संवित्त्वमित्यत्र प्रमाणाभावाच्च । "जडावबोधो बोधस्य विरुद्धत्वान्न युज्यते" इत्यपि व्यर्थः, ज्ञानेन जडादेर्बोधस्य दर्शनात् ; भावाभावयोरिव ज्ञानतद्विषययोर्विरोधादर्शनात् । भावाभावाविव चिज्जडौ विरुद्धावित्युक्तिरपि हेया, विरोधाभावात् । द्वयोर्विषयविषयित्वेन संबन्धोऽपि सुस्थः । न च संबन्धिव्यतिरेकेण संबन्धादर्शनान्न संबन्धसत्तेति वाच्यम्, विकल्पासहत्वात् । किं लोके संबन्धाख्यपदार्थादर्शनमभिप्रेतम् ? किं वा ज्ञानतद्विषययोः? न तावदाद्यः, 'संयुक्तौ घटौ' इति प्रतीतेः, व्यवहाराच्च ; रूपरसादेस्तदाश्रयैः संबन्धप्रतीतेश्च । रूपादेर्द्रव्यात् पृथक्त्वं पूर्वमेव साधितम् । नापि द्वितीयः, विषयविषयिणोः पृथक्त्वसिद्धौ संबन्धव्यतिरेकेण विषयताया असिद्धेः । असंबद्धस्य च विषयत्वे सर्वपदार्थानामपि ग्राह्यत्वापत्तिः । ज्ञानघटादेस्तादात्म्यसंबन्धे अन्धबधिरादिवैषम्याभावः, सर्वज्ञता च । सर्वज्ञानानां विषयतादात्म्यात् घटज्ञाने च जलाहरणादिसिद्धिः स्यात्, क्षुरज्ञाने देहादिभेदश्च स्यात् । अतो विषयविषयिभावसंबन्धो ज्ञानविषययोः । संबन्धस्याचाक्षुषता तु ज्ञानस्याचाक्षुषत्वात्, न संबन्धस्यासत्त्वात् । चाक्षुषयोरेव हि संबन्धश्चाक्षुषः ।

अनुभूतिः स्वयंप्रकाशेत्युक्तिरपि व्यर्था, विकल्पासहत्वात् । किमनुभूतिमात्रस्य स्वयंप्रकाशत्वमुच्यते ? किं वर्तमानानुवृत्तानुभूतेः ? नाद्यः ; परानुभूतेरनुमेयत्वात्, स्वातीतानुभूतेः स्मरणज्ञानविषयत्वाच्च । वर्तमानापि परानुभूतिरनुमीयते, हानादिभावात् ।

अतो द्वितीयोऽप्यनुपपन्नः । अतो न सर्वेषां सर्वदा सर्वानुभूतेः स्वयंप्रकाशत्वम् । न च—विकल्प एवानुपपन्नः, अनुभूतिभेदाभावादिति वाच्यम्, अनुभाव्यानुभवितृभेदेऽनुभूतिभेदसिद्धेः । अनुभाव्यघटादेः प्रतिपन्नोपाधावभावाभावान्न मिथ्यात्वमित्युक्तम् । ज्ञातैवात्मेत्यन्यत्र साध्यते । तद्धेतुत्वं च "नित्यो नित्यानाम्" इत्यादिश्रुतिभिः सुखदुःखव्यवस्थया च सिद्धम् । न चानुभूतेरनुभाव्यत्वे घटादिवदननुभूतित्वमिति वाच्यम्, अनुमेयपरानुभूत्यादेरपि जडत्वापत्तेः । न चानुभूतेर्नानुमेयत्वमिति वाच्यम्, व्युत्पत्त्युपायाभावेन शब्दप्रमाणोच्छेदप्रसङ्गात् । 'गामानय' इत्यादौ वाक्यश्रवणसमनन्तरं प्रेष्यप्रवृत्त्या तस्यार्थविषयज्ञानमनुमाय शब्दस्य तत्कारणतामप्यवधार्य शब्दस्यार्थावबोधकत्वशक्त्यध्यवसायः । आचार्याद्युपासनमपि तस्य ज्ञानवत्तानुमानादेव । परवाक्यादिस्तु लिङ्गम् । तद्वाक्यस्य प्रमाणताङ्गीकारेऽप्यनुभूतेर्ज्ञेयता सिद्धा । आचार्यादिज्ञानस्यानुमानेनानिश्चये यस्य कस्याप्युपासनं स्यात् । अनुभूतेरनुभाव्यत्वं तु नानुभूतिवविघातकम् । अनुभूतित्वं नाम स्वतः सत्तया स्वाश्रयात्मानं प्रति स्वव्यवहारयोग्यत्वं, स्वसत्तया आश्रयस्य जलाहरणादिहेतुत्वे घटादिविषयपरिच्छेदकत्वं वा । ननु स्मृतिज्ञानस्यापि स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वादनुभूतित्वप्रसङ्ग इति चेत्—न; आत्मानुभूतिशब्दस्य ज्ञानमात्रपरत्वात् । अतो न लक्षणपरत्वं पूर्वग्रन्थस्य। उत्तरस्य त्वनुभूतिलक्षणपरतास्तु । अत एव हि "धियो हि धीत्वं स्वयंप्रकाशता च ज्ञातुर्विषयप्रकाशनस्वभावतयोपलब्धेः" इति भाष्यम् । एवं चानुभूतेरनुभाव्यत्वेऽपि नानुभूतित्वहानिः, अनुभाव्यत्वेऽप्यनुभूतित्वस्य सिद्धत्वात् । घटादेस्तु जडत्वं नानुभाव्यत्वप्रयुक्तं; किंतु स्वसत्तयैव ज्ञातुः स्वव्यवहारायोग्यत्वप्रयुक्तम् । न हि घटादेः स्वसत्तयैवानुभूतिव्यवहारयोग्यता । किंचाननुभाव्यत्वे गगनकुसुमादिवदननुभूतित्वम् । न च गगनकुसुमादेरननुभूतित्वमसत्त्वप्रयुक्तं, नाननुभाव्यत्वप्रयुक्तमिति वाच्यम्, घटादेरननुभूतित्वस्याज्ञानाविरोधित्वप्रयुक्तत्वेन समत्वात् । न चानुभूतेरनुभाव्यत्वे घटादिवदज्ञानाविरोधित्वप्रसक्तिरिति वाच्यम्, अननुभाव्यत्वेऽपि गगनकुसुमादिवदज्ञानाविरोधित्वापत्तेर्दुर्वारत्वात् । ननु अज्ञानविरोधित्वमेवानुभूतित्वम्; अतः स विशिष्टो हेतुरिति चेत्—तर्हि अज्ञानविरोधित्वमेवानुभूतित्वमित्युक्तं स्यात्; ततश्च ब्रह्मणोऽननुभूतित्वापत्तिः, तस्याज्ञानाविरोधित्वात् । भवतः प्रमाणज्ञानमेव हि अज्ञानविरोधित्वेनेष्टम् । न च गगनकुसुमस्यासिद्धत्वादाश्रयहीनो दृष्टान्त इति वाच्यम्;

परैस्तस्य दृष्टान्तत्वेन स्वीकृतत्वात्। "गगनकुसुमादिवदसतः ख्यातिबाधौ न संभवतः" इति ह्यनिर्वचनीयत्वसाधनम्। अतो नानुभूतेरनुभाव्यत्वेऽप्यननुभूतित्वम्। एतेन "चैतन्ये यदि चैत्यत्वम्" इत्याद्युक्तिरपि निरस्ता। किंचात्मविप्रतिपत्तौ तद्विषयप्रामाण्यस्य वक्तव्यत्वात् प्रमेयता सिद्धैव। आत्मेतरस्यापि प्रमाणसिद्धत्वात् "तदन्यन्नोपपद्यते" इत्युक्तिरपि व्यर्था। न चानुभूतेर्ज्ञानान्तरविषयत्वेऽनवस्थेति वाच्यम्, सर्वज्ञानानां प्रमेयतयैव सिद्धिरित्यनभिधानात्; प्रमेयत्वमप्यस्तीत्येतावन्मात्राभिधानात्। न ह्येतावताऽनवस्था। न च 'नकिंचिदहमवेदिषम्' इति स्वापकालीनाज्ञानानुभवप्रतीतेः न स्वयंप्रकाशता संविदः प्रत्यक्षसिद्धेति वाच्यम्, प्रत्यक्षाविषयत्वे स्वयमेव सिध्यतीत्यभ्युपगतिरयुक्ता स्यात्। न च संविदः स्वयंप्रकाशत्वरूपधर्मविषयत्वान्न स्वयंप्रकाशत्वहानिरिति वाच्यम्, संविदो निर्धर्मकत्वाभिमानात्, स्वापे स्वरूपस्याप्यपरोक्षत्वाभिमानाच्च। न चाज्ञानप्रत्यक्षवत् संवित्स्वयंप्रकाशप्रत्यक्षत्वसिद्धिः। स्वापे विज्ञातुरेवावभास इति वक्ष्यते। किंच अज्ञानोपाधिकस्वरूपस्यैव भवतां प्रत्यक्षत्वाभिमानान्न संवित्स्वयंप्रकाशत्वविषयता प्रत्यक्षस्य। अज्ञानाश्रयत्वं च संविदो न संभवतीति वक्ष्यते। भावरूपाज्ञानस्य दुर्निरूपता च। यच्च धर्मिज्ञानाद्यभावात् न ज्ञानप्रागभावविषयत्वं 'न किंचिदहमवेदिषम्' इति परामर्शस्येत्युक्तम्; तदसत्, आत्माख्यधर्म्यनुभवसद्भावात्। न च—तर्ह्यात्मनि स्वयंप्रकाशत्वमेवोक्तं स्यात्, प्रकाशाव्यभिचारित्वाभिधानात्; प्रकाशाव्यभिचारित्वमेव हि स्वयंप्रकाशत्वमिति वाच्यम्, ज्ञानप्रागभावानुभवस्य तावत्सिद्धत्वात्। स्वयंप्रकाशताऽस्तु वा मा वा; प्रकाशाव्यभिचारित्वस्यैव प्रागभावाद्यसिद्धिहेतुत्वे प्रदीपादौ व्यभिचारः, प्रकाशाव्यभिचारित्वेऽपि प्रागभावादिदर्शनात्। किंच 'सुषुप्तिकाले मया किंचिन्नानुभूतम्, नियमेनास्मर्यमाणत्वात्' इत्यनुमानाच्च ज्ञानप्रागभावसिद्धिः। न च निर्विकल्पकज्ञानानुभूतवस्तुषु व्यभिचार इति वाच्यम्, निर्विकल्पकानुभूतवस्तुषु स्मरणाभावासिद्धेः। निर्विकल्पके विशिष्टवस्त्वनुभवस्य साधितत्वेन तस्य स्मरणसंभवात्। प्रदीपादेः संवेद्यत्वेन स्वयंप्रकाशत्वाभावात् प्रदीपादिवदिति दृष्टान्तः साध्यविकलः। 'प्रकाशाव्यभिचारित्वात् आत्मा वेद्यः, प्रदीपवत्' इति वक्तुं शक्यत्वात् प्रकरणसमश्च हेतुः। प्रदीपस्यानन्याधीनप्रकाशता चासिद्धा, ज्ञानाधीनप्रकाशत्वात्। तस्यानन्याधीनप्रकाशत्वे च प्रदीपादेरात्मत्वमपि स्यात्। न च—स्वयंप्रकाशवस्तुन एवात्मत्वं, न तमोविरोधिवस्तुन इति वाच्यम्, प्रमाणज्ञानस्यैवाज्ञानविरोधित्वेनात्मत्वापत्तेः। न च प्रदीपादेः संवेद्यत्वमनात्मत्व-

प्रयुक्तमिति वाच्यम्, स्वयंप्रकाशत्वेनात्मत्वस्य त्वयैवोक्तत्वात्। अनात्मत्वेऽपि प्रदीपादेः प्रकाशत्वं न प्रकाशाव्यभिचारित्वप्रयुक्तं, किंतु तेजोद्रव्यत्वप्रयुक्तमेव। न च पार्थिवपद्मरागादेस्तमोविरोधित्वदर्शनादिदमयुक्तमिति वाच्यम्, पद्मरागमण्यादेरपि तेजोद्रव्यत्वात्। "तैजसानि च रत्नानि" इत्यादिस्मृतेः, आदित्यादिवत् प्रभादर्शनाच्च। आत्मनो वस्तुत्वाच्च ज्ञानविषयत्वसिद्धेः ससत्प्रतिपक्षता च। न च वस्तुत्वस्य सामान्यव्याप्तत्वेन सावकाशत्वात् प्रकाशाव्यभिचारित्वस्य विशेषविषयत्वेन बलीयस्त्वात् स्वयंप्रकाशत्वमेवेति वाच्यम्, उभयप्रमाणानुरोधेनोभयविधत्वस्यापि स्वीकार्यत्वात्। अविरोधाच्च न बाधोऽन्यतरप्रमाणस्य; प्रकाशाव्यभिचारित्वेऽपि प्रदीपस्य वेद्यत्वदर्शनाच्च। प्रकाशाव्यभिचारित्वस्य स्वयंप्रकाशत्वप्रयोजकत्वे स्वाभिमतभावरूपाज्ञानस्यात्मसाक्षित्वेनेष्टत्वात् प्रकाशाव्यभिचारित्वात् तदज्ञानस्यापि स्वयंप्रकाशत्वं स्यात्। ततश्चानैकान्त्यं हेतोः। न च प्रकाशाव्यभिचारित्वेऽप्यज्ञानस्य प्रकाशस्याज्ञानव्यभिचारित्वान्नानैकान्त्यमिति वाच्यम्, धूमानुमानोच्छेदप्रसङ्गात्, अव्यभिचारित्वेऽपि धूमस्याग्नेर्धूमव्यभिचारित्वात्। 'अनुभूतिरनन्याधीन' इत्याद्यनुमानं तु नास्मन्मतविरोधि। न चार्थापत्त्यापि तस्याः स्वयंप्रकाशत्वसिद्धिः, पूर्ववत्तस्या विषयत्वापत्तेः। तस्याः स्वयंप्रकाशतैकस्वरूपत्वाभावेऽनुपपत्त्यभावाच्च। न च स्वयंप्रकाशत्वाभावे आत्मप्रतिभास एवानुपपन्न इति वाच्यम्, ज्ञानाश्रयत्वेन वा ज्ञानान्तरकर्मत्वेन वात्मप्रतिभासोपपत्तेः।

न च—स्वयंप्रकाशसंविदाश्रयत्वमात्मनोऽनुपपन्नम्, तस्याः प्रागभावादौ प्रमाणाभावादिति वाच्यम्, मिथ्यावादिप्रक्रियया तत्र प्रमाणाभावस्य वक्तुमशक्यत्वात्; तत्रानुभूतेरेव प्रमाणत्वात्। न च तस्याः स्वसत्तासमकालं स्वप्रागभावादौ न प्रामाण्यसंभव इति वाच्यम्, तस्याः समकालवर्तिविषयस्यैव ग्राहकत्वमिति नियमाभावात्; तथात्वेऽतीतादेरविषयत्वप्रसक्तेः। न च सर्वस्य विषयस्य न स्वसमकालवर्तिग्राह्यत्वमुच्यते, किंत्वनुभूतिप्रागभावस्य तथा नियम इति वाच्यम्, तन्नियमस्यादर्शनात्। तत्सद्भावे च तत्प्रागभावः सिद्धः। स तु नियमो न संभवत्येव, पदार्थसत्तायां प्रागभावस्य नष्टत्वेन समकालवर्तित्वासंभवात्। ऐन्द्रियिकप्रत्यक्षस्य स्वसमकालवर्तिविषयत्वम्; न तु सर्वप्रमाणानाम्, स्मरणानुमानादेरतीतादिविषयत्वात्। सर्वप्रमाणस्मृत्योरबाधितविषयभावमात्रस्यैवापेक्षितत्वम्, न तु स्वसमकालवर्त्यविनाभावसंबन्धस्य, तथात्वेऽनुमानाद्युच्छेद इत्युक्तम्। एतेन स्मृतिर्ज्ञानस्य न विषय इति येषां बाह्यानामिष्टं ते निरस्ताः। न च संविदः स्वविषयाश्रययोः साधनत्वेनोपक्षीण-

त्वान्नाभावग्राहकत्वमिति वाच्यम्, संविदाश्रयत्वस्यैव प्रागभावत्वेन संविदाश्रयसाधकत्वे प्रागभावसिद्धेः। न च दृश्ये प्रतियोगिनि केवलधर्मिस्वरूपस्याभावत्वाभ्युपगमादत्र संवित्सद्भावे केवलतानुपपत्तिरिति वाच्यम्, संविदुत्पत्तेः पूर्वकाले केवलत्वोपपत्तेः। संविदः संविदन्तरेण दृश्यत्वं च साधितम्। अतः संविदः स्वतः सिद्धत्वात् संविदन्तरेण विषयीकारानुपपत्तिश्च निरस्ता।

ननु—न केवला धीः प्रत्यक्षाद्यनन्तर्भूता प्रमेयं साधयति; तदन्तर्भूता ज्ञानप्रागभावविषया न कापि धीरस्ति; न तावदवर्तमानप्रागभावविषयत्वं प्रत्यक्षस्य, तस्य वर्तमानैकविषयत्वात्; न च योगिप्रत्यक्षविषयता संभवतीति वाच्यम्, योगिभिस्तदभावो विषयीकृत इत्यत्र प्रमाणाभावात्; न चानुमानार्थापत्त्यागमविषयत्वम्, लिङ्गानुपपत्तिवाक्यानामभावात्; अतः संवित्प्रागभावस्य ग्राहकप्रमाणाभावादेव न सिद्धिरिति चेत्—एवं तर्हि स्वतः सिद्धत्वादेव न प्रागभाव इत्युक्तिः परित्यक्ता स्यात्। प्रत्यक्षाद्यभावादिति हेत्वन्तरोक्त्या तदवतारेऽपि योग्यानुपलब्ध्याख्येन त्वदङ्गीकृताभावप्रमाणेनैव तदभावः सिद्धः। यदि पूर्वमपि स्यात् तदा तस्याः स्वयंप्रकाशत्वेनोपलब्धियोग्यत्वेनोपलब्धिरपि स्यात्। न हि घटादिज्ञानस्य सर्वदा उपलब्धिः। अत उपलब्धियोग्यस्यानुपलब्धिरभावनिबन्धनैव।

किंच प्रत्यक्षज्ञानस्य स्वसत्तासमकालवर्तिमात्रविषयत्वाच्च ज्ञानस्य प्रागभावादिसिद्धिः। अन्यथा घटादेः पूर्वोत्तरकालसत्तायां प्रामाण्यं स्यात्। तादृक्स्वभावता तु ज्ञानस्य पूर्वोत्तरकालयोरभावनिमित्तैव। विषयसत्तासाधकज्ञाननित्यत्वे विषयस्यापि नित्यता स्यात्। नित्यत्वे च स्वप्रकाशत्वेन नित्यत्वप्रतीतिरपि स्यात्। न चैवम्। अनुमानादिसंविन्नित्यत्वे तद्विषयनित्यतापि, प्रमाणाधीनत्वात् प्रमेयसिद्धेः। न च—विषयसंविदो न नित्यत्वमुच्यते, किंतु निर्विषयसंविद इतिवाच्यम्; तादृशसंविदो योग्यत्वे सत्यनुपलम्भात्, विषयप्रकाशतयैवोपलब्धेः। तत एव हि स्वयंप्रकाशता त्वयापि समर्थिता। हेत्वसिद्धौ हेतुमत्संवेदनस्याप्यसिद्धिः। प्रमाणान्तरेणासिद्धिश्चोक्ता त्वया। ततश्च तस्यास्तुच्छतैवायाता। न च स्वापादिषु निर्विषयानुभूतेः स्फूर्तिरिति वाच्यम्, तत्र तादृशसंविदनुपलब्धेः। तच्च नियमेनास्मर्यमाणत्वात्। न च—अनुभूतस्य स्मरणानियमः, भवान्तरीयानुभूतार्थे व्यभिचारादिति वाच्यम्, तत्र स्मरणहेतुसंस्कारतिरस्कारात्, तच्च देहविगमात्। वस्तुतस्तु तत्रानुभूतस्यापि स्मरणमस्त्येव।

न तावदद्य जातस्य स्तन्यपानादौ व्युत्पत्तिः ; किंतु पूर्वजन्मानुभूतसंस्कारेण स्मर्यते । तच्च याज्ञवल्क्यादिषु सिद्धम् । भाष्ये तदभावोक्तिस्तु भूयस्त्वाभिप्रायात् । किंच 'न किंचिदहमवेदिषम्' इत्यनुभवाभावपरामर्शाच्च तत्र संविदभावसिद्धिः । न च स्वापे विषयावच्छेदाभावादहंकारविगमाच्चानुभूत्यस्मरणनियतिरिति वाच्यम् , अर्थान्तराभावस्यार्थान्तराननुभवस्य चानुभूतपदार्थस्मृत्यभावनियतिहेतुत्वाभावात् । न हि घटाननुभवः पटाभावश्चानुभूतदेवदत्तास्मृतिहेतुः । स्वापादावप्यहमर्थानुवृत्तिः साधयिष्यते । अतो न निर्विषयनिराश्रयकेवलज्ञानानुभवः । अतो योग्यानुपलब्ध्याऽनुभूतिप्रागभावसिद्धौ संविद्भेदसिद्धेर्नेतरेतराश्रयत्वम् । अस्या नित्यता च सिद्धा ।

यच्चोक्तम्—'उत्पत्त्यभावात् उत्पत्तिव्याप्तविकाराणामसद्भावः संविदः' इति; तच्चासत् , उत्पत्तिरहितप्रागभावस्य विनाशाख्यविकारदर्शनात् । न च भावत्वे सत्यनुत्पद्यमानत्वादिति हेतुर्विशेषित इति वाच्यम् , हेत्वन्तरत्वेनापि निग्रहस्थानत्वात् । न च उक्तिदोषेऽयं नार्थदोष इति वाच्यम् , कथायामर्थदूषणापत्तेः ; त्वदभिमतभावरूपाज्ञानस्यानादित्वेनाभिमतस्य विकारित्वात् तत्र हेतोर्व्यभिचारात् । न च तद्विकाराणां मिथ्यात्वान्न दोष इति वाच्यम् , क्वापि परमार्थविकारानभ्युपगतेर्विशेषणवैयर्थ्यात् । यच्चोक्तम्—अनुत्पन्नत्वात् संविदो न नानात्वमिति ; तच्चासत् , संविदो देहादेर्भेदस्याभ्युपगतत्वात् । नानात्वस्य सप्रतिसंबन्धिकत्वात् देहाद्यपेक्षया नानात्वमुक्तम् । अतः संविन्नानात्वनिषेधे देहाद्भेदोक्तेरनुत्तरत्वमिति न चोद्यावकाशः । किंचानुत्पन्नस्य नानात्वादर्शनमप्यसिद्धम् , अनाद्यविद्याया नानात्वदर्शनात् ; संविदो भेदस्याश्रयणीयत्वाच्च । न च तद्भेदो मिथ्येति वाच्यम् , क्वापि ते सत्यभेदानङ्गीकारात् । उत्पत्तिव्याप्तभेदस्य यत्र क्वापि सत्यत्वाङ्गीकारे हि एवंविधवचनोपपत्तिः । ज्ञानस्याविद्यातो भेदाभावे चाविद्यात्वमेव । कालादिभेदेनाबाधितप्रतीतिसिद्धघटादिभेदसिद्धौ तद्विषयसंविद्भेदः सिद्ध इत्युक्तम् । "अजो ह्येको जुषमाणोऽनुशेते जहात्येनाम्" इत्यादावजानां नानात्वश्रवणात् अनुत्पन्नत्वादिति हेतुः कालात्ययापदिष्टश्च । यच्चोक्तम्—अनुभाव्यत्वात् रूपादिवत् भेदादेर्नानुभूतिधर्मत्वम् ; दृशित्वादेव तस्या अननुभाव्यत्वमिति ; तच्चासत् , तस्या नित्यत्वादिधर्माणां स्वैरेव प्रमाणैः साधितत्वेन तद्धेतोरनैकान्तिकत्वात् । न च संविदनतिरिक्तता नित्यत्वादेरिति वाच्यम् , अनतिरिक्तत्वे नित्यत्वस्वयंप्रकाशत्वादेर्भेदाभावापत्तेः । भिन्नतयैव हि तेषां प्रतीतिः । संवित्त्वं नाम स्वाश्रयजीवात्मानं प्रति

स्वसत्तयैव घटादिविषयपरिच्छित्तिहेतुत्वम् । स्वयंप्रकाशत्वं च स्वसत्तयैव स्वाश्रयं प्रति प्रकाशमानत्वम् । प्रकाशत्वं च पदार्थव्यवहारानुगुण्यम् । नित्यत्वं चोत्पत्तिविनाशरहितत्वम् । एकत्वम् एकसंख्यावच्छेदकत्वमिति धर्मबाहुल्यम् । न चैतद्धर्माणां जडत्वाद्यभावरूपत्वान्न भावरूपत्वमिति वाच्यम्, अभावरूपत्वेऽपि दृशिधर्मत्वात् । अभावरूपत्वेन वा भावरूपत्वेन वा तद्धर्माणां पृथक्त्वेनानङ्गीकारे पृथक्त्वेन तत्साधनवैयर्थ्यम्; अन्यतरसाधनेन समीहितसर्वार्थसिद्धेः । धर्मिव्यतिरिक्तधर्मानङ्गीकारे हेतोः साध्याविशिष्टता च । किंच संविदोऽवभासनमस्ति वा? न वा? आद्ये धर्मत्वम् । द्वितीये तुच्छता । संविदोऽवभासनं कस्य? किंच अत्यये अतीतत्वादेव नात्मत्वम् । संविदो हि 'घटमहं जानामि' इत्यादिप्रतीतिषु ज्ञातुरात्मनो धर्मत्वेन घटादिविषयतयैव प्रतीतिः; न तु केवलायाः संविदः प्रतीतिरित्युक्तम् । भवद्भिरपि विषयावभासनस्वभावतया हि स्वयंप्रकाशता समर्थ्यते । ज्ञानस्य वेद्यत्वाभावादेव वेत्तृत्वमपि न संभवति । स्वभावाद्धि एकीभावस्तस्याः । 'सुख्यहं, जानाम्यहम्' इति ज्ञानात् ज्ञातुः पृथक्त्वम् । सुखादिवत् ज्ञानस्यास्थिरत्वं च प्रतीयते, 'ज्ञानमासीत्, ज्ञानं नष्टम्' इति व्यवहारात् । ज्ञातुः स्थैर्यं च 'य एवाहं बालः स एवाहम्' इति प्रत्यभिज्ञाप्रत्यक्षात् । अतोऽस्थिरसंविदो नात्मत्वम् । संविद आत्मत्वे तस्याः क्षणिकत्वात् न प्रत्यभिज्ञोपपत्तिः । क्षणिकत्वं च पुष्कलकारणान्वयव्यतिरेकानुविधायित्वात् । अनुभूतेर्नित्यत्वेऽपि तस्या वास्तवज्ञातृत्वविरहान्न प्रत्यभिज्ञोपपत्तिः । अतः प्रत्यभिज्ञाया अबाधितत्वात् ज्ञातृत्वस्य न भ्रान्तता च । अत एव त्वयाभ्युपेता संविदेवात्मेत्युक्तिर्निरस्ता, अनुभवविरोधात् । अतो ज्ञातुरेवात्मत्वेन प्रतीतिसिद्धत्वान्न तदपह्नवो युक्तः । भेदस्य पारमार्थ्यं च साधितम् । अतो ज्ञातृत्वादेर्विकारात्मत्वात् जडत्वमित्युक्तिरपि निरस्ता; विकारात्मत्वाभावस्योक्तत्वात्, श्रुत्या साध्यमानत्वाच्च । किंचाहमर्थ एव प्रत्यगात्मा, अहंबुद्ध्यैव प्रत्यगर्थस्य विविच्यमानत्वात् । 'अहं कर्मवश्यो निरस्ताखिलदुःखः स्याम्' इत्यहमर्थस्यैव दुःखाभावप्राप्त्यपेक्षया वेदान्तश्रवणादौ प्रवृत्तेश्च । अहमर्थविनाशस्य मोक्षत्वावगतौ तत्र न प्रवृत्त्युपपत्तिः, प्रेक्षावतः स्वनाशोद्योगाभावात् । न च तदुपलक्षितज्ञप्तिस्थैर्याय प्रवृत्तेरुपपत्तिरिति वाच्यम्, ज्ञातृत्वेन प्रतिपन्नस्यान्यस्थित्यपेक्षया प्रवृत्त्यनुपपत्तेः । अहमर्थस्य विनाशे च ज्ञप्तेः सत्तैव नास्ति, तस्या विषयाश्रयसंबन्धिस्वरूपत्वात् । संबन्धिस्वभावस्य पदार्थस्य प्रतिसंबन्ध्यभावे तु न सत्तैव ।

छेतृच्छेद्ययोरभावे छेदनाभाववन्न सत्तोपपत्तिः । अतो ज्ञातैवात्मा ; "विज्ञातारमरे केन विजानीयात्" इत्यादिश्रुतिभिश्च । "एतद्यो वेत्ति" इत्यादिस्मृतिभिश्च ज्ञातृत्वमेव स्वरूपम् । "ज्ञोऽत एव" इत्यत्र सूत्रकारैश्च तस्य ज्ञातृत्वमेवोक्तम् । अतोऽहमर्थस्याहंप्रत्ययसिद्धस्य युष्मत्प्रत्ययविषयत्वं विरुद्धम् । 'अहं युष्मदर्थः' इति वचश्च विरुद्धम् । न च 'अहं जानामि' इत्यादौ ज्ञानाधीनसिद्धितया प्रतीयमानस्य युष्मदर्थत्वमेवेति वाच्यम् , अहमर्थज्ञातुरात्माधीनसिद्धिकत्वात् ज्ञानाधीनसिद्धिकत्वाभावाच्च । स्वप्रकाशस्वरूपत्वात् तस्य स्वरूपमपि ज्ञानमेव, प्रदीपवत् । न च दीपस्य प्रभाधीनप्रकाशत्वेनाप्रकाशत्वादन्याधीनप्रकाशत्वमिति वाच्यम् , दीपस्वरूपस्यापि तेजोद्रव्यत्वेन प्रकाशस्वभावत्वात् प्रभयान्यानपि प्रकाशयति । न च तेजोद्रव्यस्याचेतनत्वान्न स्वप्रकाशत्वमिति न दृष्टान्ततेति वाच्यम् , परंपरयापि व्यवहारानुगुण्यापादनमात्रसाम्येन दृष्टान्ततयोपात्तत्वात् । न च प्रभाया गुणव्यवहारास्पदत्वदर्शनात् प्रदीपगुणत्वमिति वाच्यम् , गुणस्य द्रव्यमात्राश्रितत्वात् प्रभायाश्चाश्रयदीपादिदेशादन्यत्र वर्तमानत्वात् , रूपौज्ज्वल्यवत्त्वात् गुणत्वानुपपत्तेः । रूपादिगुणा हि द्रव्य एव वर्तन्ते, न प्रदेशान्तरे ; गुणस्य च रूपगुणाश्रयत्वं चानुपपन्नम् । प्रकाशत्वं च स्वस्यान्येषां च प्रकाशकत्वात् । गुणोक्तिस्तु नित्यतदाश्रयत्वादिस्वभावत्वात् । न च प्रभाया अर्थव्यवहारानुगुण्ये 'प्रदीपादर्थप्रकाशः' इत्याद्युक्तिवैयर्थ्यमिति वाच्यम् , प्रभाया दीपपारतन्त्र्यात् तथा व्यवहारोपपत्तेः । न च—प्रदीपप्रभयोर्न भेदः, किंतु विशीर्णप्रदीपावयवानामेव प्रभात्वमिति वाच्यम् ; विशीर्णतदवयवानामेव प्रभात्वे मण्यादेर्विनाशापत्तेः, मण्यादीनां प्रभाया अपि प्रभात्वाविशेषात् । न ह्यवयवविनाशेऽवयविस्थितिः । न हि मण्यादेर्विनाशः, प्रत्यभिज्ञाविरोधात् । न च ज्वालाऽभेदवत् भ्रान्तता प्रत्यभिज्ञाया इति वाच्यम्, दीपेषु नष्टारोपितेषु भेदस्य प्रत्यक्षसिद्धत्वेन तत्राभेदज्ञानस्य भ्रान्तत्वस्य युक्तत्वात् । मण्यादौ न तथाविधः कोऽपि दृश्यते हेतुः । प्रदीपे तैलादिकारणभेदश्च दृश्यते; अत्र तु न तथा । न च मण्यादेरदृष्टोऽपि नाशः कल्प्यः, नाशस्याकल्पनायां कस्याप्यनुपपत्त्यभावात् । अवयवविशरणं च न दृश्यते । किंच प्रदीपादेर्विशीर्णावयवस्य प्रभात्वे न कदाप्यवयविप्रतीतिः, विशरणस्वभावत्वेनावयव्यारम्भानुपपत्तेः । न चोत्पत्त्यनन्तरं विशीर्णतेति वाच्यम् , अदर्शनात् । उत्पत्त्यनन्तरं विशरणेऽपि नावयविप्रतिपत्तिः, उत्पत्त्यनन्तरमेव शीर्यमाणत्वात् । न च भासां विततत्यन्यथानुपपत्त्या ज्वालाभेदः

कल्प्यत इति वाच्यम्, प्रतीत्यविरोधेनैव कारणस्य कल्प्यत्वात्। विशरणे तु प्रतीति-विरोधापत्तिरुक्ता। तत्पक्षेऽनेककल्पनापत्तेश्च। विशरणस्वभावत्वेऽपि चतुरङ्गुलादिमात्रया पिण्डीभावोद्गमने कल्प्ये। ततो युगपत् सर्वतोदिक्कविशरणं चेत् बहुकल्पना। अतः सप्रभाणामेव दीपानामुत्पत्तिः। प्रदीपाश्च क्षणिका एव, अन्यथा कारणनिवृत्तावपि स्थितिः स्यात्। वर्त्यारोपितदीपेऽपि बहुप्रदीपप्रतीतिश्च स्यात्, कारणपौष्कल्यानुवृत्तेः कार्यभेद-प्रतीतेरवर्जनीयत्वात्। न च प्रभायाः पृथग्द्रव्यत्वे सर्वत्राविशेषेण प्रकाशादिः स्यादिति वाच्यम्, वस्तुस्वभावस्य यथोपलब्धि व्यवस्थाप्यत्वात्, अग्न्यादेरौष्ण्यादेरिव। एवमात्मा ज्ञानस्वरूपो ज्ञानधर्मकश्च। आत्मनो ज्ञानस्वरूपत्वं ज्ञानाश्रयत्वं स्वयंप्रकाशत्वं च "स यथा सैन्धवघनः" इत्यादिश्रुतिभिः स्पष्टमेवावगम्यते। अतो न प्रकाशमात्रस्या-त्मत्वम्। संविदो 'विज्ञानम्' इत्यादिशब्दसामर्थ्याच्च। संबन्धिशब्दो ह्ययम्। अन्यथा वैयाकरणस्मृतिवैयर्थ्यम्। ज्ञातृज्ञेयज्ञानसद्भावे हि 'जानाम्यहम्' इति शब्दप्रवृत्तिः। किं च न प्रकाशमात्रानुभूतेरात्मत्वं, प्रकाशमात्रत्वेनान्यसंबन्धिस्वरूपत्वात् प्रदीपप्रकाशवदि-त्यनुमानात्। ज्ञातुरात्मत्वप्रतिपादकश्रुतिविरोधोऽप्युक्तः। नन्वात्मनोऽपि चिद्रूपत्वात् तादृक्त्वस्यैव स्वयंप्रकाशत्वात् तस्यापि प्रकाशत्वाविशेषादनात्मत्वापत्तिरिति चेत्—न; प्रकाशा-व्यभिचारित्वरूपव्यवहारानुगुण्यस्य प्रकाशत्वेन पराभ्युपगतत्वात्, प्रदीपादेरपि तथात्वात्। अतः पराभ्युपगतप्रक्रिययैव तत्प्रक्रियाभङ्गो व्यापकत्वेनोक्तो भाष्ये। प्रकाशत्वादिति हेतुः। स्वसत्ताप्रयुक्तप्रकाशस्यात्मत्वे च प्रदीपादेरप्यात्मत्वापत्तिः। आत्मत्वं साधर्म्यमिति प्रतीतिसिद्धत्वात् "विज्ञातारम्" इत्यादिश्रुतिसिद्धत्वात्, केवलज्ञानस्यार्थव्यवहारानुपपत्ते-रुक्तत्वात्, अणुपरिमितस्याप्यात्मनः सर्वव्यापनयोग्यधर्मभूतज्ञानानङ्गीकारे चार्थविशेषोपादा-नादिव्यवहारानुपपत्तेश्च ज्ञातैवात्मा। आत्मनोऽणुपरिमितत्वं च वक्ष्यते। ननु ज्ञानस्याश्रयनि-त्यत्वेन 'ज्ञानं जातं, नष्टम्' इत्यादिप्रतीतिव्यवहारानुपपत्तिः; तस्य सर्वगतत्वे सर्वज्ञत्वापत्ति-श्चेति चेत्—न; तस्य संसारदशायां कर्मणा संकुचितत्वात्; कर्मानुगुणतरतमभावप्रसरण-युक्तेन्द्रियद्वारैव व्याप्रियमाणत्वेन जातत्वादिव्यवहारोपपत्तेः, असर्वज्ञत्वोपपत्तेश्च। तस्य जात-त्वादिव्यवहार आविर्भावनिबन्धन इत्यर्थः। न च ज्ञानेन्द्रियसंबन्धस्य कादाचित्कत्वात्त-द्योगितारूपेणापि विकारापत्तिरात्मन इति वाच्यम्, तस्य कर्मनिमित्तत्वेन स्वतः प्रयुक्तत्वा-भावात्। अतोऽहंकारस्य नाविक्रियात्मकज्ञानाश्रयत्वसंभवः, विकारात्मकत्वात्। अवि-

कृतस्य चिद्रूपस्य ज्ञानस्याविकृतवस्त्वाश्रयत्वमेव हि युक्तं, प्रकाशकप्रभायाः प्रकाशकमण्याद्याश्रयत्वमिव । स्वापे विज्ञानस्यानुवृत्तिरिति वक्ष्यते । न च ज्ञाता अनात्मा, कर्तृत्वात् अहंप्रत्ययगोचरत्वादित्यनुमानाभ्यां न ज्ञातुरात्मत्वमिति वाच्यम्, अनुभूतिरनात्मा, अहंप्रत्ययागोचरत्वात् अकर्तृत्वाद्वेति सप्रतिसाधनत्वात् । देहस्याहंप्रत्ययगोचरत्वाभावात्, 'स्थूलोऽहम्' इत्यादिप्रतीतेरज्ञानकृतत्वेनान्यथासिद्धत्वात् । कर्तृत्वं चास्य "कर्ता शास्त्रार्थवत्त्वात्" इत्यत्रैवोक्तम् । ज्ञातृत्वादिरहितस्य स्वापादावात्मनोऽज्ञानसाक्षित्वमिति यदुक्तं, तदसत्, ज्ञातुरेव साक्षित्वेन प्रसिद्धत्वात् । "साक्षाद् द्रष्टरि" इत्यादिपाणिनिस्मरणाच्च । तस्मादज्ञानसाक्षित्वे ज्ञातृत्वेनैवाभ्युपेयः, अन्यथा त्वज्ञानद्रष्टृत्वानापत्तेः । रागादेरपि ज्ञातुरेव ज्ञानविषयत्वम् । आत्माश्रयज्ञानस्य नित्यद्रव्यत्वाभिधानात् गुणादिविकल्पश्च निरस्तः । 'संवेदनं यावत्स्वाश्रयभावि' इत्याद्यनुमानमस्मन्मतानुसार्येव । वेदनस्य सर्वगतद्रव्यत्वं चासिद्धम्, जीवात्मद्रव्यस्याणुपरिमितत्वेनासर्वगतत्वात् । आकाशस्यापि सर्वगतत्वाभावात् शब्दवदिति दृष्टान्तश्च साधनविकलः । सर्वगतत्वश्रुतिश्च परमात्मविषयैवेति "नाणुरतच्छ्रुतेः" इत्यत्रोक्तम् । जीवस्य सर्वत्र कार्योपलब्धिर्न युगपदित्यादियुक्त्या च न सर्वगतत्वम्; तत्र गमनादेव सुखाद्युपलब्धेः । न च वेदनस्य द्रव्यत्वे नित्यमन्याश्रयत्वमनुपपन्नमिति वाच्यम्, नित्यजीवादिद्रव्यस्य नित्यपरमात्माश्रयत्वदर्शनात् । तच्च श्रुतेः । "जानात्येवायम्" इत्यादौ नित्यज्ञानाश्रयत्वश्रवणाच्च । "साक्षी चेता" इत्यादिश्रुतिस्तु परमात्मविषया, तस्यापि ज्ञातृत्वप्रतिपादनपरा च । अतो ज्ञात्रनङ्गीकार एव सर्वव्यवहारासिद्धिः, न तु ज्ञप्तिमात्रानङ्गीकारे । ब्रह्मणो नाज्ञानसाक्षित्वेन संसारित्वमिति वक्ष्यते । ज्ञातृत्वस्य नित्यत्वसाधनेनाहमर्थस्यैवात्मत्वसाधनेन च मोक्षेऽपि तदनुवृत्तिः सिद्धा । अननुवृत्तौ च स्वरूपनाशस्यैव मोक्षत्वाङ्गीकारः । अहमर्थविनाशावगतौ न मोक्षार्थप्रवृत्तिरित्युक्तम् । ततश्च मोक्षशास्त्रवैयर्थ्यम् । न च तत्राप्यहमर्थानुवृत्तावज्ञत्वसंसारित्वप्रसङ्ग इति वाच्यम्, मोक्षस्याज्ञानादिविरोधित्वात् अहंप्रत्ययस्याज्ञानाहेतुत्वाच्च । कथं तदिति चेत्, उच्यते—किमज्ञानं नाम स्वरूपाज्ञानम्, अन्यथाज्ञानं, विपरीतज्ञानं वा? कथमेतेषां भेद इति चेत्, उच्यते— वस्तुस्वरूपाप्रतिपत्तिः स्वरूपाज्ञानम् । अन्यस्यान्याकारतयाऽवगतिरन्यथाज्ञानम् । विपरीतज्ञानं धर्मधर्मिणोर्व्यत्यासावगतिः; यथा धर्मभूतज्ञानस्यात्मत्वज्ञानं,

धर्मिभूताहमर्थस्याज्ञानारोपितत्वेन ज्ञानधर्मतया ज्ञानम् । अहमित्येवात्मनः स्वरूपत्वेन न तज्ज्ञानस्य स्वरूपाज्ञानहेतुत्वम्; प्रत्युत तादृशज्ञानस्याज्ञानविरोधित्वमेव । मुक्तानां वामदेवादीनां च "अहं मनुरभवम्" "अहमन्नम्" इत्यादावहंप्रत्ययानुवृत्तिप्रतीतेश्च न मुक्तावहमर्थविगमः । अविद्याविनिर्मुक्तसच्छब्दवाच्यपरब्रह्मणः "हन्ताहम्" इत्यादावहमित्येव व्यवहारप्रतीतेश्चाहमर्थस्य न भ्रान्तत्वम् । "अहमात्मा" इत्यादिस्मृतावपि तथैव प्रतीतिः । "सोऽहमस्मि" इति "ब्रह्माहमस्मि" इत्यादिषु च तथैव धीः । "सोऽहं स च त्वम्" इत्यादिस्मृतावपि । "महाभूतान्यहंकारः" इत्यादिष्वहंकारस्य प्राकृतवस्त्वन्तर्भावोक्तिर्नाहमर्थपरा । किंत्वव्यक्तपरिणामाहंकारपरा । अतस्तस्यैव हि हेयताप्रतिपादनं, तस्योत्कृष्टजनावमानहेतुत्वात् । "ज्ञातुरहंप्रत्ययवेद्यस्यैवात्मत्वम्" इति यामुनाचार्यैरप्यात्मनोऽहंप्रत्ययवेद्यत्वस्यैवाङ्गीकारः । "देहेन्द्रिय" इत्यादिश्लोके ज्ञानातिरिक्तता चोक्ता । ननु तस्मिन् श्लोके आत्मनः स्वरूपेण व्याप्तिरुक्तेव प्रतीयत इति चेत्—न; अतिसूक्ष्मतया सर्वाचेतनान्तःप्रवेशस्वभावकथनपरत्वात् । अतो नाणुत्वश्रुतिविरोधः । अतो ज्ञातृत्वादिरात्मनः स्वरूपम् ।

किंच न कदाचिदपि जडाहंकारस्य ज्ञातृत्वसंभवः । न च चिच्छायापत्त्या जडस्यापि ज्ञातृत्वादिसंभव इति वाच्यम्, विकल्पासहत्वात् । किमहंकारस्य छाया चितावापाद्यते ? उताहंकारे चितेश्छायेति । न तावदाद्यः, अहंकारस्य जडत्वेन ज्ञातृत्वाभावात् तच्छायापत्त्या संविदो ज्ञातृत्वायोगात् । नापि द्वितीयः; संविदो ज्ञातृत्वाभ्युपगतेस्तच्छायापत्त्याऽहंकारे ज्ञातृत्वाभ्युपगमेनार्थसिद्धत्वात् । छायापत्तिश्चात्र न संभवति, अचाक्षुषेषु छायापत्त्यदर्शनात् । अन्यतरस्याचाक्षुषत्वेऽपि न छायापत्तिः; किमुतोभयस्याचाक्षुषत्वे । न हि संविदहंकारयोश्चाक्षुषता । ननु छायापत्त्या ज्ञातृता मास्तु; अग्निसंपर्कादयःपिण्डादेरुष्णत्वादिवत् संपर्कात् ज्ञातृत्वमस्त्विति चेत्—न; विकल्पासहत्वात् । किमहंकारसंपर्कात् संविदो ज्ञातृत्वम् ? उत संवित्संपर्कादहंकारस्य ? नाद्यः; अहंकारस्याचेतनत्वेन ज्ञातृत्वासंभवात् । न च द्वितीयः; संविदो वास्तवज्ञातृत्वानभ्युपगमात् । अवास्तवमिति तत्पक्षः; न हि अवास्तवज्ञातृत्वस्यान्यत्र संक्रमः कार्यकरत्वं वा । अग्निस्तु वास्तवेनोष्णस्वभावः; तत्संपर्कादयःसु तेजःसंक्रमणादुष्णत्वोपलब्धिर्युक्ता । यदुक्तम्—"संविदोऽहंकाराभिव्यङ्ग्यत्वेन तन्मूलोऽहंप्रत्ययवेद्यत्वादिभ्रमः" इति; तच्चासत्, स्वयंप्रकाशानुभूतेरहंका-

राभिव्यङ्ग्यत्वानुपपत्तेः । तदुक्तम्—"शान्ताङ्गारः" इति श्लोकेन यामुनाचार्यैः । स्फुरणाय ह्यभिव्यञ्जकापेक्षा । स्वयमेव स्फुरतो ह्यभिव्यञ्जको व्यर्थ एव । किंच स्वप्रकाशसंविज्जडाहंकारयोस्तमःप्रकाशवद्विरुद्धस्वभावत्वान्न व्यङ्क्तृव्यङ्ग्यत्वोपपत्तिः । विरोधश्चाहंकारादिभ्रमस्याधिष्ठानस्फुरणनिवर्त्यत्वाभिधानात् । स्वयंप्रकाशत्वाभिमानात् संविदः स्फुरणमिष्टम् । तस्या अभिव्यङ्ग्यत्वेऽननुभूतित्वप्रसङ्गश्च । न च संवित्स्फुरणेऽपि तस्या नाहंकाराद्यज्ञाननिवर्तकत्वम्, किंतु प्रमाणज्ञानस्यैवेति वाच्यम्; अननुभूतित्वप्रसक्तेर्दुर्वारत्वात् । 'निर्विशेषज्ञप्तिमात्रं ब्रह्म' इत्येवमाकारं हि प्रमाणज्ञानम् । ततः प्रमेयता स्पष्टैव । ततश्च घटादिवदननुभूतित्वं त्वदुक्त्यैवापादितम् । एतदेवोच्यते—"व्यङ्क्तृव्यङ्ग्यत्वम्" इति यामुनाचार्यग्रन्थे । न च रविकराभिव्यङ्ग्यकरतलादेः रविकराभिव्यञ्जकत्ववत् संविदभिव्यङ्ग्याहंकारस्य संविदभिव्यञ्जकत्वमस्त्विति वाच्यम्, करतलेन रविकराणां प्रतिहतगतितया स्वयमेव स्फुटतरमुपलभ्यमानत्वात् करतलस्याभिव्यञ्जकत्वाभावात् । करतलस्य हि स्रोतसां निरोधेन सेत्वादेर्जलबाहुल्यहेतुत्ववत् किरणानां गतिविहतिकरणात् तद्बाहुल्यहेतुत्वमेव । किंच संविदोऽहंकारसाध्याऽभिव्यक्तिः किमुत्पत्तिः? उत प्रकाशनम्? अथ तदनुभवसाधनानुग्रहो वेति विवेचनीयम् । न तावदाद्यः, तस्याः स्वतःसिद्धत्वाभ्युपगमात् । नापि द्वितीयः, अप्रकाश्यमानत्वात् । नापि तृतीयः, तत एवानुभाव्यत्वे हि तत्साधनानुग्रहापेक्षा । अनुग्रहोऽपि व्यर्थः; स किमिन्द्रियसंबन्धहेतुत्वेन? यद्वा बोद्धृगतकल्मषापनयनद्वारा शास्त्राख्यकरणगतस्य शमादिवद्वा भवति । तदुभयस्यापि नाहंकारनिर्वर्त्यत्वम्; तस्य सर्वकरणाविषयत्वात् बोद्धृगतकल्मषापनयनस्य शमादिभिरेव साध्यत्वाच्च । तदेतदुच्यते—"करणानामभूमित्वात्" इत्यर्धेन । किंच अनुभूतेरनुभाव्यत्वाभ्युपगतावपि तदनुभवसाधनस्यापि नाहंकारानुग्राह्यत्वं, चक्षुषो ग्रहणविरोधितमोनिरासात् दीपादिनेव; अहंकारस्यानुभूतिग्रहणे विरोध्यभावात् । न चाज्ञानस्य तद्विरोधित्वम्, अहंकारापनोद्यत्वानभ्युपगमात् । किंच अनुभूतेरज्ञानाश्रयत्वमेवानुपपन्नम्, तस्य ज्ञातृत्वविषयशून्यत्वात् । अज्ञानमपि ज्ञानसमानाश्रयं समानविषयं च । न हि ज्ञातृत्वरहितस्य घटादेरज्ञानाश्रयता । तस्या अज्ञानाश्रयत्वसंभवो यदि स्यात्, तर्हि अज्ञानोच्छेदो न स्यात्; ज्ञेयत्वानभ्युपगमात् । विषय एव ह्यज्ञाननिवृत्तिर्दृश्यते शुक्त्यादौ । अतो ज्ञातृत्वाद्यनभ्युपगतावज्ञानाश्रयत्वतदुच्छेदयोर्नोप-

पत्तिः । न च ज्ञानप्रागभावनिरसनादहंकारस्यानुग्राहकत्वम्, प्रागभावाद्युत्पत्तिविरोधाभावात् । तथात्वे च न कदाचिदपि कार्योत्पत्तिः । अतोऽहंकारस्य नानुभूतिव्यञ्जकत्वम् । अभिव्यञ्जकस्वभावोऽयं यदात्मस्थतयाऽभिव्यङ्ग्यानामप्यभिव्यङ्क्तृत्वमित्युक्तिरपि व्यर्था, प्रदीपाद्यभिव्यञ्जकानामभिव्यङ्ग्यघटादेः स्वनिष्ठतयाऽभिव्यङ्क्तृत्वाभावात् । यदि तादृक्स्वभावताऽङ्गीकारः, तदा यथावस्थितवस्त्ववभासकता न स्यात् । अनुग्राहकानुग्राह्यालोकेन्द्रियादेर्यथावस्थितवस्त्ववभासकत्वमेव स्वभावः । यथावस्थितवस्त्ववभासकस्वभाव एव प्रमाणं स्यात् । तच्च प्रमाणलक्षणप्रथमपादे उक्तम् । अन्यनिष्ठानां स्वनिष्ठतयाऽवभासकत्वे चाप्रामाण्यापत्तिरेव । न चाभिव्यञ्जकदर्पणादेः स्वनिष्ठतयाऽभिव्यञ्जकत्वं दृश्यत इति वाच्यम्, तेषामभिव्यञ्जकत्वाभावात् । किंतु नायनरश्मिप्रतीपगतिरूपदोषहेतुत्वमेव । तत्प्रतीपगतेर्दोषत्वं च भ्रान्तिज्ञानहेतुत्वात् । प्रतीपनयनकारणत्वात् दर्पणस्यान्वयव्यतिरेकसिद्धं मुखाद्यभिव्यञ्जकत्वं स्यात् । अत आलोकादेरेवाभिव्यञ्जकत्वम् । न च दर्पणादिवदहंकारस्यानुभूतौ दोषापादकत्वमस्त्विति वाच्यम्, तस्याः स्वयंप्रकाशत्वेन स्वनिष्ठतया दोषापत्त्यनुपपत्तेः । जातेस्तु नाभिव्यङ्ग्यत्वं, तस्या नित्यत्वसर्वगतत्वयोरनभ्युपगमात् । संस्थानमेव हि जातिरित्युक्तम् । अतोऽनुभूतेरहंकारस्थतयाऽवभासाभावादहंकारस्य न ज्ञातृत्वम्; किंतु अहमर्थस्यैव स्वतो ज्ञातृत्वं स्वरूपमिति सिद्धम् । "अहंकारविमूढात्मा" इत्यादिषु गतिरुक्ता । न च सुषुप्त्यादावहंप्रत्ययानुवृत्तेरात्मनो नाहमर्थतेति वाच्यम्, तत्र 'अहम्' इत्येवावभासमानत्वात् । किंतु तमोगुणाभिभूतत्वेन विषयाननुभवाच्च न स्फुटावभास इत्येकाकारेण 'अहम्' इत्येव स्फूर्तिः । न च स्वप्रकाशस्याविशदावभासोऽनुपपन्न इति वाच्यम्, अनुभूतेरात्मत्ववादिनोऽपि समत्वात् । न च तर्हि न राद्धान्ते विशेष इति वाच्यम्, 'सुखमहमस्वाप्सम्' इति स्वापकाले अहमर्थस्य सुखानुभवस्य च परामर्शसिद्धत्वेन विशेषसद्भावात् । न हि सुप्तोत्थितस्य केवलानुभूतिपरामर्शः । वैशेषिकादयस्तु—स्वापे सुखाद्यनुभवो नास्ति; किंतु सुप्तोत्थितस्य 'सुखमहमस्वाप्सम्' इति प्रतीतेरुत्थानसमयसुखादिविषयतैवेत्याहुः; तच्चासत्, "सुखमहमस्वाप्सम्" इति भूतकालीनसुखादिपरामर्शप्रतीतेः । अन्यथा 'सुख्यहम्' इति प्रतीतिः स्यात् । श्रुत्यादिभिर्नित्यचैतन्ययोगश्च साधितः । अहमर्थस्थैर्यं च 'बाल्ये अहमेवान्वभवम्' इति प्रत्यभिज्ञया सिद्धमित्युक्तम् । न च 'न किंचिदहमवेदिषम्' इति कृत्स्नानुभवनिषेधः

सुप्तोत्थितपरामर्शवाक्याभ्यां प्रतीयत इति वाच्यम्, 'न किंचिदहम्' इत्यहमर्थपरामर्शा हमर्थानुभवसिद्धेः । निषेधस्तु वेद्यघटादिविषयः । कृत्स्ननिषेधे चानुभूतेरपि निषेधः स्यात् न च 'स्वापे मामप्यहं नाज्ञासिषम्' इति परामर्शादहमर्थस्यापि निषेधः प्रतीयत इ वाच्यम्, तत्रापि 'मामपि' इत्यहमर्थपरामर्शादहमर्थानुभवसिद्धेः । मामित्यस्य विषय प्रबोधानुसंहितवर्णादिविशिष्टत्वाकारः । अतः 'मामप्यहं न ज्ञातवान्' इत्यत्र तमोगुणा भवाविशदस्वानुभवैकतानाहमर्थोऽहमित्यंशस्य विषयः । मामित्यंशस्य जात्यादिविशिष्टाह एव विषयः । यदुक्तम्—"ज्ञातृत्वादिभेदो दोषकल्पितः; दोषश्चाविद्या" इति; तः सत्, अविद्याया निराश्रयत्वात् भ्रान्तिहेतुत्वानापत्तेः । न च जीवाश्रयता संभवतीति वाच्य जीवस्याप्यविद्याकल्पितत्वात्; अविद्याश्रयत्वसिद्धौ जीवत्वसिद्धिः, जीवत्वसिद्धौ अवि श्रयत्वसिद्धिरितीतरेतराश्रयप्रसङ्गाच्च । न च ब्रह्मणस्तदाश्रयत्वं संभवतीति वाच्यम्, तस् धिष्ठानप्रकाशबाध्यत्वाभिमानात्; अधिष्ठानब्रह्मणश्च स्वप्रकाशत्वेन विरुद्धत्वात् तदाश्रयत्व पपत्तेः । ब्रह्मणः स्वयंप्रकाशत्वेऽपि तदाश्रयत्वे कदाचिदपि न मोक्षः, निवर्तकाभावा न च 'ज्ञप्तिमात्रं ब्रह्म' इति प्रमाणज्ञानं निवर्तकमिति वाच्यम्, ब्रह्मणः स्वयंप्रकाश प्रकाशस्य वाक्यज्ञानाख्यब्रह्मप्रकाशस्य च ब्रह्मप्रकाशकत्वाविशेषेऽपि प्रमाणज्ञानस्यैवाज्ञ निवर्तकत्वमित्यत्र प्रमाणाभावात् । ब्रह्मणः स्वयंप्रकाशत्वेऽपि च ब्रह्मप्रकाशोऽस्त्ये तथा प्रमाणादपि ब्रह्मप्रकाश इति को विशेषः ? ब्रह्मस्वरूपप्रकाशस्यानिवर्तकत्वे प्रमाणज्ञ स्याप्यनिवर्तकत्वमित्यर्थः । किंच ब्रह्मणः प्रमाणाविषयत्वाभिमतेर्न तद्विषयज्ञानसिद्धि ज्ञानविषयत्वे च घटादिवत् ब्रह्मणोऽनुभूतित्वमापादितम् । अथ शुक्त्यादौ रजतत्वाद्यज्ञ निवृत्तिः प्रमाणज्ञानात् कथमिति चेत्, शुक्त्यादेः स्वप्रकाशत्वविरहादज्ञानाविरोधित्वा ब्रूमः । ब्रह्मणस्तु स्वयंप्रकाशत्वादेव न निवर्तकान्तरापेक्षा । अतो नित्यप्रतिभटर ब्रह्मणो नाविद्याश्रयत्वोपपत्तिः । एतेन "ज्ञानरूपं परं ब्रह्म" इत्यादिश्लोकाश्च ख्याताः । अथ ब्रह्मविषयज्ञानस्य नाज्ञाननिवर्तकत्वं, किंतु तदितरमिथ्यात्वज्ञानर चेत्—न; विकल्पासहत्वात् । तन्मिथ्यात्वज्ञानस्य किं ब्रह्मयाथात्म्यज्ञानविरोध्यज्ञाननिवर्तक उत प्रपञ्चसत्यत्वरूपाज्ञाननिवर्तकत्वमिति । नाद्यः, तन्मिथ्यात्वज्ञानस्य ब्रह्मविषयत्वाभाव ज्ञानाज्ञानयोरेकविषयत्वे हि विरोधात् बाध्यबाधकभावः । नापि द्वितीयः, ब्रह्माज्ञानस्य नि त्वापत्तेः; प्रपञ्चमिथ्यात्वज्ञानेन तत्सत्यत्वज्ञानस्यैव बाधितत्वात् । अथ प्रपञ्चसत्यताज्ञा

ब्रह्माज्ञानम्; अद्वितीयस्वरूपत्वाद्ब्रह्मण इति प्रपञ्चसत्यत्वज्ञानबाधे ब्रह्माज्ञानबाध इति चेत्—न; अद्वितीयस्वरूपस्य स्वप्रकाशस्य सद्वितीयज्ञानानुपपत्तेः, तद्बाधानुपपत्तेश्च । अद्वितीयस्वानुभवस्वरूपत्वे हि न सद्वितीयत्वज्ञानं, विरोधात् । ननु तर्ह्यद्वितीयत्वं धर्मः, ततस्तद्विरोधिसद्वितीयत्वज्ञानोपपत्तिरिति चेत्—न; अनुभाव्यधर्मवत्वेऽननुभूतित्वस्य त्वयैवोक्तत्वात् । अतो नाज्ञानाश्रयत्वसंभवो ब्रह्मणः । किंच अविद्यानिवर्तकं ज्ञानं किं सत्यम्? उत मिथ्या? इति विवेचनीयम् । न तावदाद्यः, सद्वितीयत्वापातात् । नापि द्वितीयः, तस्य मिथ्यात्वेन निवर्तकान्तरान्वेषणेनानवस्थापातात् । न च निवर्तकस्य क्षणिकत्वेन स्वयमेव विनाश इति नानवस्थेति वाच्यम्, विनाशस्यापि मिथ्यात्वेन निवर्तकान्तरान्वेषणस्यावश्यकत्वादनवस्थातो मुक्त्यभावात् । न च तद्विनाशो ब्रह्मस्वरूपमेवेति वाच्यम्, निवर्तकज्ञानानुदयप्रसक्तेः; तज्ज्ञानविरोधिब्रह्मस्वरूपस्य स्थितत्वात् । किंच ब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य ज्ञात्रभावाच्च न तज्ज्ञानोदयोपपत्तिः । न चाध्यस्तज्ञातृतास्त्विति वाच्यम्, अध्यस्तत्वेन निवर्तकतया तज्ज्ञानकर्तृत्वानुपपत्तेः । अथ ब्रह्मस्वरूपस्यैव ज्ञातृत्वमिति चेत्—न; विकल्पासहत्वात् । किं तस्य तदज्ञातृत्वमध्यस्तम्? उत स्वरूपम्? आद्ये तु नानवस्थातो मुक्तिः, तदध्यासतन्मूलाविद्ययोश्च निवर्तक ज्ञानापेक्षत्वेन ज्ञात्रपेक्षत्वात् । द्वितीये त्वस्मत्पक्षपातः । किंच ज्ञातृत्वस्याध्यस्तत्वेऽपि तादृशज्ञातुर्ज्ञातृत्वविनाशकज्ञानकर्तृत्वमपि नोपपन्नम्, ज्ञातृत्वविनाशस्य स्वनाशत्वेनापुरुषार्थत्वात् । न च तन्नाशो ब्रह्मस्वरूपमेवेति वाच्यम्, विरोधिब्रह्मस्वरूपस्थितौ भेददर्शनादिकल्पनाभावापत्तेः । किंचाज्ञानात् ब्रह्मतिरोधाने ब्रह्मनाशापत्तिश्च । तस्य निर्विशेषप्रकाशमात्रस्वरूपत्वादुत्पत्त्यनभ्युपगमादेव न प्रकाशोत्पत्तिप्रतिबन्धात्मकतिरोधानसंभवः । अतो विद्यमानप्रकाशनाश एवावशिष्यते । प्रकाशस्य नित्यत्वनिर्विकारत्वाभ्युपगतौ अविद्यातिरोधानान्नानात्वदर्शनमित्यभ्युपगमत्यागः स्यात् । ननु राद्धान्तेऽप्यात्मनां ज्ञानस्वरूपत्वप्रकाशत्वाभ्युपगमात् तेषां च देहादावात्माभिमाने प्रकाशतिरोधानस्यावश्याश्रयणीयत्वात् । स्वरूपप्रकाशे च देहादावात्माभिमानायोगात् दोषस्य समत्वात्, आत्मानन्त्याभ्युपगमाद्दोषबाहुल्यं चेति चेत्—न; स्वरूपातिरिक्तधर्मभूतज्ञानाङ्गीकारात् तस्य कर्मणा तिरोधाने देहात्माभिमानोपपत्तेः । त्वत्पक्षे तु न कस्यचिद्धर्मस्याङ्गीकारः । ननु—जीवधर्मभूतज्ञानस्य सर्वगतत्वमिष्टम्; कथं तस्य तिरोधानमिति चेत्—कर्मरूपाविद्यासामर्थ्यादिति ब्रूमः ।

"अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ।
यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप सर्वगा ॥"

इत्यादिभिस्तत्सिद्धिः । किंच निर्विशेषस्यापि ब्रह्मणः सद्वितीयत्वज्ञानं दोषहेतुः सत्यः ? असत्यो वा ? नाद्यः, अनभ्युपगतेः । नापि द्वितीयः, विकल्पासहत्वात्—किमपरमार्थभूतदोषो ज्ञानान्तर्भूतः? अथवा ज्ञेयान्तर्भूतः? इति । नाद्यः, अनभ्युपगमात् । तस्य दृशित्वाभ्युपगतावपारमार्थ्ये च शून्यवादिपक्षपातश्च । न च द्वितीयः, ज्ञातृत्वस्यापि दोषमूलत्वेन दोषान्तरस्यान्वेषणीयत्वादनवस्थितेः । एतेन त्रयोऽपि निरस्ताः । वृत्तिज्ञानान्तर्भावपक्षेऽपि तस्यापि काल्पनिकत्वाविशेषात् । सत्यानुभूतेरेव दोषत्वे प्रपञ्चदर्शनस्यापि तन्मूलत्वमेवेति कृतमविद्यान्तरकल्पनेन । तस्या एव नित्यत्वेन दोषत्वेन चानिर्मोक्षश्च । अतः सत्यदोषानभ्युपगमे तु न भ्रान्त्युपपत्तिः । यच्चोक्तम् 'मिथ्याज्ञानमविद्या वा अन्यस्यान्यात्मना ज्ञानरूपाध्यासोपादानम्' इति; तच्चासत्, अन्यवस्त्वनङ्गीकाराद्ध्यासानुपपत्तेः । यत्तु कृत्स्नस्य प्रपञ्चस्य दृश्यत्वेन मिथ्यात्वात् तस्य मिथ्याभूतार्थ एवोपादानं युक्तमिति; तच्चासत्; दृश्यत्वस्य मिथ्यात्वप्रयोजकत्वाभावस्योक्तत्वात् । किंच विवादाश्रयः प्रपञ्चो मिथ्या, दृश्यत्वात् शुक्तिरूप्यवदिति हि तदनुमानम्; तच्च प्रायेण निरस्तम् । तथापि सुग्रहत्वाय कानिचित् दूषणानि संकलय्योच्यन्ते—किं मिथ्यात्वं नाम ? बाध्यत्वं वा, अनिर्वचनीयत्वं वा; आद्ये हेतुः कालात्ययापदिष्टः, प्रपञ्चस्य बाध्यत्वाभावात् । तच्च वाक्यार्थज्ञानेऽपि प्रतिपन्नोपाधावबाध्यत्वदर्शनात्; "तदेतदक्षरम्" इत्यादिस्मृतिविरोधाच्च । न हि प्रपञ्चो बाध्यत्वेनावगम्यते । किंच बाध्यत्वं सत्यम् ? मिथ्या वा? इति विवेचनीयम् । नाद्यः, अनभ्युपगमात् । नापि द्वितीयः, जगत्सत्यत्वापातात् । मिथ्यात्वस्यानिर्वचनीयत्वेऽप्रसिद्धविशेषणत्वेन पक्षस्याभासता स्यात् । न हि सदसद्विलक्षणवस्तुप्रसिद्धिः । आत्मनो दृश्यत्वादनैकान्तिकता च हेतोः । प्रपञ्चः सत्यः, दृश्यत्वात् आत्मवदिति प्रकरणसमता च । आत्मनो दृश्यत्वं च साधितम् । अदृश्यत्वे चात्मनः शून्यतैव स्यात्, आत्मनि प्रमाणाभावात् । किंच दृश्यत्वस्यापि मिथ्यापर्यायत्वाभिमानात् साध्याविशिष्टता च हेतोः; मिथ्यात्वस्याप्यनिर्वचनीयताभिमानादसिद्धता च । प्रपञ्चस्य चानिर्वचनीयत्वासिद्धेर्दृष्टान्तश्च साध्यविकलः, शुक्तिकारजतस्य मिथ्यात्वाभावात् । तच्चोत्तरत्र वक्ष्यते । दृश्यत्वे चानिर्वचनीयत्वे च साधनविकलश्च, शुक्तिकारजतस्यानिर्वचनीयत्वाभावात् । तच्चोत्तरत्र

वक्ष्यते । एवमादिदूषणपरंपरोहनीया । अतो दृश्यत्वेन जगतो मिथ्यात्वाभावात् न मिथ्याभिमताविद्याकारणत्वम् । किंतु सत्यभूतचिदचिद्विशिष्टपरमात्मकारणत्वमेव ।

यत्तूक्तम्—' अहमज्ञः' इति सविकल्पकप्रत्यक्षात् भावरूपाज्ञानसिद्धिरिति, तच्चासत्, प्रत्यक्षात् तदप्रतीतेः । किंतु ' अहमज्ञः' इत्यस्य ज्ञानप्रागभावविषयत्वमेव । न चाज्ञानप्रागभावविषयत्वेऽनुपपत्तिरुक्तेति वाच्यम्, तदनुपपत्तेर्भावरूपाज्ञानपक्षेऽपि समत्वात् । तत्कथमिति चेत्, उच्यते—' अहमज्ञः' इत्यनुभवे प्रत्यग्ब्रह्मणोऽज्ञानव्यावर्तकतया प्रतीतिरस्ति वा ? न वा? नाद्यः, तदज्ञानस्य वस्तुयाथात्म्यज्ञाननिवर्त्यत्वेन स्थित्यभावात् तदनुभवानुपपत्तेः । वस्तुनः प्रत्यक्त्वमेवाभीष्टम्। तस्य च स्वयंप्रकाशत्वाभिमानात् प्रमाणान्तरानपेक्षत्वं च । न द्वितीयः, व्यावर्तकप्रत्यग्वस्तुनोऽप्रतीतौ तदाश्रयाज्ञानप्रतीत्यनुपपत्तेः । अथ प्रत्यग्वस्तुनो विशदावभासस्यैवाज्ञानविरोधित्वम्, अविशदावभासस्य तु न विरोधित्वमित्याश्रयविषयज्ञानसद्भावेऽपि न भावरूपाज्ञानानुभवविरोध इति चेत्—न; ज्ञानप्रागभावधर्मिप्रतियोगिज्ञानविषयज्ञानस्य स्मृतिरूपत्वेनाविशदस्वरूपत्वात् । ज्ञानस्य स्वसमकालवर्तिपदार्थग्राहित्वानियतिरित्युक्तम् । अतो ज्ञानसद्भावेऽपि तत्प्रागभावसद्भावतद्ग्रहणयोरुपपत्तिः । किंच भावरूपाज्ञानस्यापि प्रतियोगिसापेक्षताऽभावस्येवास्त्येव, तस्याप्यज्ञानशब्दवाच्यत्वात् ; नञर्थस्य कृत्स्नस्य सप्रतियोगित्वेन सापेक्षत्वात् । तदन्यतद्विरोधितदभावा हि नञर्थाः । ननु तमसः प्रकाशविरोधित्वेऽपि स्वरूपप्रतीतौ न प्रकाशापेक्षेति चेत्—न; तद्विरोधित्वाकारोल्लेखे तत्प्रतीतेरवश्याश्रयणीयत्वात् । न च विरोधित्वाकारानुल्लेखे तमसः प्रकाशानपेक्षतया स्वरूपग्रहणाभावरूपाज्ञानस्यापि प्रतियोगिग्रहणानपेक्षया तथा ग्रहणमस्त्विति वाच्यम्, 'तस्य अज्ञानम्' इत्येव सिद्ध्यङ्गीकारात् । अतः ' अहमज्ञः' इत्यस्य ज्ञानप्रागभावविषयत्वमेव, तस्य मिथ्यावादिनोऽप्यभिमतत्वात् प्रतीयमानत्वाच्च । अन्यथा अर्थान्तरस्य विषयत्वेन कल्प्यत्वात् कल्पनागौरवम् । यच्चोक्तम्—"तदज्ञानं साक्षिचैतन्यस्य ज्ञाततया अज्ञाततया वा विषयः" इति; तच्चासत्, ब्रह्मणोऽनुभूत्येकस्वरूपत्वेनाज्ञानद्रष्टृत्वानुपपत्तेः । न च तिरोहितस्वरूपत्वेन तदनुभवोपपत्तिरिति वाच्यम्, स्वानुभवस्वरूपस्य तिरोधानासंभवात् । न च स्वतो नाप्रकाशत्वं, किंत्वन्यतः स्वप्रकाशत्वमिति वाच्यम्; प्रकाशधर्मानभ्युपगतेः स्वरूपनाशापत्तिरेवेति पूर्वमेवोक्तत्वात् । किंचैतदज्ञानं ब्रह्मणो विषयो भूत्वा तत्तिरस्करोति, उत तिरस्कृत्य विषयो भवति, अथ तस्य विषयत्वं तिरोधायकत्वं च

युगपदिति विवेचनीयम् । न तावदाद्यः, तिरोधानानपेक्षयाऽज्ञानसाक्षित्वे ब्रह्मणस्तिरोहित-त्वकल्पनाया निष्प्रयोजनतापत्तेः । साक्षित्वाय हि तिरोहितत्वकल्पना । अज्ञानस्वरूप-कल्पना च निष्प्रयोजना, ब्रह्मणस्तिरोधानव्यतिरेकेणाज्ञानदर्शनासंभवात् । किंचाज्ञानसाक्षि-त्वं स्वतः ? अन्यतो वा ? आद्ये स्वरूपप्रयुक्तत्वेनाज्ञानानुभवान्न मोक्षः । तन्नाशे च स्वरूपनाश एव, ज्ञानस्य साक्षिस्वरूपत्वात् । नापि द्वितीयः, अनवस्थापातात् । अन्यपदा-र्थस्याप्यज्ञानकल्प्यत्वात् तस्याप्यज्ञानत्वाविशेषेण साक्षिविषयत्वस्यावश्यकत्वात् । न च तर्हि ब्रह्म तिरस्कृत्याज्ञानं तद्विषयो भवतीति वाच्यम् , तदज्ञानस्य काचादिवत्तिरोधानरूपकार्यैक-रत्वेन सत्यतया ज्ञानबाध्यत्वाभावापत्तेः । न च तस्य विषयत्वं तिरोधायकत्वं च युगप-दिति वाच्यम् , स्वानुभूत्येकस्वरूपत्वेन तस्य तिरोधानव्यतिरेकेणाज्ञानविषयीकारानुपपत्तेः । न च हेत्वन्तरेण तिरोधानमिति वाच्यम् , अज्ञानस्य तिरोधानायत्तस्वरूपत्वेनानादित्वाभ्यु-पगमविरोधात् । अतिरस्कृतस्वरूपस्याज्ञानसाक्षित्वे ब्रह्मणः स्वानुभूत्येकस्वरूपत्वाभ्युपगम-विरोधः । किंच तिरोधानसद्भावेऽपि ब्रह्मणः प्रकाशो नास्ति ? उत किंचिदस्ति वा ? आद्ये तस्य प्रकाशमात्रस्वरूपत्वेन तिरोधाने स्वरूपनाश एवेत्युक्तम् । ननु—राद्धान्तेऽप्ययं दोषः समः, ज्ञातुरात्मनो ज्ञानस्य स्वप्रकाशत्वाभ्युपगमात् देवाद्याकाराध्यासाभ्युपगमाच्च । स्वरूपभाने तु नाध्यासः । अध्यासे च स्वरूपनाशः, स्वप्रकाशत्वात् स्वरूपतज्ज्ञानयोरिति चेत्— न; स्वरूपप्रकाशस्याध्यासविरोधित्वाभावात् । तच्च ज्ञानादेरध्यासेन सहानुभवात् । विरोध्याकारावभासनं हि अध्यासविरोधि; यथा शुक्त्यां रजताध्यासस्य शुक्तिकाद्याकाराव-भासनम् । ग्राह्यश्च विरोध्याकार एव, न तु स्वप्रकाशः । न च विरोध्याकारग्रहणो-पपत्तिः, ज्ञानस्य कर्मणा तिरोहितत्वात् । न च तर्हि न कदाचिदपि देवाध्यासविमोक्ष इति वाच्यम् , साङ्गोपासनात्मकज्ञानप्रतीतपरमात्मप्रसादेन तन्निवृत्तेः श्रुतिसिद्धत्वात् । न च ज्ञात्रादेरध्यासेन सहानुभवोऽध्यासात् अनुभवादध्यास इतीतरेतराश्रयत्वमिति वाच्यम् , बीजाङ्कुरवदनादित्वात् । मिथ्यावादिपक्षे स्वप्रकाशदर्शिव्यतिरेकेण नाकारान्तराभ्युपगमः, यदग्रहणग्रहणाभ्यामध्यासतदपगमयोरुपपत्तिः स्यात् । राद्धान्तेऽप्यपहतपाप्मत्वाद्याकारोऽ-ङ्गीकृतः । तच्च " अपहतपाप्मा " इत्यादिवाक्यात् । तत्स्वरूपस्य तिरोधानं च "पराभि-ध्यानात्तु तिरोहितम् " इत्यादौ साधितम् । अतः प्रकाशमात्रस्य तिरोधाने स्वरूपनाशोऽ-वर्जनीयः । निर्धर्मकेऽध्यासश्चानुपपन्नः, सधर्मक एवाध्यासदर्शनात् । नापि द्वितीयः,

ब्रह्मणो निर्विशेषत्वेनाखण्डत्वात्। सखण्डस्य ह्यंशतः प्रकाशस्योपपत्तिः। अथाविद्यया तिरोहितत्वेनाविशदावभासः किंचिदवभास इति चेत्—न; निर्विशेषप्रकाशमात्रस्वरूपस्यावैशद्यानुपपत्तेः। वैशद्यं हि सकलावभासः। अवैशद्यं च कतिपयांशरहितावभासः। तदुभयं च सांशसविशेषवेद्यवस्तुन एव। तच्च नाङ्गीक्रियते। किंच ऐक्यज्ञानादवैशद्यनिवृत्तिर्नास्ति? उतास्ति? इति विवेचनीयम्। आद्ये तु न मोक्षः। द्वितीये तु पक्षे अवैशद्यनिवृत्तौ कीदृशं ब्रह्म? विशदस्वरूपमित्येव वक्तव्यम्। तत्स्वरूपत्वं प्रागस्ति वा, न वा? आद्ये तु नाविद्याकार्याविशदत्वम्; कुतस्तन्निवृत्तिः? द्वितीये वैशद्यस्य कार्यत्वेन मोक्षस्यानित्यता। निरधिष्ठानभ्रमासंभवदूषणान्यारम्भणाधिकरणे प्रपञ्चितानि। न चानुमानात् भावरूपाज्ञानसिद्धिः, अनुमानस्य दुष्टत्वात्। तच्चैतदनुमानस्यापि प्रमाणज्ञानत्वेनाप्रकाशितार्थप्रकाशकत्वात् एतदनुमानविषयाज्ञानावरणाज्ञानान्तरानिष्टस्य साधकत्वेन विरुद्धत्वात्। एतदनुमानस्य भावरूपाज्ञानमेव हि विषयः। तदावरणाज्ञानान्तरं साधयत्येव। तदनुमानस्याप्रकाशितार्थप्रकाशितत्वेऽपि तदज्ञानावरणाज्ञानान्तरासाधकत्वे तु हेतोरनैकान्त्यम्। अथाज्ञानान्तरसाधकत्वाङ्गीकारः, तर्हि तदज्ञानेन भावरूपाज्ञानस्य तिरोहितत्वेनाज्ञानसाक्षिता ब्रह्मणो न स्यात्। ततश्चाज्ञानकल्पना निष्फला। सर्वत्रान्वयव्यतिरेकाभ्यां ज्ञानस्यैव प्रकाशकत्वेन दीपप्रभाया अप्रकाशितार्थप्रकाशकत्वाभावात् दृष्टान्तश्च साधनविकलः। इन्द्रियाणामपि नान्यप्रकाशकत्वम्, प्रकाशकज्ञानसाधनमात्रत्वात्। प्रदीपस्य प्रकाशत्वव्यवहारस्तु प्रकाशकज्ञानेन्द्रियसहकारित्वेन लाक्षणिकः। अथ प्रदीपस्य ज्ञानवत् स्वविषयावरणनिरसनपूर्वकप्रकाशकत्वसाधर्म्यात् दृष्टान्तत्वेनोपात्तत्वात् न साधनविकलतेति चेत्—न; विरोधिनिरसनमात्रस्यैव प्रकाशकत्वाभावात्। व्यवहारयोग्यतापादके हि प्रकाशकत्वप्रसिद्धिः। उपपत्तिश्च तस्यैव। तच्चालोकादिसद्भावेऽप्यन्यपरस्यार्थपरिच्छेदाभावे प्रकाशकत्वव्यवहारादर्शनात्। यदि प्रकाशकज्ञानोपकारकमात्राणामपि प्रकाशकत्वाङ्गीकारः, तर्हीन्द्रियाणामपि प्रकाशकताङ्गीकरणीया। ततश्च तेषां स्वनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावाद्धेतोरनैकान्त्यम्। अज्ञानस्य मिथ्यावाद्यभिमतस्य ब्रह्माश्रयत्वादावरणप्रमाणज्ञाननिवर्त्यत्वविरहसाधकानुमानगणो भावरूपत्वविपरीतार्थसाधकानुमानादिश्च भाष्ये स्पष्टः। तत्र "ज्ञानं न वस्तुनो विनाशकम्" इत्यनुमाने वस्तुशब्दो भावरूपाज्ञानपरः। ज्ञानमात्रं न भावरूपार्थबाधकमित्यर्थः। "भावरूपमज्ञानं न ज्ञानविनाश्यम्" इत्यनुमानेऽपि ज्ञानशब्दो ज्ञानमात्रपरः। अथ कथं

भावरूपार्थस्य न ज्ञानबाध्यत्वम्? रज्जुसर्पादिभ्रमोत्पन्नभयादीनां सर्पादिभ्रमबाधकज्ञानबाध्यत्वदर्शनादिति चेत्—न; तेषां ज्ञानविनाश्यत्वाभावात्। किंतु क्षणिकत्वेन स्वयमेव विनाशः। तेषां क्षणिकत्वं च कारणान्वयव्यतिरेकानुविधायित्वात्। अक्षणिकत्वे च हेतुनाशे नियमेन भयनाशो न स्यात्। भया-दिहेतुज्ञानसंततेर्भयाद्युत्पत्तिहेतुत्वेनानेकभयोत्पत्तिलब्धिः स्यात्। अतो न ज्ञानमात्रस्य भावरूपार्थबाधकत्वम्। किंच तदनुमानवाक्यमपि दुष्टम्। तच्च व्यतिरिक्तेतिशब्देन समीहितार्थसिद्धेरन्तरशब्दस्य व्यर्थत्वात्। स्वप्रागभावव्यतिरिक्तांशश्च व्यर्थः, वस्तुशब्दस्य भावपदार्थपरत्वप्रसिद्धेस्तेनार्थादभावव्यावृत्तिसिद्धेः। स्वविषयावरणस्वनिवर्त्यस्वदेशगतेति शब्दैश्चार्थात् प्रागभावव्यावृत्तिसिद्धेश्च; स्वप्रागभावस्यस्वनिवर्त्यस्वदेशगतत्वेऽपि स्वविषयावरणत्वाभावात्; आवरणस्य भावपदार्थधर्मत्वात्। अतो नानुमानात् भावरूपाज्ञानसिद्धिः।

ननु भाष्यकारस्य तमसो द्रव्यान्तरत्वमिष्टं वा? न वा? तदिष्टमिति प्रतीयते, पूर्वपक्षे द्रव्यान्तरत्वं प्रसाध्य राद्धान्ते तस्यानिरासात्। "तम आसीत्" इत्यादिश्रुतेः।

"अबुद्धिपूर्वकः सर्गः प्रादुरासीत्तमोमयः।
तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञकः ॥"

इत्यादिस्मृतेश्च तत्सद्भावप्रतीतेरिति चेत्—मैवम्, "तम आसीत्" इत्यादिश्रुतेः प्रधानपरत्वस्य भाष्यकारकण्ठोक्तेः, प्रधानस्य च रूपगुणरहितत्वेनाचाक्षुषत्वाच्च। द्रव्यान्तरत्वे च पृथिव्यादिवत् श्रुतौ स्मृतौ चोत्पत्तिलयाभिधानं स्यात्। न च तदस्ति। तत्सद्भावकल्पनायां प्राकृतपदार्थस्य पञ्चविंशत्वापत्तौ "पञ्चविंश आत्मा भवति" इति श्रुतिविरोधः। प्राकृततमोगुणस्यापि न चाक्षुषत्वमिष्टम्, भाष्य एव सत्त्वादिगुणानां प्रकाशादि गुणोन्नेयत्वाभिधानात्। "अबुद्धिपूर्वकः" इत्यादिस्मृतिस्तु नान्धकारपरा; किंत्वविद्यापरा, "अविद्या पञ्चपूर्वैषा प्रादुर्भूता महात्मनः" इत्युत्तरग्रन्थात्; स्थावरसृष्टिप्रकारणाच्च। अतो न तमसः पृथिव्यादिभ्यः पृथग्द्रव्यत्वम्। तस्य पृथक्त्वनिरासस्तु स्पष्टत्वान्न भाष्यकारैः कृतः। अथ कस्मिन्नन्तर्भाव इति चेत्, पृथिवीद्रव्य इति ब्रूमः। प्रभाप्रभावद्रूपेण तेजोद्रव्यवत् पृथिव्येव तमोरूपेण तदाश्रयरूपेण च स्थिता। पृथिवीच्छायैव तम इत्यर्थः। पृथिव्याः कृष्णरूपता च "यदग्ने रोहितम्" इत्युपक्रम्य "यत्कृष्णं तदन्नस्य" इत्यादौ श्रूयते। सूर्यसिद्धान्ते—

" भानोरर्धे महीच्छाया तुल्येर्के च समेऽथवा ।
भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य सदा भुवि ॥"

इत्यादौ चन्द्रादित्ययोर्भूच्छायया ग्रहणाभिभूतत्ववचनाच्च । गन्धस्पर्शादेरनुपलब्धिस्त्वनुद्भूतत्वात् । दिवा तदनुपलब्धिस्तु चन्द्रकिरणवदादित्यालोकादिभिरभिभूतत्वात् । अभिभवकारणालोकरहितदेशे उपलब्धेः । उत्पत्त्यदर्शनात् युगपदुत्पत्तेर्व्याप्तेश्चानुपपन्नत्वात् आलोकावरकद्रव्यानुविधानानुपपत्तेर्न द्रव्यान्तरत्वम् । पार्थिवप्रभात्वपक्षे त्वभिभवहेत्वालोकनिरासे तत्र तदुपलब्धेर्युक्तत्वात् आवारकद्रव्यछत्रादिद्रव्यानुविधानं युक्तम् । महाविद्युतस्तु मेघादुत्पत्तिर्दृश्यते ; तस्याश्चोत्पत्तिसमकालं सर्वलोकव्याप्तिर्दृष्टा । अतो न तस्या दृष्टान्तत्वम् । नाप्यालोकाभावस्तमः, तथात्वे तद्ग्रहणे आलोकसापेक्षत्वप्रसक्तेः, घटाद्यभाव इव । ननु आलोकस्य ग्रहणे नालोकान्तरापेक्षा ; अतस्तदभावग्रहणेऽपि न तदपेक्षेति चेत्—न; आलोकस्य ग्रहणे आलोकान्तरानपेक्षत्वस्य प्रकाशत्वप्रयुक्तत्वात् निषेधमुखेन तमसः प्रतीत्यभावाच्च नालोकाभावत्वम् । अभावे तु निषेधमुखेनैव धीः । न हि तमसि तथा । प्रतियोगिस्मरणाभावाच्च ; न ह्यालोकः स्मर्यते । तच्च स्वानुभवसिद्धम् । दूषणान्तराण्यप्येवमूहनीयानि । ननु तमसः पृथिवीच्छायात्वपक्षे प्रभाश्रयदीपग्रहवत् तमस्यपि पृथिव्युपलब्धिः स्यादिति चेत्—न ; तमसः स्वाश्रयग्रहणतिरोधानस्वभावत्वकल्पनयाऽनुपपत्तेः शान्तत्वात्, तिग्मरश्मेः रश्मिबाहुल्यात् तदाश्रयमण्डलस्य ग्रहणाभाववत् । अतो न द्रव्यान्तरत्वं वा नालोकाभावत्वं वा । तमसः आलोकाभावत्वपक्षस्वीकारेऽपि न विरोधः, अभावस्य पृथिव्यादिकेवलस्वरूपव्यतिरेकेण पदार्थान्तरत्वानभ्युपगमात् पृथिव्यादेरेव तमोव्यवहारहेतुत्वात् । इतरत्तु विस्तरभीत्योपेक्षितम् ।

यत्तूक्तम्—विशुद्धब्रह्मणि शुक्तिकायां चाहंकाररजताध्यासस्याज्ञानात्मकमिथ्याभूतोपादानान्वेषणस्य युक्तत्वम्; सत्योपादानत्वे कार्यस्य सत्यताप्रसक्तिरिति; तच्चासत्, कार्यकारणयोः सालक्षण्यस्य न विलक्षणाधिकरणनिरस्तत्वात् । परब्रह्मणोऽन्यधर्माध्यासाभावात् जीवात्मनोऽपि देवाद्यध्यासस्य मिथ्यात्वाभावाच्च । तच्चोत्तरत्र वक्ष्यते । कार्यकारणयोः सत्यत्वमेव, प्रमाणसिद्धत्वात् । सूक्ष्मचिदचिद्विशिष्टब्रह्मणः सत्यस्यैव हि जगत्कारणत्वं श्रूयते । एतेन मिथ्योपादानत्वेऽपि तादृशोपादानान्तरकल्पनायामनवस्थापातात् अनादिमिथ्योपादानस्य कल्पनीयत्वात् अर्थापत्त्या तदज्ञानसिद्धिरित्युक्तिरपि

निरस्ता, सत्यकारणस्य प्रमाणसिद्धत्वेन कल्पनानवकाशात्। न च 'न किंचिदहमवेदिषम्' इति सुप्तोत्थितपरामर्शान्यथानुपपत्त्या भावरूपाज्ञानसिद्धिरिति वाच्यम्, पूर्वमेव तत्परामर्शस्यान्यपरत्वस्य साधितत्वात्। अतो न सुप्तौ भावरूपाज्ञानानुभव इति न तत्परामर्शोपपत्तिः। न च ज्ञानाभावस्य धर्मिग्रहणादिसविकल्पकज्ञानसापेक्षत्वात् तस्यान्तःकरणसापेक्षत्वात्। सुप्तौ च तदभावात् तद्ग्रहणमशक्यमिति वाच्यम्, 'न किंचिदहमवेदिषम्' इति परामर्शस्य केवलात्मविषयत्वात् आत्मानुभवस्य करणापेक्षाभावात्। न च अज्ञातार्थप्रश्नान्यथानुपपत्त्या तदज्ञानसिद्धिरिति वाच्यम्, अर्थविषयज्ञानप्रागभावादावपि प्रश्नोपपत्तेः। न च ज्ञानप्रागभावस्यातत्त्वेन तस्यासुप्तत्वात् तदनुवादेन प्रश्नोऽनुपपन्न इति वाच्यम्, तस्य स्वापाभावात्। 'कोऽसौ इति न ज्ञातः' इति 'किंसंज्ञकोऽयमिति न ज्ञातः' इति हि तस्यार्थः। अस्य संज्ञाविषयज्ञानं मे नास्ति, तां मे ब्रूहि इति प्रष्टुर्हार्दो भावः। एवं प्रश्नस्यार्थे कथं ज्ञानप्रागभावस्य स्वापः? सर्वोऽपि हि ज्ञानाभावमेवाज्ञानमवैति; न तु विषयावरकं भावरूपाज्ञानमपूर्वम्। न चाप्रतिपन्नार्थानुवादानुपपत्तेः प्रतिपन्नाभावरूपानुवादेन प्रश्न इति वाच्यम्, तस्याप्रतिपन्नत्वात् लोकसिद्धज्ञानप्रागभावपक्षे तु सामान्याकारेण ज्ञातत्वेन प्रश्नोपपत्तेः। भावरूपाज्ञानस्य प्रत्यक्षत्वेन विषयस्यावृतत्वे च सामान्यतोऽविशेषतश्चाज्ञातत्वात् तत्पक्ष एव प्रश्नोऽनुपपन्नः। विषयज्ञाने च तदावारकाज्ञानस्य नष्टत्वेन कदाचिदपि तद्विषयं ज्ञानं न स्यात्। सकृच्छ्रवणादौ 'विस्मृतोऽयं, कोऽसौ' इति जनः पुनरपि पृच्छति। न च ज्ञानप्रागभावपक्षेऽपि समोऽयं दोष इति वाच्यम्, सकृच्छ्रवणादौ ज्ञानस्य नष्टत्वे संस्कारस्यानारोहे च विस्मृतिसंभवात्। त्वत्पक्षे तु विषयावारकभावरूपाज्ञानस्य नष्टत्वेन तद्विषयज्ञानाभावस्यानुपपत्तिर्दुर्वारा। अथ तन्नाशेऽपि पुनस्तत्रोत्पद्यत इति चेत्—न; प्रश्नपरंपरानुपरतिप्रसक्तेः। प्रश्नस्यैवानुपपत्तेश्च ज्ञातार्थं पुरुषं प्रति हि प्रश्नः। ज्ञातस्यार्थस्य पुनः पुनरज्ञानावृतत्वे तु न कस्यापि हि ज्ञातार्थता। किंच विषयस्यापि मिथ्यावादिपक्षे मायाविवर्तत्वेन भावरूपाज्ञानरूपत्वात् प्रमाणज्ञानेनाज्ञाननिवृत्तौ विषयशून्यतयैव स्यात्। प्रमाणस्यापि तथात्वेन प्रमाणज्ञानशून्यतापि। प्रमाणज्ञानस्यापि ब्रह्मव्यतिरिक्तत्वेन जडत्वादज्ञानानिवर्तकता च विषयप्रमाणज्ञानयोः सत्यत्वे तु ब्रह्मणः सद्वितीयत्वप्रसङ्गः। न च व्यावहारिकप्रमाणविषयाङ्गीकारात् सर्वव्यवहारोपपत्तिरिति वाच्यम्, तथात्वेऽपि लोकसिद्धज्ञानप्रागभावस्यैव स्वीकार्यत्वादप्रामाणिकाज्ञानान्तरकल्पनायां प्रमाणा-

भावात्। न च सामान्यतो ज्ञातस्य विशेषतो बुभुत्सानुपपन्ना, सामान्यस्य ज्ञातत्वात् विशेषस्यार्थान्तरत्वात् तस्य च सुषुप्तत्वात्तदनुवादेन प्रश्नोऽनुपपन्न इति वाच्यम्, प्रश्नोच्छेदप्रसङ्गः इत्युक्तत्वात्। पदार्थत्वेन घटादिवदस्यापि कयापि संज्ञया भवितव्यम्; तत्संज्ञाज्ञानं नेतः-पूर्वमासीत्; का सा संज्ञेति बुभुत्सायां तद्विषयप्रश्नोत्तरयोरस्मत्पक्ष एव ह्युपपत्तिः; एष प्रकारो लोकसिद्धश्च। अतो न केनापि प्रमाणेनानिर्वचनीयभावरूपाज्ञानसिद्धिः। यदुक्तम्—"तदज्ञानस्य सत्त्वे भ्रान्तिबाधायोगात् असत्त्वे ख्यातिबाधायोगाच्चानिर्वचनीयरजतादिदोषवशात् प्रतीयत इति कल्प्यम्" इति। एतदुक्तं भवति—अन्यथाख्यातिवादिभिः शुक्तिकादिर्देशान्तरगतरजताद्यात्मना दोषोपहतेन्द्रियैर्गृह्यत इत्युच्यते; तदसत्, विकल्पासहत्वात्। किमन्याकारं ज्ञानमन्यालम्बनमन्यथाख्यातिः? उत वस्तुन एव वस्त्वन्तरात्मनावभासः? नाद्यः, संवेदनाधीनत्वात् वस्तुस्थितेः यदाकारं संवेदनं तदाकारस्यैव तत्संवेदनालम्बनत्वात् रजताकारसंवेदनस्य शुक्तिकालम्बनत्वस्य विरुद्धत्वात्। नापि द्वितीयः, भेदवादिनां शुक्त्यादिभिः रजतादीनां परमार्थसंसर्गानभ्युपगमात् संसर्गस्य शून्यस्य प्रकाशतापत्तेः। ततश्च 'खण्डो गौः' इत्यादिसंसर्गप्रत्ययानामपि मिथ्यात्वप्रसक्तिः। न च 'खण्डो गौः' इत्यादावर्थस्य प्रतिभास इति वाच्यम्, शुक्तिकादावपि प्रतिभासविशेषाद्रजतादिसद्भावप्रसक्तेः। न च तत्र बाधादर्थस्य नास्तिता प्रतीतस्य बाधायोगात्। न च मिथ्याज्ञानप्रतीतत्वेन बाध्यत्वमिति वाच्यम्, ज्ञानस्य मिथ्यात्वाभावात्। न च बाध्यार्थविषयत्वेन तस्य मिथ्यात्वमिति वाच्यम्, बाध्यार्थविषयत्वे ज्ञानस्य मिथ्यात्वं, तस्य मिथ्यात्वे बाध्यविषयत्वमितीतरेतराश्रयत्वाच्च दोषवशात् तथैव प्रतीयत इति कल्पनीयमिति।

अत्रोच्यते—अन्यस्यान्यथाभावाभ्युपगमात् ख्यात्यादेरुपपत्तेः क्षीणत्वादर्थापत्तेः। अन्यथाख्यातिश्चान्याकारस्य सतोऽन्याकारतयावभासः। एवं च कल्पनालघीयसी स्यात्। अन्यथा तु गौरवम्, प्रसिद्धरजतविलक्षणापूर्वरजतादेः शुक्त्यादिसंबन्धितया ख्यानस्य कल्प्यत्वात्। अन्यथाख्यातौ तु शुक्तिसंबन्धित्वेनावभासमात्रस्य कल्प्यत्वम्। न च सद्वस्तुनः प्रतिपन्नोपाधावबाधादन्यथाख्यातावपि रजतादेः सत्त्वात् प्रतिपन्नदेशकालोपाधौ न बाधापत्तिरिति वाच्यम्, अनिर्वचनीयरजतस्यापि भावरूपरजतत्वाविशेषेण प्रतिपन्नोपाधौ बाधाभावस्य समत्वात्। न च प्रतिपन्नोपाधौ बाधाभावः सत्त्वप्रयुक्तः, न रजतत्वप्रयुक्त इति वाच्यम्, प्रतीतोपाधावबाधस्य प्रतीत्यपेक्षत्वेन यथार्थावभासप्रयुक्ततया सत्त्वस्याप्रयोजकत्वात्। अतो

नानिर्वचनीयरजतादिकल्पनोपपत्तिः । अनिर्वचनीयत्वेन शुक्तिकारजतादेरप्रतीतेश्च तत्कल्पनायामप्यन्यस्यान्यथाभावस्यावर्जनीयत्वेनान्यथाख्यातिर्दुर्वारा । 'रजतम्' इत्येव हि भ्रान्तिधीः । अनिर्वचनीयत्वेन प्रतीतौ भ्रान्तिबाधप्रवृत्तीनामसंभवः, अनिर्वचनीयस्वरूपत्वेन शुक्तिकारजतादेः । सदाकारेणाज्ञाने हि कथं भ्रान्तिः ? कथं वा बाधः ? कथमनिर्वचनीयरजते रजतार्थिप्रवृत्त्युपपत्तिः ? ज्ञातरजतकृत्यस्य हि रजतार्थित्वम् । अनिर्वचनीयरजतकृत्यं तु न ज्ञातम् । 'इदमेतावन्तं कालं रजतमित्येवावगतम्' इति हि जनो वदत्यवगच्छति च । अतः प्रतीत्याद्युपपत्तयेऽन्यथाख्यातिरेवाभ्युपेया । न च संसर्गाभावेऽपि कथं तदाकारतया ज्ञानमिति वाच्यम्, दोषवशादित्युक्तत्वात् । किंच तादात्म्यज्ञानानुकूलज्ञानावान्तरजातिविशेषयोगादेव तादात्म्यज्ञानमुच्यते, न पुनः साक्षात् तादात्म्यसंबन्धः । इतरदूषणान्यनिर्वचनीयपक्षेऽपि समानानि ।

नन्वसत्ख्यातिरस्तु, तत्पक्षस्य युक्तियुक्तत्वात् । तथा हि—असतोऽर्थस्यावभास एव हि भ्रान्तिः, शुक्तिकादिषु रजतादिभ्रमेषु शुक्तिकादिसद्वस्त्वनवभासात् । एवं स्वप्नादिभ्रान्तिष्वपि न सद्वस्त्ववभासः । 'रजतादयो न सन्ति' 'स्वप्नदृष्टगजो नास्ति' इति बाधकप्रत्ययाच्च । अतोऽसत्ख्यातिरेव भ्रान्तिरिति चेत्, मैवम्—तन्मतस्य युक्तियुक्तत्वेऽप्यसदर्थस्य सत्त्वेन स्फुरणाङ्गीकारादन्यथाख्यातेरवर्जनीयत्वात् । युक्तिबाधितश्च तत्पक्षः । स्वरूपेणासतोऽर्थस्य प्रतिभासयोगात् । न हि क्वचिदप्यसतोऽश्रुतस्यादृष्टस्य वा वस्तुनोऽन्यत्र प्रतीतिः । किंच असत्ख्यातिवादिभिः असदित्यभावोऽङ्गीकृतः । ततश्च 'नात्र रजतम्' इति बाधकात्माभावख्यातेरपि भ्रान्तित्वप्रसङ्गः, तस्याप्यसत्ख्यातित्वाविशेषात् । असतः सत्तया अवभासे अन्यथाख्यातिप्रसङ्ग इत्युक्तम् । किंच असत्तयाऽवभासस्य भ्रान्तित्वे वस्तुतः पदार्थस्यासतः सत्तयाऽवभासस्य भ्रान्तिता न स्यात् । आत्मसद्भावेऽपि 'नास्त्यात्मा' इत्यपि धीर्भ्रान्तिरेव । अतः सदसद्भ्रान्तिष्वनुवृत्तान्यथाख्यातिरेव भ्रान्तिः । असत्ख्यातिमेव शून्यख्यातिमाहुः ।

नन्वात्मख्यातिर्भ्रान्तिरस्तु, तत्पक्षस्य युक्तियुक्तत्वात् । तथा हि—रजताकारो बुद्धेरेव; बुद्धिसंप्रयोगमन्तरेण रजतस्यापरोक्षत्वात् । अथ कथं बुद्धे रजताकारतेति चेत्, संस्कारसामर्थ्यादिति ब्रूमः । संस्कारश्च यस्यां बुद्धिसंततौ यदा कदाचित् पूर्वं रजतज्ञानं जातं, तज्ज्ञानमेव, विज्ञानव्यतिरिक्तवस्त्वन्तरानभ्युपगमात् । न च कालान्तरजातस्य

संस्कारत्वे तस्य नष्टत्वात् न तेन रजताकारावाप्तिरिति वाच्यम्, अनेकज्ञानव्यवधानेऽपि शालिबीजादीनामनेकाङ्कुरव्यवधानेऽपि सजातीयबीजाङ्कुरोत्पत्तिवत् तज्ज्ञानस्य तदाकारावाप्ति-हेतुत्वात्। अथवा तज्जन्यबुद्धिसंततिरेव संस्कारः। स च रजताकारज्ञानात्। एव-मनादिवासनाप्रापितं रजतं बुद्ध्याकारो बहिरर्थ इवावभासत इति चेत्, मैवम्—आत्माकार-स्यार्थात्मनावभासाङ्गीकारादन्यथाख्यातेरङ्गीकृतत्वात्, आत्मख्यातेरनुपपन्नत्वाच्च, रजतप्रतीते-र्बुद्ध्याकारत्वे प्रमाणाभावात्। तस्य बुद्ध्याकारत्वे सम्यग्ज्ञानेष्वपि तथा स्यात्। न चास्त्विति वाच्यम्, घटादेरबाधितप्रतीतिसिद्धत्वात्। बाह्यार्थसद्भावो योगाचारमतनिरासे साधितः। किंच अयं बुद्ध्याकारतयाऽवभासते? उतान्याकारतया? इति विवेचनीयम्। आद्ये प्राग्बाधात् भ्रान्तित्वनिश्चयप्रसङ्गः। द्वितीये चान्यथाख्यातिरेव। नन्वख्यातिरेवास्तु, तत्पक्षस्य युक्तत्वात्। तथा हि—यस्यां संविदि यस्यैवार्थस्यावभासः स एव वेद्योऽर्थः, नान्यः। 'इदं रजतम्' इत्यत्र रजतस्यावभासो न शुक्तेः; तस्यावेदनात्। अतोऽन्यस्यान्यथाभानं धीहतमेव। न हि परार्थे भासमानेऽन्यार्थभासनम्। अतो रजतावभासस्य का गतिरिति चेत्, उच्यते—भेदवर्जितं केवलं शुक्तिशकलमेव गृहीतम्। रजताद्भेदहेतवो ये शुक्ति-काया विशेषाः, अभिभवात्तु ते न गृहीताः। सामन्याकारता तु गृहीता। ज्ञानानन्तरं च स्मृतिर्जाता। तथा च मनोदोषात् तदिति परामर्शवर्जितं विषयीकृतम्। न तु शुक्तेर्विकारो निरूपितः। तस्माद्रजतावभासो युक्त इति। तदुक्तं प्रकरणपञ्चिकायाम्—"अत्र ब्रूमः—य एवार्थो यस्यां संविदि भासते स वेद्यः; स एवानन्यधीवेद्यश्चेति वेद्यस्य लक्ष-णम्। 'इदं रजतम्' इत्यत्र रजतं चावभासते। तदेव तेन वेद्यं स्यात्। न तु शुक्तिः; अवेदनात्, अतो रजतावभास उपपन्नो भविष्यति इति विविक्तवस्तुनोर्विवेकविधुरज्ञानं भ्रान्तिरित्यर्थः। तस्मादख्यातिरेव भ्रान्तिरिति चेत्, मैवम्—अन्याकारस्य सतो रजतादे-रन्याकारत्वेन भानादन्यथाख्यातेरवर्जनीयत्वात्। ग्रहणस्मृत्योरेकत्वेन भानाच्चान्यथा-ख्यातिः। यद्यन्याकारतया न प्रतीता, तदा प्राग्बाधाद्भ्रान्तित्वनिश्चयः स्यात्। किंचा-ख्यातिवादिभिः प्राभाकरैर्वस्तुस्वरूपमात्रस्यैव भेदत्वेनाङ्गीकृतत्वात् ग्रहणेन पुरोवर्तिवस्तुस्वरू-पस्य गृहीतत्वात् स्मरणेन च पूर्वानुभूतरजतस्वरूपस्य गृहीतत्वात् भेदस्य गृहीतत्वेन भेदा-ग्रहात् भ्रान्तिरित्युक्तिर्व्यर्था स्यात्। तेषां तयोरन्यथाकारेण ग्रहे त्वन्यथाख्यातिरेव। अतोऽन्यथाख्यातिरेव भ्रान्तिः।

ननु निर्विषयख्यातिरस्तु, तत्पक्षस्य युक्तियुक्तत्वात् । तथाहि—भ्रान्तेर्नान्यथाख्यातित्वमप्युपपन्नम्, सतोऽसतो वा विषयत्वानुपपत्तेः। तच्च अनवभासमानत्वात् । न हि शुक्तिकाया रजतसंवित्त्वेनावभासः, तस्य रजतसंवित्त्वानुपपत्तेः, शुक्तिकासंवित्त्वप्रसङ्गाच्च । अतः संविदन्तरस्य संविदन्तरविषयत्वमनुपपन्नम् । न चैवं रजतविज्ञानविरोध इति वाच्यम्, तद्व्यवहारविज्ञानवसामर्थ्यात् सामान्ययोगेन तद्विज्ञानत्वोपपत्तेः । यथा स्थलजस्यापि पद्मस्य पङ्कजत्वव्यवहारः । अतो निर्विषयैव ख्यातिः । अतो न यथोक्तानुरूप्यम् । अतः ख्यातेर्निर्विषयत्वं प्रतिजानीते—"विनैव विषयं दोषैस्तद्भ्रान्तिं विबुधा विदुः" इति । मैवम्—निर्विषयाया धियः सविषयतयावभासादन्यथाख्यातित्वप्रसङ्गात् । अनवभासमानत्वादिति हेतुश्चासिद्धः, त्रिकोणत्वभासुरत्वाद्यात्मीयधर्मैरनात्मीयधर्मरजतत्वेन धर्मेण च विशिष्टतया शुक्तेरवभासात् । न ह्येतावता धर्म्यनवभासः, परं तु शुक्तित्वस्यैवानवभासः । तथात्वे सर्वत्र धर्म्यवभासापलापप्रसक्तिः । सर्वत्र कतिपयधर्मानवभासस्यावर्जनीयत्वात् न क्वचित् समस्तधर्मार्पितधर्मिप्रतीतिः । अतः शुक्तित्वाद्यग्रहे च धर्मान्तरविशिष्टतदधिष्ठानावभासोऽभ्युपगमनीयः । अतोऽवभासमानत्वादेव शुक्तिकायां रजतज्ञानमुपपन्नमेव । अतोऽन्यथाख्यातिपक्षे नानवभासमानस्य विषयत्वप्रसङ्गः । न चैवमस्य रजतज्ञानमनुपपन्नमिति वाच्यम्, रजतजात्यवभासनेन तद्विज्ञानोपपत्तेः । अतः पुरोवर्तिद्रव्यावभासात् तदाकारतया रजतजात्यवभासाच्च सम्यक्संवित्ताविव मिथ्याज्ञानस्यापि पुरोवर्तिद्रव्यविषयता रजतज्ञानता च । किंचातद्विषयत्वकल्पना सर्वलोकप्रतीतिविरुद्धा । शुक्तिकामेव रजतत्वेनावगच्छति व्यवहरति जनः । अतः ख्यात्यन्तराभ्युपगमेऽप्यन्यथाख्यातिरेवापततीति । अतोऽन्यथाख्यातिरेव भ्रान्तिरिति युक्तिः । किंचानिर्वचनीयस्यापूर्वस्य रजतादेर्जन्मकारणं किम् ? भ्रान्तिबुद्धिर्वा ? इन्द्रियादिगतदोषो वा ? इन्द्रियाणि वा ? दुष्टेन्द्रियाणि वा ? अनाद्यविद्या वा ? इति विवेचनीयम् । न तावदाद्यः, बुद्धेर्विषयकारणत्वानुपपत्तेः । विषयपूर्विका हि बुद्धिः । नापि द्वितीयः, कार्यकारणयोर्वैय्यधिकरण्यात् । न हि व्यधिकरणयोः कार्यकारणभावः । नापि तृतीयः, इन्द्रियाणां ज्ञानैकहेतुत्वात् । नापि चतुर्थः, दोषविशिष्टेन्द्रियाणामपि स्वकार्यमात्र एव विशेषकरत्वात् कार्यान्तरहेतुत्वाभावात् । नापि पञ्चमः, भावरूपाज्ञानस्य दुर्निरूपत्वस्योक्तत्वात् । किंचानिर्वचनीयापूर्वरजतजन्मास्तु ; तस्य रजतबुद्ध्यादिगोचरत्वनिबन्धनं लौकिकरजतात् भिन्नं वाच्यम् । न च तत्सादृश्यमेव तद्बुद्ध्यादिनिबन्धनमिति वाच्यम्,

'सदृशम्' इत्येव बुद्ध्यादिप्रसक्तेः। न च रजतादिजातियोगस्य तन्निबन्धनत्वमिति वाच्यम्, विकल्पासहत्वात्। किं सा जातिः परमार्थभूता ? अपरमार्थभूता वा ? न तावदाद्यः, सत्यायाः मिथ्यापदार्थान्वयायोगात्। नापि द्वितीयः, अपारमार्थ्ये च तस्या सत्यरजतानन्वयात्। परमार्थरजतबुद्धिशब्दयोरनिर्वाहकता च स्यात्। अतो नानिर्वचनीयख्यातेर्युक्तियुक्तत्वम्। अन्यथाख्यात्यवलम्बनेन ख्यात्यन्तरनिरासः कृतः। वस्तुतस्तु यथार्थैव ख्यातिः, तस्या एव समीचीनत्वात्। अन्यथाख्यातेरपि दुष्टत्वेन न राद्धान्तत्वम्। ननु भाष्ये "अथवा" इति यथार्थख्यात्यभिधानोपक्रमादन्यथाख्यातेर्यथार्थख्यातेश्च विकल्पो भाष्यकाराभिप्रेत इति प्रतीयत इति चेत्—न; वस्तुनो विरुद्धाकारद्वयानुपपत्तेः। अनुष्ठानपर्यन्ता हि विकल्पनिर्वाहोपपत्तिः। अष्टदोषदुष्टश्च विकल्पः। उभयथा ख्यात्यभ्युपगमो हि विनानुष्ठानवैषम्यम्। "सर्वत्र प्रसिद्धोपदेशात्" इति सूत्रस्य तु द्वितीये वर्णके "अथवा" इत्युपक्रमेऽप्यनुष्ठानवैषम्यात् विकल्पेनार्थस्वीकार उपपन्नः। न चाख्यातिपक्षेऽपि अन्यथाख्यात्यापत्त्यभिधानात् अन्यथाख्यातेरदूषितत्वाच्च नान्यथाख्यात्यनभ्युपगम इति वाच्यम्, अन्यथाख्यातेः पक्षत्वापत्तेः। ततश्च "अथवा" इत्यादिना यथार्थख्यातिप्रसाधनवैयर्थ्यम्। अख्यातावन्यथाख्यात्यापत्त्यभिधानस्य प्राभाकराद्यभिमतख्यातिप्रकारनिरासपरत्वेनाप्युपपत्तिः। तन्मते तु रजतज्ञानस्य पूर्वानुभूतरजतमेव विषयः। अस्मत्पक्षे तु न तथा। अन्यथाख्यातिश्च दूषिता, यथार्थख्यातिप्रसाधनानन्तरं "ख्यात्यन्तराणां दूषणानि" इत्यादिग्रन्थे पूर्वमीमांसादिषु तन्निरासप्रकारातिदेशस्य सूचितत्वात्। अदूषितत्वेनोभयोः स्वीकारे तु परस्परव्याहतिरेव स्यात्। भाष्ये अन्यत्रापि ज्ञानयाथार्थ्याभ्युपगमप्रतीतेश्च यथार्थख्यातिरेवाभिप्रेता। अतः 'अथवा' इत्युपक्रमोऽन्यथाख्यातिपक्षस्य दुष्टत्वेनारुच्येति निरवद्यम्। अतः "अथवा" इति भाष्यस्य "याथार्थ्ये वा स्वपक्षः"इति केषांचिद्व्याख्यानमनुपपन्नम्। तथाऽन्येषामान्यथाख्यातेः पक्षत्वेनोपपादनं च।

अथ विज्ञानयाथार्थ्यं कथमिति चेत्, उच्यते—अण्डान्तर्वर्तिसर्वपदार्थानां पृथिव्यादिसर्वभूतात्मकत्वेन सर्वात्मकत्वात्, तस्य च यथार्थत्वात् सर्वत्र सर्वप्रतीतेरविरोधादिति। सर्वात्मकता च "तासां त्रिवृतम्" इत्यादि त्रिवृत्करणश्रुतेः। तच्छ्रुतिश्च पञ्चीकरणोपलक्षणपरा। "पञ्चभूतात्मकैर्भेदैः, पञ्चभूतात्मकम्" इत्यादौ सर्वस्य पञ्चभूतात्मकत्वप्रतीतेः। प्रत्यक्षादपि पञ्चीकरणोपलब्धिः "यदग्ने रोहितं रूपम्" इत्यादिश्रुत्या

व्यज्यते । "नानावीर्याः" इत्यादिस्मृत्या चाण्डादेश्चतुर्विंशतितत्त्वात्मकता प्रतीयते । ननु तत्स्मृतौ सर्वस्येन्द्रियात्मकताप्युक्तेति प्रतीयत इति चेत्—न; देवादिदेहसृष्टौ इन्द्रियान्वयात्तत्परत्वात् । अत्र तूपयोगः सृष्टौ भूतान्तरसंसर्गकथनस्यैव । "त्र्यात्मकत्वात्" इत्यादिसूत्रकाराभिप्रायोऽप्ययमेव । अथ सर्वस्य सर्वात्मकत्वे कथं पृथिव्यादिव्यपदेश इति चेत्, तत्तदंशस्य भूयस्त्वात् तद्व्यपदेश इति ब्रूमः । नन्वेवमस्तु पृथिव्यादावबाधितभ्रमस्य निर्वाहः; तद्विकारशुक्त्यादिषु रजतादिभ्रमे कथं ज्ञानयाथार्थ्यमिति चेत्, विकारेष्वप्यन्योन्यावयवसद्भावादिति ब्रूमः । तत्सद्भावश्च चोदितद्रव्यापचारे प्रतिनिध्युपादानशास्त्रात् । प्रतिनिधिद्रव्योपादानं च पूर्वोपात्तद्रव्यावयवसद्भावात् । तच्चोक्तं षष्ठे—"सामान्यात्तच्चिकीर्षा हि" इति । ज्योतिष्टोमादिषु श्रुतद्रव्यापचारे किमसदृशमप्युपादेयम्? उत सदृशमेव? इति संशयः । तत्र पूर्वः पक्षः—श्रुतद्रव्यापचारे सति क्रियार्थं यत्किञ्चित् द्रव्यमाक्षेप्यम्, सदृशासदृशयोर्विशेषाभावात् । ननु जात्यन्तरस्य व्यक्तिपर्यन्तत्वात् व्यक्तेश्चावयवपर्यन्तत्वात् श्रुतद्रव्यापचारे तत्सदृशे तदवयवसद्भावात् सदृशस्यैवोपादानमिति चेत्—न; तत्र व्रीह्यादि जातीयावयवाभावात् । तस्मादसदृशस्याप्युपादानमिति । राद्धान्तस्तु—सदृशस्यैवोपादानम्, तत्र शास्त्रार्थीभूतावयवानां सद्भावात् शास्त्रानुष्ठानलाभात् । सादृश्यं च द्रव्यावयवैकदेशभाक्त्वात् । अतः सदृशमेवोपादेयमिति । अतः शुक्त्यादौ रजतावयवसद्भावात् रजतज्ञानस्य रजतविषयत्वेन यथार्थत्वमेव । न च शुक्त्यादावपि रजतादिसद्भावे न व्यपदेशभेदव्यवस्थेति वाच्यम्, अवयवभूयस्तया व्यवस्थेत्युक्तत्वात् । यत्र यद्धेत्ववयवबाहुल्यं तत्र तद्व्यवहार इत्यर्थः । शुक्त्यादिश्च भास्वरत्वादिना रजतादिसदृशत्वेनैव हि प्रतीयते । अतस्तत्प्रतीत्यैव तत्सद्भावः । अथ शुक्त्याद्यवयवबाहुल्येऽपि कथं रजतार्थिनस्तत्र प्रवृत्तिः? रजतावयवसद्भावेऽपि तेषां शुक्त्यवयवापकृष्टत्वेनाकार्यकरत्वाच्चेति चेत्—न; दोषवशात् गृहीतशुक्त्यंशस्य रजतादिग्रहणात् रजतार्थिप्रवृत्त्युपपत्तेः । यथा ख्यात्यन्तरे दोषवशात् शुक्तिजात्यग्रहे व्यक्तिग्रहे च रजतार्थिप्रवृत्तिः । अतः सम्यग्रजतग्रह इव प्रवृत्त्युपपत्तिः । कथं तर्हि 'नेदं रजतम्' इति बाधबुद्ध्या निवृत्त्युपपत्तिः? रजतांशानिवृत्तेरिति चेत्—न; दोषापगमात् भूयोऽवयवशुक्त्यंशग्रहणेऽल्पावयवरजतांशस्याकार्यकरत्वात् बाधबुद्धिनिवृत्त्योरुपपत्तेः । अतो न मिथ्यात्वनिबन्धने बाधबुद्धिनिवृत्ती । स्वापज्ञानस्य याथार्थ्यं भाष्ये स्पष्टम् । "सन्ध्ये सृष्टिराह हि" इत्यत्र साधितं च । ननु

श्वेतेऽपि शङ्खे ' पीतः शङ्खः' इति भ्रमदर्शनात् शङ्खे पीतद्रव्यावयवाभावादपीते पीतज्ञानोदयादन्यथाख्यातिरभ्युपगमनीयेति चेत्—न ; नयनवृत्तिपित्तद्रव्यस्य नायनरश्मिद्वारा शङ्खे संयुक्तत्वात् तस्य पीतत्वात् तेन श्वैतिम्नोऽभिभूतत्वात् तदग्रहणात् पीतद्रव्यस्य ग्रहणाच्च 'पीतः शङ्खः' इति प्रतीतेर्यथार्थत्वात् । न च पीतत्वस्य पित्तद्रव्यगतत्वात् तस्य शङ्खविशेषणत्वेन ग्रहणादन्यथाख्यात्यापात इति वाच्यम् , पित्तस्य स्वर्णादिवत् शङ्खानुलिप्तत्वेन शङ्खविशेषणत्वस्य यथार्थत्वात् । न च स्वर्णादिवत् पित्तस्य पार्श्वस्थैरप्युपलब्धिप्रसङ्ग इति वाच्यम् , तस्यातिसूक्ष्मत्वात् । न चातिसूक्ष्मत्वे तेनापि न ग्रहणमिति वाच्यम् , पित्तोपहतस्य स्वनयननिष्क्रान्तत्वेनातिसामीप्यात् ग्रहणयोग्यत्वात् । न च पित्तस्यात्यल्पत्वे मध्ये विशरणप्रसक्तेर्दूरस्थस्य पीततया ग्रहणं न स्यादिति वाच्यम् , चक्षुरिन्द्रियस्य पित्तसंयोगजसंस्काराभिभूतत्वात् रूपान्तरग्रहणाशक्तेरतिप्रभूतपित्तसंयुक्तत्वाच्च दूरस्थस्यापि ग्रहणोपपत्तेः । न ह्यल्पत्वं पित्तस्य, "पीतः शङ्खः" इति विज्ञाने करणम् । न च पित्तस्य नयनोपरि वृत्तित्वेन नायनतेजोनिरोध इति वाच्यम् , पित्तस्यातिस्वच्छद्रव्यत्वेनानिरोधकत्वात् । तदुक्तम्—

> "इन्द्रियोपरिभागेऽपि तिष्ठता स्वच्छभावतः ।
> पित्तेन नायनं तेजः काचेनेव न रुध्यते ॥"

इति । न च जपाकुसुमसमीपवर्तिस्फटिकमणौ रक्तस्फटिकमणिप्रतीतिरन्यथाख्यातिः; स्फटिकमणौ रक्तत्वाभावादिति वाच्यम् , स्फटिकप्रभाया जपाकुसुमप्रभाभिभूतत्वात्; स्फटिकसंयुक्तजपाप्रभाया एव ग्रहणात् । तत्प्रतीतेरपि यथार्थत्वात् । न च तत्कुसुमसमीपवर्तिघटादेरपि रक्ततया ग्रहणं स्यादिति वाच्यम् , स्वच्छद्रव्याणामेव तादृशस्वभावत्वात्; तस्यान्यथाख्यातिपक्षेऽपि समत्वाच्च । एतच्च मरीचिकाजलज्ञानयाथार्थ्यपरभाष्ये स्पष्टम् । ननु ज्ञानस्य क्षणिकत्वात् क्षणभेदेनानेकदेशसंयुक्तालातमात्रग्रहणादन्तरालाग्रहणाच्च अन्यथाख्यातिरिति चेत्—न ; तद्गतेरेव ग्रहणात् , इन्द्रियसंयोगशैघ्र्याच्च पूर्वग्रहणजनितसंस्कारसचिवेन्द्रियस्यानालोचितकालभेदत्वेन तद्द्रव्यविषयत्वे चक्रबुद्ध्युत्पत्त्युपपत्तेस्तस्या यथार्थत्वात् । साक्षाच्चक्रप्रतीतावग्रहणपूर्वकतत्तद्देशसंयुक्तवस्तुग्रहणमेव । इयानेव भेदः—साक्षाच्चक्रे अन्तरालाभावात् तदग्रहणम् ; अलातचक्रे शैघ्र्यादन्तरालाग्रहणमिति । दर्पणादौ मुखादिप्रतीतेर्यथार्थता भाष्ये स्पष्टा । ननु दिङ्मोहे दिगन्तरस्य दिगन्तरतयाऽवभासादन्यथाख्यात्यभ्युपगम इति

चेत्—न; पृथिव्यादिदेशानामेव दिग्व्यवहारास्पदत्वात् पृथिव्यादेः सर्वात्मकत्वेन दिगन्तरस्य विद्यमानत्वात् तत्प्रतीतेरपि यथार्थत्वात्। देशस्यैवोपाधितो दिग्व्यवहारास्पदत्वमित्युक्तम्। ननु चन्द्रैकत्वेऽपि तिमिरादिदोषात् "द्वौ चन्द्रौ" इति प्रतीतेरन्यथाख्यातित्वमिति चेत्, तिमिरादिदोषभिन्नत्वेन नायनतेजस एव द्विचन्द्रग्रहणहेतुत्वेन तत्प्रतीतेरपि यथार्थत्वात्। तथा हि—तिमिरादिना नायनरश्मिद्वित्वे एकया सामग्र्या स्वदेशविशिष्टचन्द्रग्रहणं, द्वितीयया तु वक्रगत्या चन्द्रसमीपदेशग्रहणपूर्वकं स्वदेशवियुक्ततया चन्द्रग्रहः। अथ तथापि कथं द्वित्वविशिष्टचन्द्रस्य ग्रह इति चेत्, सामग्रीद्वयेन युगपद्विलक्षणाकारैकवस्तुग्रहणात् द्वित्वस्योत्पत्तेरेकत्वाग्रहादाकारभेदात् तद्द्वित्वग्रह इति ब्रूमः। एकत्वाग्रहस्य तत्सामग्रीद्वयस्य यौगपद्यात्। अथ देशान्तरस्य चन्द्रेणासंबद्धस्य चन्द्रविशेषणत्वं कथमिति चेत्, देशान्तरचन्द्रयोर्निरन्तरग्रहणादिति ब्रूमः। अथ तथापि तज्ज्ञानस्यापारमार्थ्यमिति चेत्, सामग्रीद्वित्वस्य पारमार्थ्यात् देशद्वयविशिष्टचन्द्रग्रहणपारमार्थ्ये तद्ग्रहणद्वित्वपारमार्थ्ये च चन्द्रस्य ग्राह्याकारद्वित्वपारमार्थ्यात्। अथ ग्राह्यैक्याननुसंधानं कथमिति चेत्, प्रत्यभिज्ञायामिवैक्यानुसंधानसामग्र्यभावादिति ब्रूमः। प्रत्यभिज्ञायां तु संस्कारसचिवेन्द्रियस्य हि कारणत्वम्। अत्र तु केवलचक्षुष एव व्यापारः, तस्य न तदैक्यानुसंधाने सामर्थ्यमिति चाक्षुषज्ञानद्वयं तथैवावस्थितम्। ननु चाक्षुषतेजसस्तिमिरादिदोषवशात् भेदेऽपि चक्षुषोरिवैकसामग्रीत्वात् कथं भेदेन सामग्रीत्वमिति चेत्—न; सामग्र्याः कार्यकल्प्यत्वात्, तिमिरादेर्दोषत्वेन नैसर्गिकत्वात्। अत एव हि तदपाये उत्पन्नदोषस्य च तदैक्यप्रत्ययः। एतेन कार्यविघातकत्वमेव दोषस्य न कार्यकरत्वमिति येषामाग्रहः ते निरस्ताः। अर्थात् दोषस्य वाऽन्यस्य वा कारणत्वस्य कार्यकल्प्यत्वात्। दोषस्य कार्यकरत्वाभावे प्रमाणाभावाच्च। न च दोषकृतत्वे त्वन्यथाख्यात्यापात इति वाच्यम्, दोषस्य यथार्थत्वादित्युक्तत्वात्। दोषत्वेऽन्यथाख्यात्यापातदोषस्य, कार्यविघातकत्वपक्षेऽपि समत्वात्। सन्देहज्ञानमपि यथार्थमेव, 'स्थाणुर्वा पुरुषो वा' इत्यादौ शुक्तिकारजतादाविव स्थाणुत्वादौ पुरुषावयवादेर्विद्यमानत्वेन यथार्थत्वात्। एवमेव सर्वत्र ज्ञानस्य याथार्थ्यमूहनीयम्। अतः सर्वत्र ख्यातिर्यथार्थैव। क्वचिद्यदि प्रतीतेरर्थव्यभिचारेणायथार्थता स्यात्, सर्वत्रापि सन्देहादविश्वासः स्यात्। ज्ञानमात्रस्यार्थाव्यभिचारे हि ज्ञानार्थस्य सत्यत्वम्। तदुक्तम्—

"ज्ञानस्य व्यभिचारित्वे विश्वासः किंनिबन्धनः ।
ज्ञानस्याव्यभिचारे हि ज्ञातं यत् सत्यमेव तत् ॥"

इति । किंचायन्थाख्यातिपक्षे ज्ञानस्य साकारत्वप्रसङ्गः, ज्ञानविषयशुक्तिकादौ रजताद्यवयवाभावात् वस्तुतो ज्ञानस्यैव रजताद्याकारापातात् । ततोऽन्यथाख्यातिपक्षस्यायुक्तियुक्तत्वमिति यथार्थैव सर्वा ख्यातिरिति सिद्धम् । यत्तु भेदाग्रहात् प्रवृत्तौ भेदस्य गृहीतत्वेन भेदाग्रहान्न प्रवृत्त्युपपत्तिरित्युक्तम्; तन्नास्मत्पक्षे, जात्यादेरेव भेदत्वेन स्वरूपग्रहणेऽप्यसाधारणजात्यग्रहोपपत्तेः । प्राभाकरैः पूर्वकाण्डे सर्वख्यातेर्यथार्थत्वस्य प्रसाधितत्वेऽपि पुनरत्र प्रसाधनं प्रकारभेदस्य विद्यमानत्वात् । तद्भेदश्च भाष्ये तद्ग्रन्थेषु च स्पष्टः । किंच श्रुतिसिद्धपञ्चीकरणादेः स्वापपदार्थानां परमात्मसृज्यत्वानुभूतिविषयत्वादेश्च प्राभाकरैरनङ्गीकृतत्वेन तत्पक्षस्य श्रुतिविरुद्धत्वात् युक्तिविरुद्धत्वाच्च । यत्तु भाष्ये पूर्वं भ्रान्तिज्ञानेषु ज्ञानमात्रस्यैव सत्त्वं विषयाणां मिथ्यात्वं च साधितम्, तत्तु पक्षान्तरावलम्बनेन । न च "अनृतेन हि प्रत्यूढाः" इत्यादिश्रुत्याऽनिर्वचनीयाविद्यासिद्धिरिति वाच्यम्, अनृतशब्दस्य ऋतेतरपापकर्मपरत्वात् । मायाशब्दस्य प्रधानपरत्वाच्च । तस्य मायाशब्दवाच्यत्वं च विचित्रसृष्टिहेतुत्वात् । तच्च "अस्मान्मायी सृजते" इत्यादेः । तन्मायापरवशत्वं जीवस्यैव, "अनादि मायया" इत्यादिश्रुतेः । अन्यत् सर्वं भाष्ये स्पष्टम् । यत्र च क्वाप्युपन्याससौकर्याय भाष्यकारवाक्ये व्यत्यासेन प्रमेयोपन्यासः, तत्रापि भाष्यमर्थतो व्याख्यातमेव । अव्याख्यातांशस्तु स्पष्टत्वधिया । किंचायं मिथ्यावादिपक्षः सूत्रकाराननुमतत्वाद्बौद्धसमत्वेन वेदविरुद्धत्वाच्च वेदानुसारिभिरुपेक्षणीय एव । सूत्रकाराननुमतत्वं च "वैधर्म्याच्च न स्वप्नादिवत्" इत्यादौ बौद्धनिराकरणे जगतः सत्यत्वस्य साधितत्वात् । मिथ्यावादिभिरपि जगतो बौद्धवत् स्वापतुल्यत्वमेवोच्यते । अतः शून्यवादिसाम्यमेव तत्पक्षस्य । जगतो व्यावहारिकसत्यत्वस्योभयोः समत्वाच्चाभिधानसाम्याच्च । तथा हि—

"सत्यं तु द्विविधं प्रोक्तं सांवृतं पारमार्थिकम् ।
सांवृतं व्यवहार्यं स्यान्निवृत्तौ पारमार्थिकम् ॥
विचार्यमाणेनाऽसत्त्वं सत्त्वं चापि प्रकाशते ।
यस्य तत् सांवृतं ज्ञेयं व्यवहारपदं च यत् ॥"

इत्यादिना मायावादिभिर्जगतो मिथ्यात्वमखण्डब्रह्मणः पारमार्थ्यं च साध्यते । शून्यवादिभि-

रपि—ब्रह्मस्थाने शून्यमेव प्रक्षिप्य साध्यते । तथा हि—

“निर्विशेषं स्वयं भातं नित्यमेवाजरामरम् ।
शून्यतत्त्वमपि ज्ञेयं मनोवाचामगोचरम् ॥
जाड्यसंवृतिदुःखान्तपूर्वदोषविरोधि यत् ।
भावार्थप्रतियोगित्वं भावत्वं वा न तत्त्वतः ॥
विश्वाकारस्य संवृत्त्या यस्य तत्तत्त्वमक्षयम् ।”

इति । तथा—

“नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा ।
हेयोपादेयरहितं तच्छून्यं पदमव्ययम् ॥
यदर्थं पदलक्ष्यं तु सर्वैरपि विशेषणैः ।
सर्वैर्विशेषणैर्मुक्तं तच्छून्यं पदमक्षयम् ॥”

इत्यादिभिस्तथैव प्रतिपाद्यते । एतेन न किंचिद्विशेषो बौद्धमिथ्यावादिपक्षयोः । तथा तर्कपादेऽस्माभिस्तत्साम्यं बहुशः प्रतिपादितम् । अतो बन्धस्य मिथ्यात्वाभावात् तस्य वाक्यार्थज्ञानमात्रबाध्यत्वाभावात् पूर्वोक्तप्रक्रिययोपासनात्मकज्ञानबाध्यत्वे च तज्ज्ञानस्य कर्मज्ञानापेक्षत्वात् पूर्वोत्तरकाण्डयोर्हेतुहेतुमद्भावादिसिद्धिरिति ।

श्रीभाष्यम्

ननु च शाब्देऽपि व्यवहारे शरीरशब्देन शरीरमात्रं गृह्यत इति नात्मपर्यन्तता शरीरशब्दस्य । नैवम् ; आत्मप्रकारभूतस्यैव शरीरस्य पदार्थविवेकप्रदर्शनाय निरूपणान्निष्कर्षकशब्दोऽयम् ; यथा-गोत्वं शुक्लत्वमाकृतिर्गुण इत्यादिशब्दाः । अतो गवादिशब्दवत् देवमनुष्यादिशब्दा आत्मपर्यन्ताः । एवं देवमनुष्यादिपिण्डविशिष्टानां जीवानां परमात्मशरीरतया तत्प्रकारत्वात् जीवात्मवाचिनः शब्दाः परमात्मपर्यन्ताः । अतः परस्य ब्रह्मणः प्रकारतयैव चिदचिद्वस्तुनः पदार्थत्वमिति तत्सामानाधिकरण्येन प्रयोगः । अयमर्थो वेदार्थसंग्रहे समर्थितः । इदमेव शरीरात्मभावलक्षणं तादात्म्यम् “आत्मेति तूपगच्छन्ति

ग्राहयन्ति च" इति वक्ष्यति । "आत्मेत्येव तु गृह्णीयात्" इति च वाक्यकारः ।

श्रुतप्रकाशिका

शब्दोऽपि न शरीरिपर्यन्ताभिधायीति चोदयति—**ननु चेति**। परिहरति—**नैवमिति**। इमौ चोद्यपरिहारावाकृत्यधिकरणेऽपि समानावित्यभिप्रायेणाह—**यथा गोत्वमिति**। निष्कर्षकशब्दानां विशेष्यपर्यन्ताभिधायित्वाभावे चेतनाचेतनवाचिनः शब्दा न ब्रह्मपर्यन्ताभिधायिनो भवन्ति ; "यस्यात्मा शरीरम्" "यस्य पृथिवी शरीरम्" इत्यादिष्वात्मादिशब्दानां निष्कर्षकशब्दत्वावगमादिति चेत्; उच्यते—निष्कर्षकशब्दो द्विविधः—वैवक्षिकनिष्कर्षको नियतनिष्कर्षकश्चेति । तत्र शरीरादिशब्दा नियतनिष्कर्षकाः ; आत्मादिशब्दा वैवक्षिकनिष्कर्षकाः, गोत्वादिशब्दवत् शुक्लादिशब्दवच्च । प्रयोगस्य व्यवस्थापकत्वान्निष्कर्षकानिष्कर्षकविभागोऽपि हि प्रयोगाधीनः । तद्वद्द्वयमपि विभागस्तन्मूलः । ननु शुक्लादिशब्दा नियतनिष्कर्षका एव ; गुणिपर्यन्तता तु "गुणवचनेभ्यो मतुपो लुग्वक्तव्यः" इति स्मरणात् ; मैवम्—जातिवाचिशब्दवदपृथक्सिद्धविशेषणवाचित्वाविशेषात् शुक्लादिशब्दानाम् । प्रत्ययस्तु द्विशब्दस्थद्विवचनवत्प्रकृत्यनतिरिक्तार्थस्त्रिलिङ्गतया शब्दसाधुत्वाय स्वरविशेषाय च भवति । तत एव हि "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" इति नैघण्टुकाः । यतः स्वतो गुणिपर्यन्तानामेव गुणवाचिपदानां लिङ्गस्वरार्थं मतुपो लुक्स्मरणं, न तु गुण्यभिधानशक्तिविरहिणां गुण्यभिधानार्थम्, अत एव हि रागपदस्य रक्तपदतुल्यतया प्रयोगाभावः । अतः शुक्लादिशब्दाः वैवक्षिकनिष्कर्षकाः । नियतनिष्कर्षकाणामपि तथात्वं प्रतियोगिविशेषसापेक्षं न तु सार्वत्रिकम्, "रसोऽहमप्सु कौन्तेय प्रभास्मि शशिसूर्ययोः" "पुण्यो गन्धः पृथिव्यां च" इति गन्धादिशब्दानामपि परमात्मपर्यन्ततया प्रयोगात् । अतः पृथिव्याद्यपेक्षयैव गन्धादिशब्दानां नियतनिष्कर्षकत्वम् । शरीरवाचिशब्दानां शरीरिपर्यन्ततां निगमयति—**अतो गवादीति ; आत्मपर्यन्ताः ;** आत्मपर्यन्तशक्तयः । शरीरवाचिशब्दैरात्मबोधनं शक्तिनिबन्धनतया मुख्यमित्यर्थः । ननु—यद्यपि शरीरवाचिशब्दा आकृतिनयगोचराः, तथापि तैः शरीरिबोधनं लाक्षणिकम्, गवादिशब्दैरपि व्यक्तिबोधनस्य लाक्षणिकत्वात् । संबन्धानुपपत्तिभ्यां हि लक्षणा । जातिमात्रस्यानयनाद्यनर्हत्वात् व्यक्तिसंबन्धाच्च गवादिशब्दैर्व्यक्तिलक्षणया बोध्यते, प्रयोगेऽन्य-

थासिद्धे शक्तिकल्पनानुपपत्तेः । नैवम्—अयुतसिद्धविशेषणवाचिशब्दत्वस्य विशेष्य-लक्षणाप्रतिबन्धकत्वात् । अन्यथा जात्यादिशब्दानामपि संबन्धानुपपत्त्यविशेषेण क्वचित् व्यक्तिपर्यन्तप्रयोगप्रसङ्गः । आकृतिरेव शब्दशक्तिविषयः । व्यक्तिबोधस्त्वर्थसामर्थ्यात् । प्रत्यभिज्ञायां संस्कारसचिवेन्द्रियवदर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टबोधसामग्रीत्यपि न युक्तम्, जात्यादिशब्दश्रवणेऽपि विशिष्टबोधप्रसङ्गादेव । न हि सत्यां सामग्र्यां कार्यानुदय उपपद्यते । ननु—गवादिशब्दा जातेर्व्यक्तिपरतन्त्रतारूपमभिदधति; अतस्तैर्व्यक्तिपर्यन्त-बोधः; जात्यादिशब्दास्तु जातिस्वरूपमात्रम्; अतस्तैर्व्यक्तिपर्यन्तबोधाभावः । नैवम्—जात्यादिशब्दैर्द्रव्यपारतन्त्र्याप्रतिपत्तौ द्रव्यविलक्षणतया जातिप्रतीत्यनुपपत्तेः । ननु—न जातेर्द्रव्यप्रकारतैकस्वभावत्वरूपपारतन्त्र्याबोधनं विवक्षितम्; किंतु विशेषणान्तरान्वयकारक-भावानर्हत्वरूपपारतन्त्र्याबोधनमिति; उच्यते—गवादिशब्दैस्तादृक्त्वबोधनमेकपदेन विशेष्या-भिधाननिबन्धनम् । न हि 'कुण्डली' इत्युक्ते कुण्डलस्य रुचिरत्वादिविशेषणान्वयः 'कुण्ड-लेन भूषितः' इतिवत् कारकभावश्च भवति । एवं च सति पारतन्त्र्याबोधनात् व्यक्त्यबोधनेऽभ्युपगम्यमानेऽन्योन्याश्रयः स्यात्—पारतन्त्र्याबोधनात् विशेष्याबोधनम्; तदबोधनात् पारतन्त्र्याबोधनमिति । किंच गवादिशब्दानां विशेष्यबोधनशक्तिविरहे जात्यादिशब्दानामिव पारतन्त्र्यबोधनासामर्थ्यप्रसङ्गः । धर्मिबोधनासामर्थ्यव्यापकतया जात्यादिशब्देषु दृष्टं पारतन्त्र्यबोधनासामर्थ्यं गवादिशब्देभ्यो निवर्तमानं स्वव्याप्यं धर्मिबोधनासामर्थ्यं कथं न निवर्तयेत् । द्रव्यांशे शक्तिर्माभूत्, जातेर्व्य-क्तिपारतन्त्र्यमपि गवादिशब्दा बोधयेयुरिति न वाच्यम्, द्रव्यांशे शक्तिविरहितैर्जात्यादि-शब्दैरपि द्रव्यपारतन्त्र्यबोधनप्रसङ्गात् । अतः शब्दशक्तिनिबन्धनैव गवादिशब्दैर्द्रव्य-प्रतीतिः । किंच यदि जातिमात्रमेव मुख्यार्थः, तर्ह्यमुख्यभूतद्रव्यपर्यन्तप्रयोगादपि जाति-मात्रे गवादिशब्दानां प्रचुरप्रयोगप्रसङ्गः । मुख्यार्थगुणसंबन्धिविषयप्रयोगादपि मुख्यार्थे प्रचु-रप्रयोगदर्शनात् । गङ्गाग्निसिंहादिशब्दानां कूलमाणवकादिविषयप्रयोगादपि मुख्यार्थे प्रचुरप्रयोगो दृष्टः । न तु 'व्यक्तिनिष्ठा गौः, व्यक्तिनिष्ठो महिषः' इति प्रयोगः । जातिरेव मुख्यार्थश्चेत् गवादिशब्दानां जातिमात्रविषयप्रयोगे त्वतलादिनैरपेक्ष्यं च स्यात् । न हि गङ्गादिशब्दाः प्रवाहादिविषयप्रयोगे भावप्रत्ययान्ताः प्रयुज्यन्ते । प्रचुरप्रयोगाभावो भाव-प्रत्ययापेक्षत्वं च गवादिशब्दानां व्यक्तौ निरूढलक्षणायोगादिति चेत्—न; प्रचुरप्रयोगानु-

निषेध एव भवितुमर्हतीत्यर्थः। निषेधसामान्यं हि विशेषविधाने दृष्टे तद्व्यतिरिक्त-विषयं दृष्टम्; "न हिंस्यात्" इत्यादिषु विशेषविधानं सामान्यनिषेधो बाधते चेत्, वैध-हिंसाया अधर्मत्वप्रसङ्ग इत्यभिप्रायेणाह—**न पुनरिति**। उक्तमर्थमुपक्रमेणैवोपपादयति—**यत्र त्वस्येति**। **योऽन्यत्रात्मन इति**; अन्यत्रेत्यव्ययं विनाशब्दपर्यायम्। ब्रह्मणः पृथग्भूतं तदविनाभावरहितं नास्तीत्यर्थः। भेदविशेषनिषेधदर्शनात् सामान्येन भेदनिषेधोऽपि तत्रैव पर्यवस्यति, "छागो वा मन्त्रवर्णात्" इति न्यायादिति भावः।

भावप्रकाशिका

**उभयथापि ज्ञानव्यपदेशयोग्यतामिति**; यद्यपि "सत्यं ज्ञानम्" इत्यत्र ज्ञान-मित्यस्य नैतावानर्थः, तथापि फलितार्थकथनमिति द्रष्टव्यम्। **उभयमप्युपपन्नमित्यर्थ इति**; अत्र 'ज्ञानम्' इत्यस्य "तद्गुणसारत्वात्" इति न्यायेन ज्ञानगुणकत्वात् प्रत्युतानु-गुणत्वमेवेति द्रष्टव्यम्। **ब्रह्मैव स्वसंकल्पादि**त्यादिभाष्ये 'ब्रह्मैव' इति ब्रह्मशब्दस्य निष्कृष्टपरमात्मपरत्वस्वारस्यानुरोधेन स्थिरत्रसरूपतयेत्येतद्व्याचष्टे—**स्थिरत्रसशरीरतयेति**। **अब्रह्मात्मके**त्यत्रापि ब्रह्मशब्दं केवलपरमात्मपरतया व्याचष्टे—**ब्रह्मान्तर्यामिकत्वरहि-तत्वमुक्तमिति**। स्थिरत्रसरूपतयेत्येतत्स्वारस्यानुरोधेन ब्रह्मपदं चिदचिद्विशिष्टवस्तुपर-मित्यभिप्रयन् व्याचष्टे—**यद्वा स्थिरत्रसरूपतयेति**। **ऐक्यश्रुतीनां प्रकारैक्यपर-त्वादिति**; इदं तु सिंहावलोकितकेन प्रथमपक्षशेषभूतमिति द्रष्टव्यम्। भाष्ये—**सर्वं तं परादादिति**; सर्वं कर्तृ तं परादात् पराकुर्यात्। **निःश्वसितम्**; अनायासेनोत्पन्नम्, संकल्पमात्रविजृम्भितमिति यावत्।

श्रुतप्रदीपिका

आर्थगुणनिषेधं परिहरति—**ज्ञानेति**। विशेषविधिप्राबल्यज्ञापनाय सर्वज्ञत्वाद्युक्तिः। उभयार्थपराः श्रुतीर्दर्शयति—**यः सर्वज्ञ इति**। भेदनिषेधश्रुत्यर्थमाह—**सोऽकाम-यतेति**; प्रागुक्तगोबलीवर्दनयोऽभिप्रेतः। **सर्वं तमिति**; **अन्यत्रे**त्यव्ययं; विनार्थकम्; स्वनिष्ठं नास्तीत्यर्थः। सामान्यविशेषन्यायोऽभिप्रेतः।

श्रीभाष्यम्

**एवं चिदचिदीश्वराणां स्वरूपभेदं स्वभावभेदं च वदन्तीनां कार्यकारणभावं कार्यकारणयोरनन्यत्वं च वदन्तीनां सर्वासां श्रुतीनाम-विरोधश्चिदचितोः परमात्मनश्च सर्वदा शरीरात्मभावं शरीरभूतयोः कारण-**

दशायां नामरूपविभागानर्हसूक्ष्मदशापत्तिं कार्यदशायां च तदर्हस्थूल-दशापत्तिं वदन्तीभिः श्रुतिभिरेव ज्ञायत इति ब्रह्माज्ञानवादस्यौपाधिक-ब्रह्मभेदवादस्यान्यस्याप्यपन्यायमूलस्य सकलश्रुतिविरुद्धस्य न कथंचिद-प्यवकाशो दृश्यते। चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुति-सिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानां श्रुत्यन्तरेण कार्यकारणभावप्रतिपादनं कार्यकारणयोरैक्यप्रतिपादनं च ह्यविरुद्धम्। यथा—आग्नेयादीन् षड्यागानुत्पत्तिवाक्यैः पृथगुत्प-न्नान् समुदायानुवादिवाक्यद्वयेन समुदायद्वयत्वमापन्नान् "दर्शपूर्णमा-साभ्याम्" इत्यधिकारवाक्यं कामिनः कर्तव्यतया विदधाति, तथा चिदचिदीश्वरान् विविक्तस्वरूपस्वभावान् "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वरम्" "आत्मा नारायणः परः" इत्यादिवाक्यैः पृथक् प्रतिपाद्य "यस्य पृथिवी शरीरं, यस्यात्मा शरीरं, यस्याव्यक्तं शरीरं, यस्याक्षरं शरीरम्, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिभिर्वाक्यैश्चिदचितोः सर्वावस्थावस्थि-तयोः परमात्मशरीरतां परमात्मनस्तदात्मतां च प्रतिपाद्य शरीरिभूत-परमात्माभिधायिभिः सद्ब्रह्मात्मादिशब्दैः कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति पृथक् प्रतिपन्नं वस्तुत्रितयं "सदेव सोम्येदमग्र आसीत्" "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादि वाक्यं प्रतिपादयति। चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्दे-नाभिधाने हि नास्ति विरोधः, यथा मनुष्यपिण्डशरीरकस्यात्मविशेषस्य 'अयमात्मा सुखी' इत्यात्मशब्देनाभिधान इत्यलमतिविस्तरेण।

## श्रुतप्रकाशिका

इतरव्याख्यातृभिर्भवद्भिरपि निर्वाहप्रकाराः कृताः; तत्र को विशेष इत्यत्राह—**एवमिति।** अस्मदुक्तनिर्वाहः श्रुतिभिरेवोक्तः श्रुत्यनुगुणश्च; तत्कृतनिर्वाहः श्रुतिविरुद्धः; अश्रुतः, तर्काभासमूलश्चेत्यर्थः। **अपन्यायमूलस्य सकलश्रुतिविरुद्धस्येति** सर्वत्रान्वेति। **अन्यस्येति** स्वाभाविकभेदाभेदं स्वनिष्ठभेदं चाह। इममर्थं वैदिकदृष्टान्तेनोपपादयति—**चिदचिदीश्वराणामिति। आग्नेयेति;** आग्नेयः, अग्नीषोमीयोपांशुयाजौ, ऐन्द्रौ द्वौ, ऐन्द्राग्नश्चेति षट् यागाः। **उत्पत्तिवाक्यमिति;** प्रथमप्रतिपत्तिजनकं वाक्यम्। **पृथगुत्पन्नान्;** पृथक् प्रतिपादितान्। **उत्पत्तिवाक्यैः;** "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्येवमादिभिः। **समुदायानुवादिवाक्यद्वयेन;** "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" इत्येताभ्याम्। "दर्शपूर्णमासाभ्याम्" इति स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्तव्यतया विदधातीत्यर्थः। तथात्रार्थप्रतिपादनं दर्शयति—**तथेति। शरीरिभूतेति; कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति** वचनभङ्ग्या पृथक् प्रतिपन्नं वस्तुत्रयं प्रतिपादयतीत्यर्थः। आग्नेयादिसमुदायेऽन्यतमवाचिशब्दैः समुदायाभिधानं न दृष्टम्; अत्र तु परमात्ममात्रवाचिभिः शब्दैस्समुदायाभिधानं कथमित्यत्राह—**चिदचिद्वस्त्विति।** दृष्टान्तमाह—**यथेति।** तत्रान्योन्यं प्रकारप्रकारिभावाभावादन्यतमवाचिशब्देन न समुदायाभिधानम्; अत्र तु तथाभावादुपपन्नम्। कथम्? उच्यते—अर्थसामर्थ्यात् शब्दसामर्थ्याच्च; चिदचितोरपृथक्सिद्धप्रकारत्वान्निष्कृष्टब्रह्मणः कारणत्वानुपपत्त्या च प्रकारिवाचिशब्देन विशिष्टोपस्थापनसिद्धिः। सद्ब्रह्मशब्दौ विशिष्टस्य सत्त्वबृहत्त्वयोगाद्विशिष्टोपस्थापनसमर्थौ। आत्मशब्दश्च व्याप्तिरूपप्रवृत्तिनिमित्तस्य व्याप्यसापेक्षत्वाद्विशिष्टोपस्थापक इति। यद्वा "अक्षरात् संभवतीह विश्वम्" "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः; तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते" "आत्मन आकाशः संभूतः" इत्यादिषु परमात्मवाचिशब्दैः कारणमुच्यते। तेषां विशेषणभूतचिदचिदभिधाने शक्तिर्नास्ति। लक्षणायां स एव दोषः। अतः सर्वत्र स्वरूपपरिणाम एव स्वरसप्राप्त इत्यत्राह—**चिदचिदिति।** श्रुत्यन्तरबलेन स्वरूपविकारासंभवात् कार्योपयुक्तमनुक्तमपि विशेषणं पृषदाज्यनयादर्थस्वभावेन संनिधापितमनुसन्धेयमिति भावः। तदेव लोकप्रयोगेणापि द्रढयति—**यथेति।** 'अयमात्मा सुखी' इत्यात्मविशेषस्य सुखित्वविधाने शरीर-

रहितस्यात्मनो वैषयिकसुखासंभवात् तादृशसुखोपयुक्तमनुष्यादिपिण्डविशिष्टत्वमर्थतः सिध्यति, तद्वदिति भावः ।

### भावप्रकाशिका

**ऐन्द्राग्नश्चेति षड्यागा इति ;** ऐन्द्रौ द्वौ आग्नेयश्चेति षड्यागा इति पाठः समीचीनः। ऐन्द्राग्नश्चेति पाठे एवमभिप्रायं केचिदूचुः—आग्नेयः पौर्णमास्याममावास्यायां च कर्तव्यः सायंप्रातःकालकर्तव्याग्निहोत्रहोमवदेक एव, कर्मभेदापादकशब्दान्तरादेरनुपलम्भात्। अत एवाष्टमे "एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात्" इत्यत्रैकस्यैवाग्नेयस्य पौर्णमासीसंज्ञकत्वादमावास्यासंज्ञकत्वाच्च पौर्णमासीकाले क्रियमाणोऽप्याग्नेयोऽमावास्यासंज्ञको भवतीति तस्मिन्नेवाग्नेये "पञ्चहोत्रामावास्याममिमृशेत्" इति शास्त्रवशात् पञ्चहोतृमन्त्र-प्रयोगोऽपि पौर्णमास्यां किं न स्यात्? अवैगुण्यात्—इति चेत्, सत्यमाग्नेयस्यावैगुण्यं, तस्योभयसंज्ञकत्वात्; तेन सह तत्कालकर्तव्यानामग्नीषोमीयादीनां हविषाममावास्यासंज्ञाभावेन वैगुण्यं पञ्चहोत्राभिमर्शे स्यात्; अतस्तेषामप्यनुग्रहाय क्रियमाणमभिमर्शनं चतुर्होतृकरणकमेव कर्तव्यमिति निर्णीतम्। न च पञ्चहोत्राग्नेयमभिमृश्य चतुर्होत्राग्नीषोमीयादीनामभिमर्शः किं न स्यादित्याशङ्क्यम्, "आसन्नानि हवींष्यभिमृशति" इत्येकस्यैव विहितत्वात्। तत्र "हविर-न्तरानुग्रहवशेन परं व्यवस्था" इत्यापदेवीयादिग्रन्थपर्यालोचनया एकमेवाग्नेयाख्यं कर्म पौर्ण-मासीत्रिके अमावास्यात्रिके चान्तः पतितं, नाग्नेयकर्मभेदः। यदि भेदः स्यात् प्रकृतौ पौर्णमासीकालकर्तव्याग्नेयाभिमर्शने पञ्चहोतृमन्त्रप्रसक्तेरेवाभावादव्यवस्थाशङ्कातत्परिहारावसंगतौ स्याताम्। ततश्च एकमेव कर्म कालद्वययोगि, यथाग्निहोत्राख्यं कर्म सायंप्रातःकालद्वययो-गीत्येव युक्तम्। अतो सोमयागविहितैन्द्राग्नेनैव षट्त्वसंख्यापूरणं कर्तव्यमिति। 'उत्पत्ति-वाक्यैः; "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति" इत्येव-मादिभिः। उत्पत्तिवाक्यमिति; प्रथमप्रतिपत्तिजनकं वाक्यम्। पृथगुत्पन्नान्; पृथक्-प्रतिपादितान्' इति पाठक्रमस्तु समीचीनः। **स्वर्गसाधनत्वाकारेणैकीकृत्य तत्कर्त-व्यतया विदधातीत्यर्थ इति ;** तत्समुदायद्वयमेकीकृत्य समुच्चित्य स्वर्गसाधनत्वाकारेण कामिकर्तव्यतया विदधाति। यथा व्यापृते षडपि यागाः स्वर्गसाधनं भवन्ति तथा व्या-पर्तव्यमिति साधनत्वेन विदधातीत्यर्थः। यद्वा, एकीकृत्य स्थितं तदिति योजना; समुदायी-भूतं तत्कर्मेत्यर्थः। **कारणावस्थः कार्यावस्थश्च परमात्मैक एवेति ;** अयमत्रान्व-

यक्रमः—"सदेव सोम्येदमग्र आसीत्" "ऐतदात्म्यमिदं सर्वम्" "सर्वं खल्विदं ब्रह्म" इत्यादि वाक्यं कर्तृ पृथक् प्रतिपन्नं वस्तुत्रितयं सद्ब्रह्मादिशब्दयुक्तवचनभङ्ग्या कारणावस्थः कार्यावस्थश्चैक एवेति प्रतिपादयतीति । **परमात्ममात्रवाचिभिः शब्दैरिति;** अक्षरसर्वज्ञादि-शब्दैरित्यर्थः । अर्थसामर्थ्यं दर्शयति—**चिदचितोरिति** । शब्दसामर्थ्यं दर्शयति—**सद्ब्रह्म-शब्दावित्यादिना** । दृष्टान्तदार्ष्टान्तिकवैषम्यहेतुप्रतिपादनं मन्दफलम्; आत्मशब्दस्य व्यापकवाचिनः शब्दसामर्थ्यात् व्याप्योपस्थापकत्वं च नास्तीत्यपरितोषात् स्वरूपपरिणाम-शङ्कानिवृत्त्यर्थतया "चिदचिद्वस्तुशरीरिणः" इति भाष्यमवतारयति—**यद्वा अक्षरात् संभव-तीह विश्वमिति । पृषदाज्यनयादिति;** यथा पृषदाज्यसंस्कारतया चोदितमपि पात्रान्तरमु-पादीयते तद्वदित्यर्थः । दर्शपूर्णमासयोः "अष्टावुपभृति गृह्णाति" इति प्रयाजानूयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतम्; तथैव पशौ प्राप्तम् । तत्रानूयाजानां द्रव्यविकारः श्रूयते "पृषदाज्येनानूयाजान् यजति" इति । पृषदाज्यं दधिमिश्रितमाज्यमेव । तत्र द्वयोर-संकरेऽवश्यंभाविनि चिन्ता—किं कालभेदेन तस्यामेवोपभृति द्वयं ग्रहीतव्यम्? उत एकस्मिन्नेव काले पात्रभेदेनेति । तत्र तु "अष्टावुपभृति गृह्णाति" इति पात्रैकत्वं श्रुतम् । पदार्थक्रमस्तु पदार्थानां गुणः पाठकल्प्यश्च । अत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात् पृषदाज्यं ग्रहीतव्यमिति प्राप्ते उच्यते—

"उभयोर्ग्रहणाङ्गत्वात् पात्रैक्यस्य क्रमस्य च ।
विकृतौ चानुमानेन प्राप्तौ तुल्यं बलाबलम् ॥"

इति । एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानूयाजाज्यग्रहणस्याकरणे न किंचि-त्कारणमस्तीति तदैव पात्रान्तरमुपादाय ग्राह्यमिति "विकारे त्वनूयाजानां पात्रभेदोऽर्थभेदात् स्यात्" इत्यत्र चिन्तितम् । केचित्तु—पृषदाज्यशब्दार्थस्य दधिमिश्राज्यस्याज्यशब्देनै-वाभिधानसंभवात् "देवानाज्यपानावह" इत्यादिनिगदेष्वाज्यपानित्येवमविकृत एव प्रयोगः, न तु पृषदाज्यपानित्यूहेन प्रयोग इति दशमे निर्णीतम् । तद्वदिहापि विशेष्यमात्रवाचिनोऽपि शब्दस्य चिदचिद्विशिष्टे प्रयोग उपपद्यत इति वदन्ति ।

## श्रुतप्रदीपिका

परोक्तनिर्वाहादुक्तनिर्वाहस्य को विशेष इत्यत्राह—**एवमिति** । अस्मदुक्तनिर्वाहः श्रुतानुगुणः, श्रौतश्च; परोक्तस्त्वश्रुतः श्रुतविरुद्धः कुतर्कमूलश्चेत्यर्थः । **अन्यस्येति;**

भेदाभेदस्वनिष्ठभेदोक्तिः । **अपन्यायमूलस्येति** साधारणम् । उक्तार्थं वैदिकदृष्टान्तेनोपपादयति—**चिदचिदिति ।** आग्नेयादियागेष्वन्यतमवाचिशब्देन समुदायाभिधानं न दृष्टम् ; तदत्र कथमित्यत्राह—**चिदचिद्वस्त्विति ।** तन्निदर्शयति—**यथेति ।** तत्र न मिथः प्रकारप्रकारिभावः । अत्र तु तथाभावाद्युक्तम् । तच्च निष्कृष्टस्य कारणत्वानुपपत्तिरूपार्थसामर्थ्यात् । शब्दसामर्थ्यं चास्ति; विशिष्टस्य सत्त्वबृहत्त्वयोगात् आत्मशब्दस्य व्याप्यसापेक्षत्वात् सद्ब्रह्मात्मशब्दा हि विशिष्टोपस्थापनक्षमाः ।

### न्यायसुदर्शनम्

**चिदचिदीश्वराणां पृथक्स्वभावतया तत्तच्छ्रुतिसिद्धानां शरीरात्मभावेन प्रकारप्रकारितया श्रुतिभिरेव प्रतिपन्नानाम्** इत्यादिभाष्यस्यायमभिप्रायः—ऐक्यश्रुतिभिर्भेदनिषेधश्रुतिभिश्च भेदश्रुतीनां मिथ्याभेदविषयत्वावगमात् सिद्धभेदानुसारिशरीरात्मभावपरश्रुतीनामपि काल्पनिकभेदविषयत्वेन तासामैक्यादिश्रुतिविषयव्यवस्थापकत्वशक्त्यभावाच्च न शरीरात्मभावप्रतिपादकश्रुत्यर्थानुसारेणैक्यश्रुतीनां विशिष्टैकवस्तुप्रतिपादनपरत्वम्; भेदनिषेधश्रुतीनां च न पृथक्सिद्धभेदनिषेधपरत्वमाश्रयितुं न्याय्यमिति केषांचिदाग्रहः ; तान् प्रत्याह—**चिदचिदीश्वराणामित्यादि ।** अस्यार्थः—"नेह नाना" इत्यादिश्रुतयः शास्त्रसिद्धभेदं न बाधितुमुत्सहन्ते । किंतु एतदविरोधेनोपपादकशास्त्रान्तराणि सन्ति न वेत्यालोच्य, न सन्ति चेत् बाध्यन्ते; सन्ति चेत् तदुपस्थितप्रकारेण व्यवस्थितविषया भवन्तीति भेदश्रुतयोऽभेदश्रुतयश्च शरीरात्मभावश्रुतिं मध्ये कृत्वैवाविरोधेन प्रवर्तन्ते । तत्र दृष्टान्तः प्रदर्श्यते—**यथा आग्नेयादीनित्यादिना ।** अस्यार्थः—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्येतद्वाक्यं यद्यपि प्रकृतयागानुवादेनाधिकारसंबन्धं विदधाति । 'दर्शपूर्णमासाभ्याम्' इति च विधेयान्तरसद्भावे यजिपरतन्त्रत्वात् न विशेषकर्म, "वसन्ते वैश्वदेवेन यजेत" इत्यत्र वैश्वदेवशब्दवत् । स खलु नामिक्षामात्रवाची यजिपरतन्त्रनामधेयनिष्ठतया । तद्वत् । द्विवचनमपि, "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र राजसूयशब्दगतैकवचनवत् । तत्र ह्यनुमत्याद्यनेकाधिकारविधिः न सहसा अधिकारसंबन्धं विधत्ते । किंतु "य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते" इति समुदायानुवादिवाक्यद्वयेन समुदायमापन्नान् कालयोगिनः षड्यागानेवाधिकारिसंबन्धितया विदधाति । अन्यथा उत्पत्तिमात्रेणाधिकारविधौ विधेः सर्वगामित्वात् द्विवचनानुपपत्तिः ; सर्वेषां प्रधानत्वेन प्रयाजादी-

नामपि विकृतिष्वतिदेशानुपपत्तिश्च स्यात्। तदा तत्र तत्सद्भावावगमकानि "प्रयाजे कृष्णलं जुहोति" इत्यादीनि लिङ्गानि बाध्येरन्निति समुदायद्वयीभूतावस्थायामेवाधिकारविधिरित्याश्रितम्। समुदायानुवादिवाक्यद्वयस्य विधेयान्तराभावान्नामधेयद्वयस्य कालयोगियागविशेषनिष्ठत्वमेव, पश्चात्कृत्स्ननामधेयानुसारित्वात्। "दर्शपूर्णमासाभ्याम्" इति नामधेये द्विवचनं च समुदायिनिष्ठं भवेत्। एवमत्रापि विरुद्धविषयाणि शास्त्राण्यविरोधेनोपपादकशास्त्रान्तरानुसारेण प्रवर्तन्त इति निरवद्यम्। "तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादिभिः शरीरात्मभावहेतुकत्वोपदेशाच्चैक्योपदेशस्य यथोक्तप्रकारतैव। तस्मादियं विषयव्यवस्था न्यायसिद्धा, वचनकृता च। एष एव न्यायः कारणत्वश्रुतीनामविकारित्वश्रुतीनां च। ताश्च शरीरात्मभावश्रुतीर्मध्ये कृत्वैव काश्चिद्विशिष्टविषयाः काश्चित् स्वरूपविषयाः प्रवर्तन्त इति। अत्र श्लोकाः—

कैश्चित्स्वरूपभेदस्तु चिदचित्परमात्मनाम्।
कैश्चिच्छरीरताद्युक्त्या विशिष्टैकार्थतोच्यते ॥ ७९ ॥
विशिष्टस्यैव तस्योक्ता कार्यकारणता परैः।
कार्यकारणयोरेकद्रव्यताऽन्यैस्तयोः पुनः ॥ ८० ॥
विशेषणत्वाद्युक्तार्थप्रत्यनीका निषिध्यते।
पृथक्सिद्धिभिदा कैश्चिज्जगतः परमात्मना ॥ ८१ ॥
यद्वा पुरुष एवेदं सर्वमित्यादिशास्त्रतः।
नानारूपजगद्भावे श्रुतेऽपि ब्रह्मणोऽस्य तु ॥ ८२ ॥
स्वरूपे नास्ति नानात्वमेकधैवाविकारि तत्।
अनुद्रष्टव्यमित्येवं नानात्मत्वं निषिध्यते ॥ ८३ ॥
शरीरद्वारतस्तस्य नानात्वं न स्वरूपतः।
इत्यर्थभानान्न स्याद्विरोधो विधिनिषेधयोः ॥ ८४ ॥
विकारित्वाविकारित्वे चैवमित्युक्तया दिशा।
अधिकार्थग्रहीतृत्वमुपर्युपरि दृश्यते ॥
शास्त्राणां न श्रुतार्थस्य भञ्जकत्वमिति स्थितिः ॥ ८५ ॥

**चिदचिद्वस्तुशरीरिणः परमात्मनः परमात्मशब्देनाभिधाने हि नास्ति विरोधः।**

**यथा मनुष्यपिण्डशरीरकस्य** इत्यादिभाष्येण पृषदाज्यन्यायमवतारयति—यथा "पृषदाज्येनानूयाजान्यजति" इति। तत्र चावाहननिगदाः प्राप्ताः "देवानाज्यपानावह स्वाहा, आज्यपान् देवान्" इत्याद्याः। तत्र किं पृषदाज्यशब्देनोपलक्षणम्? उताविकारेण प्रयोग इति संशय्य, "पृषदाज्येनानूयाजान्यजति" इति विहितत्वात्तस्य शब्दस्य संसर्गवचनत्वात् समुदायस्यैव हविष्ट्वमिति तत्प्रकाशनाय पृषदाज्यशब्देनोपलक्षणं कर्तव्यमिति प्राप्ते, उच्यते—"पृषन्मणिः" इत्यादिषु पृषच्छब्दस्य चित्रितायां प्रयोगदर्शनात् अवयवप्रसिद्ध्या चित्रगुणयुक्तमाज्यमेतेनोच्यते। प्रकृतौ चाज्यस्यैवोपलक्षणम्। तद्गुणस्य कर्मणि शब्दानां गुणशब्देनाभिधानम्। आज्यस्य तद्द्रव्यत्वेन स्वरूपेण कर्मणि समन्वयात् सगुणस्य निर्गुणशब्देनाभिधानेऽपि समन्विताकारस्मरणसंभवाच्च चोदनानुग्रहायाविकारेण प्रयोग इति "पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात्"इत्यादिना। "अपि वा आज्यप्रधानत्वात् गुणार्थे व्यपदेशो भक्त्या संस्कारशब्दः स्यात्" इत्यादिना च। एवमत्रापि विशिष्टस्यापि कारणभूतस्य ब्रह्ममात्रवाचिशब्देनाभिधाने विशिष्टाकारस्यैवावभानसंभव इत्यर्थः। एवमेवानुसन्धेयम्—"अक्षरात्संभवतीह विश्वम्" "यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः; तस्मादेतत् ब्रह्म नाम रूपमन्नं च जायते" "आत्मन आकाशः संभूतः" इत्यादिषु प्राधान्यविवक्षयोपचारात् ब्रह्ममात्रवादेऽप्यर्थस्वभावात् विशिष्टाकारमेव तत्प्रतिपत्तव्यमित्यर्थः। भाष्ये मनुष्यादिपिण्डविशिष्टस्यात्मनः सुखित्ववचनं न विशेषणभूतशरीरस्यापि सुखाश्रयत्वेन, आत्ममात्रस्यैव सुखाश्रयत्वात्; किंतु शरीरे वर्तमानस्यैवात्मनो वैषयिकसुखादिमत्त्वमिति तद्विशिष्टस्यात्मनस्तद्वत्त्वम् 'अयमात्मा सुखी' इत्यनेनापि प्रतीयत इत्यर्थः। आश्रयांशकत्वेन वा हेतुत्वेनैव वा विशेष्यस्याप्यादाने तद्विशिष्टस्यार्थान्तरसंबन्धेऽपि धीरिति व्यवहार इति हार्दम्। 'अयमात्मा गच्छति' 'एष आत्मा निष्क्रामति' इति वचने ह्यात्ममात्रवाचिन्यप्यात्मशब्दे शरीरविशिष्टात्मप्रतीतिः सिद्धा।

### श्रीभाष्यम्

**निवृत्त्यनुपपत्तिः ७** यत्पुनरिदमुक्तम्—ब्रह्मात्मैकत्वविज्ञानेनैवाविद्यानिवृत्तिर्युक्तेति; तदयुक्तम्, बन्धस्य पारमार्थिकत्वेन ज्ञाननिवर्त्यत्वाभावात्। पुण्यापुण्यरूपकर्मनिमित्तदेवादिशरीरप्रवेशतत्प्रयुक्तसुखदुःखानुभवरूपस्य बन्धस्य मिथ्यात्वं कथमिव शक्यते वक्तुम्? एवंरूपबन्धनिवृत्तिर्भक्तिरूपाप-

**ज्ञोपासनप्रीतपरमपुरुषप्रसादलभ्येति पूर्वमेवोक्तम् । भवदभिमतस्यैक्यज्ञानस्य यथावस्थितवस्तुविपरीतविषयस्य मिथ्यारूपत्वेन बन्धविवृद्धिरेव फलं भवति, "मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः" इति शास्त्रात्; "उत्तमः पुरुषस्त्वन्यः" "पृथगात्मानं प्रेरितारं च मत्वा" इति जीवात्मविसजातीयस्य तदन्तर्यामिणो ब्रह्मणो ज्ञानं परमपुरुषार्थलक्षणमोक्षसाधनमित्युपदेशाच्च ।**

श्रुतप्रकाशिका

निवृत्त्यनुपपत्तिं वक्तुमनुवदति—**यत्पुनरिति** । दूषयति—**तदयुक्तमित्यादिना** । प्रपञ्चस्य ज्ञानबाध्यत्वं ज्ञानस्यैक्यविषयत्वमुभयमपि पराभिमतम्; तत्र प्रथमं ज्ञानबाध्यत्वानुपपत्तिमाह—**बन्धस्येति** । सर्वप्रमाणानुगुणं पारमार्थ्यमुपपादयति—**पुण्यापुण्येति** । प्रतीतिमात्रसिद्धस्य हेतुहेतुमद्भावनियमोऽनुपपन्नः; परमार्थस्यैवार्थक्रियाकारित्वात् उत्पत्तिमत्वाच्च । असत्यस्य हेतुत्वासंभवमुत्पत्त्यसंभवं च प्रागुपपादितमुपजीव्योक्तम् । न हि प्रतीतिमात्रसिद्धमन्यत्र विद्यमानं वस्त्विह किमप्युत्पादयति; नापि स्वयमिदानीमुत्पद्यते । किंच अपरमार्थस्य भ्रान्तिज्ञानसामग्रीव्यतिरिक्तहेतुसापेक्षत्वं च न दृष्टम् । न चाङ्कुरादिसामग्र्येव भ्रमसामग्री, गिरिशिखरगतमृत्सलिलबीजसंबन्धेनापवरकगतस्याङ्कुरभ्रमप्रसङ्गात् । न च पदार्थानामर्थक्रियाकारित्वमुत्पत्तिमत्त्वं च मिथ्येति वाच्यम्, ज्ञानबाध्यत्वाभावात् । किंच मिथ्यात्वे पापकरणेऽपि न प्रायश्चित्तापेक्षा; मिथ्येति बुद्धिरेवालमिति भावः । भवतापि ज्ञाननिवर्त्यत्वमविद्याया वक्तव्यम्; तच्च सत्यत्वे कथमुपपद्यत इत्यत्राह—**एवंरूपेति** । परमार्थस्य ज्ञाननिवर्त्यत्वं दृष्टद्वारा नोपपद्यते; अपि त्वदृष्टद्वारा । यथा सत्यसर्पदष्टविषस्योपासनप्रीतगरुडप्रसादान्निवृत्तिः, न तु मिथ्येति ज्ञानात्, तथेत्यर्थः । प्रपञ्चस्य ज्ञानानिवर्त्यत्वमुक्तम् । ऐक्यज्ञानस्योपायत्वानुपपत्तिमाह—**भवदभिमतस्येति** । तत्त्वज्ञानं हि मोक्षोपायः, भिन्नविषयस्याभेदज्ञानस्यातत्त्वज्ञानरूपत्वाद्विपरीतफलत्वमित्यर्थः । अद्वैतस्यातथ्यत्वे प्रमाणमाह—**मिथ्यैतदिति** । ऐक्यस्याताात्त्विकत्वकण्ठोक्तिर्दर्शिता; ऐक्यस्यासत्यत्वं यथा फलति, तथा भेदज्ञानस्यैव मोक्षहेतुत्वमाह—**उत्तम इति** । स्मृतिवचसोः संगत्यर्थं श्रुतेः पश्चादुपादानम् ।

### भावप्रकाशिका

**अर्थक्रियाकारित्वात्** इत्यनेन हेतुभावानुपपत्तिरुक्ता । **उत्पत्तिमत्त्वात्** इत्यनेन हेतुमद्भावानुपपत्तिरुक्तेति द्रष्टव्यम् । **हेतुसापेक्षत्वं च न दृष्टमिति** ; प्रपञ्चस्य तु सत्तापेक्षत्वात् न मिथ्यात्वं युक्तमिति भावः । **न चाङ्कुरादिसामग्र्येव भ्रमसामग्रीति** ; तद्भ्रमसामग्रीत्यर्थः । **भिन्नविषयस्याभेदज्ञानस्येति** ; वस्तुनो भिन्ने विषये उत्पन्नस्याभेदज्ञानस्येत्यर्थः । "उत्तमः पुरुषस्त्वन्यः" इति स्मृत्युपबृंहणीयायाः "पृथगात्मानम्" इति श्रुतेः उपबृंहणात् पश्चादुपादानं कथमित्यत्राह—**स्मृतिवचसोरिति** ; स्मृत्योरव्यवसायार्थमित्यर्थः ।

### श्रुतप्रदीपिका

अथ निवृत्त्यनुपपत्तिं वक्तुमनुवदति — **यत्पुनरित्यादिना** । दूषयति—**तदिति** । प्रथमं भ्रान्तिसत्यत्वं दूषयति— **बन्धस्येति** । अर्थक्रियाकारित्वादुत्पत्तिमत्त्वात्पापप्रायश्चित्तशास्त्राच्च न बन्धमिथ्यात्वम् ; तेषां प्रामाणिकत्वमिति भावः । असत्यस्य हेतुत्वायोगमुत्पत्त्यभावं च प्रागुक्तमुपजीव्योक्तम् । त्वयापि ज्ञानिनां मोक्षो वाच्य इत्यत्राह—**एवमिति** । सत्यसर्पस्य नाशापगमनादिनिवर्त्यत्ववददृष्टद्वारा निवर्त्यत्वं बन्धस्य सत्यस्य सहेतुकस्यास्मन्मते युज्यत इत्यर्थः । अथ पराभिमतबन्धनिवर्तकधियः पराभिमतब्रह्मात्मैक्यविषयत्वं व्युदस्यति — **भवदिति** । अयथाविषयत्वे मानमाह — **मिथ्यैतदिति** । तद्यथा फलति तथा भेदधिय उपायत्वं मानसिद्धमित्याह—**उत्तम इति** ।

### श्रीभाष्यम्

अपि च भवदभिमतस्यापि निवर्तकज्ञानस्य मिथ्यारूपत्वात् तस्य निवर्तकान्तरं मृग्यम् । निवर्तकज्ञानमिदं स्वविरोधि सर्वं भेदजातं निवर्त्य क्षणिकत्वात् स्वयमेव नश्यतीति चेत्—न ; तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेन विनाशतत्कल्पनाकल्पकरूपाविद्याया निवर्तकान्तरमन्वेषणीयम् । तद्विनाशो ब्रह्मस्वरूपमेवेति चेत्, तथा सति निवर्तकज्ञानोत्पत्तिरेव न स्यात् , तद्विनाशे तिष्ठति तदुत्पत्त्यसंभवात् ।

श्रुतप्रकाशिका

ऐक्यज्ञानस्य निवर्तकत्वे प्रमाणविरोध उक्तः । अथ तर्कविरोधमाह—**अपिचेति** । दावानलविषनाशकविषदृष्टान्ताभिप्रायेण शङ्कते—**निवर्तकज्ञानमिति** । निवर्तकज्ञानं तद्विनाशश्च किं ब्रह्मव्यतिरिक्तम् ? उत स्वरूपमिति ; विकल्पमभिप्रेत्याह—**नेति** । ब्रह्मव्यतिरिक्तत्वात् घटादेरिव विनाशस्य काल्पनिकत्वम् । यथा स्वप्नपदार्थस्वरूपतदुत्पत्तिस्थितीनां काल्पनिकत्वान्नाशश्च काल्पनिकस्तथेति भावः । **विनाशतत्कल्पनाकल्पकरूपाविद्याया इति** ; विनाशः कल्प्यः । तद्विषयभ्रमबुद्धिः कल्पना । कल्पको भ्रमाश्रयादिः । एवंरूपाविद्याया इत्यर्थः । स्वरूपपक्षं दूषयति—**तथा सतीति** । पूर्वस्मिन् पक्षे दूषणं प्रकारान्तरेणाप्युक्तं वेदार्थसंग्रहे । भावरूपस्य नाशो हि उत्तरावस्थाप्राप्तिः । सा चात्रानुपपन्ना, ब्रह्मव्यतिरिक्तस्या[व]स्थावतोऽन्यस्य स्थित्यभ्युपगमे अद्वैतहानिप्रसङ्गादिति । भावान्तरं ह्यभावः । घटस्य प्रागभावः पिण्डत्वादिपूर्वावस्था । प्रध्वंसः कपालत्वाद्युत्तरावस्था । इतरेतराभावोऽप्यश्वस्य गोत्वाभावोऽश्वत्वम् । गोरप्यश्वत्वाभावः गोत्वम् । संसर्गाभावे कथं भावरूपत्वम् ? यदि महीमात्रमेव तर्हि घटसंसर्गे सत्यपि संसर्गाभावः स्यात् ; यद्यतिरिक्तस्तर्हि अभावोऽङ्गीकृत इति; उच्यते—भवत्पक्षेऽभावाश्रयस्य यद्वैलक्षण्यं तदेव संसर्गाभावः । यदि महीमात्रमेवाभावाश्रयः, तर्हि भावाश्रयभूतलेऽप्यभावाश्रयत्वप्रसङ्गः, तत्रापि महीमात्रसद्भावात् । यदि केनचिद्विशेषेण विशिष्टं भूतलमभावाश्रयः, स एव विशेषः संसर्गाभाव इति । कालविशेषविशिष्टत्वे सति देशविशेषत्वमेव स च विशेषः । तदानीमेव घटसहितप्रदेशान्तरव्यावृत्त्यर्थं देशविशेषत्वमित्युक्तम् । तस्यैव देशस्य कालान्तरे घटसहितस्य व्यावृत्त्यर्थं कालविशेषविशिष्टत्वे सतीत्युक्तम् । यथाहुः—

" संसर्गाभावमेवं विदुरिह सुधियो भावमेवत्वभावं
मन्वानाः कुम्भवद्भूतलत इतरभूभागभेदस्त्वभावः ।
यस्तत्तत्कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेशः
कुम्भाभावाश्रयोऽन्यैरगणि स इह नः क्वाधिकस्योपलम्भः ॥"

इति । नाशस्यावस्थान्तरत्वात् कर्मनाशं वदतस्तवापि चोद्यं तुल्यमिति चेत्—न ; कर्म ह्यस्मत्पक्षे भगवत्प्रीत्यप्रीतिरूपम् । तत्र यः संसारफलानुगुणः संकल्पः, तद्विनाश्यं कर्म ; यस्तु मोक्षानुगुणः संकल्पः स एव पूर्वस्य नाश इत्युपपन्नमेव "धातुः प्रसादान्महिमानमीशम्" इत्यादिभिः ।

भावप्रकाशिका

**दावानलेति ;** यथा दावानल इन्धनानि विनाश्य इन्धननाशे स्वयमेव नश्यति, तथेत्यर्थः । **निवर्तकज्ञानं तद्विनाशश्च किमिति ;** ननु विनाशस्यैव दूष्यत्वप्रतीतेर्ज्ञाने ब्रह्मव्यतिरिक्तत्वादिविकल्पोऽभिप्रेत इति कथमुच्यत इति चेत्—न ; विनाशस्य न केवलं ब्रह्मव्यतिरिक्ततया मिथ्यात्वम् ; अपि तु निवर्तकज्ञानस्य मिथ्यात्वेन तत्प्रतियोगिकस्य विनाशस्यापि मिथ्यात्वमिति दूषणस्फोरणाय निवर्तकज्ञानस्यापि ब्रह्मस्वरूपव्यतिरिक्तत्वादिविकल्पोऽभिप्रेत इत्युक्तम् । अत एव भाष्ये—**तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेनेति** ज्ञानस्वरूपस्य काल्पनिकत्वमुक्तम् । नन्वेवं ज्ञानस्वरूपविनाशयोरेव काल्पनिकत्वस्य वक्तव्यतया ज्ञानोत्पत्तिकाल्पनिकत्वोक्तिः किमर्थेति चेत्—न ; दृष्टान्ततया तदुपन्यासोपपत्तेः । केचित्तु—तत्स्वरूपतदुत्पत्तिविनाशानां काल्पनिकत्वेनेत्यस्य विनाशकल्पनोपपादकत्वात् तद्विनाशो ब्रह्मस्वरूपमेवेति चेदिति भाष्येऽपि विनाशस्यैव प्रतीतेश्च विनाशपरिग्रह एव युक्तः ; अतो निवर्तकज्ञाने ब्रह्मव्यतिरिक्तत्वादिविकल्पो न हृदयङ्गम इति वदन्ति । **एवंरूपाविद्याया इत्यर्थ इति ;** उपादानोपादेययोरभेदोपचारादेवमुक्तमिति द्रष्टव्यम् । **कालभेदव्यतिकरितगृहप्राङ्गणादिप्रदेश इति ;** कालविशेषविशिष्टदेशविशेष इत्यर्थः । **तवापि चोद्यं तुल्यमिति चेदिति ;** निःशेषकर्मस्वरूपनाशो न स्यादिति भावः ।

श्रुतप्रदीपिका

स्मृतितः संगत्या प्रागुक्तास्पष्टतरोक्त्या वा मानविरोधमुक्त्वा तर्कविरोधमाह—**अपिचेति** । विषनाशकविषान्तरादिवदिति शङ्कते—**निवर्तकेति** । व्युदस्यति—**नेति** । विनाशस्य ब्रह्मान्यत्वे दूषणमाह—**तदिति ;** स्वाप्नार्थोत्पत्त्यादेरिवेति भावः । अनन्यत्वं शङ्कते—**तद्विनाश इति** । दूषयति—**तथेति** ।

श्रीभाष्यम्

**अपिच चिन्मात्रब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञानस्य कोऽयं ज्ञाता ? अध्यासरूप इति चेत्—न ; तस्य निषेध्यतया निवर्तकज्ञानकर्मत्वात् तत्कर्तृत्वानुपपत्तेः । ब्रह्मस्वरूपमिति चेत् ब्रह्मणो निवर्तकज्ञानं प्रति ज्ञातृत्वं किं स्वरूपम् ? उताध्यस्तम् । अध्यस्तं चेत् अयम-**

ध्यासस्तन्मूलाविद्यान्तरं च निवर्तकज्ञानाविषयतया तिष्ठत्येव । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि त्रिरूपत्वात् ज्ञात्रपेक्षयाऽनवस्था स्यात्। ब्रह्मस्वरूपस्यैव ज्ञातृत्वेऽस्मदीय एव पक्षः परिगृहीतः स्यात्। निवर्तकज्ञानस्वरूपं स्वस्य ज्ञाता च ब्रह्मव्यतिरिक्तत्वेन स्वनिवर्त्यान्तर्गतमिति वचनं भूतलव्यतिरिक्तं कृत्स्नं देवदत्तेन छिन्नमित्यस्यामेव छेदनक्रियायामस्य छेत्तुरस्याः छेदनक्रियायाश्च छेद्यानुप्रवेशवचनवदुपहास्यम् । अध्यस्तो ज्ञाता स्वनाशहेतुभूतनिवर्तकज्ञाने स्वयं कर्ता च न भवति, स्वनाशस्यापुरुषार्थत्वात् । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमे भेददर्शनतन्मूलाविद्यादीनां कल्पनमेव न स्यादित्यलमनेन दिष्टहतमुद्गराभिघातेन ।

श्रुतप्रकाशिका

अथ निवर्तकज्ञानस्य ज्ञात्रनुपपत्तिमाह—**अपिचेति** । न हि स्वरूपभूतज्ञानस्य ज्ञात्रन्तरापेक्षा । अतस्तद्व्यावृत्त्यर्थं **कृत्स्ननिषेधविषयज्ञानस्ये**त्युक्तम् । प्रमाणजन्यज्ञानं हि साश्रयमेव दृष्टम्। ज्ञाता किं ब्रह्मव्यतिरिक्तः ? उत नातिरिक्तः? इति विकल्पाभिप्रायेणाह—**चिन्मात्रेति** । प्रथमं धर्मिप्रश्नः **कोऽयमिति** । ब्रह्मव्यतिरिक्तत्वपक्षे दूषणमाह—**नेति** । कर्मकर्तृत्वविरोधादिति भावः । निवर्त्यत्वे सति हि कर्मकर्तृत्वविरोधः ; अतस्तत्परिहारार्थं स्वरूपपक्षं शङ्कते—**ब्रह्मेति** । ज्ञातृत्वधर्मविकल्पोऽयं **किं स्वरूपमिति** । स्वरूपम् ; स्वाभाविकमित्यर्थः । पाश्चात्यत्वेन बुद्धिस्थतयाऽध्यस्तपक्षं दूषयति—**अध्यस्तं चेदिति** । **निवर्तकज्ञानाविषयतया तिष्ठत्येवेति** ; ज्ञातृत्वाध्यासस्य तन्मूलाविद्यान्तरस्य च निवृत्तौ निवर्तकान्तरसापेक्षत्वान्निवर्तकान्तरस्य च भवद्भिरनभ्युपगमात् तदुभयं तिष्ठत्येवेति निःशेषाविद्यानिवृत्तिर्न स्यादित्यर्थः । निवर्तकज्ञानान्तराभ्युपगमे तस्यापि कस्यचित्कंचित्प्रति सिद्धिरूपतया ज्ञात्रपेक्षयाऽनवस्था स्यादित्याह—**निवर्तकेति** । आद्यं शिरो दूषयति—**ब्रह्मस्वरूपस्येति** । निरुपाधिकस्यैव ब्रह्मस्वरूपस्याभ्युपगम्यमानं ज्ञातृत्वं स्वाभाविकमिति भवतामपि सिद्धान्तः स्यादित्यर्थः । ब्रह्मव्यतिरिक्तस्य ज्ञातुर्निवर्तकज्ञानस्य च ब्रह्मव्यतिरिक्तस्वरूपोपाधिकोडीकारबलेन प्रपञ्चतन्मूलाविद्यानिवर्तकज्ञानेनैव निवृत्तिर्भविष्यती-

त्याशङ्क्य व्याघातेन दूषयति—**निवर्तकज्ञानस्वरूपमिति** । ज्ञातुरपि निवर्तकज्ञाननिवर्त्य-त्वे निवर्तकज्ञानार्थं श्रवणादौ प्रवृत्तिश्च न स्यादित्याह—**अध्यस्तो ज्ञातेति** । ज्ञातृ-नाशस्य परमपुरुषार्थरूपब्रह्मस्वरूपत्वान्नापुरुषार्थतेत्याशङ्क्याह—**तन्नाशस्येति** । पूर्वपक्ष-निराकरणमुपसंहरति—**इतीति** ।

### भावप्रकाशिका

**विकल्पाभिप्रायेणेति ;** चिन्मात्रेत्यनुक्त्वा ब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयज्ञान-स्येत्युक्तौ ब्रह्मशब्दार्थे चिन्मात्रव्यतिरिक्तानामपि केषांचिदनुप्रवेशसंभवेन ब्रह्मशब्दार्थ-व्यतिरिक्तकृत्स्नपारमार्थ्यनिषेधे चिन्मात्रव्यतिरिक्तकृत्स्नपारमार्थ्यनिषेधाभावेन तस्य निषेध्य-तया निवर्तकज्ञानकर्मत्वादिति दूषणस्यालग्नकतापत्तेश्चिन्मात्रेति पदमावश्यकमिति भावः । **प्रथमं धर्मिप्रश्न इति ;** उत्तरत्र ज्ञातृत्वधर्मविकल्पस्य करिष्यमाणत्वादेवमुक्तमिति द्रष्ट-व्यम् । स्वरूपमित्यस्य यथाश्रुतार्थत्वे ब्रह्मस्वरूपस्यैव ज्ञातृत्वे इति दूषणभाष्यासामञ्जस्यं मन्वान आह—**स्वरूपं स्वाभाविकमित्यर्थ इति** । भाष्ये—**अध्यस्तं चेदयं अध्यासस्तन्मूलाविद्यान्तरं चेत्यादि ;** अध्यस्तस्य ज्ञातुर्निवर्तकज्ञानाश्रयत्वलक्ष-णज्ञातृत्वस्य तत्कल्पकाविद्यायाश्च निवर्तकज्ञानानुगुणतया निवर्तकज्ञानोपजीव्यस्य तद्बा-ध्यत्वाभावादित्यर्थः । अत्र तस्मादित्युपसंहारभाष्यावतारिकाग्रन्थपर्यन्तो ग्रन्थो लेखकदोषात् पतित इति वदन्ति । भाष्ये **तस्यापि त्रिरूपत्वादिति ;** निवर्तकज्ञानान्तरस्य कल्प-काविद्याज्ञातृसापेक्षत्वेन त्रिरूपत्वादित्यर्थः । प्रथमं दूषयति भाष्ये—**ब्रह्मस्वरूपस्यैव ज्ञातृत्व इति ;** ज्ञातृत्वस्य ब्रह्मस्वाभाविकत्व इत्यर्थः । तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगमात् परमपुरुषार्थत्वमस्त्वित्याह भाष्ये—**तन्नाशस्य ब्रह्मस्वरूपत्वाभ्युपगम इति** ।

### श्रुतप्रदीपिका

ज्ञातृत्वदूषणमाह—**अपिचेति** । मानजा धीः साश्रयैवेति भावः । **कोऽयमिति;** अतिरिक्तो नातिरिक्तो वेति धर्मिविकल्पः । अतिरिक्तत्वेमाध्यस्तरूपत्वं शङ्कते—**अध्यासेति ;** कर्मणि क्विबन्तम् । तद्दूषयति—**न तस्येति** । स्वरूपपक्षे धर्मं विकल्पयति—**किमिति** । स्वरूपं स्वाभाविकम् धीस्थं पाश्चात्यं दूषयति—**अध्यस्तं चेदिति** । स्वरूपपक्षं व्युदस्यति—**ब्रह्मेति** । **निवर्तकेत्यादि** स्फुटम् । न स्वनाशप्रवृत्त्ययोगदोषः, ब्रह्म-स्वरूपस्यैव तन्नाशत्वादित्याशङ्क्य दूषयति—**तन्नाशस्येति** ।

श्रीभाष्यम्

तस्मादनादिकर्मप्रवाहरूपाज्ञानमूलत्वाद्बन्धस्य तन्निबर्हणमुक्तलक्षणज्ञानादेव । तदुत्पत्तिश्चाहरहरनुष्ठीयमानपरमपुरुषाराधनवेषात्मयाथात्म्यबुद्धिविशेषसंस्कृतवर्णाश्रमोचितकर्मलभ्या तत्र केवलकर्मणामल्पास्थिरफलत्वम् । अनभिसंहितफलपरमपुरुषाराधनवेषाणां कर्मणामुपासनात्मकज्ञानोत्पत्तिद्वारेण ब्रह्मयाथात्म्यानुभवरूपानन्तस्थिरफलत्वं च कर्मस्वरूपज्ञानादृते न ज्ञायते ; केवलाकारपरित्यागपूर्वकयथोक्तस्वरूपकर्मोपादानं च न संभवतीति कर्मविचारानन्तरं तत एव हेतोर्ब्रह्मविचारः कर्तव्य इति अथात इत्युक्तम् ।

श्रुतप्रकाशिका

एवं ब्रह्मव्यतिरिक्तकृत्स्नमिथ्यात्वनिराकरणेन बन्धस्य सत्यत्वसिद्धेस्तन्निवृत्तिः कर्मसापेक्षोपासनात्मकज्ञानादेवेति कर्मविचारपूर्ववृत्तत्वं युक्तमित्याह—**तस्मादिति ; तस्मात् ;** साधनचतुष्टयस्य ब्रह्मविचारं प्रति पूर्ववृत्तत्वे वस्तुसामर्थ्यं नाम हेतुरुक्तः । तच्च निर्विशेषब्रह्माध्यस्तमिथ्याभूतप्रपञ्चस्य कर्मनिरपेक्षज्ञाननिवर्त्यत्वम् ; तच्चानुपपन्नमित्युपपादनेन वस्तुसामर्थ्यासिद्धेरित्यर्थः । स्वरूपानादित्वव्यावृत्त्यर्थं **प्रवाह**शब्दः । अनिर्वचनीयव्यावृत्त्यर्थः **कर्म**शब्दः । **उक्तलक्षणज्ञानादेव ;** उपासनात्मकादेव । तदुत्पत्तिर्वर्णाश्रमोचितकर्मलभ्याऽस्तु ; ततः किमुपासनादिस्वरूपज्ञानं प्रति प्रस्तुतकर्मविचारपूर्ववृत्तत्वस्येत्यत्राह—**तत्रेति ।** कर्मविचारादेव तस्याल्पास्थिरफलत्वज्ञानं फलितमिति भावः । **अनभिसंहितफलेति ;** "यज्ञेन दानेन" इत्यादिकर्मविनियोजकवाक्यार्थज्ञानस्य पदार्थज्ञानपूर्वकत्वात् पदार्थभूतकर्मस्वरूपाख्यविशेष्यज्ञानादृते उपासनद्वाराऽनन्तस्थिरफलत्वरूपं विशेषणं च न ज्ञायत इति भावः । ततः किमित्यत्राह—**केवलेति** । केवलाकारः ; आत्मयाथात्म्यबुद्धिसंस्कारशून्याकारः । हानार्थमुपादानार्थं च हि कस्यचिज्ज्ञानम् ; तत्र फलद्वारा कर्म त्याज्यम् ; स्वरूपेणोपादेयम् । उभयार्थं ज्ञानं कर्मविचारादृते न सिध्यति । तस्मात् कर्मविचारनिवृत्तौ तज्ज्ञानफलं हानमुपादानं च न संभवतीत्यर्थः । अथातःशब्दार्थं निगमयति—**इति कर्मविचारानन्तरमिति । ब्रह्मविचारः कर्तव्यः** इत्यनेन ब्रह्मजिज्ञासाशब्दार्थ उक्तः । विचारस्य कर्त-

ां नातीव विवादः ; शाब्द आर्थ इत्येतावदेव हि वैषम्यम् । अथातःशब्दार्थ एव विवादः । अतः अथात इत्येतावदुपात्तम् । एवं सूत्रस्याक्षरयोजना कृता ।

भावप्रकाशिका

**तस्मात् साधनचतुष्टयस्येति** ; तस्मादिति व्याख्येयं पदम् । **आत्मयाथात्म्य-स्कारशून्याकार इति** ; भगवच्छेषत्वज्ञानपूर्वकत्वराहित्यं केवलाकारः । **हान-नं च न संभवतीत्यर्थ इति** ; नित्यनैमित्तिकाद्यङ्गकं ब्रह्मोपासनमनन्तस्थिरब्रह्म-धनमित्यापातप्रतीतिरनवगतकर्मविचारस्य न संभवतीत्यर्थः । न तु हानोपादानशब्दा-नुष्ठानानुष्ठाने विवक्षिते, तादृशकर्मानुष्ठानाननुष्ठानयोर्ब्रह्मोपासनोपयुक्तत्वेऽपि ब्रह्म-नुपयुक्ततया ब्रह्मविचारपूर्ववृत्तत्वकथनावसरेऽनुपयुक्तत्वादिति द्रष्टव्यम् ।

श्रुतप्रदीपिका

ततः किं परमप्रकृतस्य ब्रह्मविचारस्य कर्मधीसापेक्षत्व इत्यत्राह— **तस्मादिति** । अमिथ्यात्वाद्बन्धस्य तन्निवर्तने धियः कर्मानपेक्षत्वरूपस्य वस्तुसामर्थ्यस्यासिद्धेः । र्वाच्यव्युदासः । **प्रवाहेति** ; स्वरूपानादिव्युदासः । **उक्तलक्षणेति** ; वाक्यार्थ-सः । ततः किमित्यत्राह— **केवलेति** ; फलद्वारा हानार्थं स्वरूपेणोपादानार्थं चापे-यर्थः । सूत्राक्षरयोजनां निगमयति—**इति कर्मविचारेति** ।

---

**इति महासिद्धान्तः**